# काशीविद्यासुधानिधिः

# THE PANDIT

## A MONTHLY PUBLICATION

OF THE

## BENARES COLLEGE

DEVOTED TO

## SANSKRIT LITERATURE

NEW SERIES

VOL. XXVII

BENARES

PRINTED AND PUBLISHED BY THE PROPRIETORS,

E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS

1905

# INDEX TO VOLUME XXVII NEW SERIES



णावच्छिन्नकाल इत्यन्ये । तत्र त्रयोऽपि द्वादशमात्रावच्छिन्ना इत्यधमः पक्षः । षोडशमात्रावच्छिन्नः पूरकः, चतुःषष्टिमात्रावच्छिन्न कुम्भकः, द्वात्रिंशन्मात्रावच्छिन्नो रेचक, इति वसिष्ठसंहितायाम् । तेषु क्रमेणोकारमकाराकारमूर्त्तीनां ब्रह्मविष्णुरुद्राणां ध्यानमप्युक्तं तत्रैव । तदुक्तं भाष्ये एताभिः षोडशादिभिर्मात्रारूपैर्निमेषोन्मेषणादिभिः पूरकाख्यश्वासप्रवेशरूपः प्रथम उद्घात., प्रथमं वायोरुद्गमनं गतिनिरोधः । एवं प्रथमोद्घातनिगृहीतस्य स्तम्भितस्य वायोश्चतुःषष्ठ्यादिमात्रावच्छिन्नः कुम्भको द्वितीय उद्घातः । एवं तृतीयो द्वात्रिंशदादिमात्रावच्छिन्नोऽर्थाद्रेचकः । अत्र भाष्ये प्रथमादिशब्दैः पूरकादित्रये क्रमवचनात्सौत्रः पाठक्रमोऽनुष्ठाने नादर्तव्य इत्युक्तम् । अत एव पूरककुम्भकरेचक इत्येवानुष्ठानक्रमं शिष्टाना विकल्पो वा । एवं मृदुमध्यतीव्रभेदा अप्यस्य द्रष्टव्याः । त्रिष्वपि द्वादशमात्रो मृदुः, त्रिष्वपि चतुर्विंशतिमात्रो मध्यः, त्रिष्वपि षट्त्रिंशन्मात्रस्तीव्र, इति कौर्मे । षट्त्रिंशन्मात्रो मन्दः तद्द्विगुणो मध्यस्त्रिगुणस्तीव्र इति मिश्राः । एवं सङ्ख्यावृद्ध्या तीव्रतरत्वाद्यप्युन्नेयम् । अत्र देशकालसङ्ख्याभिः परिच्छेदे ऐच्छिको विकल्पो न तु समुच्चयः, समुच्चयानुष्ठाने तु फलभूमेति बोध्यम् । सोऽयं पूरकरेचककुम्भकरूपो देशकालाद्यवधारणैरभ्यस्तो दीर्घसूक्ष्मसंज्ञको भवति अभ्यासेन कालवृद्ध्या दीर्घकालव्यापित्वेन दीर्घो भवति वायुसंचारस्यातिसूक्ष्मतया सूक्ष्मश्च भवति । दीर्घसूक्ष्म इति कर्मधारयः अभ्यस्त इति चार्थात्सिद्धम् ।

एवं रेचकपूरककुम्भकरूपं भेदत्रयमुक्त्वा प्राणायामस्य, चतुर्थंभेदमाह ।

**बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥**

बाह्याभ्यन्तरविषयौ बाह्याभ्यन्तरवृत्ती पूर्वसूत्रोक्तौ रेचकपूरकौ तयोराक्षेपी तावतिक्रम्य स्वयमेव वर्तमान, एवं भूतो यः प्राणायामः केवलकुम्भकरूपः स चतुर्थ इत्यर्थः। तथा हि, यो बाह्यविषयो रेचको देशकालसङ्ख्याभिरादौ परिदृष्टः पश्चाच्च देशादिभिः सहैवाक्षिप्तो अतिक्रमितो भवति, सूत्रे देशवाचकोऽपि विषयशब्दः कालसङ्ख्ययोरप्युपलक्षणः, तथाऽभ्यन्तरविषयः पूरकोऽपि देशादिभिरादौ परिदृष्टः पश्चाद्देशादिभि. सहैवाक्षिप्तो भवति। स द्विविधोऽपि दीर्घसूक्ष्मश्चिरकालदेशादिभिरभ्यस्तस्तत्पूर्वकस्तदुभयाक्षेपपूर्वकः उभयमाक्षिपतीति यावत् पूर्वपूर्वभूमिकाजयात् कालक्रमेण, न तु शीघ्रमुत्पद्यमान. उभयोः श्वासप्रश्वासयोर्गतिविच्छेदश्चतुर्थः प्राणायाम। स्तम्भवृत्त्याख्यो मिश्रकुम्भकरूपकस्तृतीयप्राणायामस्तु विषयेण देशकालसंख्यारूपेणानालोचितोऽनवधारित. सकृदारब्धोऽभ्यासबाहुल्यं विनैवोत्पद्यमानश्च देशकालसङ्ख्याऽद्यवधारितो दीर्घसूक्ष्मश्च भवतीति सामान्यविशेषाभ्यां द्विविध। चतुर्थस्तु रेचकपूरकयोर्देशाख्यविषयावधारणानन्तरं क्रमिकभूमिजयाद्धेतोः. पूरकरेचकाक्षेपपूर्वकगत्यभाव इत्ययं चतुर्थः प्राणायामस्तृतीयाद्विशेषो विशिष्टः। किं च तृतीयो नियमेन रेचकपूरकयोरन्तराले वर्तत इति न तदतिक्रमो वसिष्ठसंहितायाम्।

प्रस्वेदञ्जनयेद्यस्तु प्राणायामो हि सोऽधमः।
मध्यमः कम्पनात्प्रोक्त उत्थाने चोत्तमो भवेत्॥
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तरसम्भवः।
निःश्वासोच्छ्वासकौ देहे स्वाभाविकगुणावुभौ॥
तथाऽपि नश्यतस्तेन प्राणायामोत्तमेन हि।

तयोर्नाशसमर्थः स्यात्कर्तुं केवलकुम्भकम् ॥
केवले कुम्भके सिद्धे रेचकपूरकवर्जिते ।
न तस्य दुर्लभं किंचित् त्रिषु लोकेषु विद्यत इति ।

आकाशगमनशक्त्याविर्भावेण कामगत्वादिकमपि स्यादित्यर्थः । तथा जपध्यानयुतो गर्भो त्वगर्भस्तद्विवर्जित इत्यन्यत्र । तत्रैवाग्रगीयाया सव्याहृतिका सप्रणवा गायत्री सशिरस्का त्रिर्जप्येत्युक्तम् । त्रिष्वेकैकवारमित्यर्थः । प्रणवो जप्य इत्यन्यत्र ।

अथ प्राणायामस्य व्यापारं तत्सिद्धिसूचकमाह ।

**ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥**

ततः प्राणायामाभ्यासादस्य योगिनो विवेकज्ञानावरकं कर्म क्षीयते, ज्ञानावरकत्वं चास्य पूर्वाचार्यैरुक्तं रागरूपमहामोहप्रचुरेणेन्द्रजालतुल्येन शब्दादिविषयेण प्रकाशशीलं बुद्धिसत्त्वमावृत्य कर्मैवाकार्ये संसारहेतु व्यापारे नियुङ्क्त इति । तदस्य प्रकाशावरणं कर्म संसारस्य निबन्धनं प्राणायामाभ्यासाद् दुर्बलं प्रकाशावरणाक्षमं भवति, प्रतिक्षणमपचीयते च । तदुक्तं तयोर्न परं प्राणायामात् ततो विशुद्धिर्मलानां पापादिरूपकारणाभावान्मलरूपतमसा तत्कार्यविपर्ययाणां चापगमो ज्ञानदीप्तिश्चेति । यद्यपि तप एव पापनाशकं तथाऽपि ज्ञानावरकपापक्षये प्राणायामः श्रेष्ठः, अत एव पूर्वपादे उत्तमाधिकारिणः प्राणायाम एव साधनमुक्तम् ।

अन्यच्च भवतीत्याह ।

**धारणासु च योग्यता मनसः ॥ ५३ ॥**

प्राणायामाभ्यासादेव मनसो धारणासु योग्यता भवति । प्रच्छर्दनविधारणाभ्यां वा प्राणस्येति पूर्वपादीयसूत्रेण प्राणायामस्य धारणायोग्यतारूपस्थितिहेतुत्ववचनात्तत्रापि पूरकादित्रयात्मक एव प्राणायामो ग्राह्य इति बोध्यम् ।

अथ प्रत्याहारमाह ।

**स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥**

इन्द्रियाणां स्वस्वविषयासंप्रयोगकाले चित्तस्वरूपानुकारितेव या भवति स प्रत्याहार इत्यर्थः । जितेन्द्रियस्य हि ध्यानकाले चक्षुरादीनि ध्येयवस्त्वाकारेण चित्तेन तुल्याकाराणीव भवन्ति, न स्वातन्त्र्येण मनसैकीभूय विषयान्तरं सङ्कल्पयन्ति, तथा चित्ते निरोधोन्मुखे प्रयत्नान्तरं विनैव तानि निरुद्धानि भवन्ति, अतस्तस्य तानि चित्तानुकारीणि, अजितेन्द्रियस्य तु तानि तदानीमपि रूपादिषु मनसैव धावन्ति अतश्चित्तमेव तेषामिन्द्रियानुकारि ।

इन्द्रियाणां हि सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य द्रवते प्रज्ञा दृतेः पादादिवोदकमितिस्मृतेः ॥

अजितेन्द्रियस्यापि तानि विषयभोगकाले चित्तानुकारीणीत्यतो "विषयासंप्रयोग" इति। ध्यानकाले चाक्षुषादितुल्या वृत्तिश्चित्तस्यैव भवति, न तु चक्षुरादीनां, तेषां तु तदतिरिक्तवृत्त्यभावमात्रमत "इवे"ति। केन लक्षणेन तदनुकारो ज्ञेय इति चेत् । शृणु । चित्तस्य वृत्तिनिरोधकाले तद्वत्स्वयमेवेन्द्रियाणि निरुद्धवृत्तिकानि भवन्ति, न तु इतरे ये इन्द्रियजया उत्तरसूत्रे वक्ष्यमाणास्तेषु सत्स्वपि यथा स्वनिरोधार्थं प्रत्याहाररूपमुपायान्तरमपेक्षन्ते तथा प्रत्याहारे सति स्वनिरोधाय चित्तनिरोधातिरिक्तं न प्रयत्नकृतमुपायान्तरमपेक्षन्ते । एव चेदमेव तत्कार्यत्वात्तल्लक्षणम् । कालादिव्यावृत्तये प्रयत्नकृतमिति। तत्र दृष्टान्तः यथा मधुकरराजमुत्पतन्तं मक्षिका अनूत्पतन्ति निविशमानमनुनिविशन्ते, तथा चित्तस्य विषयाभिमुख्ये तान्यपि विषयेषूत्पतन्ति तस्य निरोधे च निरुद्धानीति । एवं च प्रत्याहार इन्द्रियधर्मः ।

अथ प्रत्याहारस्य योगे द्वारभूतं तत्सिद्धिसूचकमाह ।

**ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥**

ततः प्रत्याहारादिन्द्रियाणां परमो जयो भवतीत्यर्थः । तत्र परमजयज्ञानायानेकप्रकारा जया उच्यन्ते । शब्दादिष्वव्यसनमिन्द्रिजयः । व्यसनं सक्तिर्येन शास्त्रविरुद्धेऽपि विषयभोगे इन्द्रियाणि प्रवर्तन्ते । व्यस्यत्येनं श्रेयस इति व्युत्पत्तेः । एव च शास्त्राविरुद्धा प्रतिपत्तिरिष्टभोगा न्याय्या इति के चित् । इन्द्रियशब्दादिविषययोः संप्रयोगः स्वेच्छया न तु तत्पारतन्त्र्येणेत्येष इन्द्रियजय इत्यन्ये । रागद्वेषनिमित्तकसुखदुःखादिशून्यः शब्दादिज्ञानरूपो विषयभोग इन्द्रियजयः, आभिमानिकसुखदुःखशून्य इति यावदिति परे । चित्तैकाग्र्याद्धेतोरिन्द्रियाणां याऽप्रतिपत्तिर्वृत्तिनिरोधस्तद्योग्यतैवेन्द्रियजयं इति जैगीषव्यः । एतदुक्त एव परमो जयः । उक्तेषु त्रिषूत्तरोत्तरमुत्कर्षेऽपि तावन्मात्रैरिन्द्रियवृत्त्यनिरोधान्न तेषु परमत्वम् । एवं चायमेव पूर्वसूत्रोक्तचित्तानुकारस्य फलं लक्षण च । एतदभावेनैव सौभर्यादीनां योगभ्रंशः श्रूयते । एवं ज्ञानसाधनमुखेन बहिरङ्गाणि यमादिप्रत्याहारान्तानि पञ्च योगाङ्गान्युक्तानीति शिवम् ।

इति पातञ्जलसूत्रवृत्तौ साधननिर्देशो नाम द्वितीय. पादः ।

---

अथ धारणामाह ।

**देशबन्धश्चित्तस्य धारणा ॥ १ ॥**

यत्र देशे ध्येय चिन्तनीयं तत्र ध्यानाधारदेशविशेषे चित्तस्य बन्धस्तदैकाग्र्य सा धारणेत्यर्थ' । तथा हि। नाभिचक्रे हृदयपुण्डरीके मूर्धस्थे ज्योतिषि नासिकाऽग्रे इत्येवमादिदेशेषु, बाह्ये वा विषये चन्द्रसूर्याग्न्यादौ ईश्वरदेवताऽऽदिध्यानदेशे चित्तस्य वृत्तिमात्रेण, न तु ध्येयकल्पनया बन्धो धारणेति । तदुक्तम्,

प्राग्नाभ्या हृदये चाथ तृतीये च तथोरसि ।
कण्ठे मुखे नासिकाऽग्रे नेत्रभ्रूमध्यमूर्धसु ॥
किं चित्तस्मात्परस्मिश्च धारणा दश कीर्तिताः ।

मुखे जिह्वाग्रे। परस्मिन्निति मूर्ध्न उपरि द्वादशाङ्गुलमिते देशे। लिङ्गशरीरस्य सप्राणस्य तावत्पर्यन्त प्रदीपशिखावदवस्थानाद् अवहिते-स्तावत्पर्यन्तं लिङ्गशरीरानुगतोष्मोपलम्भाद् राज्ञः सिंहासनवदेतानि नाभ्यादीनि जीवेश्वरयोर्मुख्यस्थानानि । वृत्तिमात्रेणेत्युक्तेर्ध्यानादि-व्यावृत्तिः । यस्य त्वादावेवेश्वरानुग्रहादपरिच्छिन्नतया जीवेश्वरयोगो भवति तस्य नैतद्द्वारणोपयोगः । तस्य हि सैव धारणा । धारणासा-मान्ये द्वादशप्राणायामपरिच्छिन्नकालावच्छिन्नत्व विशेषणम्, अन्यथा क्षणमात्रेणापि धारणाऽऽपत्तेः ।

अथ तत्साध्य ध्यान लक्षयति ।

**तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥**

तत्र देशे ध्येयचतुर्भुजमूर्त्याद्यालम्बनस्य प्रत्ययस्यैकतानता प्रत्ययान्तरापरामृष्टः सदृशः प्रवाहः स ध्यानमित्यर्थः । एतद् द्वाद-शधारणापरिच्छिन्नकालावच्छिन्न, तावत्कालावच्छिन्न जीवेश्वरविषयं वा पूर्ववत् ।

अथ तत्साध्यं समाधिमाह ।

**तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥**

मात्रपद स्वरूपशून्य मिवेत्यनेन विवृतम् । ध्यानमेव यदा ध्येयाकारेणैव साक्षिणि निर्भासते चित्तस्य ध्येयस्वरूपावेशेनाहमिद चिन्तयामीत्येवप्रत्ययाकारवृत्त्यन्तरानुदयाद् वृत्त्यशाभानाद्वा प्रत्य-यात्मकेन स्वरूपेण शून्यमिव भवति तदा समाधिरित्युच्यते । वस्तुतो ध्यानस्वरूपस्य सत्त्वादिवेति । इद च लक्षण पूर्वसूत्रोक्तध्या-नविशेषतया देशघटितत्वेनापरिच्छिन्नसमाध्यव्यापकम्, अतोऽर्थमात्रा-वभासन चिन्तनमित्येव समाधिसामान्यलक्षण समाधिर्ध्यानद्वाद-शगुणितकालावच्छिन्नो द्रष्टव्य । अस्य समाधिरूपस्याङ्गस्याङ्गिनः संप्रज्ञातयोगादय भेद , यदत्र चिन्तारूपतया निःशेषतो ध्येयस्वरूपं न भासते, संप्रज्ञाते तु साक्षात्कारेण समाध्यविषया अपि विषया भासन्त इति । एव च साक्षात्कारयुक्तैकाग्र्यकाले सप्रज्ञातयोगोऽन्यदा तु समाधिमात्रमिति विभाग. ।

ध्यानादित्रयस्य सञ्ज्ञाविशेषमाह ।

**त्रयमेकत्र संयमः ॥ ४ ॥**

एतद् ध्यानधारणासमाधिरूपं त्रयमेकविषयं चेत्तदा संयम इति तान्त्रिकी संज्ञा । एषामष्टानामङ्गाना फलं सप्रज्ञातयोगस्तद्द्वारा ऽसंप्रज्ञातयोगश्चेति बोध्यम् ।

सयमानुष्ठानविशेषे फलविशेषमाह ।

**तज्जयात्प्रज्ञाऽऽलोकः ॥ ५ ॥**

तस्य सयमस्य जयात् स्थैर्यात्समाधिप्रज्ञाया आलोको दीप्ति-र्वृद्धिः क्रमेण भवति । यथा यथा च सयमः स्थिरपदो भवति तथा तथा समाधिप्रज्ञा विशारदा भवति । वैशारद्य च सूक्ष्मव्यव हितादार्थानां प्रत्यक्षीकरणसामर्थ्यम् ।

संयमानुष्ठाने विशेषमाह ।

**तस्य भूमिषु विनियोगः ॥ ६ ॥**

तस्य संयमस्य जितस्थूलादिपूर्वपूर्वभूमेरनन्तरायां सूक्ष्मसूक्ष्मतराद्युत्तरभूमयस्तासु विनियोगः कार्यः । न च क्रमेण भूमिकाऽऽरोहे मानाभावः । प्रान्तभूम्यपेक्षयाऽधरा भूमिर्जिता येन तस्य योगिनोऽनन्तरा भूमिं विलङ्घ्य व्यवहितोत्तरभूमिषु संयमलाभाभावाद् धनुर्धरादिष्वस्थूलवेधानन्तरमेव सूक्ष्मवेधादिदर्शनात् सोपानारोहणादिक्रमेणैवारोहादिदर्शनाद् अन्यथाऽधःपातात्, संयमालाभे च कुतः प्रज्ञाऽऽलोकस्तत्तद्भूमिषु स्यात् ।

स्थिरत्यर्थं मनसः पूर्वं स्थूलरूपं विचिन्तयेत् ।

तत्र तन्निश्चलीभूतं सूक्ष्मेऽपि स्थिरतां लभेदिति स्मृतेः ।

अयं च क्रम औत्सर्गिकः । ईश्वरप्रसादादेव जितप्रकृतिपुरुषादिविवेकभूमिकस्य नाधरभूमिषु "प्रत्यये परचित्तज्ञानमि"त्याद्यागामिसूत्रबोध्येषु परचित्तज्ञानादिषु पिण्डादिस्थूलेषु वा संयमस्य फलाभावाद्, अधरभूमिसंयमप्रयोजनस्योत्तरभूम्यारोहस्येश्वरानुग्रहादेव प्राप्तत्वात् । न चौत्सर्गिकक्रममुल्लङ्घ्य कथमुत्तरभूमावादावेव संयमारम्भः । युञ्जानेनादौ सर्वोत्कृष्टभूमौ संयममारभ्य तस्यां स्वस्यायोग्यतामनुभूयैवाधराधरभूमिषु योग्यतामवधार्य चित्तस्य धारणीयत्वात् । न चेयमस्या अनन्तरा भूमिरिति कथं निश्चेयम् । योगबलेनैव निश्चयात् । तदुक्तम्—

योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्तते ।

योऽप्रमत्तस्तु योगेन स योगे रमते चिरमिति ॥

अप्रमत्तः सिद्धावलम्पटः ।

आवश्यकत्वबोधनाय योगाङ्गेषु विशेषमाह ।

**अयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥**

तदेतद्धारणाध्यानसमाधिरूपं त्रयं सम्प्रज्ञातयोगस्यान्तरङ्गं यमादिभ्यः पञ्चभ्य इत्यर्थः । एवं ज्ञानस्याप्येतत्त्रयमन्तरङ्गम् । अन्तरङ्गत्वबीजं तु ध्येयातिरिक्तवृत्तिनिरोधरूपे सम्प्रज्ञाते ध्येयसंयमस्य विषयान्तरसञ्चाररूपत्वात् साक्षात्कारणत्वम् । एवं ध्येयसाक्षात्कारेऽपि विषयान्तरसञ्चाराख्यप्रतिबन्धनिवृत्तिद्वारा साक्षादेव कारणं, प्रत्याहारान्तपञ्चकस्य तु चित्तस्थैर्यद्वारा परम्परयैवोभयत्र कारणत्वमिति । यस्य तु प्राचीनकर्मवशात् स्वत एव चित्तं संयमशीलं तस्य नास्तीतराङ्गापेक्षा, यथा जडभरतशिशुपालादेः । अत एव तेषां प्रधानसमाधिविघ्नतया बाह्यकर्मत्यागोऽपि । यत्तु

विद्यां चाविद्याञ्च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुतेइति ॥

श्रुत्यादौ ज्ञानकर्मणोः साहित्यमुक्तं, तदङ्गाङ्गिनोरौत्सर्गिकं सहानुष्ठानमभिप्रेत्य; न तु मोक्षे तुल्यवत्समुच्चयमभिप्रेत्य । अविद्यया मृत्युं तीर्त्वेतिपदेन ज्ञानविप्लवनिवृत्तिरूपमृत्युतरणद्वारैव कर्मणो विद्यया मोक्षे जननीये उपयोगावगमात् ।

न केवलेन योगेन प्राप्यते परमं पदम् ।
ज्ञानं तु केवलं सम्यगपवर्गफलप्रदमि–

त्यादि वाक्यैर्योगशब्दोक्तकर्मनिरपेक्षात् ज्ञानयोगादपि मोक्षसिद्धेः । अङ्गत्वं तु पूर्वजन्मानुष्ठितकर्मकाण्डेऽपि जडभरतादिषु सिद्धमिति दिक् ।

**तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥**

तदप्यन्तरङ्गं साधनत्रयमपि निर्बीजस्यासम्प्रज्ञातस्य योगस्य बहिरङ्गम् । विवेकख्यातिपरवैराग्यद्वारा परम्परया हेतुत्वेनावश्यकत्वाभावात् । पूर्वोक्तविदेहप्रकृतिलयानां देवविशेषाणामौत्पत्तिकज्ञान-

वैराग्याणां सयमाभावेऽपि दैनंदिनप्रलयादावसंप्रज्ञातस्योदयात् । योगनिद्रां यदा विष्णुरित्यादिस्मृतेः ।

अथाङ्गसमाधिकालिकचित्तपरिणामापेक्षया योगद्वयकालिकनिरोधावस्थचित्तक्षणेषु गुणानां वृत्तस्य व्यापारस्याप्यस्थिरत्वात् त्रिगुणात्मकस्य चित्तस्य परिणामावश्यकत्वेन जायमानः परिणामः कीदृशस्तत्राह ।

**व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥**

असंप्रज्ञातापेक्षया संप्रज्ञातोऽपि व्युत्थानं, निरोधश्च योगद्वयसाधारणः, अन्यथा संप्रज्ञातनिरोधस्य परिणामाकथनान्न्यूनताऽऽपत्तेः । व्युत्थानसंस्कारा अपि चित्तधर्मा । एवं निरोधसंस्कारा अपि तद्धर्माः । तत्राद्यानामभिभवः क्रमेण ह्रासो दाहः, निरोधसंस्काराणां च प्रादुर्भावः क्रमेण वृद्धिः, एतौ निरोधकालिकश्चित्तस्य परिणामः, स च निरोधक्षणचित्तान्वयः प्रत्येकं निरोधक्षणेष्वेकस्मिन् स्थिरे चित्तेऽन्वयो यस्य । अनेन चित्तस्थैर्ये प्रतिक्षणमीदृशः परिणामश्च लब्धः । यद्यपि निरोधो न संप्रज्ञाते संस्कारजनकस्तथाऽपि तत्कालीनप्रज्ञाजन्यसंस्कार एव तथोक्तः । ननु तन्तुनिरोधेन पटनिरोधवद् वृत्तिनिरोधेनैव तत्कार्यसंस्काराणामपि निरोधोपपत्तौ किं व्युत्थानसंस्काराभिभवस्य पृथगुक्त्येति चेन्न । संस्काराणां वृत्तिरूपप्रत्ययानुपादानकत्वेन तन्निरोधने तेषां निरोधाभावात् । न हि निमित्तकारणनाशेन कार्यनाशः तस्माद् वृत्तिनिरोधेऽपि तत्संस्कारनिवृत्तौ कारणं निरोधसंस्कारप्रचयरूपं पृथगेवापेक्ष्यमिति दिक् ।

अथ निरोधसंस्कारे प्रमाणमाह ।

**तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥**

तस्य निरोधावस्थचित्तस्य, प्रशान्तवाहिता निश्चलनिरोधधारया वहन निरोधसंस्काराभ्यासपाटवादेव भवति । तत्संस्कारमान्द्ये व्युत्थानजसंस्कारेण निरोधसंस्काराभिभवादित्यर्थः ।

इदानीं निरोधरूपयोगद्वयपरिणामापेक्षया विलक्षणं योगाङ्गसमाधिकार्यं परिणाममाह ।

**सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥**

सर्वार्थता विक्षिप्तता चित्तधर्मस्तस्याः प्रतिक्षणं क्षयस्तिरोभावः, एकाग्रताया एकमात्रविषयताया उदय आविर्भावः मुख्यक्षयोदययोरत्यन्तोच्छेदनिष्पत्तिरूपयोरेकदा न भवनं, किं तु क्षणक्रमेणैवेत्यतो ह्रासवृद्धिरूपतिरोभावाविर्भावावुक्तौ । चित्तस्य धर्मित्वेनानुगमात्तौ चित्तधर्मावुक्तौ यतो समाधिकालिकचित्तपरिणामः, धर्मद्वारा धर्मिण एव परिणामादित्यर्थः । तदिदं चित्त स्वात्मभूतयोः स्वकार्ययोः सर्वार्थतैकाग्रतयोर्धर्मयोरपायकाले उपजनकाले चानुगतं यत्समाधीयते स चित्तस्य समाधिपरिणाम इत्याशयः ।

इदानीं समाहितचित्तस्य परिणाममाह ।

**ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥**

ततः विक्षिप्ततायाः सर्वात्मना क्षयोत्तर शान्तोदिता अतीतोत्पद्यमानो तुल्यप्रत्यया एकाकारो प्रत्ययो चित्तस्यैकाग्रताकालीनः परिणाम इत्यर्थः । सजातीय एकैकः प्रत्ययो नश्यत्यन्योन्य उत्पद्यत इत्येवं परिणाम इत्याशयः । तदुक्तम् ।

भाष्ये, समाध्यारूढचित्तस्य पूर्वप्रत्ययः शान्त उत्तरस्तत्सदृश

उदितः समाहितश्चित्तमुभयोरनुगतं पुनस्तथैव धारावाहिकैकाग्रसंतानमासमाधिभ्रंशात् सोऽयं धर्मिणश्चित्तस्यैकाग्रतापरिणाम इति समाध्यारूढेत्यनेनोक्तसमाधीयमानचित्तपरिणामाद्भेदो दर्शितः ।

इदानीं वैराग्याग्निप्रज्वलनाय "परिणामत्रयसंयमादि" त्यागामिसूत्रोपोद्घातसङ्गत्या चित्तवदेवान्येष्वपि परिणामानतिदिशति ।

**एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥**

एतेन पूर्वोक्तेन चित्तपरिणामेन धर्मलक्षणावस्थारूपेण भूतेन्द्रियेषु धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चोक्तो ज्ञेयः । भूतेन्द्रियेषु एत एव परिणामा न तु तत्त्वान्तरपरिणाम इत्याशयेन प्रकृत्यादिष्विति नोक्तं, तेन प्रकृत्यादिषु तत्त्वान्तरपरिणामवदेतेऽपि बोध्याः । ननु चित्तपरिणाम एव पूर्वसूत्रेषूक्तो न तु धर्मलक्षणावस्थापरिणाम इति चेत् । शृणु । व्युत्थाननिरोधयोर्धर्मयोरभिभवप्रादुर्भावावेव चित्ते धर्मिणि धर्मपरिणामः प्रथमसूत्रेणैवोक्तः, अवस्थितधर्मिणः पूर्वधर्मतिरोभावे धर्मान्तरप्रादुर्भावस्यैव धर्मपरिणामत्वात् । यद्यपि तत्सूत्रे तत्संस्कारयोरेव तावुक्तौ तथाऽपि कारणं विना कार्यासम्भवात्तयोरपि तावर्थत उक्तावेव । धर्मश्च द्रव्यं गुणो वेत्यन्यत् । एवं तत्रैव सूत्रेऽभिभवप्रादुर्भावशब्दाभ्यां धर्मस्य लक्षणपरिणामोऽप्युक्तः । अतीततावर्त्तमानतयोरेवाभिभवप्रादुर्भावत्वाद् अनागतत्ववर्त्तमानत्वातीतत्वानि च क्रमेण सम्बन्धादध्वतुल्यतयाऽध्वेत्युच्यन्ते । तथा धर्मधर्मिणोर्धर्माणां चान्योन्य व्यावर्त्तकतया लक्षणशब्देन च तत्र निरोधस्त्रिलक्षणस्त्रिभिरध्वभिर्युक्तः, स खलु निरोधः प्रादुर्भावकालेऽनागतलक्षणरूप प्रथमाध्वाख्य हित्वा धर्मत्वमनतिक्रान्तो वर्त्तमानलक्षणं प्राप्तः सत्कार्योपपत्तये धर्मपरिणामन्वोपपत्तये च धर्मत्वमन-

तिक्रान्त इत्युक्तं स्वरूपेण स्थितस्य धर्मस्य रूपान्तरापाये रूपान्त-
रोत्पत्तौ धर्मपरिणामव्यवहाराद् वर्त्तमानत्वप्राप्तौ चास्य स्वरूपेणो-
पलब्धिः। अत्रापि अतीतानागताभ्यां न विमुक्तः, असदुत्पादसद्विनाशयोः
प्रतिषेधात्। एषोऽस्य द्वितीयोऽध्वाख्यः। अस्मिन्नेव समये व्युत्थान-
स्यातीतलक्षणस्तृतीयोऽध्वा ततः पुनर्व्युत्थानं जायमानं वर्त्तमानल-
क्षणाध्वानं प्रपद्यते ऽनागतलक्षणं प्रथमाध्वाख्यं हित्वा, तच्च व्यक्त्यन्त-
रमेव, अतीतव्यक्तेः पुनरनुत्पादस्य वक्ष्यमाणत्वात्। यथास्य स्वरू-
पेणाभिव्यक्तावर्थक्रियारूपो व्यापारो भवति अस्यामवस्थायां निरो-
धस्यातीताख्यस्तृतीयोऽध्वा, एवं पुनर्निरोधः पुनर्व्युत्थानमिति अप-
वर्गपर्यन्तं परिणामचक्रमावर्त्तते। एवं तेषामवस्थापरिणामः प्रशान्तवा-
हितासंस्कारादिति सूत्रोक्तो दर्श्यते। तथावस्था घटस्य नवपुराणत्व-
वत् संस्कारस्य बलवत्त्वदुर्बलत्वरूपौ वृद्धिह्रासौ न तूत्पत्तिविनाशौ
लक्षणपरिणामाद्भेदानुपपत्तेः, लक्षणस्यैव नवपुराणत्वादिना ऽवस्थापरि-
णाम इति वक्ष्यमाणत्वाच्च। तत्र निरोधक्षणेषु निरोधसंस्काराणां बल-
वत्त्वं व्युत्थानसंस्काराणां दुर्बलत्वमित्येष धर्माणामवस्थापरिणामः द्रव्य-
स्य ह्रासवृद्धिवद्गुणानामपि तौ रूपादीनामपि वृद्धिह्रासदर्शनात्। रूपभे-
दकल्पने गौरवात् तदेव रूपमिदानीं प्रवृद्धमिति प्रत्यभिज्ञाऽनुपपत्ते-
श्च। ज्ञानेच्छाऽऽदीनां द्विक्षणस्थायित्वेऽपि द्वितीयक्षणे वर्त्तमानलक्षणा-
वस्थापरिणामो भवति। क्षणत्वेनैव परिणामहेतुत्वात्। सर्ववस्तूनां
प्रतिक्षणपरिणामस्य वक्ष्यमाणस्यानुपपत्तेश्च। एतेनोत्तरवृत्तिविशेषगुणा-
स्यैव ज्ञानादिनाशकत्वेनैकाग्रतादशायां ज्ञानस्य बहुक्षणावस्थायित्वाच्च
तस्य नावस्थापरिणामसंभव इत्यपास्तम्। तत्र धर्मिणां धर्मैः परिणा-

मा, धर्माणाम् अध्वनां लक्षणे. परिणामो, लक्षणानामप्यवस्थाभिरिति बोध्यम्। यद्यप्यवस्थानामपि बाल्यादीना लक्षणपरिणामोऽस्ति, तथाऽप्युक्तक्रमे नानुपपत्ति। अतीतानागतलक्षणयोर्वर्तमानलक्षणस्य नवपुराणत्वादिवत् शीघ्रभविष्यत्ताविलम्बभविष्यत्वादिरूपा अवस्था अनुमीयन्ते, सत्वादिवद् गुणत्वेन प्रतिक्षणपरिणामित्वसिद्धेः। एव धर्मलक्षणावस्थापरिणामैः शून्य क्षणमपि गुणवृत्त सत्त्वादिव्यापारो नावतिष्ठते, किं तु प्रतिक्षण परिणामं जनयत्येव, गुणाना चाञ्चल्यस्वभावत्वाद्। यतः प्रतिक्षणमेव व्यापारो दृश्यतेऽतो गुणस्वभावतैव सत्त्वादीनां प्रतिक्षणप्रवृत्तौ प्रमाणमुक्त पूर्वाचार्यैरिति दिक्। गुणत्वं च परस्य भोगापवर्गहेतुत्वम्। एव भूतेन्द्रियेषु धर्मधर्मिभेदमाश्रित्य त्रिविधः परिणामो ज्ञेयः। तद्यथा पृथिव्यादीना धर्मिणा घटादिर्धर्मपरिणामः तेषां च धर्माणा वर्तमानताऽतीतते लक्षणपरिणामः, लक्षणाना च क्षणाणामपि बाल्ययौवननवपुराणत्वादिरवस्थापरिणाम इति। एवमिन्द्रियाणामपि धर्मिणा तत्तन्नीलाद्यालोचनं धर्मपरिणामः। धर्मस्य च वर्तमानताऽऽदिलक्षणः, तस्य च रत्नाद्यालोचने स्फुटत्वास्फुटत्वादिरवस्थापरिणाम इति। न च त्रयोऽपि कथं भूतेन्द्रियेषुतेषु धर्मिषु धर्ममात्रपरिणामादिति वाच्यम्। परमार्थतः सर्वेषा धर्मिपरिणामत्वात्। धर्माणा धर्मिस्वरूपादत्यन्तमनतिरेकात्। धर्मादिद्वारा च धर्मिविक्रियैवान्तरभेदै प्रपञ्च्यत इति बोध्यम्। न च प्रतिक्षणपरिणामे क्षणिकत्वप्रसङ्गः, धर्मिणि सत एव धर्मस्यातीतानागतवर्तमानेष्वध्वसु धर्मिणो धर्मान्यथात्वरूपभावान्यथात्वस्यैव जननेन द्रव्यान्यथात्वाभावात्। स्वरूपान्यथात्वे हि प्रतिक्षण परिणामेन क्षणिकत्वापत्त्या प्रत्यभिज्ञाऽनुपपत्तिः। न तूक्तरीत्या भावान्यथात्वे। यथा स्वर्णे भाजनस्य भित्वाऽन्यथाक्रियमाणस्य भाजनताऽऽदिरूपधर्मापाय कटकादिधर्माभिव्यक्तिरूपभावान्यथात्वमेव, न तु सुवर्णान्यथात्वं प्रत्यभिज्ञाबलेन स्वर्णसामान्यस्य सर्वविकारानुगतस्य सिद्धेः, तत्सा-

मान्यं चावयविरूपो धर्मीति । न चावयवसंयोगनाशात् पूर्वस्वरूपव्यक्ते- र्नाश एव, प्रत्यभिज्ञा तु जातिविषयेति वाच्यम् । प्रतिक्षणमवयवोपचयापचयाभ्यामवयवसंयोगविभागावश्यकत्वेन सर्ववस्तूनां क्षणिकताऽऽपत्तेः । जात्यैव सर्वत्र प्रत्यभिज्ञोपपत्तौ घटादीनामपि तथास्थैर्यानुपपत्तेश्च, तस्माद्विजातीयोऽवयवविभाग एव द्रव्यनाशहेतुरिति न दोषः ।

तत्र धर्मपरिणामस्वीकारे बौद्धः प्रत्यवतिष्ठते, धर्मी धर्मेभ्यो नातिरिक्तः पूर्वतत्त्वस्य धर्मिणोऽनतिक्रमेण कूटस्थत्वापत्तेः । धर्मिणो धर्मेष्वन्वयित्वे हि पूर्वापरसकलावस्थाभेदेष्वनुगततयाऽतीतावस्थायामपि सत्त्वप्रसङ्गेन धर्मी कौटस्थ्येनैव तिष्ठेत्, चितिशक्तिवत् नित्यत्वकूटस्थत्वयोरेकार्थत्वात्तच्च तवाप्यनिष्टमतोऽत्यन्ताभिन्न इति धर्मपरिणामाप्रसिद्धिरिति तन्न । सर्वथा स्वरूपतो धर्मतश्च नित्यत्वस्यैव कौटस्थ्येन तस्य च चितिशक्तावेव सत्त्वं, न तु धर्मरूपेणानित्ये धर्मिणीत्यदोषात् । विकारव्यावृत्त प्रकृतेर्नित्यत्व च स्वतोऽतीतानागतावस्थाशून्यत्व तदेतत्त्रैलोक्य कार्यकारणात्मक चतुर्विंशतितत्त्वरूपं यथायोग धर्मरूपेण स्वतश्च वर्तमानावस्थारूपव्यक्तेरपैति । नैवेह किञ्चनाग्र आसीद् इत्यादिश्रुत्या यत्सावयवन्तदनित्य घटादिवदित्याद्यनुमानैश्च कपालशर्कराचूर्णाद्यवस्थाया व्यक्तौ घट इत्यप्रतीतेश्चार्थक्रियाऽदर्शनाच्चानित्यत्वप्रतिषेधाद् अतीतमपि सूक्ष्मरूपेणास्ति नात्यन्तमुच्छिद्यते, तद्धेद तर्ह्यव्याकृतमासीद् इति श्रुत्याऽत्यन्तोच्छेदरूपविनाशप्रतिषेधेन विनाशित्वे सत्यनादिभावत्वानुपपत्तेः । असदुत्पादे शशशृङ्गाद्युत्पादे शशशृङ्गाद्युत्पत्तिप्रसङ्गाच्च अत्यन्ततुच्छस्य कदाऽप्यर्थक्रियाकारित्वाभावाच्च । यद्यप्यतीतव्यक्तेर्न पुनरुत्पादस्तथाऽपि तज्जातीयसत्तामात्रेणाविनाशित्व बोध्यम् । न च सत्त्वे उपलब्ध्याऽऽपत्तिः । विकारजातस्य स्वकारणेषु प्रकृत्यादिषु विभागलक्षणात्संसर्गात् । अव्यक्त-

तादूपसौक्ष्म्येणानुपलब्धेः, सूक्ष्मताया लौकिकसाक्षात्कारप्रति बन्धकत्वात् । एव च सर्वेषा परिणामिना नित्यानित्योभयरूपत्वव्यवस्थापनात्सदसत्त्व सिद्धान्त' । अत एव जडाना व्यावहारिकसत्त्व स्मृतिषु गीयते, उक्तरूपमेव च व्यावहारिकसत्त्वम् एकान्तनित्यत्वरूपपारमार्थिकसत्त्वमेव च प्रतिषिध्यते । इत्थमेव ।

नासद्रूप न सद्रूप माया नैवोभयात्मिका
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी·

त्यादि सङ्गच्छते । माय'ऽऽख्यजगत्कारणस्यापि विनाशेन पारमार्थिकात्यन्ततुच्छत्वमङ्गीकुर्वता सनातनत्ववचनविरोधः ।

वस्तुतस्तु प्रधानस्यापि जातिरूपेणैवैकत्वाभ्युपगमात् प्रतिपुरुषं भेदेन मुक्तपुरुषीयस्यात्यन्तोच्छेदेऽपि जात्यैव सनातनत्ववचनाविरोध इति दिक् ।

अथ लक्षणपरिणाम उच्यते । एकस्य नित्यत्व विनाऽतीतानागतलक्षणयोगासम्भवाच्चिरध्वसु वर्त्तमानत्वरूपलक्षणवान् धर्मोऽतीतलक्षणयुक्तोऽनागतवर्त्तमानाभ्या सूक्ष्म'भ्यामवियुक्त, एवमनागतलक्षणयुक्तो वर्त्तमानातीतलक्षणाभ्यामवियुक्तो, वर्त्तमानलक्षणोऽतीतानागतलक्षणाभ्यामपि युक्त इति धर्मा इव लक्षणान्यपि नित्यानीति नात्यन्तासदुत्पत्तिसदत्यन्तोच्छेदयोः प्रसङ्गः । न चैकलक्षणाभिव्यक्तिकाले लक्षणान्तरयोरनुपलम्भादभाव एवेति वाच्यम् । पुरुषस्य एकस्या स्त्रियां रागकालेऽन्यासु विरक्त इति व्यवहाराभावेनैकविषयरागाभिव्यक्तिकालेऽपि विषयान्तररागस्यात्यन्तमभावाभावेन विषयान्तररागीयानागतलक्षणस्यानुमानेन सिद्धेः । एवं जातरागायामपि अयमस्या रागाभाववानित्यप्रतीतेरतीतलक्षणस्याप्यनुमानं बोध्यम् । अत्रापि जात्यैव नित्यत्व बोध्यम् ।

अत्र केचित् सर्वस्यानागतादेः सर्वलक्षणयोगेऽनागतादिकमपि वर्त्तमान स्यादित्यध्वसङ्करः प्राप्नोति ।

because the touch felt in the Air is neither hot nor cold, like the touch of the jar (while the touch of Water and Fire are distinctly cool and warm) Nor lastly, could the Touch be regarded as belonging to the incorporeal Substances,—*Ākāça*, Time and Space, because Touch is always found to exist in corporeal substances Then, if the touch belonged to the Mind, then like the atoms, Mind would have the character of producing products homogenous to itself, as a matter of fact however we find that Mind has not produced any touch products Consequently, the Touch could not belong the Mind Thus then, the only substance that could be regarded as the substratum of Touch is Air, and Air only

Similarly too, Sound also an is indication of the existence of of Air For instance, we often hear of a rustling sound appearing, all on a sudden, among the leaves of trees, and we conclude that the sound must be primarily due to the conjunction of a substance that is endowed with touch, because it is an initiative sound related to a substance whose component particles are not separated, like the sound proceeding from the drum struck by a stick That which has this Touch is the Air, as *Ākāça* and the other substances have no Touch And if the sound were due to the coloured substances,—Earth, Water or Fire—then it would be visible to the Eye We have added the proviso—'that which is related to a substance of which the constituent particles are not separated'—with a view to set aside the sound produced by disjunction Similarly, the existence and continuance, of leaves and other things in the sky must be regarded as due to the conjunction of a substance capable of tactile perception,—because it is a *continuance* in the absence of any such impelling agency as that of effort or speed—just as we find in the case of leaves floating on the Water This substance capable of tactile perception can not be either Earth or Water or Fire, because the Touch is not visible Hence this substance must be regarded as something totally distinct from these three We have added the proviso—'in the absence of effort and speed'—with a view to differentiate the existence or continuance of the arrow and the bird Then again,

the peculiarly qualified Shaking of trees must be due to the conjunction of a substance capable of being perceived by the organ of Touch,—because it is a qualified Shaking,—like the shaking of the *vētasa* tree caused by the swift current of the river It might be argued that the premiss does not apply to the case of the trembling of the Earth during Earth-quakes But it is not **Page 47.]** so, as Earth-quakes are due to a different cause altogether, and it is only a *qualified* shaking (*i e* shaking of substances found to be qualified by the connection of something else) that can be regarded as a reason for the existence of a conjunction with a tactile substance

*Objection* "The substance inferred from sound and the other indications, is the same as that inferred from Touch, and there is not a distinct substance inferred from each of the indications enumerated, under the circumstances what are your proofs for asserting that the existence of Air is indicated by Sound, Steadiness and Shaking?"

*Reply* The proof for this lies in the fact that, in as much as Sound, Steadiness and Shaking can be reasonably attributed to the substance that has been inferred from Touch, there can be no reason for the assumption of other substances

The author now points out the property of Air —*It has the character of moving horizontally* It is capable of moving the clouds from one place to the other, of keeping them suspended and of counteracting the force of their gravity, and also of making them rain It is Air again which moves chariots and boats

In as much as there is always a doubt as to the singleness or multiplicity of such inferred substances as the *Akāça* and the like, with a view to remove this doubt in the case of Air, our author adds—*though it is imperceptible &c* He points out where "collapse" is perceptible, whenever there is a collision of two winds operating in opposite directions, they stop each other's motion, and it is this collision tending to deaden their velocity that is called "collapse" And it is this from which we infer the

fact of the wind being many, as there could be no collision (which is a kind of conjunction) of a single thing by itself. In as much as two winds blowing in the same direction, one after the other, do not collide,—the text adds—*blowing in different directions with contrary action* And as there would be no actual collision between the two if they were of unequal force—the stronger forcing its way over the weaker and blowing in its original direction—the author has added, *blowing with equal velocity*

In as much as the conjunction in question would be as imperceptible as their multiplicity, the text proceeds to show that the collision too is inferred from the upward going of two corporeal substances in the shape of the Air rising up, the process of reasoning being that—the rising of the winds must be due to their striking against each other, because it is an upward motion of substances naturally having a horizontal motion, and no other cause for such upward motion is possible under the circumstances, just like the rising of the waves of water striking against one another Instead of using the expression '*avayavinoh*' ('substance made up of certain constituent parts), the author has used the expression '*sāvayavinoh*' (the things made up of partite substances'), with a view to include the Air in the gross perceptible form only—the epithet '*sāvayava*' ('partite') being applicable to the subtile constituents of Air (f i, the diad of Air, which also is made up of constituent atoms and hence as such can be called '*sāvayava*' though it is not perceptible), specially as a substance that is atomic in its dimensions cannot have the power of moving such things as the tuft of grass and the like As the upward rising of the winds would also be imperceptible, the author adds that the rising is inferred from the rising up of tufts of grass &c

The author now describes the real form of '*Prāan*' which is known, by ordinary men and also in the works on yoga, as something totally distinct from Air in the shape of ordinary objects The Breath exists within the body—that is to say,

'Breath' is the name that is given to the Air in the body The useful purpose served by this Breath is that *it moves about the liquid and solid materials, as also the refuse substances of the body* By the word 'liquid' here is meant the particular substance that is produced out of the digested food, 'refuse' refers to the excreta, 'solid' refers to the skin, the flesh, the bones **Page 48 ]** and the blood &c These substances are moved about and brought together—by the Breath There may be a doubt as to the multiplicity of this Breath, hence it is added—*while being one &c* It might be urged that we have many scriptural passages speaking of the Air in the Body being *five* in number with a view to this our author add,—*By reasons of the diverse functions &c* The Air is called '*apāna*' ('downward'), by reason of its moving down the refuse materials of the body, when it expands the liquids among the arteries it is called '*vyāna*' ('expansive'), by raising up the foods and drinks it comes to be called '*udāna*' ('upward'), and that which is breathed out of the nostrils and the mouth is called '*Prāna*' ('outward'), and which distributes equally the stomachic heat over all parts of the stomach, for purposes of digestion is called '*Samāna*' ('equalising') Thus we find that we have got five distinct Airs, but the number 'five' is only assumed (on the basis of its different functions) we conclude this from the fact of the impossibility of many corporeal substances existing in a single substrate (*i e* the five Airs could not inhere over the whole of a single Body

---

## CHAPTER V

### OF THE *Mahābhūtas* OR THE ULTIMATE MATERIAL SUBSTANCES OR STATES OF MATTER

*Text (40) We are now going to describe the process of the creation and destruction of the four ultimate Material Substances*

*When a hundred years, by the measure of Brahmā are at an end, there comes the time for the delive-*

*rance of the Brahmā existing at that time, and then, for the sake of the resting at night, of all living beings wearied by their wanderings,' there arises in the mind of the Supreme Lord, the Ruler of all worlds, a desire to reabsorb (all creation), and simultaneously with this desire, there comes about a cessation of the operations of the unseen potential tendencies of all souls that are the causes of their bodies, sense-organs and gross-elements Then out of the supreme Lord's desire and from the conjunction of the souls and the material atoms, there come about certain disrup-tions of the atoms constituting the Bodies and sense-organs These disruptions destroy the combinations of those atoms, and this brings about the destruction of all things down to the atoms* (II—i—18, 19, V—ii—1, VII—ii 10).

*Then there comes about a successive destruction or reabsorption of the ultimate Material Substances, Earth, Water, Fire and Air, one after the other.* (V-ii-1, 12, VII-ii-10)

*After this, the atoms remain by themselves in their isolated condition, and simultaneously with these there remain the souls permeated with the potencies of their past virtues and vices*

*Then again, for the sake of the experiences to be gained by living beings, there arising in the mind of the supreme Lord a desire for creation, there are produced, in the atoms of air, certain actions or motions, due to their conjunctions under the influence of the unseen potential tenden-cies that begin to operate in all souls These motions bringing about the mutual contact of the air atoms, there appears, through the Diad,*

*Triad &c finally the "Great Air," which exists vibrating in the sky* (V-ii-12, VII-ii-9, X-ii-2)

**Page 49]** *After this, in this Great Air, there appears, in the same order, out of the atoms of water, the Great Reservoir of water, which remains there surging* (X-ii-2, VII-ii-9)

*In this Reservoir of Water, there appears, out of the Earth-atoms, the Great Earth which rests there in its solid form* (V-ii-1, X-ii-2, VII-ii-9)
*Then, in the same Water-reservoir, there appears, in the same order, out of the Fire-atoms, the Great Mass of Fire, and not being suppressed by any thing else, it stands shining radiantly*

*The four gross elements having thus been brought into existence, there is produced, from the mere thought (mental picturing) of the Supreme Lord, the Great Egg, from out of the Fire-atoms mixed up with the atoms of Earth, and in this egg having produced all the worlds and the Four-faced Brahmā, the Grand-father of all creatures, the Supreme Lord assigns to him the duty of producing the various creatures Being thus engaged by the Supreme Lord, Brahmā, endowed with extreme degrees of Knowledge, Dispassion and Power, having recognised the ripeness for fruition of the Karmic tendencies of the living beings, creates, out of his mind, his sons, the Prājāpatis, as also the Manus and the several groups of the Gods, Rshis and Pitrs,—and out of his mouth, arms, thighs and feet, the four castes, and the other living beings of all grades high and low,—all these having their knowledge and experience ordained in accordance with their previous deeds, and then he connects them with Virtue, Knowledge, Dispas-*

*sion and Powers, according to their respective impressional potencies*

---

## Commentary

Having explained in detail, the fact of the four ultimate elements being *products*, the author now proceeds to consider the question of their having a Creator

**Page 50]** We have got to consider the production and destruction of the four elements, Earth and the rest, if we were to consider these separately under the section dealing with each of them, there would be an unnecessary prolonging of our work, consequently our author takes them collectively in this section, specially as the facts apply to all of them equally

*We now proceed to describe the processes of &c* Though the creation and destruction of all these four is described collectively, yet this should not be regarded as a point of similarity among them, as the production and destruction of each is found to be described as distinct from those of another

If we had only the word '*Mahābhūtānām*' ('of the gross elements'), then that would apply to the *three* gross elements only, as in accordance with the *Kapiñjalanyāya* (vide *Mīmānsā-sūtra* Adh xi-i-38 &c), the plurality (in '*Mahābhūtānām*') would indicate '*three*' only In order, therefore, to include all the four elements, we have the word '*Caturnām*'

Then again, if we had one word '*Caturnām*' only, then that would apply to the four 'Air'-products just mentioned—*viz* the Airy Body, the Airy Organ, the Airy Object and Breath, hence with a view to preclude these we have the word '*Mahābhūtānām*'

*Objection*—"In that case, as the production and destruction described are of the *four gross-elements*, alone, the process would not apply to the production and destruction of the Diads, as these are atomic in their nature (and not *gross*)"

*Reply* :—Not so, as we have the word (‘*vidhi*’ ‘process’), the sense of our author being that he is going to describe the *process* by which the elements are produced and destroyed, and we know that this process begins with the production of the Diads, and ends with the atoms, and so this would necessarily include the production and destruction of the Diads also

As what the author has in view is the description of the two processes, irrespective of the order in which they are dealt with, he begins with the process of destruction first, though this has been referred to last

*By the measure of Brahmā &c*

| | | |
|---|---|---|
| 5 | *Nimēshas* (Twinkling of our eyes) | 1 *Kāshthā* |
| 30 | *Kāsthās* ... | 1 *Kalā* |
| 15 | *Kalās* | 1 *Nādikā* |
| 30 | *Kalās* | 1 *Muhūrta* |
| 30 | *Muhūrtas* | 1 *Ahorātra* (day & night) |
| 15 | *Ahorātras* | 1 *Paksha* (Fort-night) |
| 2 | *Pakshas* | 1 *Māsa* (Month) |
| 2 | *Māsas* | 1 *Rtu* (Season) |
| 6 | *Rtus or* 12 *Māsas* | 1 *Samvatsara* (Year) |
| 3 | *Rtus or* 1 *Uttarāyana* | 1 Day of the Gods |
| 3 | *Rtus or* 1 *Dakshināyana* | 1 Night of the Gods |
| 360 | Days and nights of the Gods or 360 of our years | 1 Year of the Gods |
| 1200 | Years of the Gods . | The Four *Yugas* |
| 1000 | Four Yugas | 1 Day of *Brahmā* |

**Page 51]** After the lapse of a hundred years—each year made up of 360 such days of Brahmā—there comes the time for the final deliverance of the *Brahmā* of the time, and then there arises, in the mind of the Supreme Lord of all worlds whose powers are never repressed, a desire for the re-absorption, for purposes of

allowing them during the night a little rest from metempsychic troubles, of all living beings, who, during the cycle coming to an end, have been undergoing ceaseless troubles attendant upon birth and death

Immediately after this, there comes about a cessation of the functionings of the unseen potential tendencies inhering in all the Souls, which tendencies are the productive cause of the body, sense-organ and gross elements (related to each Soul) On this cessation, there remains no chance for the production, of any further body &c And as for those that have already appeared, for the destruction of these, there appear certain actions or motions, out of the Supreme Lord's destructive wish and from the conjunctions of the Souls and atoms From these actions there comes about a disruption of the atoms that form the direct or indirect material causes of the Bodies and the Sense-organs This disruption leads to the destruction of the conjunction of these atoms , and thus there comes about the destruction of the Body and all other Gross Substances, all these body &c , becoming destroyed down to the diads, the atoms alone being left behind

"If the created things were destroyed suddenly, then the God would be known as 'merciless' and 'doing things without any motive' "—In order to guard against this our Author adds that all this process of destruction and re-absorption is for the purpose of allowing the beings a rest at night, as it were

Some people urge the following objection 'There being "endless Karmic tendencies of an endless number of Souls these "tendencies would operate one after the other ( and not all at "once) , consequently while some souls would be desisting from "all experiences on account of their Karmic tendencies having "all become spent up in fruition) others would be still under-going their experiences, and others still would only be turning to-"wards future experiences , and thus the objects of experience "functioning on all sides, there could not be any simultaneous "cessation of the bodies and sense-organs &c"

This objection is met by the declaration that *there is a cessation of the operations of the Karmic tendencies*

The *time of the final deliverance of Brahmā* has been figuratively spoken of as '*night*,' because of that time resembling the night in the point of the cessation of the experiences and perceptions of all living beings (who go to sleep at night, and also into a long sleep of unconsciousness at the time under consideration)

The Gross-Elements also become destroyed in the same manner That is to say, just as there is a destruction of bodies and sense-organs, down to the very atoms, so in the same manner, we have the destruction of the Gross Elements also That is to say, by the process of the action and disruption of the atoms, there is a successive destruction of the Gross Elements, one after the other —*viz* while Water is still existing, the Earth is destroyed, and Water is destroyed before Fire, and this latter is also destroyed before Air

After this the atoms continue to exist in their isolated state, and also the Souls permeated with the faculties or tendencies left upon them by their previous good and evil deeds, continue to exist during the same period of time, *i e* during 100 years of *Brahmā* Though Time and Space &c, also exist during this time—as these also are eternal—yet the author speaks of the existence of the Souls and atoms alone, as if these did not exist at the time, then the atoms could not be developed into the product though the Karmic tendencies of the Souls, as such it is these that are by far the most important factors deserving notice

---

**Page 52** ] Having thus described the process of destruction, the Author proceeds to describe the process of creation *Then again* &c Though during that time the Souls are not endowed with life, yet they have been spoken of as '*Prānis*' ('living beings,') because of their capability for being endowed with it There arises, in the mind of the Supreme Lord, a desire to

bring about the creation, for the purpose of bringing about the experiences of pleasure and pain by those Souls Then the Karmic tendencies of the Souls regain their operative powers.

Though the creative desire of the Supreme Lord, in the shape of an active potency, is one only, and eternal, functioning towards the appearance of numberless effects that are simultaneously brought into existence,—yet, at one time it tends to bring about destruction, and at another creation, on account of the differences in the nature of the particular time and other auxilliary circumstances At the time that it tends towards destruction, the Karmic tendencies of the Souls cease in their operation, and assume a position of indifference (inactivity or latency) And when it tends towards creation, the tendencies regain their activity towards the bringing about of their effects

The compound '*Vittilabdhāh*' is to be explained as, '*Vittih labdhā yaih tē*' ('those by whom activity has been regained') This compound is found mentioned along with such compounds as '*āhitagni*' &c, with regard to which the position of the two constituent words is laid down to be optional, (Panini II-ii-37) just as we have the compound '*dantajāta*', consequently no objection can be taken to the order of the two words in the compound

Thus then the meaning is that there appear certain actions or motions in the air-atoms, on account of the conjunctions of these atoms with Souls, brought about by the active Karmic tendencies inhering in these latter Thus in the appearance of the action in the Air-atoms, the air-atoms are the *material* cause, the conjunctions of the atoms with Souls whose Karmic tendencies have begun to be active, constitute the *immaterial* cause, and the Karmic tendency is the *instrumental* cause

These actions bring about the mutual conjunction of the air-atoms From these conjunctions, the Air-diads appear, then the Triads, and so on up to the Gross-Air, which exists vibrating in the sky, not having its speed interrupted in any way.

Then, in this Air, there appears the Great Reservoir of Water, produced, in the same manner as above, out of the Water-atoms, through the Diad, in the same order of triad &c and this remains surging, flowing over the whole universe, not being stopped anywhere

After the production of this great Water-reservoir, in this same Reservoir, there appears the Solid Earth, out of the Earth-atoms

Then in this Water-reservoir, appears the Great Mass of Fire, produced, in the same manner as described above, out of the Fire-atoms, and not being suppressed by anything else, this mass of fire remains shining radiantly

Though there is a natural opposition between Fire and Water, yet it is on account of the force of the unseen agency that it becomes possible for one to be the substratum of the other

Thus the four Great Material Substances having been produced in aforesaid manner, there appears, by reason of mere volition or contemplation on the part of the Supreme Lord, out of the atoms of Fire mixed up with the atoms of Earth, the Great Egg It is because this Egg contained particles of Earth, that it could not appear as a Mass of pure fire

**Page 53 ]** In this Egg, the Supreme Lord produces the four faced *Brahmā*, the primeval ancestor of all people (and regions), along with the several worlds, and assigns to him the duty of producing the creatures Being thus appointed by the Supreme Lord, *Brahmā*, endowed with extreme degrees of Knowledge, Dispassion and Powers, comes to recognise, by means of his knowledge, the Virtues and the Vices of all beings, and on account of his Dispassion he does not act with any partiality, and through his Great Power, he makes them experience the results of their deeds

*Having come to know the fruition of the deeds of living beings* Having come to know that such and such should be

the results of their previous deeds, *Brahmā* produces his mental sons, Daksha and the rest, whose knowledge, experiences and lives are in accordance with their previous deeds—'mind-born sons' because produced out of mere volition,—and also the Manus, the Gods, and the Rshis, and the hosts of Pitrs, and then out of his mouth, arms, thighs and feet, he produces respectively, the Brāhmana, the Kshatriya, the Vaiçya and the Çūdra, and then the other beings, high and low He connects all these with such duties (*Dharma*), Knowledge, Dispassion and Power, as are in due accord with their previous deeds [The word '*Açaya*' means '*āçētē*', *that which lies latent* in the self, until the experiencing of the result] He does not deviate one jot from this universal law

Some people have asserted that the action of an intelligent agent is always for accomplishing some desirable end (to be served by that action), or for the removable of something that is undesirable, and as none of these motives—either of obtaining something desirable, or of avoiding something undesirable—could apply to the case of the Lord who has all his desires fulfilled, it cannot be possible for Him to act in any way towards the creation of the world

To this we make the following reply *It is for bringing about the experiences of all living beings &c* That is to say, the action of the Lord towards creation is for the sake of others, and not for the fulfilment of any desires of his own

*Objection* "In that case He should have created the world abounding in pleasure alone, and not one mixed with pain, as the Lord would be moved to create by pure mercy"

The reply to this is as follows *He recognises the fruits of the deeds of living beings* That is to say, though He is moved to act for the sake of others, yet He does not create a world of pleasures alone, as His creative operation is regulated by the variegated Karmic tendencies of living beings Nor is this incompatible with His mercifulness, as pain serves the Man's

useful purpose of producing in his mind a non-attachment to the things of the world Nor is the fact of His acting in accordance with the previous good and bad deeds of beings incompatable with his independent and Supreme Godly character, because it is He that joins them to such 'duties, knowledge, dispassion and power' as are in due accord with their own Karmic tendencies That is to say, how could He cease to be the Supreme Lord, by awarding to each being results in accordance with his respective deeds? For certainly, the master does not cease to be a master by making awards to his servants in accordance with their merits

**Page 54**] To this process of creation the following objection is raised, "At the beginning of creation, the living beings would not know the meaning af any words, as no convention (on which the denotations of words are based) could have been fixed upon till then, and hence at that time there could be no use of words"

The basis for meeting this objection is supplied by the text "*Mental Sons &c*" It is the soul with a body born of the womb that, on account of the great pains suffered in the womb, loses all memory of previous experiences, The Rshis, the Prajāpatis and the Manus, on the other hand, being produced from the mind, have such bodies as are not born of the womb, and as such there being no reason for their losing their memories, they are found to be directly connected with their Karmic tendencies, and duly endowed with the reminiscenses of previous experiences, and hence these Beings recall all their verbal usage of the previous creation, juut as a man after sleep remembers things seen before he went to sleep, and having recalled these words, these Beings carry on the usage among themselves, and from this usage, the living beings of that cycle come to know the meanings of those words, and these on their turn carry on the usage, and hand it on to future generations

---

*Question* "What are the proofs for the existence of God?"

This proof is in the form of Scriptural Authority and Inferential Reasoning

This Inferential Reasoning is—The four Great Elementary Substances are preceded by some one having a knowledge of them, because they are effects,—anything that is an effect is preceded by one having a cognition of it, as for instance, the jar (which is always preceded by the potter),—and the four Great Elementary Substances are effects,—hence they must be preceded by one having a knowledge of them

*Objection* "The premiss of this inference (that the Elementary Substances are effects) is not duly cognised by any means of right motion,—for the fact of the Earth being an effect cannot be regarded as duly established"

*Reply* This is not right, as the Earth &c are made up of parts, and everything that has parts is an effect, as for instance the jar, the Earth &c have parts,—hence they must be effects

*Objection* —"An Inferential Reasoning is operative only when "the invariable Concomitance (upon which it is based) has been "duly recognised, as for the invariable concomitance of the *charac-"ter of an effect* and *that of being preceded by one having know-"ledge* of it, this can never be known from the case of the jar and such "other substances, as in the case of the sprouting of the seed we "find that the sprouting appears *at the same time* as the cognition "of the sprout by the person who had sown the seed, and hence in "this case we do not find any *precedence* of the doer with the know-"ledge of the effect over the appearance of the effect Nor could "the sprout &c be included in the subject of the inference in ques-"tion, as it is only after the invariable concomitance has been duly "cognised, and the Inference has begun to operate, that we pro-"ceed to distinguish the Subject and Predicate &c of the Inference, "for the benefit of the opponent, while in the case in question "(of the sprout) it is found to be always included in a cognition "contrary to the concomitance, and as such, there could be no "cognition of the necessary concomitance"

*Reply* If there be no recognition of the invariable concomitance simply on account of there being no perception of duality or difference (between the time of the appearance of the sprout and the knowledge thereof by the sower),—then, in that case, we could never rightly arrive at the *Sāmānyatodrishta* inference of the moving of the sun, which has been put forward by the author of the *Bhāshya* on the *Mīmānsa-Sūtras* As therein also, we find that it is merely the fact of the stars &c having assumed different positions, and not that of their having *moved*, that is perceived at the same time as the cognition of their other positions preceded by the movement of Dēvadatta (the observer) from one place to another

*Objection* "In the case of the stars, in as much as the "non perception of *moving* could be possible on account of the "difference in the position (or the great difference in space) be-"tween the observer and the stars, or the difference in their "positions, (the one being on the Earth while the others are in "the sky),—this non-perception could not set aside the effect of "the repeated seeing of the sun, which is unconditionally effective "towards bringing about a cognition of the necessary concomi-"tances, specially as the two do not pertain to the same subject"

*Reply* In that case, in the case in question also, the non-perception of the cognition of the sprout (before its actual appearance) may be due to the difference in nature between that and the doer (the Sower), who is bodiless (while the sprout is bodied), and hence the affectiveness of the repeated perceptions operating unconditionally could not be set aside by the said non-perception

**Page 55** ] *Objection* "Then again, does the above Inferen-"tial Reasoning establish only the Creator, or a Creator capable of "creating the Earth &c ? If it prove a mere creator, then what "is desired is not accomplished As what you seek to prove is not "a mere agent, like ourselves, as any such person having a limited "vision could not create the Earth &c Then as for an agent

स्यैव समनस्कत्वादिति चेत्, न, मनसो नित्यत्वेन देहापगमेऽपि मनस्सद्भावेनानैकान्तिकत्वात् । अतो विचित्रावयवसन्निवेशविशेषतनुभुवनादिकार्य्यनिर्म्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्म्माणचतुरोऽचिन्त्यापरिमितज्ञानशक्त्यैश्वर्य्योऽशरीरः सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरो ऽनुमानेनैव सिद्ध्यति । अतः प्रमाणान्तरावसेयत्वाद् ब्रह्मणो नैतद्वाक्य ब्रह्म प्रतिपादयति । किञ्च, अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेन आकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादान च प्रतिपादयितु शक्नोतीति ॥

एव प्राप्ते ब्रूमः, यथोक्तलक्षण ब्रह्म जन्मादिवाक्यं बोधयत्येव । कुतः । शास्त्रैकप्रमाणकत्वाद् ब्रह्मणः । यदुक्तम्, सावयवत्वादिना कार्य्यं सर्वं जगत, कार्य्यं च तदुचितकर्तृविशेषपूर्वक दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय इति, तदयुक्तम्; महीमहार्णवादीना कार्य्यत्वेऽपि एकदैवैकेन निर्मिता इत्यत्र प्रमाणाभावात् । न चैकस्य घटस्येव सर्वेषामेक कार्य्यत्वम्, येनैकदैवैकः कर्त्ता स्यात्, पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमाभावा[१]त् । न च क्षेत्रज्ञाना विचित्रजगन्निर्माणाशक्त्या कार्य्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनाऽनुपपत्तेश्चैक एव कर्त्ता भवितुमर्हति, क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणा शक्तिवैचित्र्यदर्शनेन तेषामेवातिशयितादृष्टसम्भावनया च तत्तद्विलक्षणकार्य्यहेतुत्वसम्भवात्, तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनाऽनुपपत्तेश्च । न च युगपत् सर्वोच्छित्तिः सर्वोत्पत्तिश्च प्रमाणपदवीमधिरोहतः, अदर्शनात्, क्रमेणैवोत्पत्तिविनाशदर्शनाच्च, कार्य्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायामपि विरोधाभावाच्च । अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्य्यत्वस्यानैकान्त्य पक्षस्याप-

---

१ नियमादर्शनादिति पाठान्तरम् ।

सिद्धविशेषणत्वं साध्यविकलता च दृष्टान्तस्य, सर्वनिर्माणचतुरस्यैकस्याप्रसिद्धेः। बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाधनता। सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वं किं युगपदुत्पद्यमानसर्ववस्तुगतम्, उत क्रमेणोत्पद्यमानसर्ववस्तुगतम्। युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्य्यत्वस्यासिद्धता, क्रमेणोत्पद्यमानसर्ववस्तुगतत्वेऽनेककर्तृकत्वसाधनाद्विरुद्धता। अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधः शास्त्रविरोधश्च, 'कुम्भकारो जायते' 'रथकारो जायते' इत्यादिश्रवणात्। अपि च सर्वेषां कार्य्याणां शरीरादीनां सत्त्वादिगुणकार्य्यरूपसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्याश्रयणीयम्। कार्य्यवैचित्र्यहेतुभूताः कारणगता विशेषाः सत्त्वादयः, तेषां कार्य्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण, पुरुषस्य च तद्योगः कर्ममूल इति कार्य्यविशेषारम्भायैव ज्ञानशक्तिवत् कर्तुः कर्मसम्बन्धः कार्य्यहेतुत्वेनैवावश्याश्रयणीयः, ज्ञानशक्तिवैचित्र्यस्य च कर्ममूलत्वात्। इच्छायाः कार्य्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्यास्सत्त्वादिमूलत्वेन कर्मसम्बन्धोऽवर्जनीयः। अतः क्षेत्रज्ञा एव कर्त्तारः, न तद्विलक्षणः कश्चिदनुमानात्सिद्ध्यति। भवन्ति च प्रयोगाः, तनुभुवनादि क्षेत्रज्ञकर्तृकं कार्य्यत्वात् घटवत्, ईश्वरः कर्त्ता न भवति प्रयोजनशून्यत्वात् मुक्तवत्, ईश्वरः कर्त्ता न भवति, अशरीरत्वात् तद्वदेव। न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः, तत्राप्यनादेः सूक्ष्मशरीरस्य सद्भावात्। विमतिविषयः कालो न लोकशून्यः कालत्वात् वर्तमानकालवत् इति। अपि च किमीश्वरः सशरीरोऽशरीरो वा कार्य्यं करोति। न तावदशरीरः, अशरीरस्य तस्य कर्तृत्वानुपलब्धेः। मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति, मनसो नित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्य्यादर्शनात्। नापि सशरीरः, विकल्पासहत्वात्। तच्च शरीरं किं नित्यमुतानित्यं वा। न तावन्नित्यम्, सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः। नाप्यनित्यम्, तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात्। स्वयमेव हेतुरिति चेत्, न, अशरीरस्य तदयोगात्। अन्येन शरीरेण सशरीर इति चेत्, न, अनव-

स्थानात् । स किं सव्यापारो वा निर्व्यापारो वा । अशरीरत्वादेव न सव्यापारः । नापि निर्व्यापारः कार्यं करोति, मुक्तात्मवत् । कार्यं जगद् इच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वम्, दृष्टान्तस्य च साध्यहीनता । अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरः पुरुषोत्तमः । शास्त्रं तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयं सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारगुणसागरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्रसङ्गः । यत्तु निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवस्य द्रव्यस्य कार्यत्वं चानुपलब्धमशक्यप्रतिपादनमित्युक्तम्, तदप्यविरुद्धमिति "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" "न वियदश्रुतेरि"त्यत्र प्रतिपादयिष्यते । अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात् "यतो वा इमानी"त्यादिवाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम् ॥

यद्यपि प्रमाणान्तरागोचरं ब्रह्म, तथाऽपि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह

समन्वयाधिकरणम् । **तत्तु समन्वयात् ॥ ४ ॥**

प्रसक्ताशङ्कानिवृत्त्यर्थः तु शब्दः । "तत्" शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव । कुतः । "समन्वयात्" परमपुरुषार्थतयाऽन्वयः समन्वयः, परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयात् । एवमेव समन्वितो ह्यौपनिषदः पदसमुदायः "यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" "ब्रह्म वा इदमेकमेवाग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "एको ह वै नारायण आसीत्" । सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मे"त्येवमादिः । न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानामखिलजगदुत्पत्तिस्थितिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमि-

तोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्विताना प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वम्, स्वविषयावबोधपर्य्यवसायित्वात् सर्वप्रमाणानाम् । न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः, प्रयोजन हि प्रमाणानुगुणम् । न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम्, पुरुषार्थान्वयप्रतीतेः । तथा स्वरूपपरेष्वपि "पुत्रस्ते जातः" "नाय सर्प" इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्व दृष्टम् ॥

अत्राह, न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति, प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात् । यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्य्यवस्यन्ति, तथाऽपि शास्त्र प्रयोजनपर्यवसाय्येव, न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः । न किञ्चित्प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवण वा सम्भवति, तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम् "अर्थार्थी राजकुल गच्छेत्" "मन्दाग्निर्नाम्बु पिबेत्" "स्वर्गकामो यजेत" "न कलञ्ज भक्षयेदि"त्यादिषु । यत्पुनः सिद्धवस्तुपरेष्वपि "पुत्रस्ते जात." "नाय सर्पो रज्जुरेषे"त्यादिषु हर्षभयादिनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम् । तत्र किं पुत्रजन्माद्यर्थात् पुरुषार्थावाप्तिः, उत तज्ज्ञानादिति विवेचनीयम् । सतोऽप्यर्थस्याज्ञातस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत्, तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थः सिद्ध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्य्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम् । तस्मात् सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्य्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्य्यासम्भवाच्च वेदान्ता. परिनिष्पन्न ब्रह्म प्रतिपादयन्ति ॥

अत्र कश्चिदाह, वेदान्तवाक्यान्यपि कार्य्यपरतयैव ब्रह्मणि प्रमाणत्वमनुभवन्ति । कथम् । निष्प्रपञ्चमद्वितीय ज्ञानैकरस ब्रह्मानाद्यविद्यया सप्रपञ्चतया प्रतीयमान निष्प्रपञ्च कुर्य्यादिति ब्रह्मणः प्रपञ्चविलयद्वारेण विधिविषयत्वमिति । कोऽसौ द्रष्टृदृश्यरूपप्रपञ्चप्रविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः । "न दृष्टेर्द्रष्टार पश्येः, न मते-

मन्तारमन्वीथा" इत्येवमादिः । द्रष्टृदृश्यभेदशून्यं दृशिमात्रं ब्रह्म कुर्य्यादित्यर्थः । स्वतःसिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण का[१]र्यत्वमविरुद्धमिति ॥

तदयुक्तम्, नियोगवाक्यार्थवादिना हि नियोगो नियोज्यविशेषणं विषयः करणमितिकर्त्तव्यता प्रयोक्ता च वक्तव्याः । तत्र हि नियोज्यविशेषणमनुपादेयम्, तच्च निमित्त फलमिति द्विधा । अत्र किं नियोज्यविशेषणम्, तच्च किं निमित्त फल वेति विवेचनीयम् । ब्रह्मस्वरूपयाथात्म्यानुभवश्चेत् नियोज्यविशेषणम्, तर्हि न तत् निमित्तम्, जीवनादिवत् तस्यासिद्धत्वात्, निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवत् नित्यतद्विषयानुष्ठानप्रसङ्गः । नापि फलम्, नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात् । कश्चात्र नियोगविषयः । ब्रह्मैवेति चेत्, न, तस्य नित्यत्वेनाभव्यरूपत्वात्, अभावार्थत्वाच्च । निष्प्रपञ्च ब्रह्म साध्यमिति चेत्, साध्यत्वेऽपि फलत्वमेव, अभावार्थत्वान्न विधिविषयत्वम् । साध्यत्वं च कस्य, किं ब्रह्मणः, उत प्रपञ्चनिवृत्तेः । न तावत् ब्रह्मणः, सिद्धत्वादनित्यत्वप्रसक्तेश्च । अथ प्रपञ्चनिवृत्तेः, न तर्हि ब्रह्मणः साध्यत्वम् । प्रपञ्चनिवृत्तिरेव विधिविषय इति चेत्, न, तस्याः फलत्वेन विधिविषयत्वायोगात् । प्रपञ्चनिवृत्तिरेव हि मोक्षः, स च फलम् । अस्य च नियोगविषयत्वे नियोगात् प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्त्या नियोग इतीतरेतराश्रयत्वम् । अपि च किं निवर्त्तनीयः प्रपञ्चो मिथ्यारूप सत्यो वा । मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किञ्चित्प्रयोजनम् । नियोगस्तु निवर्त्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्त्तक इति चेत्, स्ववाक्यादेव जातमिति न नियोगेन प्रयोजनम् । वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात् सपरिकरस्य नियोगस्यासिद्धिश्च । प्रपञ्चस्य निवर्त्यत्वे प्रपञ्चस्य निवर्तको नियोगः किं ब्रह्मस्वरूपमेव, उत तद्व्यतिरिक्तः ।

१ साध्यत्वमिति पाठान्तरम् ।

यदि ब्रह्मस्वरूपमेव निवर्त्तकम्, नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति, नित्यत्वेन च नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते। अथ ब्रह्मस्वरूपव्यतिरिक्तः, तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिः, प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वात् न नियोगनिष्पाद्यो मोक्षाख्यं फलम्। किञ्च, प्रपञ्चनिवृत्तेर्नियोगकरणस्येतिकर्त्तव्यताऽभावात् अनुपकृतस्य च करणत्वायोगात् न करणत्वम्। कथमितिकर्त्तव्यताऽभाव इति चेत्। इत्थम्, अस्येतिकर्त्तव्यता भावरूपा, अभावरूपा वा। भावरूपा च करणशरीरनिष्पत्तितदनुग्रहकार्य्यभेदभिन्ना। उभयविधा च न सम्भवति, न हि मुद्गराभिघातादिवत् कृत्स्नप्रपञ्चनिवर्तकः कोऽपि दृश्यत इति दृष्टार्थो न सम्भवति। नापि निष्पन्नस्य करणस्य कार्य्योत्पत्तावनुग्रहः सम्भवति, अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः। ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत्, तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षः सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम्। अभावरूपत्वे चाभावा[1]देव न करणशरीरं निष्पादयति, नाप्य[2]नुग्रहम्। अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न सम्भवति॥

अन्योऽप्याह, यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यम्, तथापि ब्रह्मस्वरूपं सिद्ध्यत्येव। कुतः। ध्यानविधिसामर्थ्यात्। एवमेव हि समामनन्ति "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "य आत्माऽपहतपाप्मा" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मेत्येवोपासीत" "आत्मानमेव लोकमुपासीत"-ति। अत्र ध्यानविषयो हि नियोग. स्वविषयभूतध्यानं ध्येयैकनिरूपणीयमिति ध्येयमाक्षिपति, स च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा। स किंरूप

१ अभावत्वादेवेति पाठान्तरम्।
२ नाप्यनुग्राहकमिति पाठान्तरम्।

इत्यपेक्षाया तत्स्वरूपविशेषसमर्पणद्वारेण "सत्य ज्ञानमनन्त ब्रह्म" "स-देव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"त्येवमादीना वाक्याना ध्यान-विधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्य्यमस्त्येव । अत "एकमेवाद्वितीयम्" "तत्सत्य स आत्मा तत्त्वमसि श्वेतकेतो" "नेह नानाऽस्ति किञ्चने"त्यादिभिर्ब्रह्मस्वरूप-मेकमेव सत्य तद्व्यतिरिक्त सर्वं मिथ्येत्यवगम्यते । प्रत्यक्षादिभिर्भेदावल-म्बिना च कर्मशास्त्रेण भेदः प्रतीयते । भेदाभेदयोः परस्परविरोधे सति, अनाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्ची-यते, तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृ-तविविधभेदाद्वितीयज्ञानैकरसब्रह्मभावरूपो मोक्ष. प्राप्यते । न च वा-क्याद् वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः, अनुपलब्धेर्विविधभेददर्श-नानुवृत्तेश्च, तथा च सति श्रवणादिविधानमनर्थक स्यात् ॥

अथोच्येत, "रज्जुरेषा न सर्प्प" इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात् रज्जुसर्पवत् बन्धस्यापि मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्य-ज्ञानेनैव निवृत्तिर्युक्ता, न नियोगेन । नियोगसाध्यत्वे मोक्षस्यानित्यत्व स्यात्, स्वर्गादिवत्, मोक्षस्य नित्यत्व हि सर्ववादिसम्प्रतिपन्नम् । किंच, धर्माधर्मयोः फलहेतुत्व स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मा-दिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपससारफलत्वमवर्जनीयम् । तस्मात् न धर्म्मसाध्यो मोक्षः । तथा च श्रुतिः "न ह वै सशरीरस्य सतः प्रिया-प्रिययोरपहतिरस्ति, अशरीर वावसन्त न प्रियाप्रिये स्पृशत" इति । अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात् न धर्मसाध्य-मशरीरत्वमिति विज्ञायते । न च नियोगविशेषसाध्यफलविशेषवत् ध्या-ननियोगसाध्यमशरीरत्वम्, अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात् । यथा-हुः श्रुतयः "अशरीरं शरीरेष्वनवस्थेष्ववस्थित महान्त विभुमात्मानं मत्वा धीरो न शोचति" "अप्राणो ह्यमनाः शुभ्रः" "असङ्गो ह्यय पुरुष" इत्याद्याः । अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्मसाध्यः । तथा च श्रुतिः "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् अन्यत्र भूता-

द्रव्याच्च यत्तत्पश्यसि तद्वद" ति । अपि च उत्पत्तिप्राप्तिविकृतिसंस्कृति- रूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न सम्भवति । न तावत् उत्पाद्यः, मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात् । नापि प्राप्यः, आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात् । नापि विकार्य्यः, दध्यादिवदनित्यत्वप्रसङ्गात् । नापि संस्कार्य्यः, संस्कारो हि दोषापनयनेन वा गुणाधानेन वा साध्यते । न तावत् दोषापनयनेन, नित्यशुद्धत्वात् ब्रह्मणः । नाप्यतिशयाधानेन, अनाधेयातिशयस्वरूपत्वात् । नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषयतया न नि[१]घर्षणेनादर्शादिवदपि संस्कार्य्यत्वम् । न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते, किन्त्वविद्यागृहीतस्तत्सङ्गतोऽहंकर्त्ता, तत्फलानुभवोऽपि तस्यैव । न चाहंकर्त्तैवात्मा, तत्साक्षित्वात् । तथा च मन्त्रवर्णः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" । "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा, कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" "स पर्य्यगाच्छुक्रमकायमव्रणम[२]स्नाविरं शुद्धमपापविद्धम्" इति चाविद्यागृहीतादहंकर्त्तुरात्मस्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निरूप्यते । तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः । यद्येवम्, किं वाक्यार्थज्ञानेन क्रियत इति चेत्, मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः । तथा च श्रुतयः "त्वं हि नः पिता योऽस्माकमविद्यायाः परम्पारन्तारयसि" "श्रुतं ह्येवमेव भगवद्दृशेभ्यः तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारन्तारयतु" "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार" इत्याद्याः । तस्मात् नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते, निवृत्तिस्तु साध्याऽपि प्रध्वंसाभावरूपा न विनश्यति । "ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वाऽतिमृत्युमेती"-त्यादिवचनं मोक्षस्य ब्रह्मवेदनानन्तरभावितां प्रतिपादयत् नियोगव्यव-

१ निघर्षणेनेति पाठान्तरम् ।
२ अस्थाविरमिति पाठान्तरम ।

धान प्रतिरुणद्धि । न च विदिक्रियाकर्मत्वेन ध्यानक्रियाकर्मत्वेन वा कार्य्यानुप्रवेश , उभयकर्मत्वप्रतिषेधात्, "अन्यदेव तद्विदितादथो अविदितादपि" "येनेद सर्वं विजानाति त केन विजानीयादि"ति, "तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासत" इति च । न चैतावता शास्त्रस्य निर्विषयत्वम्, अविद्यापरिकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम्, अपि त्वविषय प्रत्यगात्मस्वरूप प्रतिपादयत् अविद्याकल्पितज्ञातृज्ञानज्ञेयविभाग निवर्त्तयति । तथा च शास्त्रम्, "न दृष्टेर्द्रष्टारम्पश्येरि"त्येवमादि । न च ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम्, स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम् । न च ज्ञानमात्रात् बन्धनिवृत्तिर्न दृष्टेति वाच्यम्, बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकाल स्थित्यनुपपत्तेः । अत एव न शरीरपातादूर्द्ध्वमेव बन्धनिवृत्तिरिति वक्तु युक्तम् । न हि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते । यदि शरीरसम्बन्धः पारमार्थिकः, तर्हि तद्विनाशापेक्षा, स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः, यस्य तु बन्धो न निवृत्तस्तस्य ज्ञानमेव न जातमित्यवगम्यते, ज्ञानकार्य्यादर्शनात् । तस्माच्छरीरस्थितिर्भवतु वा मा वा, वाक्यार्थज्ञानसमनन्तरम् मुक्त एवासौ । अतो न ध्याननियोगसाध्यो मोक्ष इति न ध्यानविधिशेषतया ब्रह्मणः सिद्धि , अपि तु "सत्य ज्ञानमनन्तम्ब्रह्म" "तत्त्वमसि" "अयमात्मा ब्रह्मे"ति तत्परेणैव पदसमुदायेन सिध्यतीति ॥

तदयुक्तम्, वाक्यार्थज्ञानमात्रात् बन्धनिवृत्त्यनुपपत्तेः । यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः, तथाऽपि बन्धस्यापरोक्षत्वात् न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते, रज्ज्वादावपरोक्षसर्पप्रतीतौ विद्यमानायां नाय सर्पो रज्जुरेषेत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात् । आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्व वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन । तथा हि, रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषो नाय सर्पो रज्जुरेषेत्याप्तोपदेशात् तद्वस्तुयाथात्म्यदर्शने

प्रवृत्तः तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्त्तते । न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्, तस्यानिन्द्रियत्वात्, ज्ञानसामग्रीष्विन्द्रियाण्येवापरोक्षसाधनानि । न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति, निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात् । न च ध्यानस्य वाक्यार्थज्ञानोपायता, इतरेतराश्रयत्वात्, वाक्यार्थज्ञाने जाते तद्विषयध्यानम्, ध्याने निर्वृत्ते वाक्यार्थज्ञानमिति । न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम्, तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात् । न ह्यन्यध्यानमन्यौन्मुख्यमुत्पादयति, ज्ञातार्थस्मृतिसन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम्, ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासम्भवात् । न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यं निवर्त्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम् । ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यान्तरजन्यज्ञानैकविषयं भिन्नविषयं वा । एकविषयत्वे तदेवेतरेतराश्रयत्वम्, भिन्नविषयत्वे ध्यानेन तदौन्मुख्यापादनासंभवः । किञ्च, ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वात् निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव । यतो वाक्यादपरोक्षज्ञानासम्भवात् वाक्यार्थज्ञानेनाविद्या न निवर्त्तते, तत एव जीवन्मुक्तिरपि दूरोत्सारिता । का चेयं जीवन्मुक्तिः । सशरीरस्यैव मोक्ष इति, "माता मे वन्ध्ये"तिवत् असङ्गतार्थं वचनम्, यतः सशरीरत्वं बन्धः अशरीरत्वं मोक्ष इति त्वयैव श्रुतिभिरुपपादितम् । अथ सशरीरत्वप्रतिभासे वर्तमाने अस्यायम्प्रतिभासोऽपि मिथ्येति प्रत्ययः तस्य सशरीरत्वनिवृत्तिरिति । न, मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं चेत् कथं सशरीरस्य मुक्तिः, अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्त[1] इति विशेषः । अथ सशरीरत्वप्रतिभा-

१ कोऽयं जीवन्मुक्तिरिति पाठान्तरम् ।

सो बाधितोऽपि यस्य द्विचन्द्रज्ञानवत् अनुवर्तते स जीवन्मुक्त इति चेत्, न, ब्रह्मव्यतिरिक्तसकलवस्तुविषयकत्वात् बाधकज्ञानस्य । कारणभूताविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुम्, द्विचन्द्रज्ञानादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता । किंच, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्य" इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीय श्रुतिर्जीवन्मुक्तिं वारयति । सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता "वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्, बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत, एतेन परं व्याख्यातमि"ति, अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः । अतस्सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न सम्भवति । तस्मात् ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । न च नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसक्तिः, प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् । किंच, न नियोगेन साक्षात् बन्धनिवृत्तिः क्रियते, किन्तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्षज्ञानेन, नियोगस्तु तदा[1]परोक्ष्यज्ञानं जनयति । कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत् । कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् । मनोनैर्मल्यद्वारेणेति चेत् । ममापि तथैव । मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते, तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत् । ध्याननियोगनिर्मलं मन एव साधनमिति ब्रूमः । केनावगम्यत इति चेत् । भवतो वा कर्मभिर्मनो निर्मलं भवति, निर्मले मनसि श्रवणमनननिदिध्यासनैः सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयतीति केनावगम्यते । "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "ब्रह्म वेद ब्रह्मैव भवती"त्यादिभिः शास्त्रैरिति चेत् । ममापि "श्रोतव्यो मन्तव्यो

[1] तदाऽपरोक्षं ज्ञानमिति पाठान्तरम् ।

निदिध्यासितव्यः" "ब्रह्मविदाप्नोति परम्" "न चक्षुषा गृह्यते नापि वाचा" "मनसा तु विशुद्धेन" "हृदा मनीषा मनसाऽभिक्लृप्त" इत्यादिभिः शास्त्रैर्ध्याननियोगेन मनो निर्मलं भवति, निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम्। "नेदं यदिदमुपासत" इत्युपास्यत्वं प्रतिषिद्धमिति चेत्। नैवम्, नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते, अपि तु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते, यदिदं जगदुपासते प्राणिनः नेदं ब्रह्म, तदेव ब्रह्म त्वं विद्धि यद्वाचाऽनभ्युदितं येन वागभ्युद्यते इति वाक्यार्थः। अन्यथा "तदेव ब्रह्म त्वं विद्धी"ति विरुध्येत, ध्यानविधिवैयर्थ्यं चात्मनः स्यात्। अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः॥

यदपि कैश्चिदुक्तम्, भेदाभेदयोर्विरोधो न विद्यत इति, तदयुक्तम्, न हि शीतोष्णतमःप्रकाशादिवद् भेदाभेदावेकस्मिन्वस्तुनि सङ्गच्छेते। अथोच्येत, सर्वमेव हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्, सर्वं च भिन्नाभिन्नं च प्रतीयते, कारणात्मना जात्यात्मना चाभिन्नम्, कार्यात्मना व्यक्त्यात्मना च भिन्नम्। छायातपादिषु विरोधः सहानवस्थानलक्षणो भिन्नाधारत्वरूपश्च। कार्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते, प्रत्युत एकमेव वस्तु द्विरूपं प्रतीयते, यथा मृदयं घटः, खण्डो गौः मुण्डो गौरिति। न चैकरूपं किंचिदपि वस्तु लौकिकैर्[1]दृष्टचरम्, न च तृणादेर्ज्वलनादिवत् अभेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः, मृत्सुवर्णगवाश्वाद्यात्मनाऽवस्थितस्यैव घटमुकुटखण्ड[2]मुण्डगवाद्यात्मना चावस्थानात्। न चाभिन्नस्य भिन्नस्य च वस्तुनोऽभेदो भेदश्चैक एवाकार इतीश्वराज्ञा। प्रतीतत्वादैकरूप्यं चेत्, प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम्। न हि विस्फारिताक्षः पुरुषो घटशरावखण्डमुण्डादिषु वस्तुषूपलभ्यमानेष्विय मृद्, अयञ्च घटः, इदञ्च गोत्वम्, इयं व्यक्तिरिति विवेक्तुं शक्नोति, अपि तु

[1] लोके दृष्टचरमिति पाठान्तरम।
[2] खण्डवडवाद्यात्मना इति पाठान्तरम।

मृदय घटः खण्डो गौरित्येव च प्र[१]त्येति । अनुवृत्तिबुद्धिबोध्यं कारण-माकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्य्यं व्यक्तिश्चेति विविनक्तीति चेत्, नैवम्, विविक्ताकारानुपलब्धेः । न हि सुसूक्ष्ममपि निरीक्षमाणैरिदमनुव र्त्तमानमिदं च व्यावर्त्तमानमिति पुरोऽवस्थिते वस्तुन्याकारभेद उपल भ्यते । यथा सप्रतिपक्षैक्ये कार्य्ये विशेषे चैकत्वबुद्धिरुपजायते, तथैव सकारणे ससामान्ये चैकत्वबुद्धिरविशिष्टोपजायते । एवमेव देशतः का-लतश्चाकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु तद्वेदमिति प्रत्यभिज्ञा जा-यते । अतो द्व्यात्मकमेव वस्तु प्रतीयत इति कार्य्यकारणयोर्जातिव्यक्त्यो-श्चात्यन्तभेदोपपादनं प्रतीतिपराहतम् । अथोच्येत, मृदय घटः खण्डो गौरितिवत् देवोऽहम्मनुष्योऽहमिति सामानाधिकरण्येनैक्यप्रतीतेरात्म-शरीरयोरपि भिन्नाभिन्नत्वं स्यात्, अत इदम्भेदाभेदोपपादनं निजसदन-निहितहुतवहज्वालायत इति । तदिदमनाकलितभेदाभेदसाधनसामा-नाधिकरण्यतदर्थयाथात्म्या[२]वबोधविलसितम् । तथा हि, अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति, देहात्माभिमानस्तु आत्मयाथात्म्य-गोचरैः सर्वैः प्रमाणैर्बाध्यमानो रज्जुसर्प्पादिबुद्धिवत् नात्मशरीरयोरभेदं साधयति, खण्डो गौर्मुण्डो गौरिति सामानाधिकरण्यस्य न केनचित् क्वचित् बाधो दृश्यते, तस्मात् नातिप्रसङ्गः । अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः, अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः । तत्राभेद एव स्वा-भाविकः, भेदस्त्वौपाधिकः । कथमिदमवगम्यत इति चेत्, "तत्त्वमसि" "नान्योऽतोऽस्ति द्रष्टा" "अयमात्मा ब्रह्म"त्यादिभिः श्रुतिभि"र्ब्रह्मेमे द्यावापृथिवी" इति प्रकृत्य "ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोतवा पुमानि"त्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च, "नित्यो नित्यानाञ्चेतनश्चे-तनानामेको बहूनां यो विदधाति कामान्" "ज्ञाज्ञौ द्वावजावीशानीशौ"

१ प्रतीतिरिति पाठान्तरम् ।

२ याथात्म्यानवबोध इति पाठान्तरम् ।

"क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" "स कारणङ्करणाधिपाधिपः" "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाकशीति" "य आत्मनि तिष्ठन्" "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" "प्राज्ञेनात्मनाऽन्वारूढ उत्सृजन् याति" "तमेव विदित्वाऽतिमृत्युमेती"त्यादिभिर्भेदश्रवणाच्च जीवपरयोर्भेदाभेदाववश्याश्रयणीयौ। तत्र "ब्रह्म वेद ब्रह्मैव भवती"त्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात्, "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कम्पश्येदि"ति तदानीं भेदेनेश्वरदर्शननिषेधाच्च, अभेदः स्वाभाविक इत्यवगम्यते। ननु च "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति सहश्रुत्या तदानीमपि भेदः प्रतीयते, वक्ष्यति च "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्चे"ति। नैतदेवम्, "नान्योऽतोऽस्ति द्रष्टे"त्येवमादिश्रुतिशतैरात्मभेदप्रतिषेधात्। "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति सर्वैः कामैः सह ब्रह्माश्नुते, सर्वगुणान्वितं ब्रह्माश्नुते इत्युक्तं भवति, अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्रह्मणः प्रसज्येत। "जगद्व्यापारवर्जमि"त्यत्र मुक्तस्य भेदेनावस्थाने सति ऐश्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते, अन्यथा "सम्पद्याविर्भावः स्वेनशब्दादि"त्यादिभिर्विरोधात्। तस्मादभेद एव स्वाभाविकः। भेदस्तु जीवानाम् परस्माद्ब्रह्मणः परस्परञ्च बुद्धीन्द्रियदेहोपाधिकृतः। यद्यपि ब्रह्म निरवयवं सर्वगतं च, तथाप्याकाश इव घटादिना बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदः सम्भवत्येव। न च भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः, बुद्ध्याद्युपाधिसंयोगाद् ब्रह्मणि भेद इतीतरेतराश्रयत्वम्, उपाधेस्तत्संयोगस्य च कर्मकृतत्वात्, तत्प्रवाहस्य चानादित्वात्। एतदुक्तं भवति, पूर्वकर्मसम्बद्धाज्जीवात् स्वसम्बद्ध एवोपाधिरुत्पद्यते, तद्युक्तात् कर्म, एवं बीजाङ्कुरन्यायेन कर्मोपाधिसम्बन्धस्यानादित्वाददोष इति। अतो जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविकः, भेदस्त्वौपाधिकः। उपाधीनां पुनः परस्परं ब्रह्मणा चाभेदवत् भेदोऽपि स्वाभाविकः, उपाधीनामुपाध्यन्तराभावात्, तदभ्युपगमे

ऽनवस्थानाच्च । अतो जीवकर्मानुरूप ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधय उत्पद्यन्त इति ॥

अत्रोच्यते, अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते, भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते, भेदाभेदयोः परस्परविरोधात् अनाद्यविद्यामूलतयाऽपि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इत्युक्तम् । तत्र यदुक्तम्, भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वात् न विरोध इति, तदयुक्तम् । कस्माच्चित् कस्यचित् विलक्षणत्व हि तस्मात् तस्य भेदः, तद्विपरीतत्वञ्चाभेदः, तयोस्तथाभावातथाभावरूपयोरेकत्र सम्भवमनुन्मत्तः को ब्रवीति । कारणात्मना जात्यात्मना चाभेदः कार्य्यात्मना व्यक्त्यात्मना च भेद इत्याकारभेदादविरोध इति चेत्, न, विकल्पासहत्वात् । आकारभेदादविरोध इति वदतः किमेकस्मिन्नाकारे भेद आकारान्तरे चाभेद इत्यभिप्रायः, उताकारद्वययोगिवस्तुगतावुभावपीति । पूर्वस्मिन्कल्पे व्यक्तिगतो भेदो जातिगतश्चाभेद इति नैकस्य द्व्यात्मकता । जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत्, तर्हि आकारभेदादविरोधः परित्यक्तः स्यात् । एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम् । द्वितीये तु कल्पे ऽन्योन्यविलक्षणमाकारद्वयम्, अप्रतिपन्नञ्च तदाश्रयभूत वस्त्विति । तृतीयाभ्युपगमेऽपि त्रयाणामन्योन्यवैलक्षण्यमेवोपपादित स्यात्, न पुनरभेदः । आकारद्वयनिरू[1]प्यमाणाविरोध तदाश्रयभूते वस्तुनि भिन्नाभिन्नत्वमिति चेत्, स्वस्मात् विलक्षण स्वाश्रयमाकारद्वय स्वस्मिन् विरुद्धधर्मद्वयसमावेशनिर्वाहक कथं भवेत्, अविलक्षणं तु कथन्तराम्, आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे निर्वाहकान्तरापेक्षयाऽनवस्था[2]नात् । न च सम्प्रतिपन्नैक्यव्यक्तिप्रतीतिवत् ससामान्येऽपि वस्तुन्येकरूपा प्रतीतिरुपजायते, यत "इदमित्थमि"ति सर्वत्र प्रकारप्रकारित-

---

१ निरूप्यमाणेति पाठान्तरम् ।

२ अनवस्था स्यादिति पाठान्तरम् ।

यैव सर्वा प्रतीतिः, तत्र प्रकारांशो जातिः, प्रकार्यंशो व्यक्तिरिति नैकाकारता प्रतीतिः। अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न सम्भवति। तस्मात् अभेदस्यानन्यथासिद्धशास्त्रमूलत्वात् अनाद्यविद्यामूल एव भेदप्रत्ययः। नन्वेवं ब्रह्मण एवाज्ञत्वात् तन्मूलाश्च जन्ममरणादयो दोषाः प्रादुःष्युः, ततश्च "यः सर्वज्ञः सर्ववित्" "एष आत्माऽपहतपाप्मे"त्यादीनि शास्त्राणि बाध्येरन्। नैवम्, अज्ञत्वादिदोषाणामपरमार्थत्वात्। भवतस्तूपाधिब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गः, तत्कृताश्च जीवत्वाज्ञत्वादयो दोषाः परमा[१]र्थत एव भवेयुः। न हि ब्रह्मणि निरवयवेऽच्छेद्ये सबध्यमाना उपाधयस्तच्छित्त्वा भित्त्वा वा सम्बध्यन्ते, अपितु ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति। यदि मन्वीत, उपाध्युपहितं ब्रह्म जीवः स चाणुपरिमाणः, अणुत्वञ्चावच्छेदकस्य मनसोऽणुत्वात्, स चाव[२]च्छेदोऽनादिः, एवमुपाध्युपहिते[३]देशे सम्बध्यमाना दोषा अनुपहिते परे ब्रह्मणि न सम्बध्यन्त इति, अयं प्रष्टव्यः, किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः, उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः, उतोपाधिसंयुक्तं ब्रह्मस्वरूपम्, उतोपाधिसंयुक्तं चेतनान्तरम्, अथोपाधिरेवेति। अच्छेद्यत्वाद् ब्रह्मणः प्रथमः कल्पो न कल्पते, आदिमत्त्वं च जीवस्य स्यात्, एकस्य सतो द्वैधीकरणं हि छेदनम्। द्वितीये तु कल्पे ब्रह्मण एव प्रदेशविशेषे उपाधिसंबन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः, उपाधौ गच्छत्युपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगाद् अनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशविशेषभेदात् क्षणे क्षणे बन्धमोक्षौ स्याताम्, आकर्षणे चाच्छिन्नत्वात् कृत्स्नस्य ब्रह्मण आकर्षणं स्यात्। निरंशस्य व्यापिन आकर्षणं न सम्भवतीति चेत्, तर्हि उपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात्, अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च जीवानां ब्रह्मण एव प्रदेशत्वेनाभे-

१ परमार्थतयैवेति पाठान्तरम्।

२ अवच्छेदक इति पाठान्तरम्।

३ उपहितेंऽशे इति पाठान्तरम्।

द[1]प्रतिसन्धानं स्यात् । प्रदेशभेदादप्रतिसन्धाने चैकस्यापि स्वोपाधौ गच्छति सति प्रतिसन्धान न स्यात् । तृतीये तु कल्पे ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापातात् तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात्, सर्वेषु च देहेष्वेक एव जीवः स्यात् । तुर्य्ये तु कल्पे ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्व परित्यक्त स्यात् । चरमे पक्षे चार्वाकपक्ष एव गृहीतः स्यात् । तस्मात् अभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम् । अतः प्रवृत्तिनिवृत्तिरूपप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविधिशेषतया वेदान्तवाक्याना ब्रह्मस्वरूपे प्रामाण्यमुपपन्नमिति ॥

तदप्ययुक्तम्, ध्यानविधिशेषत्वे ऽपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात् । एतदुक्त भवति, ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्य प्रतिपद्यन्ते, उत स्वतन्त्राण्येव । एकवाक्यत्वे ध्यानपरत्वेन ब्रह्मस्वरूपे तात्पर्य्यं न सम्भवति । भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहात् अनवबोधकत्वमेव । न च वाच्यम्, ध्यान नाम स्मृतिसन्ततिरूपम्, तच्च स्मर्त्तव्यैकनिरूपणीयमिति ध्यानविधेः स्मर्त्तव्यविशेषाकाङ्क्षायाम् "इदं सर्वं यदयमात्मा" "अयमात्मा ब्रह्म सर्वानुभूतिः" "सत्य ज्ञानमनन्तं ब्रह्मे"त्यादीनि ब्र[2]ह्मस्वरूपतद्विशेषादीनि समर्पयन्ति तेनैकवाक्यतामापन्नान्यर्थसद्भावे प्रमाणमिति, ध्यानविधेः स्मर्त्तव्यविशेषापेक्षत्वेऽपि "मनो[3]ब्रह्मेत्युपासीते"त्यादिदृष्टिविधिवत् असत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेः, ध्येयसत्यत्वानपेक्षणात् । अतो वेदान्तवाक्याना प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वात्, ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्य्यवसानात्, स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेणैव पुरुषार्थपर्य्यन्तत्तासिद्धेश्च, परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात्, ब्रह्मणः शास्त्रप्रमाणकत्व न सम्भवतीति प्राप्तम् ॥

---

१ प्रदेशत्वेनैकत्वेन इति पाठान्तरम् ।
२ ब्रह्मेति पुस्तकान्तरे नास्ति ।
३ नाम ब्रह्मेत्यादि तु पाठान्तरम ।

तत्र प्रतिपद्यते "तत्तु समन्वयादि"ति । "समन्वय." सम्यगन्वयः, पुरुषार्थतयाऽन्वय इत्यर्थः । परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयाऽन्वयात् "तत्" शास्त्रप्रमाणकत्व सिद्ध्यत्येवेत्यर्थः । निरस्तनिखिलदोषनिरतिशयानन्दस्वरूपतया परमप्राप्य ब्रह्म बोधयन् वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहात् न प्रयोजनपर्य्यवसायीति ब्रुवाणो राजकुलवासिनः पुरुषस्य कौलेयककुलाननुप्रवेशेन प्रयोजनशून्यता ब्रूते । एतदुक्त भवति, अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्वस्वरूपावबोधाना देवासुरगन्धर्वसिद्धविद्याधरकिन्नरकिंपुरुषयक्षरक्षःपिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीना स्त्रीपुंनपुंसकभेदभिन्नानां क्षेत्रज्ञाना व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्ताना स्वस्य चाविशेषेणानुभवसम्भवे स्वरूपगु[1]णविभवचेष्टितैरनवधिकातिशयानन्दजन[2]क परब्रह्मास्तीति बोधयदेव वाक्य प्रयोजनपर्य्यवसायि, प्रवृत्तिनिवृत्तिनिष्ठन्तु यावत्पुरुषार्थान्वयबोध न प्रयोजनपर्य्यवसायि । एवभूत ब्रह्म कथ प्राप्यत इत्यपेक्षायाम् "ब्रह्मविदाप्नोति परम्" "आत्मानमेव लोकमुपासीते"ति वेदनादिशब्दैरुपासन ब्रह्मप्राप्त्युपायतया विधीयते । यथा "स्ववेश्मनि निधिरस्ती"ति वाक्येन निधिसद्भाव ज्ञात्वा तृप्तः सन् पश्चात् तदुपादाने च प्रयतते । यथा च कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तो "मार्गाद् भ्रष्टो नष्ट"इति राज्ञा विज्ञातः स्वय चाज्ञातपितृकः केनचित् द्विजवर्य्येण वर्द्धितोऽधिगतवेदशास्त्रार्थः षोडशवर्षः सर्वकल्याणगुणाकरस्तिष्ठन् "पिता ते सर्वलोकाधिपतिर्गाम्भीर्य्यौदार्य्यवात्सल्यसौशील्यशौर्यवीर्य्यपराक्रमादिगुणसम्पन्नस्त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठती"ति केनचिदभियुक्ततमेन प्रयुक्त वाक्य शृणोति चेत्, तदानीमेव "अहं तावत् जीवतः पुत्रो मत्पिता च सर्वसम्पत्समृद्ध" इति निरतिशयहर्षसमन्वितो भवति, राजा च स्वपुत्र जीवन्तमरोगमतिमनोहरदर्शन विदितसकलवेद्य श्रुत्वा ऽवा-

---

१ स्वरूपरूपगुणेति तु पाठान्तरम् ।

२ जननमिति पाठान्तरम ।

प्तसमस्तपुरुषार्थो भवति, पश्चात् तदुपादाने च प्रयतते, पश्चात् तावुभौ सङ्गच्छेते चेति । यत्पुनः परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्य्यवसानाद् बालातुराद्युपच्छन्दनवाक्यवत् नार्थसद्भावे प्रामाण्यमिति, तदसत्, अर्थसद्भावाभावे निश्चिते ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति । बालातुरादीनामप्यर्थसद्भावभ्रान्त्यैव हर्षाद्युत्पत्तिः, तेषामेव तस्मिन्न[1]पि ज्ञाने विद्यमाने यद्यर्थाभावनिश्चयो जायेत, ततस्तदानीमेव हर्षादयो निवर्त्तेरन् । औपनिषदेष्वपि वाक्येषु ब्रह्मास्तित्वतात्पर्याभावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्य्यवसान न स्यात् । अतो "यतो वा इमानी"त्यादिवाक्य निखिलजगदेककारण निरस्तनिखिलदोषगन्ध सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्द ब्रह्मास्तीति बोधयतीति सिद्धम् ॥

ईक्षत्यधिकरणम् । **ईक्षतेर्नाशब्दम् ॥ ५ ॥**

"यतो वा इमानी"त्यादिजगत्कारणवादिवाक्यप्रतिपाद्यं सर्वज्ञ सर्वशक्ति समस्तहेयप्रत्यनीककल्याणगुणैकतानं ब्रह्म जिज्ञास्यमित्युक्तम् । इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानादिप्रतिपादनानर्हतोच्यते "ईक्षतेर्नाशब्दमि"त्यादिना । इदमाम्नायते छान्दोग्ये "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजते"त्यादि । तत्र सन्दिह्यते, किं सच्छब्दवाच्य जगत्कारणम् परोक्तमानुमानिक प्रधानम्, उतोक्तलक्षणं ब्रह्मेति । किं प्राप्तम् । प्रधानमिति । कुतः । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"तीदशब्दवाच्यस्य चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य वियदादिनानारूपविकारावस्थस्य वस्तुनः कारणावस्था वदति । कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्य्यता, अतो यद् द्रव्य यत्स्वभाव च कार्य्यावस्थ तत्स्वभावक्तदेव द्रव्य कारणावस्थम् । सत्त्वरजस्तमोमय च कार्य्यमिति गुणसाम्यावस्थ प्रधानमेव कारणम्, तदेवोपसहृतसकलविशेषं सन्मात्रमिति

[1] तस्मिन्नेवेति पाठान्तरम् ।

"सदेव सोम्येदमग्र आसीदेकमेवे"त्यभिधीयते, तत एव च कार्य्यकारण-योरनन्यत्वम्। तथा सत्येवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः। अन्यथा "यथा सोम्यैकेन मृत्पिण्डेने"त्यादि मृत्पिण्डतत्कार्य्यदृष्टान्तदार्ष्टान्तिक-योर्वैरूप्य चेति जगत्कारणवादिवाक्येन महर्षिणा कपिलेनोक्त प्रधानमेव प्रतिपाद्यते। प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेव चेद वाक्यमिति सच्छ-ब्दवाच्यमानुमानिकमेवेति ॥

एव प्राप्तेऽभिधीयते "ईक्षतेर्नाशब्दमि"ति। यस्मिन् शब्द एव प्रमाणं न भवति तत् "अशब्दम्" आनुमानिक प्रधानमित्यर्थः। न तत् जगत्कारणवादिवाक्यप्रतिपाद्यम्। कुतः। "ईक्षतेः" सच्छब्दवाच्यसम्ब-न्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोः श्रवणात् "तदैक्षत बहु स्यां प्रजायेये"ति। ईक्षणक्रियायोगश्चाचेतने प्रधाने न सम्भवति। अत ईदृशेक्षणक्षमश्चेतनविशेष एव सर्वज्ञः सर्वशक्ति' पुरुषोत्तमः सच्छब्दाभि-धेयः। तथा च सर्वष्वपि सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टिः प्रतीयते "स ऐक्षत लोकान्नु सृजा इति, स इमान् लोकानसृजत" "स ईक्षाञ्चक्रे" "स प्राणमसृजते"त्यादिषु। ननु च कार्यानुगुणेनैव कारणेन भवितव्यम्। सत्यम्। सर्वकार्य्यानुगुण एव सर्वज्ञः सर्वशक्तिः सत्यसङ्कल्पः पुरुषोत्तमः सूक्ष्मचिदचिद्वस्तुशरीरकः, यथाह "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभा-विकी ज्ञानबलक्रिया च" "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयन्तप." "य-स्याव्यक्त शरीर यस्याक्षरं शरीरं यस्य मृत्युः शरीरम् एष सर्वभूतान्तरा-त्मे"त्यादि। तदेतत् "न विलक्षणत्वादि"त्यादिषु प्रतिपादयिष्यते। अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते। वस्तुविरोध-स्तत्रैव परिहरिष्यते। यत्तूक्तम्, प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेवेदं वाक्यमिति, तदसत्, हेत्वनुपादानात्, "येनाश्रुत श्रुतमि"त्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते सर्वात्मना तदसम्भव मन्वानस्य तत्स-म्भवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम्। ईक्षत्यादिश्रवणादेव अनु-मानगन्धाभावोऽवगतः ॥

अथ स्यात्, न चेतनगतं मुख्यमीक्षणमिहोच्यते, अपि तु प्रधान-

गतं गौणमीक्षणम्, "तत्तेज ऐक्षत" "ता आप ऐक्षन्ते"ति गौणेक्षणसाहचर्य्यात् । भवति चाचेतनेष्वपि चेतनधर्मोपचारः, यथा "वृष्टिप्रतीक्षाश्शालयः," "वर्षेण बीजं प्रतिसञ्जहर्षे"ति । अतो गौणमीक्षणमितीमामाशङ्कामनुभाष्य परिहरति

## गौणश्चेत् न, आत्मशब्दात् ॥ ६ ॥

यदुक्तम्, गौणेक्षणसाहचर्य्यात् सतोऽपीक्षणव्यपदेशः सर्गनियतपूर्वावस्थाभिप्रायो गौण इति, तन्न, "ऐतदात्म्यमिदं सर्वम्, तत् सत्यं स आत्मे"ति सच्छब्दप्रतिपादितस्यात्मशब्देन व्यपदेशात् । एतदुक्तम्भवति, "ऐतदात्म्यमिदं सर्वम्, स आत्मे"ति चेतनाचेतनात्मकप्रपञ्चोद्देशेन "स[1] त आत्मे"त्यात्मोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छत इति । अतस्तेजोऽबन्नानामपि परमात्मैवात्मेति तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः । तथा हि "हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्व तत्तन्नामभाक्त्व चेति । "तत्तेज ऐक्षत" "ता आप ऐक्षन्ते"त्यपि मुख्य एवेक्षणव्यपदेशः । अतः साहचर्य्यादपि "तदैक्षते"त्यत्र गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः ॥

इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम्,

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

मुमुक्षोः श्वेतकेतोः "तत्त्वमसी"ति सदात्मकत्वानुसन्धानमुपदिश्य तन्निष्ठस्य "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य" इति शरीरपातमात्रान्तरायो ब्रह्मसम्पत्तिलक्षणो मोक्ष इत्युपदिशति । यदि च प्रधानमचेतनं कारणमुपदिश्येत, तदा तदात्मकत्वानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्येत, "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति तन्निष्ठस्याचेतनसम्पत्तिरेव स्यात् । न च मातापितृसहस्रेभ्यो

१ स आत्मेति पाठान्तरम् ।

ऽपि वत्सलतरं शास्त्रम् एवंविधतापत्रयाभिहतिहेतुभूतामचित्सम्पत्तिमुपदिशति । प्रधानकारणवादिनोऽपि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति ॥

इतश्च न प्रधानम्,

हेयत्वावचनाच्च ॥ ८ ॥

यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत्, तदा मुमुक्षोः श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वात् हेयत्वेनैवोपदेश्यं स्यात्, न च तत् क्रियते, प्रत्युत उपादेयत्वेनैव "तत्त्वमसि" "तस्य तावदेव चिरमि"त्युपदिश्यते ॥

इतश्च न प्रधानम्,

प्रतिज्ञाविरोधात् ॥ ९ ॥

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति । वाक्योपक्रमे हि एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तच्च कार्य्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात् तत्कार्य्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम् । तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्य्यत्वाभावात् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते ॥

इतश्च न प्रधानम्,

स्वाप्ययात् ॥ १० ॥

तदेव सच्छब्दवाच्यं प्रकृत्याह "स्वप्नान्तम्मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम, सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवती"ति । सुषुप्तं जीवं सता सम्पन्नम् "स्वमपीत." स्वस्मिन् प्रलीन इति व्यपदिशति । प्रलयश्च स्वकारणे लयः । न चाचेतनं प्रधानं चेतनस्य जीवस्य कारणं भवति, "स्वमपीतो भवति" आत्मानमेव जीवोऽपीतो भवतीत्यर्थः । चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशब्देनाप्यभिधीयत इति नामरूपव्याकरणश्रुत्योक्तम्, तत् जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात् केवलसच्छब्दाभिधेयमिति "सता

सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवती''त्युच्यते । तथा समानप्रकरणे नामरूपविभागपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात् ''प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि''त्युच्यते, आ[1]मोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः । सुषुप्तिकालेऽपि हि नामरूपे विहाय सता सम्परिष्वक्ताः पुनरपि जाग्रद्दशाया नामरूपे परिष्वज्य तत्तन्नामरूपा भवन्तीति श्रुत्यन्तरे स्पष्टमभिधीयते ''यदा सुषुप्तः स्वप्नं न कथचन पश्यति अथास्मिन् प्राण एवैकधा भवति, तस्माद्वा एतस्मादात्मनः प्राणा यथाऽऽयतन विप्रतिष्ठन्ते,'' तथा ''त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दशो वा मशको वा यद्यद्भवन्ति तथा भवन्ती''ति । तथा सुषुप्त जीवम् ''प्राज्ञेनात्मना सम्परिष्वक्त'' इति च वदति । तस्मात् सच्छब्दवाच्य परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव । तदाह वृत्तिकारः ''सता सोम्य तदा सम्पन्नो भवती'ति सम्पत्त्यसम्पत्तिभ्यामेतदध्यवसीयते 'प्राज्ञेनात्मना सम्परिष्वक्त' इति चाहे''ति ॥

इतश्च न प्रधानम्,

गतिसामान्यात् ॥ ११ ॥

''आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किंचन मिषत् स ऐक्षत लोकान्नु सृजा स इमाँल्लोकानसृजत'' इति, ''तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी'' ''तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद'' इत्यादिसृष्टिवाक्याना या ''गति.'' प्रवृत्तिः ''तत्सामान्यात्'' तत्समानार्थत्वादस्य । तेषु सर्वेषु सर्वेश्वरः कारणमवगम्यते, तस्मादत्रापि सर्वेश्वर एव कारणमिति निश्चीयते ॥

इतश्च न प्रधानम्,

श्रुतत्वाच्च ॥ १२ ॥

१ आमोक्षमिति पाठान्तरम् ।

श्रुतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपयोर्व्याकर्तृत्व सर्वज्ञत्व सर्वशक्तित्व सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्व सत्यसङ्कल्पत्व च "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "सन्मूलाः सोम्येमा. सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्" "तस्मिन्कामाः समाहिताः," "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोऽपिपासस्सत्यकामः सत्यसङ्कल्प" इति। तथा च श्रुत्यन्तराणि "न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्, स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते," "अन्तः प्रविष्टः शास्ता जनानाम्" "सर्वात्मा विश्वात्मान परायणं पतिं विश्वस्यात्मेश्वरम्, यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इत्यादीनि। तस्मात् जगत्कारणवादिवा[1]क्यानि न प्रधानप्रतिपादनयो[2]ग्यानि। अतः सर्वज्ञस्सर्वशक्तिस्सर्वेश्वरो निरस्तसमस्तदोषगन्धो ऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति च स्थितम्। अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेणाभिः श्रुतिभिर्निरस्तो वेदितव्यः, पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात्। निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकम्। वेदान्तवेद्यं ब्रह्म जिज्ञास्यतया प्रतिज्ञातम्, तच्च चेतनमिति "ईक्षतेर्नाशब्दमि"त्यादिभिः सूत्रैः प्रतिपाद्यते। चेतनत्वं नाम चैतन्यगुणयोगः। अत ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव। किञ्च, निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य [3]स्वप्रकाशत्वमपि दुरुपपा-

१ वाक्यमिति पाठान्तरम्।
२ योग्यमिति पाठान्तरम्।
३ स्वेति पुस्तकान्तरे नास्ति।

दम् । प्रकाशो हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः । निर्विशेषस्य वस्तुनस्तदुभयरूपत्वाभावात् घटादिवत् अचित्त्वमेव । तदुभयरूपत्वाभावेऽपि तत्त्वमत्वमस्तीति चेत्, तच, तत्त्वमत्व हि तत्सामर्थ्यमेव, सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तः स्यात् । अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यत इति चेत्, हन्त तर्हि तत एव सर्वज्ञता, सर्वशक्तित्वम्, सर्वेश्वरत्वम्, सर्वकल्याणगुणाकरत्वम्, सकलहेयप्रत्यनीकतेत्यादयः सर्वेऽभ्युपगन्तव्याः । शक्तिमत्त्व च कार्य्यविशेषानुगुणत्वम्, तच्च कार्य्यविशेषैकनिरूपणीयम् । कार्य्यविशेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीय शक्तिमत्त्वमपि निष्प्रमाणक स्यात् । किञ्च, निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणम् । प्रत्यक्षानुमानागमस्वानुभवाः सविशेषगोचरा इति पूर्वमेवोक्तम् । तस्मात् विचित्रचेतनाचेतनात्मकजगद्रूपेण बहु स्यामितीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्यं ब्रह्मेति सिद्धम् ॥

एव जिज्ञासितव्यस्य ब्रह्मणश्चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानाद् व्यावृत्तिरुक्ता । इदानीं कर्मवश्यात् त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःखसागरनिमज्जनेनाशुद्धात् शुद्धाच्च प्रत्यगात्मनोऽन्यत् निखिलहेयप्रत्यनीक निरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते,

आनन्दमयाधिकरणम् । **आनन्दमयोऽभ्यासात् ॥ १३ ॥**

तैत्तिरीया अधीयते "स वा एष पुरुषोऽन्नरसमय" इति प्रकृत्य "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय" इति । तत्र सन्देहः, किमयमानन्दमयो बन्धमोक्षभा[१]गिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा, उत स एवेति । किं युक्तम् । प्रत्यगात्मेति । कुतः । "तस्यैष एव शारीर आत्मा"इत्यानन्दमयस्य शारीरत्वश्रवणात् । शारीरो हि शरीरसम्बन्धी जीवात्मा । ननु च जगत्कारणतया प्रतिपादितस्य पर[२]स्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्य तदेव जगत्कारण-

१ मोक्षयोगिन इति पाठान्तरम् ।
२ परस्येति पुस्तकान्तरे नास्ति ।

मानन्दमय इत्युपदिशति, जगत्कारणं च "तदैक्षत" इतीक्षणश्रवणात् सर्वज्ञः सर्वेश्वर इत्युक्तम्। सत्यमुक्तम्, तत्तु जीवान्नातिरिच्यते, "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" "तत्त्वमसि श्वेतकेतो" इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात्। सामानाधिकरण्यं हि एकत्वप्रतिपादनपरम्, यथा सोऽयं देवदत्त इत्यादौ। ईक्षापूर्विका च सृष्टिश्चेतनस्य जीवस्योपपद्यत एव। अतो "ब्रह्मविदाप्नोति परम्" इति जीवस्याचित्संसर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते। अचिद्वियुक्तस्य स्वरूपस्य लक्षणमिदमुच्यते "सत्यं ज्ञानमनन्तं ब्रह्मे"ति। तद्रूपप्राप्तिरेव हि मोक्षः, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति। अतो जीवस्याविद्याविमुक्तं स्वरूपं प्राप्यतया प्रक्रान्तमानन्दमय इत्युपदिश्यते। तथा हि, शाखाचन्द्रन्यायेनात्मस्वरूपं दर्शयितुम् "अन्नमयः पुरुष" इति प्रथमं शरीरं निर्दिश्य, तदन्तर्भूतं तस्य धारकं पञ्चवृत्तिप्राणं तस्याप्यन्तर्भूतं मनः तदन्तर्भूतां च बुद्धिम् "प्राणमयो मनोमयो विज्ञानमय" इति तत्र तत्र बुद्ध्यवतरणक्रमेण निर्दिश्य, सर्वान्तर्भूतं जीवात्मानम् "अन्योऽन्तर आत्मा आनन्दमय" इत्युपदिश्य, अन्तरात्मपरम्परां समापयति। अतो जीवात्मस्वरूपमेव "ब्रह्मविदाप्नोति" प्रक्रान्तं ब्रह्म, तदेव "आनन्दमय" इत्युपदिष्टमिति निश्चीयते। ननु च "ब्रह्म पुच्छं प्रतिष्ठे"त्यानन्दमयादन्यद् ब्रह्मेति प्रतीयते। नैवम्, ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितं शिरःपक्षपुच्छरूपेण व्यपदिश्यते। यथाऽन्नमयो देहावयवी स्वस्मादनतिरिक्तैः स्वावयवैरेव तस्येदमेव शिर इत्यादिना शिरःपक्षपुच्छवत्तया निदर्शितः, तथाऽऽनन्दमयं ब्रह्मापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितम्। तत्रावयवित्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतयाऽखण्डरूपमानन्दमयम् "ब्रह्म पुच्छं प्रतिष्ठे"त्युच्यते। यदि चानन्दमयादन्यत् ब्रह्माभविष्यत् "तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मे"त्यपि निरदेक्ष्यत्, न चैवं निर्दिश्यते। एतदुक्तं भवति, "ब्रह्मविदाप्नोति परमि"ति प्रक्रान्तं ब्रह्म "सत्यं ज्ञानमनन्तं ब्रह्मे"ति लक्षणतः सकलेतरव्यावृत्ताकारं

प्रतिपाद्य तदेव "तस्माद्वा एतस्मादात्मन" इत्यात्मशब्देन निर्दिश्य तस्य सर्वान्तरात्मत्वेनात्मत्वं व्यञ्जयद्वाक्यमन्नमयादिषु तदन्तरात्मतयाऽऽत्मत्वेन निर्दिष्टान् प्राणमयादीनतिक्रम्य "अन्योऽन्तर आत्माऽऽनन्दमय" इत्यात्मशब्देन निर्देशमानन्दमये समापयति । अत आत्मशब्देन प्रक्रान्तं ब्रह्मानन्दमयमिति निश्चीयत इति । ननु च "ब्रह्म पुच्छम्प्रतिष्ठे"त्युक्त्वा "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद सन्तमेनन्ततो विदुरि"ति ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सद्भावासद्भावौ दर्शयति, नानन्दमयज्ञानाज्ञानाभ्याम् । न चानन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानाशङ्का युक्ता । अतो नानन्दमयमधिकृत्याय श्लोक उदाहृतः । तस्मादानन्दमयादन्यद् ब्रह्म । नैवम्, "इदं पुच्छं प्रतिष्ठा, पृथिवी पुच्छं प्रतिष्ठा, अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा, महः पुच्छं प्रतिष्ठे"त्येवमुक्त्वा तत्र तत्रोदाहृताः "अन्नाद्वै प्रजाः प्रजायन्त" इत्यादयः श्लोका यथा न पुच्छमात्रप्रतिपादनपराः, अपि त्वन्नमयादिपुरुषमात्रप्रतिपादनपराः, एवमत्राप्यानन्दमयस्यायम् "असन्नेवे"ति श्लोको नानन्दमयव्यतिरिक्तस्य पुच्छस्य । आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण रूपितस्यापरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानाशङ्का युक्तैव । पुच्छब्रह्मणोऽप्यपरिच्छिन्नानन्दतयैव ह्य[1]सिद्धता । शिरःप्रभृत्यवयवित्वाभावाद् ब्रह्मणो नानन्दमय ब्रह्मेति चेत्, ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात् पुच्छमपि ब्रह्म न भवेत् । अथाविद्यापरिकल्पितस्य वस्तुनस्तस्याश्चाश्रयभूतत्वाद् ब्रह्मणः "पुच्छं प्रतिष्ठे"ति रूपणमात्रमित्युच्येत, हन्त तर्ह्यसुखाद्व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति । एवं च "सत्यं ज्ञानमनन्तं ब्रह्मे"ति विकारास्पदजडपरिच्छिन्नवस्त्वन्तराद्व्यावृत्तस्यासुखाद्व्यावृत्तिः "आनन्दमय" इत्युपदिश्यते, अत[2]श्चाखण्डैकरसानन्दरूपे ब्रह्मणि "आनन्दमय" इति मयट् "प्राणमय" इव स्वार्थिको द्रष्टव्यः । तस्मात् अविद्यापरिकल्पितविविधविचित्रदेवादि-

१ अप्रसिद्धतेति पाठान्तरम् ।
२ ततश्चेति पाठान्तरम् ।

भेदभिन्नस्य जीवात्मनः स्वाभाविकं स्वरूपमखण्डैकरसं सुखैकतानं "आनन्दमय" इत्युच्यत इत्यानन्दमयः प्रत्यगात्मा इति ॥

एवं प्राप्ते प्रचक्ष्महे "आनन्दमयोऽभ्यासात्" । "आनन्दमयः" परमात्मा । कुतः । "अभ्यासात्," "सैषाऽऽनन्दस्य मीमांसा भवती"-त्यारभ्य "यतो वाचो निवर्त्तन्त" इत्येवमन्तेन वाक्येन शतगुणितोत्तर-क्रमेण निरतिशयदशाशिरस्कोऽभ्यस्यमान आनन्दोऽनन्तदुःखमिश्रपरि-मितसुखलवभागिनि जीवात्मन्यसम्भवन् निखिलहेयप्रत्यनीक कल्याणै-कतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति, यथाह, "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमय" इति । विज्ञानमयो हि जीवः, न बुद्धिमात्रम्, मयट्प्रत्ययेन व्यतिरेकप्रतीतेः । प्राणमये त्वगत्या स्वार्थिक आश्रीयते, इह तु तद्वतो जीवस्य सम्भवात् नानर्थकत्वं न्याय्यम् । बद्धो मुक्तश्च प्रत्यगात्मा ज्ञातैवेत्यभ्यधिष्महि । प्राणमयादौ तु मयडर्थसम्भवोऽनन्तरमेव वक्ष्यते । कथं तर्हि विज्ञानमय-विषयश्लोके "विज्ञानं यज्ञं तनुत" इति केवलविज्ञानशब्दोपादानमुपप-द्यते । ज्ञातुरेवात्मनः स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः, ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुः स्वरूपस्य । स्वरूपनिरूपणध-र्मशब्दा हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयन्ति, गवादिशब्दवत्, "कृत्यल्युटो बहुलमि"ति वा कर्त्तरि ल्युडाश्रीयते, नन्द्यादित्वं वाऽऽश्रित्य "नन्दिग्रही"त्यादिना कर्त्तरि ल्युः । अत एव "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे"ति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते । बुद्धिमात्रस्य हि न कर्तृत्वं सम्भवति, अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात् प्राची-नेष्वन्नमयादिषु न चेतनधर्मभूतं कर्तृत्वं श्रूयते । अत एव चेतनमचेतनं च स्वासाधारणैर्निलयनत्वानिलयनत्वादिभिर्धर्मविशेषैर्विभज्य निर्दिश-द्वाक्यम् "विज्ञानं चाविज्ञानं चे"ति विज्ञानशब्देन तद्गुणं चेतनं वदति । तथाऽन्तर्यामिब्राह्मणे "यो विज्ञाने तिष्ठन्नि"त्यस्य काण्वपाठगतस्य पर्यायस्य स्थाने "य आत्मनि तिष्ठन्नि"ति पर्यायमधीयाना माध्यन्दिनाः काण्वपाठगतं विज्ञानशब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति । विज्ञान-

मिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायम् । तदेवं विज्ञानमयाज्जीवादन्यस्तदन्तरः परमात्माऽऽनन्दमयः । यद्यपि "विज्ञानं यज्ञं तनुत" इति श्लोकेन ज्ञानमात्रमेवोपादीयते न ज्ञाता, तथाऽपि "अन्योन्तर आत्मा विज्ञानमय" इति तद्वान् ज्ञातैवोपदिश्यते । यथा "अन्नाद्वै प्रजाः प्रजायन्त" इत्यत्र श्लोके केवलान्नोपादानेऽपि "स वा एष पुरुषोऽन्नरसमय" इत्यत्र नान्नमात्रं निर्दिष्टम्, अपि तु तन्मयस्तद्विकारः । एतत्सर्वं हृदि निधाय सूत्रकारः स्वयमेव "भेदव्यपदेशादि"त्यनन्तरमेव वदति ॥

यदुक्तम्, जगत्कारणतया निर्दिष्टस्य "अनेन जीवेनात्मना ऽनुप्रविश्य" "तत्त्वमसी"ति च जीवसामानाधिकरण्यनिर्देशात् जगत्कारणमपि जीवस्वरूपान्नातिरिच्यत इति कृत्वा जीवस्यैव स्वरूपम् "ब्रह्मविदाप्नोति परमि"ति प्रक्रान्तम्, असुखाद्व्यावृत्तत्वेन "आनन्दमय" इत्युपदिश्यत इति, तदयुक्तम्, जीवस्य चेतनत्वे सत्यपि "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजते"ति स्वसङ्कल्पपूर्वकानन्तविचित्रसृष्टियोगानुपपत्तेः, शुद्धावस्थस्यापि हि तस्य सर्गादिजगद्व्यापारासम्भवो "जगद्व्यापारवर्ज्जम्," "भोगमात्रसाम्यलिङ्गादि"त्यत्रोपपादयिष्यते । कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे "अनेन जीवेनात्मना" "तत्त्वमसी"ति सामानाधिकरण्यनिर्देशः कथमुपपद्यत इति चेत् । कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासंख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणो नानाविधानन्तदुःखाकरकर्माधीनचिन्तितनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वम् । अन्यतरस्य मिथ्यात्वेनोपपद्यत इति चेत् । कस्य भोः, किं वा हेयसबन्धस्य, किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य । हेयप्रत्यनीककल्याणैकतानस्य ब्रह्मणो ऽनाद्यविद्याश्रयत्वेन हेयसम्बन्धप्रतिभासो मिथ्यारूप इति चेत् । विप्रतिषिद्धमिदमभिधीयते—ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वम् अनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वञ्चेति । अविद्याश्रयत्व तत्कार्य्यदुःखप्रतिभासाश्रयत्वञ्चैव हि हेयसम्बन्धः, तत्सम्बन्धित्वं तत्प्रत्यनीकत्वञ्च विरुद्धमेव । तथाऽपि तस्य

मिथ्यात्वाच्च विरोध इति मा वोचः। मिथ्याभूतमपि अपुरुषार्थ एव, यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे। निरसनीयापुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकतानतया विरुध्यते। किं कुर्मः, "येनाश्रुतं श्रुतम्भवती"त्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय "सदेव सोम्येदमग्र आसीदि"त्यादिना निखिलजगदेककारणताम् "तदैक्षत बहु स्यामि"ति सत्यसङ्कल्पताञ्च ब्रह्मणः प्रतिपाद्य तस्यैव ब्रह्मणः "तत्त्वमसी"ति सामानाधिकरण्येनानन्तदुःखाश्रयजीवैक्यं प्रतिपादितम्। तदन्यथाऽनुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वादि परिकल्पनीयमिति चेत्। श्रुतोपपत्तयेऽप्यनुपपन्नं विरुद्धञ्च न कल्पनीयम्। अथ हेयसम्बन्ध एव पारमार्थिकः, कल्याणैकतानता[1] तु मिथ्याभूता। हन्तैव तापत्रयाभिहतचेतनोज्जिजीविषया प्रवृत्तं शास्त्रं तापत्रयाभिहतिरेव तस्य पारमार्थिकी, कल्याणैकतानस्वभावस्तु भ्रान्तिकल्पित इति बोधयत् सम्यगुज्जीवयति। अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपातिरिक्तजीवत्वदुःखित्वादिकं सत्यसङ्कल्पत्वकल्याणगुणाकरत्वजगत्कारणत्वाद्यपि मिथ्याभूतमिति कल्पनीयमिति चेत्, अहो भवता वाक्यार्थपर्य्यालोचनकुशलता। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सम्पत्स्यते। यथैकविज्ञानं परमार्थविषयं तथैव सर्वविज्ञानमपि यदि परमार्थविषयं तदन्तर्गतञ्च, तदा तज्ज्ञानेन सर्वविज्ञानमिति शक्यते वक्तुम्। न हि परमार्थशुक्तिज्ञानेन तदाश्रयमपरमार्थरजतं ज्ञातं भवति। अथोच्येत, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अयमर्थः–निर्विशेषसन्मात्रमेव सत्यम् अन्यदसत्यमिति। न तर्हि "येनाश्रुतं श्रुतं भवत्यमतम्मतमविज्ञातं विज्ञातमि"ति श्रूयेत, येन श्रुतेनाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः। कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत् प्रतिज्ञातः, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातम्" इति दृष्टान्तोऽपि न घटते, मृत्पिण्डविज्ञानेन हि तद्विकारस्य ज्ञातता निदर्शिता। तत्रापि तद्विकारस्यासत्यताऽभिहितेति चेत्, मृद्विकारस्य रज्जु-

१ कल्याणगुणैकस्वभावतेति पाठान्तरम्।

सर्पादिवत् असत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय "तथा सोम्ये"ति प्रसिद्धवदुपन्यासो न युज्यते ॥

न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राक् विकारजातस्यासत्यतामापादयत् तर्कानुगृहीतम् अननुगृहीतं वा प्रमाणमुपलभामहे इत्ययमर्थः "तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यत्र वक्ष्यते । तथा "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "ऐतदात्म्यमिदं सर्वमि"त्यादिनाऽस्य जगतः सदात्मकता, सृष्टेः पूर्वकाले नामरूपविभागप्रहाणम्, जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वम्, सृष्टिकाले अहमेवानन्तस्थिरत्रसरूपेण बहु स्यामित्यनन्यसाधारणः सङ्कल्पविशेषः, यथासङ्कल्पमनन्तविचित्रतत्त्वानां विलक्षणक्रमविशेषविशिष्टा सृष्टिः, समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानुप्रवेशेनानन्तनामरूपव्याकरणम्, स्वव्यतिरिक्तसमस्तस्य स्वमूलत्वं स्वायतनत्वं स्वप्रवर्त्यत्वं स्वेनैव जीवनं स्वप्रतिष्ठितत्वमित्याद्यनन्तविशेषाः शास्त्रैकसमधिगम्याः प्रतिपादिताः । तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषतासर्वज्ञतासर्वेश्वरत्वसत्यकामत्वसत्यसङ्कल्पत्वसर्वानन्दकरणनिरतिशयानन्दयोगादयः सकलेतरप्रमाणाविषयाः सहस्रशः प्रतिपादिताः । एवमनन्यगोचरानन्तविशेषणविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वमसङ्गतत्वेनोन्मत्तप्रलपितायेत । त्वंपदञ्च संसारित्वविशिष्टजीववाचि । तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तः स्यात् । निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरोधानस्वरूपनाशप्रसङ्गादिभिर्न सम्भवतीति पूर्वमेवोक्तम् । एवञ्च सति समानाधिकरणप्रवृत्तयोः "तत्त्वमि"ति द्वयोरपि पदयोर्मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया ॥

अथोच्येत, समानाधिकरणप्रवृत्तानामेकार्थप्रतिपादनपरतया विशे

षयांशे तात्पर्य्यासम्भवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनाच्च लक्षणाप्रसङ्गः। यथा नीलमुत्पलमिति पदद्वयस्य विशेष्यैक्यप्रतिपादनपरत्वेन नीलत्वोत्पलत्वस्वरूपविशेषणद्वयञ्च विवक्ष्यते, तद्विवक्षाया हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्यते, तत्तु न सम्भवति, न हि नैल्यविशिष्टाकारेण तद्वस्तूत्पलपदेन विशिष्यते, जातिगुणयोरन्योन्यसमवायप्रसङ्गात्। अतो नीलत्वोत्पलत्वोपलक्षितवस्त्वैक्यमात्रं सामानाधिकरण्येन प्रतिपाद्यते। तथा सोऽयं देवदत्त इत्यतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण सन्निहितदेशवर्त्तमानकालविशिष्टतया प्रतिपादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते। यद्यपि नीलमित्याद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते, तथापि वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा, अपि तु विशेषणांशस्याविवक्षामात्रम्, सर्वत्र सामानाधिकरण्यस्यैष एव स्वभाव इति न कश्चिद्दोष इति॥

तदिदमसारम्, सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम्। तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते। यथा नीलमुत्पलमानयेत्युक्ते नीलिमादिविशिष्टमेवानीयते, यथा च विन्ध्याटव्यां मदमुदितो मातङ्गगणः तिष्ठतीति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते। एवं वेदान्तवाक्येष्वपि सामानाधिकरण्यनिर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम्। न च विशेषणविवक्षायामितरविशिष्टाकारं वस्त्वन्येन विशेषि[1]तव्यम्, अपि तु सर्वैरपि विशेषणैः स्वरूपमेव विशेष्यम्। तथाहि, भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तरप्रतिपा-

१ विशेष्टव्यमिति पाठान्तरम्।

प्राकृतैर्धर्मैर्निराकांक्षा इति न प्रकरणं विदेवना-दीनां राजसूये विनियोजकम्, उभयाकांक्षाया अभा-वात्। न च "(फ)प्रातिस्विकरूपैर्नैराकांक्ष्येपि न राज-सूयत्वेन रूपेण नैराकांक्ष्यमिति' वाच्यम्। आकांक्षाद्वये प्रमाणाभावात्। किं च प्रातिस्विकरूपैर्या कथम्भा-वाकांक्षा सापि फलसम्बन्धोत्तरकालम्। स च राज-सूयत्वेन न तु प्रातिस्विकरूपैः(ब)। राजसूयत्वेन च फलसम्बन्धे उत्पन्नायाः कथंभाकांक्षायाः विदेव-नादिभिः शान्तेरतिदेशकल्पनमेव न स्यात्। यदि हि सामान्यरूपेण प्रातिस्विकरूपेण च फलसम्ब-न्धविधायि वाक्यद्वयं भवेत्तदा युज्येतापि आकांक्ष-द्वयानुसारेण विदेवनादीनामातिदेशिकानां चाङ्गानां सम्बन्धः। न तु तदस्ति। तस्मात् प्राकृतैर्धर्मै-र्नैराकाङ्क्ष्यान्न विदेवनादीनां प्रकरणं विनियोजकम्"-इति चेत्—

(१०७) सत्यम्। अत एव साम्प्रदायिकैर्विदेवना-दीनां सन्दंशो दर्शितः। राजसूयत्वपुरस्कारेण ये धर्मा विधीयन्ते 'राजसूयाय ह्येत[१] उत्पुनाति' इत्येवमा-दयस्तन्मध्ये विदेवनादयः पठ्यन्ते। अतस्ते सर्वे राज-सूयाङ्गं प्रयाजानुवादेन विधीयमानधर्ममध्ये पठित-प्रयाजाङ्गाभिक्रमणवत्। तस्मादुक्तमुक्तं विदेवनादी-

(फ) प्रत्येकमेकैकरूपेण।

(ब) इष्टित्वपशुत्वसोमत्वादिरूपैरित्यर्थः।

१ एता. समिध इत्यर्थः तया च समिधामुत्पवनेन राजसूयं भावयेदिति बोधः।

नां प्रकरणाद्राजसूयाङ्गत्वमिति । तत्सिद्धं प्रकरणस्य स्थानाद्बलीयस्त्वम् इति ॥

(१०८)[1] देशसामान्यं स्थानम् ।[2] तच्च द्विविधम् । पाठसादेश्यमनुष्ठानसादेश्यं चेति । यथाहुः

> तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः ।
> पाठानुष्ठानसादेश्याद्विनियोगस्य कारणमिति ।
>
> (तन्त्रवार्त्तिक । ८३२)

स्थानं क्रमश्चेत्यनर्थान्तरम् ।

(१०९) पाठसादेश्यमपि द्विविधम् । यथासङ्ख्यपाठः सन्निधिपाठश्चेति । तत्र ऐन्द्राग्नमेकादशकपालं निर्वपेत्, वैश्वानरं द्वादशकपालं निर्वपेदित्येवं क्रमविहितेष्टिषु इन्द्राग्नी रोचनादिव इत्यादीनां[3] याज्यानुवाक्यामन्त्राणां यथासङ्ख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं यो विनियोगः स यथासङ्ख्यपाठात् । प्रथमपठितमन्त्रस्य हि कैमर्थ्याकाङ्क्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते समानदेशत्वात् । यानि तु वैकृतान्यङ्गानि[4] प्राकृताङ्गाननुवादेन विहितानि सन्दंशापतितानि तेषां विकृत्यर्थत्वं सन्निधिपाठात् । तेषां हि कैमर्थ्याकाङ्क्षायां फलवद्विकृत्यपूर्वमेव

---

१ प्रधानविपरिवृत्तिविशिष्टदेशवृत्तित्व स्थानाख्यप्रमाणलक्षणमित्यर्थ । तेन सामान्यशब्देन साधर्म्यादिसादृश्यविवक्षायामभिन्नदेशत्वासङ्कर । अभेदविवक्षाया सदृशदेशत्वासङ्ग्रह इत्यपास्तमिति भाट्टालङ्कारे ।

२ वृत्तित्व चानुष्ठेयत्वपठितत्वान्यतररूपेणेत्याह—

३ आदिपदेन वैश्वानरोऽजीजनदित्यस्य सङ्ग्रहः ।

४ उपहोमादीनि ।

भाव्यत्वेन सम्बध्यते उपस्थितत्वात्। अत एव न तेषु विश्वजिन्न्यायावतारः। स्वतन्त्रफलार्थत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेश्च। पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात्।[1] औपवसथ्येऽह्नि अग्निषोमीयः पशुरनुष्ठीयते तस्मिन्नेव दिने ते धर्माः पठ्यन्ते। अतस्तेषां कैमर्थ्याकाङ्क्षायामनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव[2] भाव्यत्वेन सम्बध्यते। अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषाम्। न च "पाठसादेश्यादेव तत्किं न स्यादिति" वाच्यम्। अग्नीषोमीयस्य पशोः क्रयसन्निधौ पाठात्। न च "क्रयसन्निधौ तस्य पाठे तदनुष्ठानमपि तत्र स्यादिति" वाच्यम्। स एष द्विदैवत्यः पशुरौपवसथ्येऽहनि आलब्धव्य इति वचनात्तदनुपपत्तेः[3]।

(११०) न च "स्थानात्प्रकरणस्य बलीयस्त्वेन पशुधर्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति"-वाच्यम्। तस्य सोमयागत्वेन पशुधर्मग्रहणे ऽयोग्यत्वात्।[4] अत 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति'[5]न्यायात् स्थानात्पशुयागार्थत्वमेव धर्माणां

---

१ औपवसथ्योऽग्नीषोमीयमह इत्यर्थः सोमयागसम्बन्धिचतुर्थं दिनमिति यावत् तस्मिन् इत्यादि.।

२ उपाकरणप्रोक्षणनियोजनविशसनादय.।

२ पशुयागापूर्वम्।

३. क्रयसन्निधावग्नीषोमीयपश्वनुष्ठानानुपपत्तेरित्यर्थः।

४ स्थानाख्यप्रमाणानुरोधे न्यायबाध एवोचित इत्याह–

५ ये खल्वनर्थका भवन्ति ते दुर्बला भवन्तीति प्रत्युत प्रकरणस्यैव दौर्बल्यमिति भावः।

युक्तम्। न च तेषां तदर्थत्वं प्रकरणादेव किं न स्यादिति वाच्यम्। अग्नीषोमीयकथंभावाकांक्षायाः क्रत्वुपकारैः प्राकृतधर्मैरेवोपशान्तत्वात्। स हि सान्नाय्ययागप्रकृतिकः, उभयोः पशुप्रभवद्रव्यत्वसामान्यात्। तदुक्तं "सान्नाय्यं वा तत्प्रभवत्वादिति (जै० सू० ८। २। १३)। सान्नाय्यं दधिपयसी तत्र पशुयागः पयोयागप्रकृतिकः साक्षात्पशुप्रभवत्वात्। अतश्चोदकप्राप्तैस्तद्धर्मैर्निराकांक्षत्वात् न पशुयागे धर्माणां प्रकरणं विनियोजकं किं तु स्थानमेव।

(१११)तदेवं निरूपितः संक्षेपतः स्थानविनियोगः, तच्च समाख्यातः प्रबलम्। स्थानविनियोगे हि पदार्थयोर्देशसामान्यलक्षणः सम्बन्धः प्रत्यक्षः। समाख्याविनियोगे तु सम्बन्धो न प्रत्यक्षः। पदार्थयोर्भिन्नदेशत्वात्। न च सा सम्बन्धवाचिका। यौगिकानां शब्दानां द्रव्यवाचकत्वेन सम्बन्धावाचकत्वात्। तथा हि समाख्या सम्बन्धसामान्यवाचिका स्यात् तद्विशेषवाचिका वा। नाद्यः। तदुक्तौ प्रयोजनाभावात्[1]। सर्वयौगिकशब्दानां पर्यायतापत्तेश्च। द्वितीये ऽवश्यं सम्बन्धिनौ वाच्यौ। तदन्तरेण सम्बन्धे विशेषाभावात्[2]। तत्प्रतिपत्तिमन्तरेण तदप्रतिपत्ते-

१ गोमाम् गोत्वन् गव्यमित्यादीनाम्।

२ सम्बन्ध्यभिधानमन्तरेण विशेषस्याऽप्रतीतेरित्यर्थः। गोमानित्यत्रैव पुरुषाभिधाने स्वामित्वबुद्धिः देशाभिधाने त्वधिकरणबुद्धिर्भवति। तदनभिधाने तु न किमपीत्याशयः।

युक्तं[1] । अतश्चावश्यं सम्बन्धिवाचकत्वं समाख्याया वक्तव्यम् । तथा च न सम्बन्धवाचकत्वं सम्बन्धिप्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिन्यायेन तत्प्रतिपत्तिसम्भवे तत्र शक्तिकल्पने गौरवात् । यथाहुः

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
न हि सम्बन्धवाचित्वं सम्भवत्यतिगौरवादिति

तथा (तं. वा. ६८८)

पाकं तु पचिरेवाह कर्त्तारं प्रत्ययोऽप्यकः ।
पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्यचिदिति ॥

तथा च समाख्या न सम्बन्धवाचिका हौतृचमस इत्यादिका तु वैदिकीसमाख्या निषादस्थपतिशब्दवन्न[2] षष्ठ्यर्थसम्बन्धवाचिका नापिवाक्यवत्तद्बोधिका, तस्याः पदत्वेनाप्रमाणत्वात् । पौरोडाशिकमित्यादिसमाख्यास्त्वतिदुर्बलाः । लौकिकत्वेन पुरुषप्रत्ययसापेक्षत्वात् । काण्डगोचरत्वेन तत्तत्पदार्थागोचरत्वाच्च । काण्डवाचकत्वमपि न काण्डत्वेन किं तु पौरोडाशिकत्वादिनैव । न ह्येकहायनीशब्दो द्रव्यवाचकोऽपि गोत्वेन तद्वदति, किं तर्हि एकहायनीत्वेनैव । स्थानविनियोगे तु पदार्थयोर्वि-

---

१ सम्बन्धिप्रतीतिमन्तरा सम्बन्धबुद्धेरभावादित्याशयः ।

२ षष्ठीसमासाश्रयणे निषादस्थपतिशब्दस्य तत्सम्बन्धिनि लक्षणां स्वीकृत्य सम्बन्धवाचकत्वं वक्तव्यं भवेत्तत्तु न युक्तमतः कर्मधारय एव । अत्र तु अयोग्यत्वान्न कर्मधारयः ।

शेषपुरस्कारेणैव सम्बन्धः प्रत्यक्षप्रमाणप्रतिपन्नः । अतश्च समाख्यामुपलभ्य नूनमनयोः पदार्थयोः सम्बन्धोऽस्तीति यावत्कल्प्यते तावत्प्रत्यक्षप्रतिपन्नेन सम्बन्धेन परस्परमाकांक्षा, तदभावे च सम्बन्धानुपपत्तेः[१] । कल्पितसम्बन्धेन च यावदितरत्राकांक्षादिकल्पना[२] तावदन्यत्राकांक्षया वाक्यादिकल्पनया विनियोगः क्रियते इति सिद्धं स्थानस्य सामाख्यातः प्राबल्यम् । अत एव शुन्धनमन्त्रः[३] सान्नाय्यपात्राङ्गं पाठसादेश्यान्न तु पौरोडाशिकसमाख्यया पुरोडाशपात्राङ्गमिति ॥

(११२) समाख्या[४] यौगिकः शब्दः । सा च द्विविधा वैदिकी लौकिकी च । तत्र होतुः चमसभक्षणाङ्गत्वं होतृचमस इति वैदिक्या समाख्यया । अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या आध्वर्यवमितिसमाख्ययेति संक्षेपः ॥

अथाङ्गद्वैविध्यनिरूपणम् ।

(११३) तदेवं निरूपतानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि । एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेते-

---

१ स्थानेनेत्यर्थ. ।

२ यत्र स्थानेन विनियोगः ।

३ दैव्याय कर्मणे शुन्धध्व देवयज्यायै यद्वो शुद्धा. पराजघ्नुरिदं वस्तच्छुन्धामिति मन्त्रः ।

४ सम् आख्या समाख्या, नामनिर्देश इत्यर्थ. ।

५ अभिक्रमणपुरोडाशादि पदार्थाङ्गत्वम् ।

त्येवंरूपेण यानि विनियुज्यन्ते तान्यङ्गानि[१] । तानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति । तत्र सिद्धानि जातिद्रव्यसङ्ख्यादीनि[२] । तानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि । गुणकर्माणि प्रधानकर्माणि चेति । एतान्येव सन्निपत्योपकारकाण्यारादुपकारकाणीति चोच्यन्ते ।

(११४) तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम्[३] । यथावघातप्रोक्षणादि । तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं च । दृष्टार्थमवघातादि । अदृष्टार्थं प्रोक्षणादि । दृष्टादृष्टार्थं पशुपुरोडाशयागादि । तद्धि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति । इदमेव चाश्रयि कर्म इत्युच्यते ।

(११५) तच्च सन्निपत्योपकारकं द्विविधम् । उपयोक्ष्यमाणार्थमुपयुक्तार्थं चेति । तत्रावघातप्रोक्षणाद्युपयोक्ष्यमाणार्थं, व्रीहीणां यागे उपयोक्ष्यमाणत्वात् । प्रतिपत्तिकर्म इडाभक्षणाद्युपयुक्तपुरोडाशसंस्कारकम् । उपयुक्तस्याकीर्णतानिवर्तकं कर्म प्रतिपत्तिकर्म । उपयुक्तसंस्कारार्थं च उपयोक्ष्यमाणसंस्कारार्थाद्दुर्बलम् । उपयुक्तापेक्षया उपयोक्ष्यमाणे

---

१ वैपरीत्येनान्वयः । यान्यङ्गानि विनियुज्यन्ते तानीत्यन्वयः ।

२ आदिना लिङ्गसाहित्यक्रमादीनां सङ्ग्रहः । यद्यपि साहित्यक्रमयोर्न क्रियां प्रति कारकत्वं साक्षादस्ति तथापि कारकीभूतपदार्थपरिच्छेदकतया तदस्त्येव तार्तीयिकस्य । पाञ्चमिकस्य तु न विनियोजकत्वमिति न तस्येहावसरः ।

३ द्रव्यादिगतं कर्मापूर्वसाधनत्वं यत्रोद्देश्यतावच्छेदकमित्यर्थः ।

ऽत्यादरात् । अत एव प्रापणीयनिष्कासे[1] उदयनीयमनुनिर्वपतीत्यत्र निष्कासस्य निर्वापार्थत्वं न तु तस्य तदर्थत्वं निष्कासस्योपयुक्तत्वात् इत्युक्तमेकादशे ।

(११६) तच्च सन्निपत्योपकारकम् आरादुपकारकाद्बलीयः ।

(११७) "नन्ववघातादि भवतु बलीयः, तस्य दृष्टार्थत्वात्, आरादुपकारकस्य चादृष्टार्थत्वात्, दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात् । प्रोक्षणादि सन्निपत्योपकारकं तु कथं बलीयः, उभयोरदृष्टार्थत्वाविशेषात् । किं च आरादुपकारकं साक्षात्प्रधानाङ्गं तस्यान्योद्देशेनाविधानात् । सन्निपत्योपकारकं तु अङ्गाङ्गम् कर्माङ्गव्रीह्याद्युद्देशेन विधानात् । अङ्गाङ्गापेक्षया च साक्षादङ्गं बलीयः । 'अङ्ग गुणविरोधे तादर्थ्यादिति (जै. सू. १२ । २ । २५) न्यायात्[2] । अत एव य इष्ट्वा पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति अविशेषविधानेऽपि पर्वानुग्रहः सोमयागस्यैव क्रियते न तु दीक्षणीयादेः । अतः कथं सन्निपत्योपकारकस्य बलीयस्त्वम्" ।

(११८) उच्यते । सत्यप्यदृष्टार्थत्वाविशेषे सन्निपत्योपकारकमारादुपकारकाद्बलीयः । सन्निपत्योप-

---

१ प्रायणीयेष्टिहविर्भूतस्यालिपाकद्रव्याधारस्थाल्या अधो भागे अग्नितापेन यदवशिष्यते तन्निष्कासमित्यर्थं ।

२ अङ्गतदङ्गयोर्विरोधे अङ्गस्य यज्ञार्थत्वाद्बलीयस्त्वमित्यर्थ. ।

कारके हि कर्मणि उपकार्य्योपकारकयोर्व्रीहिप्रोक्षणयोः सम्बन्धो वाक्यक्लृप्तः। उपकारमात्रं तु कल्प्यम्। आरादुपकारकस्थले तु दर्शपूर्णमासयोः प्रयाजानुयाजयोः सम्बन्धः कल्प्यः उपकारोपि। किं च आरादुपकारकस्थले हि प्रकरणं विनियोजकम्, इतरत्र[1] तु व्रीहीन् प्रोक्षतीति वाक्यमेव व्रीहिपदेनापूर्वसाधनलक्षणां कृत्वा क्रतौ विनियोजकमिति बलीयस्त्वम्।

(११९) यदुक्तम्—"अङ्गगुणविरोधे तादर्थ्यादिति न्यायेन दुर्बलत्वमिति" तदसत्। न हि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति[2], तत्स्वरूपे आनर्थक्यात्, किं तु तत्संस्कारद्वारा क्रत्वर्थमेव, सन्निपत्योपकारकाणामुत्पत्त्यपूर्वप्रयुक्तत्वस्य च वक्ष्यमाणत्वात्। अत उभयविधमप्यङ्गजातं क्रत्वर्थमेवेति नाङ्गगुणविरोधन्यायावतारः। दीक्षणीयादेः पर्वानुग्रहस्तु दीक्षणीयाद्यर्थ एव, तस्य तदपूर्वप्रयुक्तत्वात्। अतो युक्तं साक्षात्प्रधानाङ्गेन प्रधानपर्वानुग्रहेण स बाध्यत इति।

(१२०) तत्सिद्धं सन्निपत्योपकारकस्यारादुपकारकाद्बलीयस्त्वम्। अतएव स्थाणौ स्थाणवाहुतिं जुहोतीति विहिता स्थाणवाहुतिर्यूपव्रश्चनस्थाणुद्वारा यूप-

---

१ सन्निपत्योपकारके इत्यर्थः।

२ प्रोक्षणादेर्व्रीहिस्वरूपनिष्पादकत्वे आनर्थकम्। तस्य लोकत एव सिद्धत्वादिति भावः।

संस्कारार्था, देवदत्तधारितायाः स्रजः शुचिदेशनिधानमिव देवदत्तसंस्कारार्थम्। न तु स्यादेवाहुतिराराादुपकारिकेत्युक्तम् दशमे इति दिक्।

(१२१) द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम्। यथा प्रयाजादि।

(१२२) तदेवं निरूपितं द्विविधमप्यङ्गजातम्। तच्च न यागादिस्वरूपप्रयुक्तं, स्वरूपे आनर्थक्यात्, तदन्तरेणापि तत्सिद्धेः, किं त्वपूर्वप्रयुक्तमेव। न हि तदन्तरेणापूर्वं भवतीत्यत्र किञ्चित्प्रमाणमस्ति, तस्यादृष्टत्वात्। न च "एवं प्राधान्याददृष्टत्वाच्च फलप्रयुक्तमेव किं न स्यादिति" वाच्यम्। फलभावनायां यागस्यैव करणत्वादङ्गानां च करणानुग्राहकत्वात्तदर्थत्वे बुद्धे तत्र चानर्थक्यप्रसक्तौ तेन स्वापूर्वमेवोपस्थाप्यते सन्निकर्षात्, दीक्षणीयादिशब्देनेव तदपूर्वम्। न तु फलमुपस्थाप्यते विप्रकर्षात्। अतो न तत्प्रयुक्तत्वमङ्गानाम्। अत एव अगन्मसुवः सुवरगन्मेति मंत्रो विकृतावूहितव्य इत्युक्तम् नवमे। फलदेवतयोश्चेत्यत्र फलप्रयुक्तत्वे तु सौर्यादिविकृतिषु स्वर्गरूपफलाभावान्मन्त्रो न प्रवर्त्तेत न तरां चोहितव्यः स्यादिति।

(१२३) तत्सिद्धमङ्गानामन्यप्रयुक्तत्वानुपपत्तेरपूर्वप्रयुक्तत्वम्। तत्रापि सन्निपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपोपयोगादुत्पत्त्यपूर्वार्थत्वम्। अत एवौषधधर्मावघातादीनामाज्ये[1] ऽप्र-

[1] अतद्गुणसंविज्ञानो बहुव्रीहिः।

वृत्तिः, तेषामाग्नेयापूर्वप्रयुक्तत्वात्, आज्यस्य च तदर्थत्वाभावादित्युक्तं द्वितीये । आरादुपकारकाणां तु स्वरूपे[1] ऽनुपयोगात् परमापूर्वार्थत्वम् । तत्रोत्पन्नस्यपूर्वस्य यागस्वरूपानुष्ठानानन्तरमेवोत्पद्यमानत्वात् । सन्निपत्योपकारकाणां पूर्वाङ्गानां तदुत्पत्तावुपयोगः उत्तराङ्गानां तेषां च[2] तत्स्थितावुपयोगः । परमापूर्वस्य तु साङ्गप्रयोगानुष्ठानानन्तरमेवोत्पद्यमानत्वात् सर्वेषामारादुपकारकाणां तदुत्पत्तौ प्रयोगबहिर्भूतस्य तु तत्स्थितावुपयोगः । यथा बृहस्पतिसवस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयोत्तरकालमङ्गत्वेन बिहितस्य वाजपेयापूर्वस्थितावुपयोगः[3] । तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतुर्थे । तत्सिद्धं सर्वथाङ्गानामपूर्वार्थत्वम् । प्रकृतमनुसरामः । तदेवं निरूपितः सङ्क्षेपतो विनियोगविधिः ॥ ० ॥

## अथ प्रयोगविधिनिरूपणम्

(१२४) [4]प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चाङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव[5] । स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभाव

---

१ स्वरूपेऽपयोगिद्रव्याद्युद्देशेनाविधानादित्यर्थः । अपूर्वसाधनलक्षणामनपेक्ष्य प्रधानभावनयेतिकर्तव्यतात्वेन स्वीकृतानां तत्प्राप्त्यप्रधानापूर्वार्थत्वमेव युक्तमित्याशय इत्यनन्तदेवाः ।

२ परमापूर्वस्थितौ ।

३ वाजपेयाख्यान्यापूर्वस्य । ४ शीघ्रता हि प्राशुभाव उच्यते ।

५ फलविशेषकर्मभावनान्वयित्वेन प्रधानमिवाङ्गानि बोधयता प्रधानविधिनैव साङ्गप्रधानानुष्ठानसिद्धेः प्रधानोत्पत्तिविधयोऽङ्गविधयो वा न स्वविषयान् प्रयुञ्जत इत्याशयः ।

विधत्ते। न च विलम्बवदविलम्बेपि प्रमाणाभाव इति वाच्यम्। विलम्बे हि अङ्गप्रधानविध्यैकवाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्यते। न हि विलम्बेन क्रियमाणयोः पदार्थयोः सहकृतमिति साहित्यं व्यवहरन्ति। न च—"एवं साहित्यानुपपत्त्या समानकालत्वमेव स्यान्न त्वविलम्बः, अव्यवधानेन पूर्वोत्तरकाले क्रियमाणपदार्थयोरविलम्बेन कृतमिति व्यवहारादिति" वाच्यम्। अनेकपदार्थानामेकस्मिन्काले ऽनुष्ठानानुपपत्तेः। न च "तावत्कर्तृसंपादनेनानुष्ठानं किं न स्यादिति" वाच्यम्। तस्यैतस्य यज्ञक्रतोश्चत्वार ऋत्विज इत्यादिना कर्तॄणां नियतत्वात्। तस्मादङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेकवाक्यतावगततत्साहित्यं विदधदुक्तविधया एककालानुष्ठानानुपपत्तेरविलम्बं विधत्ते इति सिद्धं प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरिति।

(१२५) स चाविलम्बो[1] नियते क्रमे आश्रीयमाणे भवति। अन्यथा हि किमेतदनन्तरमेतत्कर्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः[2]। अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि[2] पदार्थविशेषणतया विधत्ते।

---

१ विक्षेप पदार्थलोपः।

२ क्रमसाहित्यादेरकारकत्वाशयेनेदम। अमुनैव ग्रन्थेन भिन्नप्रयोगविधिपरिगृहीताना न क्रमनियम इति द्योत्यते। विध्यन्तरप्रयोज्यपदार्थविशेषणत्वेन विध्यन्तरेण क्रमविध्ययोगात्। अत एव काम्यक्रतुषु न पाठक्रमेण क्रमनियम इति।

(१२६) तत्र क्रमो, नाम[1] विततिविशेषः पौर्वा-[2]पर्यरूपो वा । तत्र च षट् प्रमाणानि, श्रुत्यर्थप-ठनस्थानमुख्यप्रवृत्त्याख्यानि ।

(१२७) तत्र क्रमपरं[3] वचनं श्रुतिः । तच्च द्विविधं, केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति । तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम्, वेदिकरणादेर्वचनान्तरेण विहितत्वात् । वषट्कर्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम् । [4] एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य वि-धातुमशक्यत्वात् । सेयं श्रुतिरितरप्रमाणापेक्षया बलवती । तेषां [5]वचनकल्पनद्वारा क्रमप्रमाण-त्वात् ॥ अत एवाश्विनस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तावाश्विनो दशमो गृह्यते इति वच-नाद्दशमस्थाने ग्रहणमित्युक्तम् ।

(१२८) यत्र तु प्रयोजनवशेन [6]निर्णयः स आर्थः क्रमः । यथा ऽग्निहोत्रहोमयवागूपाकयोः । अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजन-

---

१ वितानं विततिः, विस्तार इत्यर्थः । अयुगपद्भाव्यनेकपदार्थान् इति तत्त्वम् । अत्र च मते अध्वर्युर्जपति न्यावयित्वा ग्रहाणामित्यादावाक्यान्तरोक्ताऽनेकपदार्थानुष्ठानस्यैकवाक्यता भवति ।

२ ननु पूर्वपदार्थानुष्ठानोत्तरमुत्तरपदार्थाऽनुष्ठाने सम्भवद्दृष्टार्थकस्य क्रमस्य स्वाश्रयानेकपदार्थाङ्गत्वेनादृष्टार्थकत्वं न युक्तमित्याह ।

३ बोधकमित्यर्थः ।

४ एकवाक्यताभङ्गेनेत्यर्थः ।

५ उच्यतेऽनेनेति वचनमिति व्युत्पत्त्या, वचनपदेन श्रुतिरुच्यते ।

६ अस्यार्थे क्रम इति शेषः ।

वशेन पूर्वमनुष्ठीयते[१]। स चायं पाठक्रमात् बलवान्। यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधो ऽदृष्टार्थत्वं च स्यात्। न हि होमानन्तरं क्रियमाणस्य किञ्चिद् दृष्टं प्रयोजनमस्ति।

(१२९) पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः। तस्माच्च पदार्थानां क्रम आश्रीयते। येन हि क्रमेण वाक्यानि पठितानि[२] तेनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति। [३]यथार्थप्रत्ययं च पदार्थानामनुष्ठानात्। स च पाठो द्विविधः। मन्त्रपाठो ब्राह्मणपाठश्चेति। तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्याक्रमाद्यः क्रमः आश्रीयते स मन्त्रपाठात्। स चायं मन्त्रपाठो ब्राह्मणपाठाद्बलवान्, अनुष्ठाने ब्राह्मणवाक्यापेक्षया मन्त्रवाक्यस्यानतरङ्गत्वात्। ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदमेवं कर्त्तव्यमित्येवमवबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते। मन्त्राः पुनरनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारका इति वक्ष्यामः। तेनानुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य च मन्त्रक्रमाधीनत्वादन्तरङ्गो मन्त्रपाठ इतरस्मादतिबलवान्। अत एवाग्नेयाग्नीषोमीययोर्ब्राह्मणपाठादादावग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानमित्येवं क्रमं बा-

---

१ एवं च यवागूम्पचेत् तयाग्निहोत्रं जुहुयादिति बोध.।

२ अस्यार्थे प्रयोगकाल इति शेषः।

३ अर्थप्रत्ययमनतिक्रम्य वर्तत इति यथार्थप्रत्ययम् यथाज्ञातमित्यर्थः।

धित्वा मन्त्रपाठादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्येव क्रम इत्युक्तम् ॥ प्रयाजानां समिधो यजति तनूनपातं यजतीत्येवं विधायकवाक्यक्रमाद्यः क्रमः स ब्राह्मणपाठक्रमः। अत्र च यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि तथापि प्रयाजानां स्मारकान्तरस्याभावात्तान्येव स्मारकत्वेन स्वीक्रियन्ते। तथा च येन क्रमेण तान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयन्तीति युक्तं तेनैव क्रमेण तेषामनुष्ठानमिति। तत्सिद्धं प्रयाजानां ब्राह्मणपाठक्रमात्क्रम इति।

(१३०) "ननु प्रयाजेषु प्रयोगसमवेतार्थस्मारकत्वं विधायकत्वेन कृतार्थानां ब्राह्मणवाक्यानां किमिति स्वीक्रियते प्रयोगसमवेतार्थस्मारकाणां याज्यामन्त्राणामाग्नेयादिष्विवात्रापि सत्त्वात्। न च 'तेषां देवतास्मारकत्वात्कर्मस्मारकत्वेन [1]ब्राह्मणवाक्यं स्वीक्रियत' इति वाच्यम्। आग्नेयादिष्वपि कर्मस्मारकत्वेन तत्स्वीकारापत्तेः। न चेष्टापत्तिः। तथा सति ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वं न स्यात्। तद्बलीयस्त्वे हि मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वमितरस्य तदस्मारकत्वं हेतुः। यदि च कर्मस्मारकत्वं ब्राह्मणवाक्यस्य स्वीक्रियते तदा प्रधानस्मारकत्वेन ब्राह्मणवाक्यस्यान्तरङ्गत्वादङ्गभूतदेवतास्मारकत्वेन च मन्त्राणां बहिरङ्गत्वान्मन्त्र-

---

[1] परम्परये त्यर्थः।

पाठाद्ब्राह्मणपाठस्यैव बलीयस्त्वं स्यात्। तथा च मन्त्र-तस्तु विरोधे स्यादिति (जै॰ सू॰ ५।१।१६) पांचमिकाधिकरणविरोधः। तत्र हि ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्युक्तम्। अथ-'आग्नेयादिषु याज्यामन्त्रा एव देवताप्रकाशनद्वारा कर्मप्रकाशकास्त्यज्यमानद्रव्योद्देश्यत्वरूपत्वाद्देवतात्वस्येति',-चेत्तुल्यं प्रयाजेषु। तत्रापि हि याज्यामन्त्रा देवताप्रकाशकाः प्रयाजेषु देवताया मान्त्रवर्णिकत्वात्। तथा च प्रयाजेषु याज्यामन्त्राणां देवताप्रकाशनद्वारा कर्मप्रकाशकत्वात्तत्क्रमो मन्त्रपाठादेव स्यान्न तु ब्राह्मणपाठक्रमात्। न च 'मन्त्रपाठस्यान्यादृशत्वात् प्रयाजक्रमो ब्राह्मणपाठक्रमादेवेति' वाच्यम्। अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात्, मन्त्रक्रमस्य बलीयस्त्वात्। अभ्यासाधिकरणे च वार्त्तिककृता क्रमविनियुक्तैवंलिङ्गकमन्त्रवर्णेत्यादिना प्रयाजेषु याज्यामन्त्राणां क्रमविनियोग उक्तः नवमे॥ तन्त्ररत्ने समिधोऽग्र आज्यस्य व्यंत्वित्यादिभिः क्रमप्रकरणप्राप्तैर्देवतागुणत्वेनसमर्प्यन्त इत्युक्तम्। मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्तिः स्यात्तत्कथं प्रयाजेषु ब्राह्मणपाठक्रमात्क्रम इत्युच्यते"॥

(१३१) सत्यमेतत्। तथापि यत्रार्थस्मारका मन्त्रा न सन्त्येव-यथा तूष्णीं विहितेषु कर्मसु-तेषां क्रमो ब्राह्मणपाठक्रमात्। तत्र तेषामेव प्रयोगसम-

नुभवाद्वाव्यवस्थाप्यते ऽनुमानाद्वा । न तावदनुभवः स्वाकारमात्रप-र्यवसायी नीलमपरं गोचरयति । नीलमिति हि प्रतिभासो न पुन-र्नीले इति । न च भिन्नं सद्विषयो भवितुमर्हतीत्युक्तम् ।

स्यादेतत् । द्विविधो हि विषयः प्रमाणानां, ग्राह्यो ऽध्यवसे-यश्च । तद्यथा प्रत्यक्षस्य ग्राह्यः क्षण एको ऽध्यवसेयश्च प्रवृत्तिवि-षयः सन्तानः । अन्यथा ऽर्थक्रियाऽर्थिं प्रमाणमप्रवर्तकं स्यात् । प्रवृत्तिविषयोपदर्शनं हि प्रवर्तकत्वं प्रापकत्वं च प्रमाणानाम् । न च ग्राह्यक्षण एव प्रवृत्तिविषयस्तस्य तदानीमतीतत्वात् । सन्तानस्तु स्यात् । न चाऽसौ ग्राह्य इत्यध्यवसेयत्वमभ्युपेतव्यम् । तथा ऽनुमानविकल्पस्यापि ग्राह्यं सामान्यमन्यथावृत्ति रूपम् । अध्यवसे-यस्तु प्रवृत्तिविषयो ऽर्थक्रियाक्षमः । प्रवृत्तिविषयाऽपेक्षं हि प्रामाण्यं तयोः । यथाह "न ह्याभ्यामर्थं परिच्छिद्याऽध्यवसाय प्रवर्तमानो ऽर्थक्रियायां विसंवाद्यते" इति । तदेव बाह्यमग्राह्यमध्यवसेयतया विषय इति तत्राऽध्यवसायार्थाऽपरिज्ञानात् विकल्पो ऽध्यवसायः । तत्रानुमानं विकल्परूपत्वात्तद्विषयं प्रत्यक्षं तु विकल्पजननादिति चेत् । ननु विकल्पो ऽपि स्वाऽऽकारविषयत्वात्कथं बाह्यमध्यवसा-तुमर्हति ? यदि मन्येत न विकल्पानां विषयः स्वाकारो, ऽपि तु संवेदनस्य । प्रत्यक्षस्य हि विकल्पविषयो यो विकल्प्यते । न च स्वरूपं विकल्प्यते । तस्य सर्वतो व्यावृत्तस्याऽभिलापसंसर्गयोग्य-त्वाऽभावाद्विशदप्रतिभासत्वाच्च । तस्मादात्मन्यविकल्पाः स्वाऽवभासं बाह्यतया विकल्पयन्तस्तत्र तत्र प्रवर्तयन्ति स्वव्यवहारार्थिनः । पारम्पर्येण च बाह्यादुत्पत्तेस्तत्प्रतिबन्धात्तत्प्राप्तेर्न विसंवादयन्ति लोकमिति । यदाह 'स्वप्रतिभासे ऽनर्थे ऽर्थाध्यवसायेन प्रवृत्ति'रिति । आह अनर्थे स्वाभासमर्थमध्यवस्यन्तीति निर्वचनीयमेतत् । नन्व-र्थमारोपयन्तीति किं विकल्पस्य स्वरूपाऽनुभवाऽऽरोप उत व्यापारा-

न्तर स्वरूपाऽनुभवः ? न पूर्वः कल्पः । अनुभवसमारोपयोर्विकल्पाऽविकल्पस्वरूपतया द्रवकठिनवत्तादात्म्याऽनुपपत्तेः । व्यापारान्तरत्वे क्रमः समानकालता वा । न तावत् क्रमः । क्षणिकस्य विज्ञानस्य क्रमवद्व्यापाराऽयोगादक्षणिकत्वादिनामपि बुद्धिधर्मयोर्विरम्य व्यापाराऽयोगान्न क्रमवद्व्यापारसम्भवः । अनुभवसमारोपौ समानकालाविति चेत् । भवतु समानकालत्वं केवलमात्मभावाऽवस्थित एव वेद्यः । परभाववेदने स्वरूपवेदनाऽनुपपत्तेः । तथा चात्मज्ञानस्य ग्राह्यग्राहकाऽऽकाराऽनुभूतौ ऽर्थश्च समारोपित । न त्वात्माऽवेद्यमाने समारोपितो नार्थः समारोप्यमाणः प्रत्यक्षवेद्यः । स च समारोपः सतो ऽर्थस्याऽसतो वा ग्रहणमेव । न च ज्ञानाऽतिरिक्तस्य ग्रहणं सम्भवतीत्युक्तम् । स्वप्रतिभासस्य बाह्याद्भेदाऽग्रहो बाह्यसमारोपस्ततो बाह्ये प्रवृत्तिरिति चेत् । स किं गृह्यमाणे बाह्ये न वा ? न तावद्गृह्यमाणे । उक्तं ह्येतत् न तद्ग्रहः सम्भवतीति । अगृह्यमाणे तु भेदाऽग्रहेण न वृत्तिनियमः स्यात् । अन्येषामपि तदानीमग्रहणात् । अन्यत्रापि प्रवृत्तिप्रसङ्गात् । तस्मान्नाऽनुभवव्यवस्थाप्यो नाप्यनुमानव्यवस्थाप्यः । तदपि हि प्रत्यक्षवदेव ग्रहीतुमध्यवसातुं वा बाह्यं नाऽर्हतीत्युक्तप्रायम् । न च तादृशो बाह्यप्रतिबन्धस्तदात्मा तत्कार्यो वा हेतुरप्यस्ति । नन्वयमस्ति । ये यस्मिन्सति कादाचित्कास्ते सर्वे तदतिरिक्तहेतुसापेक्षा यथा विच्छिन्नाऽऽगमवचनप्रतिभासप्रत्ययाः सन्तानान्तरापेक्षा । तथा च विवादाध्यासिताः सत्यप्यालयविज्ञानसन्ताने षडपि प्रवृत्ति[1]प्रत्यया इति स्वभावहेतुः । यश्चाऽसावालयविज्ञानसन्तानाऽतिरिक्तः सो ऽर्थो वासनापरिपाकप्रत्ययकादाचित्कत्वात् कदाचिदुत्पाद इति चेत् । नन्वेकसन्ततिपतितानामालयविज्ञानानां तत्तत्प्रवृत्तिविज्ञानजननस-

---

१ संताने ऽप्यप्रवृत्ति॰ २ पु॰ पा॰ ।

क्तिर्वासना । तस्याश्च स्वकार्यजननं प्रत्याभिमुख्यं परिपाकस्तस्य च प्रत्यय. स्वसन्तानवर्तिपूर्वक्षण । सन्तानान्तरापेक्षाऽनभ्युपगमात् । तथा च सर्वेऽप्यालयसन्तानपतिताः परिपाकहेतवो, न वा कश्चिदपि । विशेषाऽभावात् । यो यथाऽभिप्रेतः परिपाकहेतुः क्षण आलयसन्तानपतितस्तथा सर्वेऽपीत्यविशेषः । क्षणभेदाच्छक्तिभेदस्तस्य च कादाचित्कत्वात्कार्यकादाचित्कत्वमिति चेत् । नन्वेवमेकस्यैव नीलविज्ञानजननसामर्थ्यं तत्प्रबोधजननसामर्थ्यं चेति क्षणान्तरस्य तन्न स्यात् । सत्त्वे वा कथं क्षणभेदाच्छक्तिभेद ? इत्यालयसन्तानवर्तिन सर्वे समर्था इति समर्थहेतुसद्भावे वा कार्यक्षेपाऽनुपपत्तेः । स्वसन्तानमात्राऽधीनत्वे निषेध्यस्य कादाचित्कत्वस्य विरुद्धं सदातनत्वम्, तस्योपलब्ध्या च कादाचित्कत्व निवर्तमान हेत्वन्तरापेक्षत्वे व्यवतिष्ठतइति प्रतिबन्धसिद्धिः । न च सन्तानान्तरनिमित्तत्व सर्वेषा प्रवृत्तिविज्ञानाना विज्ञानवादिभिरङ्गीकृत,मपि तु कस्य चिदेवाऽऽगमवचनप्रतिभासस्य विज्ञानस्य । अपि च सन्तानान्तरनिमित्तत्वे तस्यापि सदा सन्निधानान्न कादाचित्कत्व स्यात् । न खलु सान्द्रतरस्य सन्तानस्य कादाचित्कत्वस्य देशतो विप्रकर्षसम्भवो, विज्ञानवादे व्यतिरिक्तदेशाऽभावात् । अमूर्तत्वाच्च । विज्ञानानामदेशात्मकत्वात् । नापि कालतः । अपूर्वसत्त्वप्रादुर्भावाऽनभ्युपगमात् । तस्मादनुमानमस्ति बाह्यसाधनमिति । तदिदमनुपपन्नम् । स्वसन्तानमात्रप्रभवत्वेऽपि प्रत्ययकादाचित्कत्वोपपत्तौ सन्दिग्धविपक्षव्यावृत्तिकत्वेन हेतोरनैकान्तिकत्वात् । बाह्यनिमित्तत्वेऽपि कथं कदा चिन्नीलसंवेदनं कदा चित्पीतसंवेदनं बाह्यनीलसन्निधाने स्वकारणनिबन्धनः शक्तिभेदोऽपि भविष्यति । सन्तानिनो हि क्षणभेदहेतवस्ते च प्रतिकार्यं भिद्यन्तएव सन्ताने सन्निधानाऽसन्निधानाभ्यामिति चेत् । अथ पीतसन्निधाने किमिति नीलादिज्ञानं

न भवति पीतज्ञानं वा भवति? सामर्थ्यादसामर्थ्याच्चेतरस्मिन्निति चेत्। कुतः पुनरयं सामर्थ्यभेदः? स्वहेतुभेदादिति चेत्। एवं तर्हि क्षणानामपि स्वकारणभेदनिबन्धनः शक्तिभेदो भविष्यति। सन्ताना हि क्षणभेदहेतवः प्रतिकार्यं भिद्यन्त एव। न च सन्तानो नाम कश्चिदेक उत्पादकः समस्ति, यदभेदात् क्षणा न भिद्येरन्। ननूक्तं न क्षणभेदाऽभेदाभ्यां शक्तिभेदाऽभेदौ, भिन्नानां क्षणानामेकस्य सामर्थ्यस्योपलब्धेः। अन्यथैक एव पूर्वक्षणो नीलविज्ञानजननः स्यान्न क्षणान्तराणीति न नीलाकाराणि विज्ञानान्तराण्युत्पद्येरन्, यदि भिन्नानां नैकं सामर्थ्यम्। ननु नीलसन्तानिनामपि मिथो भिन्नानां नैकमस्ति नीलाकारादिसामर्थ्यमिति सन्निधाने ऽपि नीलान्तरस्य न नीलविज्ञानमुत्पद्येत। सन्तानिभेदे ऽपि शक्त्यभेद इति चेत्। क्षणभेदेन किमपराद्धं? येन तस्मिन्नपि न भवति। अथ सन्तानिभेदे शक्तिभेद एव, तथा च कार्यभेदः। न हि यदेकस्मिन्नीलाकारं ज्ञानं ज्ञानान्तरमपि नीलाकारं तदेव भवितुमर्हति। तदस्माकं क्षणभेदे ऽपि समानम्। अन्यथाऽभिनिवेशात्। अपि चोत्पत्तिसारूप्याभ्यां विषयत्वे चक्षुरालोकसंस्काराणामपि यथाक्रमं रूपग्रहणं प्रति नियमस्पृष्टताज्ञानजनकत्वसारूप्यैस्तदुत्पत्त्या च नीलवद्ग्रहणप्रसङ्गः। अत्यन्तसारूप्याद्वा विषयत्वे नीलविज्ञानसमनन्तरप्रत्ययस्य नीलार्थादपि सदृशतरस्य नीलज्ञानविषयत्वाऽऽपत्तिः। सतोरप्युत्पत्तिसारूप्ययोरध्यवसायाद्विषयभावः स चार्थ एव नान्यत्रेति चेत्। न। उक्तोत्तरत्वात्। निवेदितमेतदधस्तात्। यथा 'नाऽध्यवसायगोचरो बाह्य' इति।

तदनेन प्रबन्धेन वेद्यत्वलक्षणो हेतुः समर्थितो विज्ञानवादिनाम्। स चैवं प्रयोगमारोहति। यद्वेद्यते येन वेदनेन ततस्तन्न भिद्यते यथा ज्ञानस्याऽऽत्मा, वेद्यन्ते च नीलादय इति विरुद्धव्या-

**निरालम्बनं तु ज्ञानमयुक्तमेव ।**

प्रोपलब्धिः । निषेध्यभेदविरुद्धः खल्वभेदस्तेन व्याप्तं वेद्यत्वं भिन्नस्य साऽऽकारनिराकारविज्ञानप्रवेदनीयस्याऽनुपपत्तेरिति प्रपञ्चितमधस्तात् । तस्माद्विरुद्धाऽभेदव्याप्तवेद्यत्वोपलब्धिरूपा ऽनुपलब्धिरेव भेदाऽभावसाधनीति[१] स्थिता बुद्धीनां बाह्याऽनालम्बनत्वसिद्धिः ।

अतश्चैतदेव सहोपलम्भनियमो ज्ञानस्यार्थेन । तथा हि । यद्येन नियतसहोपलम्भनं तत्ततो व्यतिरिच्यते यथैकस्माच्चन्द्राद् द्वितीयश्चन्द्रः । नियतसहोपलम्भनं ज्ञानमर्थेनेति व्यापकविरुद्धोपलब्धिः । अभेदो हि सहोपलम्भनियमेन व्याप्तः । न खलु नीलपीते भिन्ने नियमेन सहोपलभ्येते । तद्विरुद्धश्चाऽयं नियमः स्वविरुद्धमनियमं निवर्तयंस्तद्व्याप्तं भेदमपि निवर्त्तयति । तद्व्यापकविरुद्धोपलब्ध्या भेदाऽभावसिद्धिः । यथाह 'सहोपलम्भनियमादभेदो नीलतद्धियोः'रिति । कथं तर्हि ज्ञानात्मकात्प्रतिपत्तुरर्थस्य भेदबुद्धिर्नीलमेतदिति? बलवद्वेद्यत्वसहोपलम्भनियमाऽनुमानेन बाधिता भ्रान्तिरेव । यदाह 'भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविव द्वयम्' इति ।

अपि च यः प्रत्ययः स सर्वो बाह्याऽनालम्बनः । यथा स्वप्नप्रत्ययः, प्रत्ययश्च विवादाध्यासित इति स्वभावहेतुः । निरालम्बनं विज्ञानं तन्मध्यपातिनी च प्रतिभेति सापि तथेत्यत आह— निरालम्बनं तु ज्ञानमयुक्तमेव । इदमत्राऽऽकूतम् । नैतन्निरालम्बनत्वं प्रमाणं भवितुमर्हति । तथा हि । किमनुभवसिद्धस्य नीलादेर्वेद्यस्य तत्त्वं हेतुः क्रियेत, आहो स्विदन्यस्य ? तत्र यद्यनुभवसिद्धस्य ततो ऽनहङ्कारास्पदमसितादिरूपं स्थूलं नीलादिविच्छिन्नं वेद्यमनुभूयते, नास्याऽऽन्तरज्ञानस्वभावता शक्यसाधना । यथाहाचार्यः 'स बहिर्देशसम्बन्धः प्रत्यक्षमुपलभ्यते' इति । अथाऽन्यस्य । तस्याऽसिद्धं वेद्यत्वम् । ज्ञानाकारत्वे चास्य न काचित्क्षतिः । यद्युच्येत

---

१ भावं साधयतीति २ पु॰ पा॰ ।

नाऽनुभूतत्वमाचस्य हेतुत्वमपि त्वनुभूताऽवसितत्वस्य । अवसायश्च स्वभावत एकव्यावृत्तिनिष्ठरूपाऽवगाही न मनागपि व्यावृत्त्यन्तरमवगमयति । मा भूदिह सदभिलापविकल्पपर्यायता सर्वेषा गवादिशब्दविल्पानाम् । व्यावर्त्यभेदाऽनुविधायिनश्च व्यावृत्तिभेदाः । तदिहाऽवेद्यव्यावृत्तिकृतवेद्यत्वाऽवगाही विकल्पो नाऽबाह्यव्यावृत्तिकृत बाह्यत्व विगाहतइति यदेव किंचित्पांसुलपादकेन हालिकेनापि नीलादेर्वेद्यत्वमनुभूतावसितं तद्बाह्यत्वनिरासाय समर्थमिति न विरोधः । तदसत् । न खल्वेकाऽवसायगोचरतया विरोधमापादयामो, ऽपि तु यद्बाह्यत्व स्थूलत्व चाऽनुभूतावसित नीलादेस्ताभ्या विरोधी । तथा हि । ज्ञानाकारत्वे नीलस्य नाना दिग्देशव्यापिता स्थूलत्व विच्छिन्नदेशता च बाह्यत्व न स्याताम् । न खल्वेकत्वेन ग्रहणाऽग्रहणे एव परं विरुध्येते येन विज्ञानदेशे नीलादे. स्थूलस्य ग्रहणादेवाऽविरोधः स्या,दपि तु तद्देशत्वाऽतद्देशत्वे अपि । तथा हि । भिन्नदेशयोरपि परस्परपरिहारेण स्थितिरस्ति विच्छिन्नाऽवभासज्ञानकारणशक्तिर्भिन्नदेशत्वम् । तच पूर्वदिग्भागस्थितान्नीलाद्विच्छिन्नमवभासते प्रत्यक्षेण, न तु परस्परात्मकमनुभवाऽनुसारिणा निश्चयेन यथा ऽवसीयते तथा ऽनवसायात्परस्परविच्छेदेन चाऽवसायात् । दृश्यमानं चाऽनुभवाऽनुसारिणा निश्चयेन यथा ऽवसीयते तथैव सदसति बाधके । यदि च पूर्वदिक्कमितरदिक्क गृह्णीत नैव दिग्भिन्नभावदर्शन भवे,दस्ति च तत् । तस्माद्दिगन्तरसन्निविष्टं रूपमितरदिक्क न गृह्यते । तथा सति यथा नीले पीतमदृष्टमिति नीलपरिच्छेदे तदभावो व्यवच्छिद्यते तद्वच्च पीतादिवत्पूर्वदिक्के रूपे तदितरदिक्क रूपमदृष्टमिति पूर्वदिक्करूपपरिच्छेदे तदभावो व्यवच्छिद्यते । इतरथा तादूप्यमेव न परिच्छिन्नं स्यात् । तदभाववच्च पूर्वदिक्काऽभाववन्तस्तदितरदिग्भागवर्त्तिनः स्वभावाद् व्यवच्छेतव्याः नीलपरिच्छेदेनेव नीलाऽभाववन्तः पीतादय इति

सिद्धस्तद्देशत्वाऽतद्देशत्वयो परस्परपरिहारस्थितिलक्षणो विरोधः । यत्र चैवं विध्योर्विरोध तत्र मानाऽभेदो यथा नीलपीतयोः । एवंविधश्चाऽनुभूयमाने नीले स्थूले विरोध इति व्यापकविरुद्धोपलब्धिः । प्रतिषेद्धव्य खलु भेदो विरोधाऽभावेन व्याप्तस्तद्विरुद्धश्च विरोध इति । तेन यावदुक्त भवति नीलं वा नेति तावदुक्त भवति नील स्थूलमिति । न च नानैकज्ञानात्मेति युक्तम् । एकत्वस्य नानात्वविरोधात् । न च नानाविज्ञानानीति साम्प्रतम् । प्रत्येक स्वाऽवभासमात्राऽवसायित्वे नानाविज्ञानाना स्थूलाभासाऽनुभवाऽभाव[1]प्रसङ्गात् । न च नानाकाराऽनुभववासनाजन्मा विकल्पस्तदनुभवाकारसङ्कलनात्मकस्थूलाकारभाग्भवितुमर्हति । तस्याप्येकत्वे ऽनुभववत्तदाभासत्वाऽनुपपत्तेः । नानात्वे वा स्थूलाभासाऽभावप्रसङ्गात् । विकल्पविषयत्वेन च विशदाभताऽनुपपत्ते । यदाह । 'न विकल्पानुबन्धस्य स्पष्टार्थप्रतिभासते'ति । न चाऽनुभूत स्थूलत्व येन तदुपाधिर्विकल्पे विस्पष्टाभास[2] स्यात् । तस्मादर्थे विज्ञाने च स्थूलत्वाऽनुपपत्तेरसदेतदभ्युपगन्तव्यम् । न च तद्विज्ञानं सम्भवति । सदसते रेकत्वाऽनुपपत्ते । एतेनेदमिति विच्छिन्नाऽवभासो व्याख्यातः । तस्मादनिच्छता ऽपि विज्ञानाना मनोवेद्यत्वमभ्युपगन्तव्यम् । तथा च वेद्यत्वमभेदस्य न व्याप्यमिति विरुद्धव्यापकोपलब्धिरसिद्धा नाऽभेदोपस्थापनेन भेदं निषेद्धुमर्हति । ननु न परप्रतिबन्धमात्रादर्थसिद्धिः, उक्त च 'साकारमनाकारं च विज्ञानमनात्मभूतवेदनासमर्थ'मिति । तत्किमिदानी समर्थनीय एव स्थूलाऽनुभवो नास्ति वा ? न तावन्नास्ति, नीलवत्तस्याप्यनुभवात् । तदपह्नवे चाऽनिर्मूलतया नीलाऽनुभवस्याऽपह्नवप्रसङ्गः । तथा चास्य कुतो भेदो वा ? अर्थाप्ति न चाऽसमर्थनीयः । न च ज्ञानाऽऽकारः । का

1 स्थूलाऽभाव २ पु पा० ।
2 विस्पष्टाकता स्यात २ पु पा ।

तर्हि तस्य समर्थना ? अत एवाऽनात्मनः प्रकाशनविज्ञान स्वकारणा-ऽऽसादिताऽदृष्टान्तसिद्धस्वभावभेद न कथन्तास्पद भवितुमर्हति । न खल्वनुभवो दृष्टान्तमपेक्षते । मा भूद्भूम्यादावसाधारणगन्धादिगुणा-ऽननुभवनम् । क. पुनरस्याऽनात्मसम्बन्ध ? इति चेत् । अथा-ऽन्यत्रापि सम्बन्धस्य कः सम्बन्धिभ्या सम्बन्ध ? रूपेणैव स तथेति न सम्बन्ध्यन्तरमपेक्षते । न जातु सम्बन्धिनावन्तरेणाऽसौ निरूप्यते । न च जातु तस्मिन्सति सम्बन्धिनावसम्बन्धिनौ भवत,स्तेन सम्बन्धिसम्बन्धो न परमार्थः । सम्बन्धसम्बन्धिनौ तथो-त्पन्नौ सम्बन्ध इति चेत् । ननु स्थूलाऽनुभवोऽपि न स्थूलमन्त-रेण निरूप्यते । न च तस्मिन्सति स्थूलमननुभूत भवतीति रूपे-णैव सोऽपि स्थूलप्रकाशनपरमार्थः सम्बन्ध इव वा तथोत्पन्नौ सम्बन्धिनाविव वा सम्बन्धनपरमार्थौ । सेय समर्थना । यद्येवमियम-नुभवमात्रस्यैवाऽनात्मग्राहितामापादयति, न हि नीलाद्यनुभवेऽपि नीलादिमन्तरेण निरूप्यते । न च तस्मिन्सति नीलादयो नाऽनुभूता इति स्थूलाऽनुभववदनात्मनो नीलादेरनुभवः स्वभावत एव न सम्बन्धान्तरेणे ति तत्त्वम् । अतदात्मनोऽपि वेद्यत्वोपपत्ते-रनैकान्तिकं वेद्यत्वम् । एव सहोपलम्भनियमोऽप्यनैकान्तिकः । स्वकारणाऽधीनो हि तादृशः स्वभावभेदो विज्ञानस्य येनात्माऽना-त्मनोरसावेक एवोपलम्भ । न च स्वभाव. कथन्तागोचर इत्यु-क्तम् । एतेनैव प्रत्ययत्वमपि प्रत्युक्तम् । स्वप्नादिप्रत्ययानां च समा-रोपितबाह्यविषयत्वात्साध्यविहीनत्व दृष्टान्तस्य । तथा च विरु-द्धो हेतुः ।

अपि चाऽसिद्धः सहोपलम्भः । न हि य एव नीलस्योपल-म्भ स एव तदुपलम्भस्येति नियमः समस्ति । न खल्वयमनुभव-गोचरः । तथा हि । विस्फुरिताक्षः प्रतिपत्ता नीलमिदमिति पश्यन्न

तदैव तदनुभवमपि पश्यति । नीलप्रवणो हि तदनुभविता वा नाऽनुभवप्रवणो ऽनुभूयमानोपाधितया ऽनुभवमपि परिच्छिनत्ति । न खल्वनुभवाऽवसाने ऽनुभूयतइति भवति । न ह्यस्ति सम्भवो दण्डो न गृह्यते गृह्यते च दण्डीति । तस्माद्विशेषणतया ऽनुभवग्रहणे ऽप्यनुभूयमानप्रवणो ऽनुभवितेति सिद्धः सहोपलम्भनियम इति चेत् । नैतत् । न ह्यनुभूयते नीलमित्यनुभवो ऽपि तु नीलमिति ॥ असत्यनुभवप्रकाशे विषया न प्रकाशेरन् । तदधीन हि प्रकाशं तेषाम् । न खलु न लानो नीलाऽनुभवस्तानलमवभासितुम् । न ह्यनुभवादन्यो विषयाऽवभास, यमयमनवभासमानो ऽपीन्द्रियादिवदादधीता,ऽपि तु परप्रकाशनपरमार्थो ऽनुभव एव तत्प्रकाश । तथा च यदि निलीयते तन्निलीनस्वभावत्वाद्विषयानपि नाऽऽभासयेदिति नाऽनुभवो न विषया भासन्तइत्यायातमान्ध्यमशेषस्य जगत । तस्मादनुभवप्रकाशाऽऽयत्तप्रकाशत्वमेषितव्य विषयाणाम् । अपि चैकस्मिन्नर्थे स्फुटाऽस्फुटाऽवभासो युगपदुपलभ्यते प्रतिपत्तृणाम् । न चाऽसावर्थधर्मे स्फुटत्वादिरेकस्मिन्युगपद्विरुद्धधर्मसमावेशाऽसम्भवात् । विज्ञानभेदस्तूपपद्यतइति विज्ञानस्य धर्म. । तथा च तज्ज्ञानमनुभवसिद्धम् ।

तदेवमनुभवादेव स्वसवेदनसिद्धौ यो नाम स्वसिद्धान्ताभ्यासाऽऽहितव्यामोहो विप्रतिपद्यते त प्रत्यनुमानमुपन्यस्यते । यद्यत्प्रकाशाऽऽयत्तप्रकाशं तत्तस्मिन्प्रकाशमानएव प्रकाशते, यथा दण्डप्रकाशाऽऽयत्तप्रकाशो दण्डी । प्रत्ययप्रकाशायत्तप्रकाशश्च प्रत्येतव्यो रूपादिरिति स्वभावहेतुः । न च प्रत्ययप्रकाशाऽऽयत्तप्रकाशत्व रूपदीनामसिद्धम् । उक्त हि 'तदनायत्तत्वे प्राप्रमान्ध्यमेव जगतो ऽशेषस्येति । न च स्वसवेदने स्वात्मनि वृत्तिविरोधः । न हि सवेदनस्य स्वरूपादन्या वृत्तिरस्ति । यतः स्वात्मनि कर्तृकर्मभावो विरुध्येत । सवेदनमेव त्वपराधीनप्रकाशमाविर्भूतस्वभावमात्मसंवेदनमाचक्षते ।

न च स्वभावेन भावो विरुध्यते। तस्मादात्मसंवेदनसिद्धेः सिद्धः सहोपलम्भनियम इति।

तदनुपपन्नम्। हेत्वसिद्धेः। न हि नीलादयोऽनुभवप्रकाशाऽऽयत्तप्रकाशाः किं त्वनुभवाऽधीनप्रकाशाः। एवं चेन्नेत्रादिभिरनेकान्तः। किं पुनर्नीलादीनामनुभवे आयत्तता? नन्वनुभवप्रकाशेऽपि किमायतते? यदि न किञ्चिन्नाऽतिरिक्तं वच। अनुभवप्रकाशाऽऽयत्तप्रकाश इति चेत्। ननु स एव तदधीन इत्युक्तं भवति, तच्चाऽयुक्तम्। न ह्यात्मन्यायतते, भेदाऽश्रयत्वात्तद्भावस्य अनुभव एवात्मनः परस्य च सम्बन्धितया ऽनुभवभेदोऽनुभवप्रकाशो नीलप्रकाश, तथा चाऽनुभवप्रकाशाधीनता नीलप्रकाशस्येति चेत्। एवं तर्हि स्वप्रकाशाऽधीनस्य नीलसम्बन्धितेत्युक्तं स्यात्। तच्चैतावद्वक्तव्यम्। भवतु स्वप्रकाशः कुतस्तु नीलसम्बन्धितेति। स्वभावादिति चेत्। कृतं तर्हि स्वप्रकाशेन, स्वभावत एव तत्सम्बन्धोपपत्तेः। एतावांस्तु विशेषः, तवासौ कल्पिता तत्सम्बन्धिता, मम तु पारमार्थिकी, यां किल ज्ञेयाऽभिव्यक्तिरिति ज्ञाततेति वा कर्मतेति वा ऽऽचार्याः प्रचक्षते। ननु कर्मतेति चेयमर्थधर्मः, कथमर्थधर्मो ऽयमतीतादिषु सम्भवतीत्युक्तम्। नेयमर्थधर्मः, किं तु ज्ञातुरात्मनो ज्ञेयसम्बन्धभेद एव ज्ञातता। स च ज्ञातृधर्मो ज्ञायमानार्थोऽवच्छिन्नो ज्ञेयं प्रति गुणभाव आत्मनः सुखादिवत्प्रमित्साऽनपेक्ष[1]समनन्तरप्रत्ययोत्पन्नमानसप्रत्यक्षवेदनीय एकसमवेतो ऽप्युभयाऽधीननिरूपणतादात्म्यः शक्तिरिव सम्बन्धः सम्भवति। नन्वयमनुभव एव। तथा हि। सोऽपि विज्ञेयविशेषप्रतिबन्धव्यवहाराऽनुगुणः पुंसो धर्मभेद आख्यायते। सत्यमीदृशः। न त्वसौ सम्बन्धः[2]। व्यापारो हि स आत्मनः। तस्य तु फलं सम्बन्ध आत्मनो ज्ञेयप्रवणतालक्षणः। कुतः पुनरनुभवाऽवगतिः? अस्मादेव तु सम्बन्धलक्षणात्फलात्। यदाह 'ज्ञाते त्वनुमा-

१ प्रमित्सितस्य सापेक्ष० २ पु० पा०। २ स नामेदृशः २ पु० पा०।

नादवगच्छतीति । आत्ममनःसंयोगविशेषादेव कादाचित्कफलसम्भवान्नाऽनुभवाऽनुमानमिति चेत् । तत्किमिदानीमात्मनः संयोगविशेषो जात इत्यात्मना ऽर्थं प्रति गुणभूतेन भवितव्यं? क्रिया हि गुणप्रधानभावमापादयति भावाना पाकादिषु तथोपलम्भात् चैत्रौदनादीनाम् । ननु क्रियोपधाननिबन्धनश्चेत्सम्बन्धः कथमप्रतीतायां क्रियायां शक्यः प्रतिपत्तुम्? प्रतीता चेत्क्रिया न तर्हि सम्बन्धात्फलभूतात्तत्प्रतीति. । नैतदस्ति । क्रियामन्तरेण हि न सम्बन्ध, न पुनः क्रियाप्रतीतिं विना तत्प्रतीतिः,रप्रतीतायामपि क्रियाया सम्बन्धप्रतीतेः । यथा ऽऽग्नेय इति शब्दाऽवगताद् द्रव्यदेवतासम्बन्धादनुमीयते यजिस्तथोत्पन्नविज्ञानार्थं प्रति गुणभूतमात्मान मनसैव सहसाऽवगम्य तद्धेतुं संवेदनक्रियामनुमिमीते। आत्ममनःसंयोगमात्रात्तदनुपपत्तेः । यथाह । 'पूर्वं सा गृह्यते पश्चाद् ज्ञानं तज्ज्ञातताबशा'दिति ।

स्फुटत्वमपि ज्ञेयताविशेष एव न संवेदनविशेषः । तथा हि । सामान्यविशेषतद्वत्तां संवेद्यता स्फुटता, तद्विपरीतत्वमस्फुटता, यतो दूरे वृक्ष इति प्रतियन्ति न पुनरशोक इति वा सहकार इति वा । प्रत्यासीदन्तस्तु मलयमारुताऽऽकम्पमाननवपल्लवमानन्दनिष्पन्दमधुपमालानिपीयमानमधुरमधुरसस्तबककदम्बकं रक्ताऽशोकपादप् । तस्माज्ज्ञेयतायामय विशेषो न ज्ञाने इति सिद्ध पराञ्चः प्रत्यया न प्रत्यञ्च इति ।

प्रयोगस्तु विवादाऽध्यासिता. प्रत्ययान्तरेणैव वेद्याः प्रत्ययत्वात् ये ये प्रत्ययास्ते सर्वे प्रत्ययान्तरवेद्याः यथा न प्रत्ययान्तरेणैव वेद्या । अविद्यमानस्याऽवभासे ऽतिप्रसङ्गात् ज्ञायमानस्यैवाऽवभासो ऽभ्युपेय । तथा च विज्ञानस्य स्वसंवेदने तदेव तस्य कर्म क्रिया चेति विरुद्धमापद्येत । यथोक्तम् ।

**तस्य ज्ञेयाऽवभासकार्यलक्षणत्वात् ।**

**विषयाऽभावाच्च व्युत्पत्त्यसम्भवे तदपेक्षस्य प्रवृत्तिः स्यात् ।**

"अङ्गुल्यग्रं यथात्मानं नाऽऽत्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति" । इति ।

यत्प्रत्ययत्वं वस्तुभूतमविरोधेन व्याप्तं, तद्विरुद्धविरोधदर्शनात्स्वसंवेदनान्निवर्तमानं प्रत्ययान्तरवेद्यत्वेन व्याप्यत इति प्रतिबन्धसिद्धिः । एवं प्रमेयत्वगुणत्वसत्त्वादयोऽपि प्रत्ययान्तरवेद्यत्वहेतवः प्रयोक्तव्याः । तथा च न स्वसंवेदनं विज्ञानमिति सिद्धम् ।

असिद्धश्च सहोपलम्भनियमः । फलभेदसमुन्नेयं च विज्ञानमभिन्नं सन्न फलभेदायाऽलमिति विनापि नीलाद्याभासं स्वभावत एव भेदात्प्रतिकर्म व्यवस्थाप्यते । तदेवमसति बाधकेऽनुभव एवात्मग्राही बाह्यसद्भावे प्रमाणं, न प्रमाणान्तरमत्राऽनुसरणीयम् । न हि करिणि दृष्टे चीत्कारेण तमनुमिमते प्रेक्षावन्तः । प्रमेयपरीक्षा तूपेक्षिता विस्तरभयात् । तदनेन प्रबन्धेनोक्तोऽभिसन्धिराचार्यस्य निरालम्बनं ज्ञानमयुक्तमेवेत्यवधारयत. ।

निराकरणान्तरमाह—तस्य ज्ञेयाऽवभासकार्यलक्षणत्वात् । ज्ञेयाऽवभासो ज्ञेयताऽर्थस्य तया ऽत्यन्तपरोक्षं विज्ञानमनुमातव्यं, तच्च प्रमाणान्तराभावादित्युक्तम् । निरालम्बनत्वे तु ज्ञेयाऽवभास एव नास्तीति केन ज्ञानमनुमीयेत ? यस्य निरालम्बनत्वं साध्येत । तदनेन धर्मिणः साध्यधर्मेण विरोधो दर्शितः । तथा चाऽऽश्रयाऽसिद्धत्वं हेतोरिति भावः । अपि च व्युत्पन्नसम्बन्धः शब्दः प्रतिभां भावयेत् । व्युत्पत्तिश्चाऽर्थेन सह शब्दस्य न विज्ञानेन कार्येण तस्याऽऽनन्त्याद्व्यभिचाराच्च । सामान्यस्य च प्रतिभात्वस्याऽकार्यत्वात्कारकस्य स्वकार्ये व्युत्पत्त्यनपेक्षत्वात् । अर्थश्च निरालम्बनत्वाऽभ्युपगमे नास्तीति व्युत्पत्तेरसम्भवात्तदनपेक्षस्य च प्राक् प्रवृत्तिः स्यान्न चा-

ननु कारकसंसर्गिणी क्रिया आलम्बनमिष्टैव । न । तस्या अप्रवर्त्तकवचनजन्मन्यपि प्रख्यायां साम्याल्लिङादियुक्तेभ्यो वचनेभ्यः प्रतिभाभेदादप्रवृत्तिप्रसङ्गात् ।

ननु नाऽप्रवर्तकमनिवर्तकं वा वचः समस्ति । वैयर्थ्यात् । कर्तव्यतापर्यवसायिनी हि वाक्यप्रवृत्तिः । कथं तर्हि भूताऽन्वाख्यायिनो वेदान्ता लौकिकवचांसि च? कर्तव्यताभेदात् वृत्तिनिवृत्तिप्रतिपत्तिविषयत्वात् । सर्वा हि

सावस्तीत्याह—विषयाऽभावाच्च व्युत्पत्त्यसम्भवे तदनपेक्षस्य प्रवृत्तिः स्यात् ।

कश्चिदाह—ननु कारकसंसर्गिणी क्रिया ऽऽलम्बनमिष्टैव, तथापि न भवदभिमतोपायता सिध्यतीति भावः । दूषयति—न, तस्याः काष्ठैः पचयतीत्यथाऽप्रवर्त्तकवचनजन्मन्यपि प्रख्याया साम्यात्प्रवृत्तिः स्यादप्रवृत्तौ वा काष्ठैः पचेदिति लिङादियुक्तादपि वाक्यात्प्रतिभाया अभेदादप्रवृत्तिप्रसङ्गात् ।

परस्त्वप्रवर्त्तकवचनजन्मनीत्यमृष्यमाण आह—ननु नाऽप्रवर्त्तकमनिवर्त्तकं वा वचः समस्ति । कुतः ? वैयर्थ्यात् । परप्रत्यायनाय हि वचनमुच्चारयन्ति प्रेक्षावन्तः । तदेव च परः प्रत्याययितव्यो यत्प्रयोजनवत् । न च भूताख्यानं तथा । तस्मात्प्रवर्त्तकं निवर्त्तकं वा वचो नाऽन्या गतिरस्तीत्यर्थः ।

ननु भूतान्वाख्यानमपि दृश्यते लोके वेदे च निधिमानेष भूभागः, 'सदेव सोम्येदमग्र आसी'दिति, अत आह—कर्त्तव्यतापर्यवसायिनी हि सर्वा वाक्यप्रवृत्तिः । यद्येवं कथं तर्हि भूतान्वाख्यायिनो वेदान्ता लौकिकानि च भूयांसि वचांसि? उत्तरम्—कर्त्तव्यताभेदात् । प्रवृत्तिनिवृत्तिप्रतिपत्तिविषयत्वात् । एतदेव स्फुटयति—सर्वा हि

कर्त्तव्यता भेदवती। वेदान्तेषु तावदात्मतत्त्वप्रतिपत्तिकर्त्तव्यता । लोके चेदमिह निध्यादि प्रतिपत्तव्यमिति वाक्यपर्य्यवसानम् ।

नैतत्सारम् । शब्दात्प्रतिपत्तेरनुत्पत्तेः पुनस्तत्राऽव्यापारात् । कर्म्मफलसम्बन्धबोधवत् । निश्चयो ऽपि यदि शब्दात्, संजात एव, अन्यतश्चेत्तदाप्रामाण्यम् । अर्थपरतापि न दृष्टार्थत्वात्स्वाध्यायाऽध्ययनविधेः कर्म्मवत् । अवि-

कर्त्तव्यता भेदवती[1] । तमेव भेदमाह—वेदान्तेषु तावदात्मप्रतिपत्तिकर्त्तव्यता । आत्मा ज्ञातव्य इति हि प्रतिपत्तिरात्मनि विधीयते, तत्परत्वं च वेदान्तानाम् । लोके ऽपि चेदमिह निध्यादि प्रतिपत्तव्यमिति वाक्यपर्यवसानम् । दूषयति—नैतत्सारम् । इदमत्र विकल्पनीयम् । आत्मप्रतिपत्तिकर्त्तव्यतापरत्वमुपनिषदाम् । तिस्रः खल्विमाः प्रतिपत्तयः सम्भवन्ति । श्रुतमयी, चिन्तामयी, साक्षात्कारवती, चेति । तत्र श्रुतमयीमधिकृत्याह—शब्दात्प्रतिपत्तेरुत्पत्तेः पुनस्तत्राऽव्यापारात् । न श्रुतमयी विधेया । शब्दाद्विधेयमवगम्यते उत्तरकाला प्रवृत्तिर्विधिप्रयोजनं न पुनः शब्दाऽवबोध एव, आत्माश्रयदोषप्रसङ्गादिति भावः । कर्मफलसबन्धबोधवत् यथा कर्मविधिवाक्यं न कर्मफलसबन्धबोधे विधीनरमपेक्षते तथोपनिषदो ऽपि नाऽऽत्मबोधे इत्यर्थः । शङ्कते—निश्चय आत्मनि । विधेः फलं विकल्प्य दूषयति—यदि शब्दात् सजात एवाऽन्यतश्चेत् प्रमाणान्तरात् तत्सापेक्षतया ऽप्रामाण्यं शब्दस्य । अथ विधिं विना वेदान्तानां शब्दस्वरूपपरता स्यात् स्वरूपप्राथम्यात् । यदा तु वेदान्तैरात्मा ज्ञातव्य इति विधीयते तदा तेनोऽविवक्षितार्थैः शक्यमात्मज्ञानं कर्तुमिति विवक्षिताऽर्थसिद्ध्यर्थमर्थ्यते विधिरित्याह—अर्थपरता ऽपि न विधेः प्रयोजनम् । कुतः? दृष्टार्थत्वात् स्वाध्या-

[1] सर्वाणि कर्तव्यताभेदवन्ति २ पु पा० ।

शिष्टस्तु वाक्यार्थ इति न्यायात्। अन्यथा सविधिकस्यैव-विवक्षितार्थत्वप्रसङ्गात्। न च पुरुषार्थत्वाय विधिः प्रार्थ्य-ते। ज्ञानस्य ज्ञेयाऽभिव्यक्तिफलत्वात्फलान्तराऽनभ्युपग-मात् क्रियापरत्वाच्च विधेर्वस्तुस्वरूपसत्ताया अविवक्षित-

याऽध्ययनविधेः उपनिषदां कर्मविधिवत्। 'अविशिष्टस्तु वाक्यार्थ' इति न्यायात्। प्रयोजनवदर्थाऽवबोधनं हि दृष्टं प्रयोजनमध्ययन-विधेः। अक्षरग्रहणार्थत्वे त्वदृष्टार्थता स्यात्। यथा कर्मविधीनां विनैव विध्यन्तरेणाऽर्थपरत्वमौत्सर्गिकमेव वेदान्तानामपीत्यर्थः। यदि पुनर्न स्वाध्यायविधिर्दृष्टार्थो यदि वा नौत्सर्गिकमर्थपरत्वं व-चसां तत्र सविधिकमेवाऽविवक्षितार्थं स्यादित्याह—अन्यथा सवि-धिकस्यैव विवक्षितार्थत्वप्रसङ्गात्। यद्युच्येत विध्यभावे हि धात्वर्थ एव भावनाभाव्यः, समानपदोपादानत्वात् भवेद्विधौ सति तदतिक्रमेणाऽसमानपदोपादानोऽप्यार्थवादिकोऽप्यपुनरावृत्तिरूपः पुरु-षार्थो लभ्यतइति विधिः प्रार्थ्यतइत्यत आह—न च पुरुषार्थ-त्वाय विधिः प्रार्थ्यतइति। कुतः? ज्ञानस्य ज्ञेयाऽभिव्यक्तिफ-लत्वात्। तस्य च तन्नान्तरीयकतया विधिमन्तरेणापि प्रापणात्। नन्वपुनरावृत्तिः फलं, श्रूयते हि वचनं 'न स पुनरावर्त्तते' इति, न चाऽसौ विधिं विना शक्या प्रतिपत्तुमित्यत आह—फलान्तराऽन-भ्युपगमात्। अपुनरावृत्तिरिति हि मोक्ष उच्यते। न चाऽसौ साध्य इति वक्ष्यते। अपि च प्रतिपत्तिविधिपरत्वे वेदान्तानां ब्रह्म स्वरूपसत्तायामप्रामाण्यप्रसङ्गः। न ह्यसौ विधिनाऽपि तद्विषयो नित्यत्वात्, येन विधिरपेक्ष्येत। प्रतिपत्तिविषयो हि विधिः प्रति-पत्तिविषयमात्मतत्त्वमपेक्षते। तथा च तथात्मशब्दः प्रमाणमिति चेत्। न। आत्मतत्त्वमन्तरेण समारोपेणापि प्रतिपत्तेरुपपत्तेः। एवं

त्वात्तत्प्रतिपत्त्यर्थमनुष्ठानं गम्येत नात्मतत्त्वाऽवबोधः स्यात् । अतः श्रूयमाणो विधिरेवंजातीयेष्वविवक्षितः । नित्यप्राप्तेः ।

ननु विधिरहितस्याऽनुवादरूपस्य साकाङ्क्षस्य प्रामाण्यमलभ्यम् । अथ केयमनुवादता ? प्रमाणान्तराऽधिगतार्थता, आहो स्विद्भूतार्थता ? प्रमाणान्तराऽधिगतार्थता चेद्विधिशून्यमप्यतादृशमप्यपौरुषेयं नाऽनुवादः । भूता-

च तत्परत्वाऽभावाद्वेदान्ताना ब्रह्मविद्यात्व प्रसिद्ध बाध्येतेत्येत दाह—क्रियापरत्वाद्व विधेर्वस्तुरूपसत्ताया अविवक्षितत्वात् तत्प्रतिपत्त्यर्थमनुष्ठ न गम्येत नात्मतत्त्वाऽवबोध: स्यात् । नन्वात्मा ज्ञातव्य इति श्रुतिरस्ति, न चासे प्रमाद । तुल्य हि साम्प्रदायिकम्, तदेकवाक्यता च वेदान्ताना,मतो निष्प्रयोजनतया नाऽवज्ञानमर्हतीत्येतदुपसंहारव्याजेन निराकरोति—अत: श्रूयमाणो विधिरेवंजातीयकेषु विधानाऽनर्हेष्वविवक्षित:, नित्यप्राप्तत्वात् । सिद्धा हि वेदान्तेभ्यो विधिं विनापि ब्रह्मस्वरूपप्रतिपत्ति: । न ह्यस्ति सम्भवो विदितरूपसङ्गति: शाब्दन्यायविद्वेदान्तेभ्यो ऽर्थं न प्रतिपद्यतइति प्राप्तत्वा,देवंजातीयकेषु श्रूयमाणो विधिरविवक्षित: । न च प्रमादो, ऽनुवादतो ऽप्युपपत्ते: । ननु मा भूत्प्रतिपत्तिविधि: फल, प्रामाण्यायैव तु विधिराश्रयिष्यते, अन्यथा तदयोगादिति चोदयति—ननु विधिरहितस्याऽनुवादस्वरूपस्य तत एव साकाङ्क्षस्य प्रामाण्यमलभ्य,मनपेक्षलक्षणत्वात्तस्या,ऽन्यथा स्मृतेरपि अप्रामाण्यप्रसङ्गात् । तदेतद्विकल्पयति—अथ केयमनुवादता ? प्रमाणान्तराऽधिगतार्थता ऽऽहो स्विद्भूतार्थता ? दूषयति—प्रमाणान्तराऽधिगताऽर्थता चेत् । विधिशून्यमपि तर्हि भूतार्थमतादृशं प्रमाणान्तरविषयीकृतार्थमपौरुषेयं नाऽनुवाद । ज्ञानपूर्वको हि पश्चाद्वादो ऽनुवाद: । अपौ-

प्रत्व हि सामानाधिकरण्यकार्य्यम् । यथा देवदत्तः श्यामो युवा लोहिताक्षोऽदीनोऽकृपणोऽनवद्य इति । यत्र त्वेकस्मिन् वस्तुनि समन्वयायोग्यं विशेषणद्वय समानाधिकरणपदनिर्दिष्टम्, तत्राप्यन्यतरत्पदममुख्यवृत्तमाश्रीयते, न द्वयम्, यथा गौर्वाहीक इति । नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्ट प्रतिपाद्यते ॥

अथ मनुषे, एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाण वस्तु विशेषणान्तरप्रतिसम्बन्धित्वात् विलक्षणमिति घटपटयोरिवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासम्भवात् समानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम्, अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेवेति। स्यादेतदेवम्, यदि विशेषणद्वयप्रतिसम्बन्धित्वमात्रमेवैक्य निरुन्ध्यात् । न चैतदस्ति, एकस्मिन्धर्मिण्युपसहर्त्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्व निरुणद्धि । अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः, नीलमुत्पलमित्यादिषु तु दण्डित्वकुण्डलित्ववत् रूपवत्त्वरसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते । न केवलमविरोध एव, प्रवृत्तिनिमित्तभेदेनैकार्थबोधकत्वरूप सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टता । अन्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात् सामानाधिकरण्यमेव न स्यात् । विशेषणाना स्वसम्बन्धानादरेण वस्तुस्वरूपोपलक्षणपरत्वे सति एकेनैव वस्तूपलक्षितमित्युपलक्षणान्तरमनर्थकमेव, उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः । सोऽय देवदत्त इत्यत्रापि न लक्षणागन्धो विद्यते, विरोधाभावात्, देशान्तरसम्बन्धितयाऽतीतस्य सन्निहितदेशसम्बन्धितया वर्त्तमानत्वाविरोधात् । अत एव हि सोऽयमिति प्रत्यभिज्ञया कालद्वयसम्बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनः स्थिरत्ववादिभिः । अन्यथा प्रतीतिविरोधे सति सर्वथा क्षणिकत्वमेव स्यात् । देशद्वयसम्बन्धविरोधस्तु कालभेदेन परिह्रियते । यतस्समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्, अत एव "अरुणयैकहायन्या पिङ्गाक्ष्या सोम क्रीणाती"त्यारुण्यादिविशिष्टैकहायन्याः क्रयः साध्यतया विधीयते । तद्

क्तम् "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादि"ति। तत्र एव पूर्वपक्षी मन्यते, यद्यप्यरुणयेति पदमाकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वात् द्रव्यपर्य्यन्तमेवारुणिमानमभिदधाति, तथाप्येकहायन्यन्वयनियमोऽरुणिम्नो न सम्भवति, एकहायन्या क्रीणाति तच्चारुणयेत्यर्थद्वयविधानासम्भवात्। ततश्चारुणयेति वाक्य भित्वा प्रकरणविहितसर्वद्रव्यपर्य्यन्तमेवारुणिमानमविशेषेणाभिदधाति। "अरुणये"ति स्त्रीलिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः। तस्मादेकहायन्यन्वयनियमोऽरुणिम्नो न स्यादिति। अत्राभिधीयते, "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्," "अरुणयैकहायन्ये"त्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोः सामानाधिकरण्येनार्थैकत्वे सिद्धे सति एकहायनीद्रव्यारुण्यगुणयोररुणयेति पदेनैव विशेषणविशेष्यभावेन सम्बन्धितयाऽभिहितयोः क्रयाख्यैककर्मान्वयाविरोधादरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमः स्यात्। यद्येकहायन्याः क्रयसम्बन्धवत् अरुणिमसम्बन्धोऽपि वाक्यावसेयः स्यात्, तदा वाक्यार्थद्वयविधान स्यात्। न चैतदस्ति, अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम्, एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्रमवगम्यते न गुणसम्बन्धः। विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः, भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थे वृत्तिः सामानाधिकरण्यमिति हि तल्लक्षणम्। अत एव हि रक्तः पटो भवतीत्यादिष्वैकार्थ्यादेकवाक्यत्वम्। पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः, रागसम्बन्धस्तु रक्तपदेनैवाभिहितः। रागसम्बन्धि द्रव्य पट इत्येतावन्मात्र सामानाधिकरण्येनावसेयम्। एवमेकेन गुणेन द्वाभ्या बहुभिर्वा तेन तेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धम्, "देवदत्तः श्यामो युवा लोहिताक्षः दण्डी कुण्डली तिष्ठति," "शुक्लेन वाससा यवनिका सम्पादयेत्," "नीलमुत्पलमानय" "नीलोत्पलमानय" "गामानय शुक्लां शोभनाक्षीम्," "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपे-

दि"ति, "एवमरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाती"ति। एतदुक्तं भवति, यथा "काष्ठैः स्थाल्यामोदनं पचेदि"त्यनेककारकविशिष्टैका क्रिया युगपत्प्रतीयते, तथा समानाधिकरणपदसंघाताभिहितम् एकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः "खादिरैश्शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेदि"त्यादिष्विति। यत्त्वनुपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीति "अरुणये"ति पदेन केवलगुणस्यैवाभिधानमिति, तन्नोपपद्यते, लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनात्। उपात्तद्रव्यकवाक्यस्य गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतम्, पटः शुक्ल इत्यादिषूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवाभिधानात्। पटस्य शुक्ल इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिरसमानविभक्तिनिर्देशकृता, न पुनरुपात्तद्रव्यकत्वकृता। तत्रैव पटस्य शुक्लो भाग इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते। यत्पुनः क्रयस्यैकहायन्यवच्छिन्नतयाऽरुणिम्नः क्रयान्वयो न सम्भवतीति, तदपि विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरणगुणपदस्य तदाश्रयगुणाभिधानेन क्रियापदान्वयाविरोधादसङ्गतम्। राद्धान्ते चोक्तन्यायेनारुणिम्नः शाब्दद्रव्यान्वये सिद्धे द्रव्यगुणयोः क्रयसाधनत्वानुपपत्त्याऽर्थात् परस्परान्वयः सिध्यतीत्यप्यसङ्गतम्। अतो यथोक्त एवार्थः। तस्मात् "तत्त्वमस्या"दिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागेनैवैक्यप्रतिपादनं वर्णनीयम्, तत्तु अनाद्यविद्योपहितानवधिकदुःखभागिनः शुद्ध्यशुद्ध्युभयावस्थाच्चेतनादर्थान्तरभूतमशेषहेयप्रत्यनीकानवधिककल्याणगुणगणैकतानं परमात्मानमनभ्युपगच्छतो न सम्भवति। अभ्युपगच्छतोऽपि समानाधिकरणपदानां यथाऽवस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोषभागित्वं परस्य प्रसज्येत इति चेत्। नैतदेवम्, त्वम्पदेनापि जीवान्तर्य्यामिणः परस्यैवाभिधानात्॥

एतदुक्तं भवति, सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्य-

सङ्कल्पत्वमिश्रानवधिकातिशयासङ्ख्येयानन्तकल्याणगुणगण समस्तकारण-भूत परं ब्रह्म "बहु स्यामि"ति सङ्कल्प्य, तेजोऽबन्नप्रमुख कृत्स्न जगत् सृष्ट्वा, तस्मिन्देवादिविचित्रसस्थानसस्थिते जगति चेतन जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य, स्वयञ्च स्वेच्छयैव जीवान्तरात्मतयाऽनुप्रविश्य, एव भूतेषु स्वपर्य्यन्तेषु देवाद्याकारेषु सघातेषु नामरूपे व्याकरोत्, एवरूपसघातस्यैव वस्तुत्व शब्दवाच्यत्वञ्चाकरोदित्यर्थः। "अनेन जीवेनात्मना" जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्व दर्शयति, ब्रह्मात्मकत्वञ्च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनुप्रवेशादित्यवगम्यते। "इद सर्वमसृजत यदिद किञ्च, तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवदि"त्यत्र इद सर्वमिति निर्दिष्टञ्चेतनाचेतन वस्तुद्वय सत्त्यच्छब्दाभ्या विज्ञानाविज्ञानशब्दाभ्याञ्च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात्। अत एवनामरूपव्याकरणात् सर्वे वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन इत्यवगतमिति। किञ्च, "एतदात्म्यमिद सर्वमि"ति चेतनमिश्र प्रपञ्चमिद सर्वमिति निर्दिश्य "तस्यैष आत्मे"ति प्रतिपादितम्। एवञ्च सर्व चेतनाचेतन प्रति ब्रह्मण आत्मत्वेन सर्वं चेतन जगत् तस्य शरीरं च भवति। तथाच श्रुत्यन्तराणि "अन्त.प्रविष्टश्शास्ता जनाना सर्वात्मा" "यः पृथिव्या तिष्ठन् पृथिव्या अन्तरो य पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्माऽन्तर्य्याम्यमृत" इति प्रारभ्य "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यम् आत्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्य्याम्यमृत" इत्यादि, "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीर योऽपामन्तरे सञ्चरन् यस्यापः शरीरमि"त्यारभ्य "योऽक्षरमन्तरे सञ्चरन् यस्याक्षर शरीर यमक्षरं न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इत्यादीनि सचेतन जगत् तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन परमात्मानमुपदिशन्ति। अतः चेतनवाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतं चेतनशरीरक परमात्मानमेवाभि-

दधाति । यथाऽचेतनदेवादिसंस्थानपिण्डवाचिनः शब्दास्तच्छरीरकजीवात्मन एव वाचकाः "चत्वारः पञ्चदश रात्रा देवत्वं गच्छन्ती"त्यादिषु, देवा भवन्तीत्यर्थः । शरीरस्य शरीरिणं प्रति प्रकारत्वात् प्रकारवाचिनां च शब्दानां प्रकारिण्येव पर्यवसानात् शरीराभिधायिनां शब्दानां शरीरिपर्यवसानं न्याय्यम् । प्रकारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनीत्थमिति प्रतीयमानोऽंशः, तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्य्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दः तस्मिन्नेव पर्य्यवस्यति । अत एव "गौरश्वो मनुष्य" इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि पिण्डे पर्य्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्य्यवस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचकशब्देन सामानाधिकरण्यं मुख्यमेव । ननु खण्डो गौः खण्डः शुक्ल इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैः सह सामानाधिकरण्यं दृष्टम्, द्रव्याणान्तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा दण्डी कुण्डलीति । नैवम् । जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधिकरण्ये प्रयोजकम्, अन्योन्यस्मिन् व्यभिचारात् । यस्य पदार्थस्य क[1]स्यचित् प्रकारतयैव सद्भावः तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिस्तद्वाचकानां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वात् धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव । यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित् क्वचिद् द्रव्यान्तरप्रकारत्वमिष्यते तत्र मत्वर्थीयप्रत्यय इति निरवद्यम् । तदिव परमात्मनः शरीरतया तत्प्रकारत्वादचिद्विशिष्टस्य जीवस्यापि जीवनिर्देशविशेषरूपा अहत्वमित्यादिशब्दाः परमात्मानमेवाचक्षत इति "तत्त्वमसी"ति सामानाधिकरण्येनोपसंहृतम् । एवञ्च सति परमात्मानं प्रति जीवस्य शरीरतया अन्वयात् [2]जीवगता धर्माः परमात्मानं न स्पृशन्ति, यथा शरीर-

---

१ किञ्चित्प्रकारतयेति पाठान्तरम् ।

२ ज्ञेया इति पुस्तकान्तरेऽधिकः पाठः ।

गता बालत्वयुवत्वादयो धर्मा जीवं न स्पृशन्ति । अतः "तत्त्वमसी"ति सामानाधिकरण्ये तत्पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानमाचष्टे, त्वमिति च तमेव सशरी[1]रजीवशरीरकमाचष्टे, इति सामानाधिकरण्यं मुख्यवृत्तम्, प्रकरणाविरोधः सर्वश्रुत्यविरोधो ब्रह्मणि निरवद्ये कल्याणैकताने ऽविद्यादिदोषगन्धाभावश्च । अतो जीवसामानाधिकरण्यमपि विशेषणभूतात् जीवादन्यत्वमेवापादयतीति विज्ञानमयात् जीवादन्य एवानन्दमयः परमात्मा ॥

यदुक्तम्, "तस्यैष एव शारीर आत्मे"त्यानन्दमयस्य शारीरत्वश्रवणात् जीवादन्यत्वं न सम्भवतीति, तद्युक्तम्, अस्मिन्प्रकरणे सर्वत्र "तस्यैष एव शारीर आत्मा यः पूर्वस्ये"ति परमात्मन एव शारीरात्मत्वाभिधानात्। कथम्। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रति[2]ज्ञा तज्जीवव्यतिरे[3]कस्य परस्य ब्रह्मण आत्मत्वेन व्यपदेशात् तद्व्यतिरिक्ताकाशादीनामन्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते । "यस्य पृथिवी शरीरं यस्यापः शरीरं यस्य तेजश्शरीरं यस्य वायुः शरीरं यस्याकाशः शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण" इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते । अतः "तस्माद्वा एतस्मादात्मन" इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः । प्राणमयं प्रस्तुत्याह "तस्यैष एव शारीर आत्मा यः पूर्वस्ये"ति । पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा स एव तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः । एवं मनोमयविज्ञानमययोर्द्रष्टव्यम् । आनन्दमये तु "एष एवे"ति निर्देशः तस्यानन्यात्म[4]कत्वं दर्शयितुम् । तत् कथम् । विज्ञानमयस्यापि पूर्वोक्तया रीत्या परमात्मैव शारीर

१ सशरीरकमिति पाठान्तरम् ।

२ प्रज्ञातजीवव्यतिरिक्तस्येति पाठान्तरम् ।

३ जीवव्यतिरेकस्य परस्येति तु पाठान्तरम् ।

४ अनन्यात्मत्वमिति पाठान्तरम् ।

आत्मेत्यवगतः । एवं सति विज्ञानमयस्य यः शारीर आत्मा स एवानन्दमयस्यापि शारीर आत्मेत्युक्ते आनन्दमयस्याभ्यासावगतपरमात्मभावस्य परमात्मनः स्वयमेवात्मेत्यवगम्यते । एवञ्च स्वव्यतिरिक्तचेतनाचेतनवस्तुजात स्वशरीरमिति स एव निरुपाधिकः शारीर आत्मा । अत एवेद परं ब्रह्माधिकृत्य प्रवृत्त शास्त्र शारीरकमित्यभियुक्तैरभिधीयते । अतो विज्ञानमयात् जीवादन्य एव परमात्माऽऽनन्दमयः ॥

आह, नायमानन्दमयो जीवादन्यः, विकारशब्दस्य मयट्प्रत्ययस्य श्रवणात् । "मयड् वै तयोरि"ति प्रकृत्य "नित्य वृद्धशरादिभ्य" इति विकारार्थे मयट् स्मर्य्यते, वृद्धश्चायमानन्दशब्दः । ननु प्राचुर्य्येपि मयडस्ति, "तत्प्रकृतवचने मयडि"ति स्मृतेः । यथाऽन्नमयो यज्ञ इति, स एवाय भविष्यति । नैवम्, "अन्नमय" इत्युपक्रमे विकारार्थत्व दृष्टम्, अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम् । किञ्च, प्राचुर्य्यार्थत्वेऽपि जीवादन्यत्व न सिध्यति । तथा हि, आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्ज्जनीयम्, आनन्दस्य हि प्राचुर्य्यं दुःखस्याल्पत्वमवगमयति, दुःखमिश्रत्वमेव हि जीवत्वम् । अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम् । किञ्च, लोके "मृण्मय हिरण्मय दारुमयमि"त्यादिषु वेदे च "पर्णमयी जुहूः" "शमीमय्यः स्रुचः" "दर्भमयी रशने"त्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात् स एव प्रथमतरं धियमारोहति । जीवस्य चानन्दविकारत्वमस्त्येव, तस्य स्वत आनन्दरूपस्य सतः ससारित्वावस्था तद्विकार एवेति । अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति, तदेतदनुभाष्य परिहरति,

## विकारशब्दात् नेति चेत्, न, प्राचुर्य्यात् ॥ १४ ॥

नैतद्युक्तम् । कुतः । "प्राचुर्य्यात्" परस्मिन् ब्रह्मण्यानन्दप्राचुर्य्यात्, प्राचुर्य्यार्थे च मयटः सम्भवात् । एतदुक्तम्भवति, शतगुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवात् ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति तस्मिन् ब्रह्मणि विकारासम्भवात् प्राचुर्य्येऽपि

मय[1]ड्वृधिसद्भावाच्चानन्दमयः परं ब्रह्मेत्यौचित्यात् प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधात् न सम्भवति। किञ्च, औचित्य प्राण मये एव परित्यक्तम्, तत्र विकारार्थत्वासम्भवात्। अतस्तत्र पञ्चवृत्तेर्वा-योः प्राणवृत्तिमत्तामात्रेण प्राणमयत्व प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः प्रचुरत्वाद्वा। न च प्राचुर्य्ये मयट्प्रत्ययस्य प्रौढिर्नास्ति,"अन्न-मयो यज्ञः" "शकटमयी यात्रे"त्यादिदर्शनात्। यदुक्तम्, आनन्दप्राचु र्य्यमल्पदुःखसद्भावमवगमयतीति, तदसत्, तत्प्रचुरत्व हि तत्प्रभूतत्वमेव, तच्चेतरस्य सत्ता नावगमयति, अपि तु तस्याल्पत्व निवर्त्तयति। इतर-सद्भावासद्भावौ तु प्रमाणान्तरावसेयौ। इह च प्रमाणान्तरेण तदभावो ऽवगम्यते "अपहतपाप्मे"त्यादिना। तत्रैतावदेव वक्तव्यम्, ब्रह्मानन्दस्य प्रभूतत्वमन्यानन्दस्य स्वल्पत्वमपेक्षत इति, उच्यते च तत् "स एको मानुष आनन्द" इत्यादिना, जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयद-शापन्नः प्रभूत इति। यच्चोक्तम्, जीवस्यानन्दविकारत्व सम्भवतीति, तदपि नोपपद्यते, जीवस्य ज्ञानानन्दैकस्वरूपस्य केनचिदाकारेण मृद इव घटाद्याकारेण परिणामः सकलश्रुतिस्मृतिन्यायविरुद्धः। ससारदशा-यान्तु कर्मणा ज्ञानानन्दौ सङ्कुचितावित्युपपादयिष्यते। अतश्चानन्दमयो जीवादन्यः पर ब्रह्म॥

इतश्च जीवादन्य आनन्दमयः,

तद्धेतुव्यपदेशाच्च॥ १५॥

"को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयती"ति। एष एव जीवानानन्दयतीति जीवानामानन्द-हेतुरय व्यपदिश्यते। अतश्चानन्दयितव्यात् जीवादानन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते। आनन्दमय एवात्रानन्दशब्देनोच्यते इति चानन्तरमेव वक्ष्यते॥

इतश्च जीवादन्य आनन्दमयः,

मान्त्रवर्णिकमेव च गीयते॥ १६॥

१ मयट्स्थितिसभवाच्चेति पाठान्तरम्।

"सत्यं ज्ञानमनन्तम् ब्रह्मे"ति मन्त्रवर्णोदित ब्रह्मैवानन्दमय इति गीयते, तत्तु जीवस्वरूपादन्यत् परं ब्रह्म । तथा हि, "ब्रह्मविदाप्नोति परमि"ति जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम् । "तदेषाऽभ्युक्ते"ति तद् ब्रह्माभिमुखीकृत्य प्रतिपाद्यतया परिगृह्य ऋगेषाऽध्येतृभिरुक्ता, ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रवर्णेन क्रियत इत्यर्थः । जीवस्योपासकस्य प्राप्य ब्रह्म तस्माद्विलक्षणमेव । अनन्तरञ्च "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इत्यारभ्योत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते । अतो जीवादन्य आनन्दमयः ॥

अत्राह, यद्यप्युपासकात् प्राप्यस्य भेदेन भवितव्यम्, तथाऽपि न वस्त्वन्तरं जीवात् मान्त्रवर्णिक ब्रह्म, किन्तु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्ध निर्विशेषचिन्मात्रैकरस शुद्ध स्वरूपम् । तदेव "सत्य ज्ञानमनन्त ब्रह्मे"ति मन्त्रेण विशोध्यते, तदेव च "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे"ति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते । अतस्तदेव मान्त्रवर्णिकमिति । तस्मादनतिरिक्त आनन्दमय इति । अत उत्तरं पठति,

## नेतरोऽनुपपत्तेः ॥ १७ ॥

परमात्मन "इतरो" जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः । कुतः । "अनुपपत्तेः," तथाविधस्यात्मनो निरुपाधिक विपश्चित्त्व नोपपद्यते । इदमेव हि निरुपाधिक विपश्चित्त्वम् "सोऽकामयत बहु स्याम्प्रजायेयेति" सत्यसङ्कल्पत्वप्रदर्शनेन विवरिष्यते । विविध पश्यत् चित्त्व हि विपश्चित्त्वम् । पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोप कृत्वा व्युत्पादितो विपश्चिच्छब्दः । यद्यपि मुक्तस्य विपश्चित्त्व सम्भवति, तथाऽपि तस्यैवात्मनः ससा[१]रदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिक विपश्चित्त्व नोपपद्यते । निर्विशेषचिन्मात्रतापन्नस्य मुक्तस्य विविधदर्शनाभावात् सुतरा विपश्चित्त्व न सम्भवतीति न केनापि प्रमाणेन निर्विशेष वस्तु प्रतिपाद्यत इति च पूर्वमेवो-

१ संसारित्वदशायामिति पाठान्तरम् ।

क्तम् । "यतो वाचो निवर्त्तन्ते" इति च वाक्यं यदि च वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत, न ततो निर्विशेषता वस्तुनोऽवगमयितुं शक्नुयात्, अपितु वाङ्मनसयोस्तत्राप्रमाणता वदेत्, तथा च सति तस्य तुच्छत्वमेवापद्यते । "ब्रह्मविदाप्नोती"त्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वमानन्दैकतानत्वमितरान् प्रत्यानन्दयितृत्वं कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृततदात्मत्वं भयाभयहेतुत्वं वाय्वादित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वमन्यच्चानेकं प्रतिपाद्य वाङ्मनसयोर्ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यतइति भ्रान्तजल्पितम् । "यतो वाचो निवर्त्तन्त" इति यच्छब्दनिर्दिष्टम् "आनन्दं ब्रह्मणो विद्वानि"त्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्य तदेव वाङ्मनसागोचरं विद्वानिति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवत् अनर्थकं वाच्यानन्तर्गतञ्च स्यात् । अतः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुम् उपक्रम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्ति"र्यतो वाचो निवर्त्तन्त" इत्युच्यते । एवमियत्तारहितं ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेतीत्युच्यते । किंचास्य मान्त्रवर्णिकस्य विपश्चितः "सोऽकामयते"त्यारभ्य वक्ष्यमाणस्वसङ्कल्पावक्लृप्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेः मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव ॥

इतश्चोभयावस्थात्प्रत्यगात्मनोऽन्य आनन्दमयः,

## भेदव्यपदेशाच्च ॥ १८ ॥

'तस्माद्वा एतस्मादात्मन आकाश" इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयत् वाक्यम् अन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय" इति । अतो जीवाद्भेदव्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति विज्ञायते ॥

इतश्च जीवादन्यः,

## कामाच्च नानुमानापेक्षा ॥ १९ ॥

जीवस्याविद्यापरवशस्य जगत्कारणत्वे अवर्जनीयाऽऽनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुससर्गापेक्षा, तथैव हि चतुर्मुखादीना कारणत्वम्। इह च "सोऽकामयत बहु स्यां प्रजायेये"ति अचित्ससर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनः सृष्टिः "इद सर्वमसृजत यदिद किंचे"त्याम्नायते। अतो ऽस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुससर्गापेक्षा प्रतीयते। अतश्च जीवादन्य आनन्दमयः ॥

इतश्च जीवादन्यः,

**अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥**

"अस्मिन्" आनन्दमये, "अस्य च" जीवस्य, "तद्योग शास्ति" आनन्दयोग शास्ति शास्त्रम्। "रसो वै सः रस ह्येवाय लब्ध्वाऽऽनन्दी भवती"ति रसशब्दाभिधेयानन्दमयलाभाद्य जीवशब्दाभिलपनीयः आनन्दी भवतीत्युच्यमाने यल्लाभात् य आनन्दी भवति स स एवेत्यनुन्मत्तः को ब्रवीतीत्यर्थः। एवमानन्दमयः पर ब्रह्मेति निश्चिते सति "यदेष आकाश आनन्दो न स्यात् विज्ञानमानन्द ब्रह्मे"त्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते, यथा विज्ञानशब्देन विज्ञानमयः, अत एव "आनन्द ब्रह्मणो विद्वानि"ति व्यतिरेकनिर्देशः। अत एव "एतमानन्दमयमात्मानमुपसक्रामती"ति फलनिर्देशश्च। उत्तरे चानुवाके पूर्वानुवाकोक्तानामन्नमयादीनाम् "अन्न ब्रह्मेति व्यजानात् प्राणो ब्रह्मेति व्यजानात् मनो ब्रह्मेति व्यजानात् विज्ञान ब्रह्मेति व्यजानादि"ति प्रतिपादनात् "आनन्दो ब्रह्मे"त्यप्यानन्दमयस्यैव प्रतिपादनमिति विज्ञायते, तत एव तत्राप्यानन्दमयमात्मानमुपसक्रम्येत्युपसहृतम्। अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम् ॥

यद्यपि मन्दपुण्याना जीवाना कामात् जगत्सृष्टिः अतिशयितानन्दयोगो भयाभयहेतुत्वमित्यादि न सम्भवति, तथाऽपि विलक्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीना सम्भवत्येवेतीमामाशङ्का निराकरोति,

अन्तरादित्याधिकरणम्। अन्तरधिकरणमिति वा। **अन्तः, तद्धर्मोपदेशात् ॥ २१ ॥**

इदमाम्नायते छान्दोग्ये "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी, तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद, तस्य ऋक् च साम च गेष्णौ" इत्यधिदैवतम्, अथाध्यात्ममपि "अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क् तत्साम च तदुक्थ्यं तद्यजुः तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामे"ति। तत्र सन्दिह्यते, किमयमस्यादित्यमण्डलान्तरवर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्य आदित्यादिशब्दाभिलप्यो जीव एव एषः, आहोस्वित् तदतिरिक्तः परमात्मेति। किं युक्तम्। उपचितपुण्यो जीव एवेति। कुतः। सशरीरत्वश्रवणात्। शरीरसम्बन्धो हि जीवानामेव सम्भवति, कर्मानुगुणप्रियाप्रिययोगाय हि शरीरसम्बन्धः। अत एव हि कर्मसम्बन्धरहितस्य मोक्षस्य प्राप्यत्वम् अशरीरत्वेन नोच्यते "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तन्न प्रियाप्रिये स्पृशत" इति। सम्भवति च पुण्यातिशयात् ज्ञानाधिक्यं शक्त्याधिक्यञ्च, अत एव लोककामेशत्वादि तस्यैवोपपद्यते, तत एव चोपास्यत्वं फलदायित्वं च, पापक्षपणकरत्वेन मोक्षोपयोगित्वञ्च। मनुष्येष्वप्युपचितपुण्याः केचित् ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते, ततश्च सिद्धगन्धर्वादयः, ततश्च देवाः, ततश्चेन्द्रादयः। अतो ब्रह्मादिष्वन्यतम एव एकैकस्मिन्कल्पे पुण्यविशेषेणैव प्रभूतमैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते। अतो न जीवातिरिक्तः परमात्मा नाम कश्चिदस्ति। एवं च सति "अस्थूलमनण्वह्रस्वमि"त्यादयो जीवात्मन एव स्वरूपाभिप्राया भवन्ति। मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणीति ॥

एवं प्राप्तेऽभिधीयते, "अन्तः, तद्धर्मोपदेशात्" "अन्तः" आदि-

त्ये "अन्तः" अक्षिणि च यः पुरुषः प्रतीयते स जीवादन्यः परमात्मैव । कुतः । "तद्धर्मोपदेशात्" जीवेष्वसम्भवन् तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः "स एष सर्वेभ्यः पाप्मभ्य उदित" इत्यादिनोपदिश्यते । अपहतपाप्मत्व हि अपहतकर्मत्वम्, कर्मवश्यतागन्धरहितत्वमित्यर्थः । कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः । अतोऽपहतपाप्मत्व जीवादन्यस्य परमात्मन एव धर्मः । तत्पूर्वक स्व[1]रूपोपाधिक लोककामेशत्व सत्यसङ्कल्पत्वादिक सर्वभूतान्तरात्मत्वञ्च तस्यैव धर्मः, यथाह "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प" इति । तथा "एष सर्वभूतान्तरात्मा ऽपहतपाप्मा दिव्यो देव एको नारायण" इति । "सोऽकामयत बहु स्या प्रजायेये"त्यादि सत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्व वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मसम्पाद्या स्वाभाविका धर्मा जीवस्य न सम्भवन्ति । यत्तु शरीरसम्बन्धाच्च जीवातिरिक्त इत्युक्तम्, तद[2]युक्तम्, न हि सशरीरत्व कर्मवश्यता साधयति, सत्य[3]सङ्कल्पस्येच्छयाऽपि शरीरसम्बन्धसम्भवात् । अथोच्येत, शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसघातः, तत्सम्बन्धश्चापहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात् । कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्जनीय इति । स्यादेतदेवम्, यदि त्रिगु[4]णमयः प्राकृतोऽस्य देहः स्यात्, स तु स्वाभिमतः स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम् । एतदुक्तम्भवति, परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणा[5]श्च

१ स्वरूपोपाधिकमिति पुस्तकान्तरे नास्ति ।
२ तदसदिति पुस्तकान्तरे ।
३ सत्यसङ्कल्पेच्छयेति पाठान्तरम् ।
४ गुणत्रयमय इति पाठान्तरम् ।
५ गणशब्द पुस्तकान्तरे नास्ति ।

सन्ति, तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्य्यलावण्ययौवनाद्यनन्तगुणगण[1]-निधिदिव्यरूपमपि स्वाभाविकमस्ति, तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानङ्करोति अपारकारुण्यसौशील्यवात्सल्यौदार्य्यैश्वर्य्यजलधिर्निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परब्रह्म पुरुषोत्तमो नारायण इति। "यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" "एको ह वै नारायण आसीत् न ब्रह्मा नेशान" इत्यादिषु निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मणः "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्मे"त्यादिषु एवम्भूतं स्वरूपमित्यवगम्यते। "निर्गुणं निरञ्जनम् अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "तमीश्वराणां परमं महेश्वरम्, तं दैवतानां परमञ्च दैवतम्," "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः," "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते" वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णन्तमसः परस्तात्" "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी"त्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसम्बन्धं तन्मूलकर्मवश्यतासंबन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपञ्च वदन्ति[2]। तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान्, तदिदमाह श्रुतिः "अजायमानो बहुधा विजायत" इति। स्मृतिश्च

"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" ॥ इति।
"परित्राणाय साधूनां विनाशाय च दुष्कृताम्"। इति।

---

१ गणशब्दः पुस्तकान्तरे नास्ति।
२ वदन्तीति पाठान्तरम्।

साधवो ह्युपासका', तत्परित्राणमेवोद्देश्यम्, आनुषङ्गिको[1] दुष्कृता विनाशः, सङ्कल्पमात्रेणापि तदुपपत्तेः। प्रकृति स्वामिति, "प्रकृतिः" स्वभावः, स्वमेव स्वभावमास्थाय न ससारिणा स्वभावमित्यर्थः। आत्ममाययेति, स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः। माया वयुन ज्ञानमिति ज्ञानपर्य्यायमपि मायाशब्द नैघण्टुका अधीयते। आह च भगवान् पराशरः

"समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।
तद्विश्वरूपवैरूप्य रूपमन्यद्धरेर्महत्॥
समस्तशक्तिरूपाणि तत्करोति जनेश्वर।
देवतिर्य्यङ्मनुष्याख्यचेष्टावन्ति स्वलीलया॥
जगतामुपकाराय न सा कर्मनिमित्तजा"। इति।

महाभारतेऽपि अवताररूपस्याप्यप्राकृतत्वमुच्यते।

"न भूतसघसस्थानो देहोऽस्य परमात्मनः"। इति।

अतः परस्यैव ब्रह्मणः एवंरूपरूपवत्त्वादयमपि तस्यैव धर्मः। अत आदित्यमण्डलाद्यधिकरण आदित्यादिजीवव्यतिरिक्तः परमात्मैव॥

## भेदव्यपदेशाच्चान्यः॥ २१॥

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यते अस्य परमात्मनः "य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीर य आदित्यमन्तरो यमयति य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीर य आत्मानमन्तरो यमयति" "यस्यात्तर शरीर यमत्तरन्न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं य मृत्युर्न वेद एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण इति चास्यापहतपाप्मनः परमात्मनः सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनेन व्यपदिशति। अतः सर्वेभ्य एवा[2]दित्यादिजीवेभ्यो ऽन्य एव परमात्मेति सिद्धम्॥

---

१ आनुषङ्गिकस्त्विति।
२ हिरण्यगर्भादिजीवेभ्य इति पाठान्तरम।

"यतो वा इमानि भूतानि जायन्त" इति जगत्कारणं ब्रह्म इत्यवगम्यते। किं तज्जगत्कारणमित्यपेक्षायाम् "सदेव सोम्येदमग्र आसीत् तत्तेजोऽसृजत" "आत्मा वा इदमेक एवाग्र आसीत् स इमाँल्लोकानसृजत" "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत"इति साधारणैश्शब्दैर्जगत्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात्प्रधानक्षेत्रज्ञादिव्यतिरिक्तं ब्रह्मेत्युक्तम्। इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते "आकाशः, तल्लिङ्गात्" इत्यादिना पादशेषेण।

आकाशाधिकरणम्। **आकाशः, तल्लिङ्गात्॥ २२॥**

इदमाम्नायते छान्दोग्ये "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैतेभ्यो भूतेभ्यो ज्यायानाकाशः परायणमि"ति। तत्र सन्देहः, किं प्रसिद्धाकाशमेवात्राकाशशब्देनाभिधीयते, उतोक्तलक्षणमेव ब्रह्मेति। किं प्राप्तम्। प्रसिद्धाकाश इति। कुतः। शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धः शब्देन प्रतीयते स एव ग्रहीतव्यः। अतः प्रसिद्धाकाश एव चराचरात्मकभूतजातस्य कृत्स्नस्य कारणम्, अतस्तस्मादनतिरिक्तं ब्रह्म। नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तम्। सत्यमुक्तम्। दुरुक्तन्तु तत्। तथा हि "यतो वा इमानि भूतानि जायन्ते तद्ब्रह्मे"त्युक्ते कुत इमानि भूतानि जायन्त इत्यादिविशेषाकाङ्क्षायाम् "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त" इत्यादिना विशेषप्रतीतेर्जगज्जन्मादिकारणमाकाश एवेति निश्चिते "सदेव सोम्येदमग्र आसीदि"त्यादिष्वपि सदादिशब्दाः साधारणाकारास्तमेव विशेषमाकाशमभिदधति। "आत्मा वा इदमेक एवाग्र आसीदि"त्यादिष्वपि आत्मशब्दस्तत्रैव वर्तते, तस्यापि हि चेतनैकान्तत्वं न सम्भवति, यथा मृदात्मको घट इति।

आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेऽप्यात्मशब्दो वर्तते । अत एव-माकाश एव कारणं ब्रह्मेति निश्चिते सति ईक्षणादयस्तदनुगुणा गौणा वर्णनीयाः । यदि हि साधारणशब्दैरेव सदादिभिः कारणमभ्यधायिष्यत, ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरचेष्यत, आकाशशब्देन तु विशेष एव निश्चित इति नार्थस्वाभाव्यात् निर्णेतव्यमस्ति । ननु "आत्मन आकाशस्सम्भूत" इत्याकाशस्यापि कार्य्यत्व प्रतीयते । सत्यम्, सर्वेषामेवाकाशवाय्वादीना सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति । तत्राकाशस्य सूक्ष्मावस्था कारणम्, स्थूलावस्था तु कार्यम् । "आत्मन आकाशस्सम्भूत" इति स्वस्मादेव सूक्ष्मरूपात् स्वय स्थूलरूपः सम्भूत इत्यर्थः । "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त" इति सर्वस्य जगतः आकाशादेव प्रभवाप्ययादिश्रवणात् तदेव जगत्कारणं ब्रह्मेति निश्चितम् । यत एव प्रसिद्धाकाशादनतिरिक्त ब्रह्म, अत एव "यदेष आकाश आनन्दो न स्यात् आकाशो ह वै नामरूपयोर्निर्वहिते"त्येवमादिनिर्देशोऽप्युपपन्नतरः । अतः प्रसिद्धाकाशादनतिरिक्त ब्रह्मेति ॥

एव प्राप्ते ब्रूमः । "आकाशः, तल्लिङ्गात्" आकाशशब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव । कुतः । तल्लिङ्गात्, निखिलजगदेककारणत्व सर्वस्माज्ज्यायस्त्व परायणत्वमित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते । निखि[1]लकारणत्व ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते, चेतनवस्तुनस्तत्कार्य्यत्वासम्भवात् । परायणत्व च चेतनाना परमप्राप्यत्वम्, तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरो[2]धिनो न सम्भवति । सर्वस्माज्ज्यायस्त्व च निरुपाधिक सर्वैः कल्याणगु[3]णैः सर्वेभ्यो निरतिशयोत्कर्षः, तदप्यचितो नोपपद्यते । यदुक्तम्, जगत्कारणविशेषाकाङ्क्षायामाकाशशब्देन विशेष-

१ निखिलजगदेककारणत्वमिति पाठान्तरम् ।
२ विरोधित्वे इति पाठान्तरम् ।
३ गुणगणैरिति पाठान्तरम् ।

समर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति, तदयुक्तम्, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त" इति प्रसिद्धवत् निर्देशात्। प्रसिद्धवत् निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते, प्रमाणान्तराणि च "सदेव सोम्येदमग्र आसीदि"त्येवमादीन्येव वाक्यानि। तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादित ब्रह्म आकाशशब्देन प्रसिद्धवत् निर्दिश्यते। सम्भवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाशशब्दाभिधेयत्वम्, आकाशते आकाशयति चेति। किञ्चानेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनाश प्रत्यसम्भावितकारणभावमचेतनविशेषमभिदधानेन "तदैक्षत बहु स्यां प्रजायेये"ति "सोऽकामयत बहु स्यां प्रजायेये"त्यादिवाक्यशेषावधारितसार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थोन्यथाकरणे न प्रमाणपदवीमधिरोहति। एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्य चैकेनानुवादस्वरूपेणान्यथा कर्त्तुं न शक्यते। यत्त्वात्मशब्दश्चेतनैकान्तो न सम्भवति, मृदात्मको घट इत्यादिषु दर्शनादित्युक्तम्, तत्रोच्यते, यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते, तथाऽपि शरीरप्रतिसम्बन्धिन्यात्मशब्दस्य प्रयोगप्राचुर्य्यात् "आत्मा वा इदमेक एवाग्र आसीत्" "आत्मन आकाशः सम्भूत" इत्यादिषु शरीरप्रतिसम्बन्धिचेतन एव प्रतीयते। यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्राचुर्य्यात् सास्नादिमानेव स्वतः प्रतीयते, अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा, तथा स्वतःप्राप्तं शरीरप्रतिसम्बन्धिचेतनाभिधानमेव "स ऐक्षत लोकान्नु सृजा" इति "सोऽकामयत बहु स्यां प्रजायेये"त्यादि तत्तद्वाक्यशेषा एव स्थिरीकुर्वन्ति। एवं वाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्ट निखिलजगदेककारणम् "सदेव सो[1]म्येदमग्र आसीदि"ति वाक्यसिद्ध ब्रह्मैवाकाशशब्देन प्रसिद्धवत् "सर्वाणि ह वा इमानि भूतानी"त्यादिवाक्येन निर्दिश्यत इति सिद्धम्॥

---

१ सोम्येदमित्यादीति पाठान्तरम्।

प्राणाधिकरणम् । **अत एव प्राणः ॥ २४ ॥**

इदमाम्नायते छान्दोग्ये "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ते"ति प्रस्तुत्य "कतमा सा देवता इति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान् प्रास्तोष्यो मूर्द्धा ते व्यपतिष्यदि"ति । अत्र प्राणशब्दोऽप्याकाशशब्दवत् प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्त्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात् प्रसिद्धवत् निर्दिष्टात् । अधिकाशङ्का तु कृत्स्नस्य भूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात् प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हतीति । परिहारस्तु शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात् "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत" इति नोपपद्यत इति, अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते। अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादिशब्दाभिधेयमिति सिद्धम् ॥

अतः परं जगत्कारण[1]त्वव्याप्तेन येन केनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेति प्रति[2]पाद्यते "ज्योतिः, चरणाभिधानादि"त्यादिना ।

ज्योतिरधिकरणम् । **ज्योतिः, चरणाभिधानात् ॥ २५ ॥**

इदमाम्नायते छान्दोग्ये "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरि"ति । तत्र सन्देहः, किमयं ज्योतिश्शब्दनिर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं ब्रह्म, उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमि-

१ जगत्कारणत्वादिव्याप्तेनेति पाठान्तरम् ।
२ अभिधीयते इति पाठान्तरम् ।

तभास्सर्वज्ञः सत्यसङ्कल्पः पुरुषोत्तम इति । किं युक्तम् । प्रसिद्धमेव ज्योतिरिति । कुतः । प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिवत् स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात् परमपुरुषप्रत्यभिज्ञानासम्भवात् कौक्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगात् जगत्कारणं ब्रह्मेति ॥

एवं प्राप्ते प्रचक्ष्महे, "ज्योतिः, चरणाभिधानात्" । द्युसम्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव । कुतः । "पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतन्दिवी"त्यस्यैव द्युसम्बन्धिनः चरणत्वेन सर्वभूतानामभिधानात् । एतदुक्तम्भवति, यद्य[1]पि "अथ यदतः परो दिवो ज्योतिर्दीप्यत" इत्यस्मिन्वाक्ये परमपुरुषासाधारणलिङ्गं नोपलभ्यते, तथाऽपि पूर्ववाक्ये द्युसम्बन्धितया परमपुरुषनिर्देशादिदमपि द्युसम्बन्धि ज्योतिस्स एवेति प्रत्यभिज्ञायत इति । कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः । कौक्षेयज्योतिषश्च तदात्मकत्वम्भगवता स्वयमेवोक्तम् "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित" इति ॥

## छन्दोऽभिधानात् नेति चेत्, न, तथा चेतोऽर्पणनिगमात्, तथा हि दर्शनम् ॥ २६ ॥

पूर्वस्मिन्वाक्ये "गायत्री वा इदं सर्वमि"ति गायत्र्याख्यं छन्दोऽभि[2]धाय "तदेतदृचाभ्यनूक्तमित्युदाहृतायाः "तावानस्य महिमा" इत्यस्या ऋचोऽपि छन्दोविषयत्वात् नात्र परमपुरुषाभिधानमिति चेत्, तन्न, तथा चेतोऽर्पणनिगमात् । न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते, छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः, अपि तु ब्रह्मण[3] एव गायत्रीचेतोऽर्पणमिह निगम्यते, ब्रह्मणि गायत्रीसादृश्यानुसन्धान फलायोपदिश्यत इत्यर्थः । सम्भवति च "पादोऽस्य सर्वाभूतानि त्रिपादस्यामृत दिवी"ति

---

१ यदीति पाठान्तरम् ।

२ अभिध्यायेति पाठान्तरम् ।

३ ब्रह्मण्येवेति पाठान्तरं तु युक्तम ।

चतुष्पदो ब्रह्मणः चतुष्पदया गायत्र्या च सादृश्यम् । चतुष्पदा च गायत्री क्वचिद्दृश्यते, तद्यथा "इन्द्रः शचीपतिर्बलेन पीडित. दुश्च्यवनो वृषा समित्सु सासहिरि"ति, तथा ह्यन्यत्रापि सादृश्याच्छन्दोऽभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते, यथा संवर्गविद्यायाम् "ते वा एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्त" इत्यारभ्य "सैषा विराडन्नादि"त्युच्यते ॥

इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते,

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥**

भूतपृथिवीशरीरहृदयानि निर्दिश्य "सैषा चतुष्पदे"ति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेये उपपद्यते ॥

**उपदेशभेदात् नेति चेत्, न, उभयस्मिन्नप्य-विरोधात् ॥ २८ ॥**

पूर्ववाक्ये "त्रिपादस्यामृत दिवी"ति दिवोऽधिकरणत्वेन निर्देशात् इह च "दिवः पर" इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन् न प्रत्यभिज्ञायत इति चेत्, न, उभयस्मिन्नप्युपदेशेऽर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्, यथा वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति । तस्मात् परमपुरुष एव निरतिशयतेजस्को "दिवः परो ज्योतिर्दीप्यत" इति प्रतिपाद्यते, "एतावानस्य महिमा अतो ज्यायाश्च पुरुषः, पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवी"ति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे" इत्यभिहिताप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्युक्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम् ॥

निरतिशयदीप्तियुक्त ज्योतिश्शब्दाभिधेयं प्रसिद्धवत् निर्दिष्ट परमपुरुष एवेत्युक्तम् । इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतया उपास्यत्वेन श्रुत इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह,

इन्द्रप्राणाधिकरणम् । **प्राणः, तथाऽनुगमात् ॥ २९ ॥**

कौषीतकीब्राह्मणे प्रतर्दनविद्यायाम् "प्रतर्दनो ह वै दैवोदा-

सिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्य "वरं वृणीष्वे"ति वक्तारम् इन्द्रं प्रति "त्वमेव मे[1] वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति प्रतर्दनेनोक्तः[2] "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वे"ति श्रूयते। तत्र संशयः, किमत्र हिततमोपासनकर्मतया इन्द्रप्राणशब्दनिर्दिष्टो जीव एव, उत तदतिरिक्तः परमात्मेति। किं युक्तम्। जीव एवेति। कुतः। इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः। तत्समानाधिकरणस्य प्राणशब्दस्यापि तत्रैव वृत्तेः अयमिन्द्राभिधानो हि जीवः प्रतर्दनेन "त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इत्युक्तः "मामुपास्स्वे"ति स्वात्मोपासनं हिततममुपदिदेश, हिततमश्चामृतत्वप्राप्त्युपाय एव, जगत्कारणोपासनस्यैवामृतत्वप्रा[3]प्त्युपायता "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इत्यवगता। अतः प्रसिद्धजीवभाव इन्द्र एव कारणं ब्रह्मेत्याशङ्कायामभिधीयते, "प्राणस्तथानुगमादि"ति। अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम्, अपि तु जीवादर्थान्तरभूतं परं ब्रह्म, "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत" इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते॥

## न, वक्तुरात्मोपदेशादिति चेत्, अध्यात्मसम्बन्धभूमा ह्यस्मिन्॥ ३०॥

यदुक्तम्, इन्द्रप्राणशब्दनिर्दिष्टस्य "आनन्दोऽजरोऽमृत" इत्यनेनैकार्थ्यादयं परं ब्रह्मेति, तन्नोपपद्यते, "मामेव विजानीहि प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमु[4]पास्स्वेति, वक्ता हीन्द्रस्त्रिशीर्षाणं त्वाष्ट्रमहनमि"त्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति, अत उपक्रमे जीवविशेष इत्यवगते सति "आ-

१ मे इति पुस्तकान्तरे नास्ति।
२ प्रतर्दनेनोक्ते इति पाठान्तरम्।
३ प्राप्तिहेतुतेति पाठान्तरम्।
४ अमृतमित्युपास्स्वेति पाठान्तरम्।

न्दोऽजरोऽमृत" इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत्—परिहरति, "अध्यात्मसम्बन्धभूमा ह्यस्मिन्," आत्मनि यः सम्बन्धः सोऽध्यात्मसम्बन्धः, तस्य "भूमा" भूयस्त्वं बहुत्वमित्यर्थः। आत्मन्याधेयतया सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम्, तच्चास्मिन् वक्तरि परमात्मन्येव हि सम्भवति, "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत" इति भूतमात्राशब्देनाचेतनवस्तुजातमभिधाय, प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय, तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य, तमेव "आनन्दोऽजरोऽमृत" इत्युपदिशति। तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूते तस्मिन् परमात्मन्येवोपपद्यत इत्यर्थः ॥

अथवा "अध्यात्मसम्बन्धभूमा ह्यस्मिन्" परमात्मासाधारणधर्मसम्बन्धो "ऽध्यात्मसम्बन्धः," तस्य "भूमा" बहुत्वम् "अस्मिन्" प्रकरणे विद्यते। तथा हि, प्रथमम् "त्वमेव मे[1] वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस" इति "मामुपास्स्वे"ति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते, तथा "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति तं यमधो निनीषती"ति सर्वस्य कर्मणः कारयितृत्वं च परमात्मधर्मः, तथा "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता" इति सर्वाधारत्वं च तस्यैव धर्मः, तथा "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत" इत्येतेऽपि परमात्मन एव धर्माः, "एष लोकाधिपतिरेष सर्वेश" इति च परमात्मन्येव सम्भवति। तदेवमध्यात्मसम्बन्धभूम्नोऽत्र विद्यमानत्वात् परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ॥

कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशस्सङ्गच्छत इत्यत्राह

१ मे इति पुस्तकान्तरे नास्ति।

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३१ ॥

प्रज्ञातजीवभावेनेन्द्रेण "मामेव विजानीहि मामुपास्स्वे"ति उपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, अपि तु शास्त्रेण स्वात्मदृष्टिकृतः। एतदुक्तम्भवति, "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "एतदात्म्यमिदं सर्वम्" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहन्त्वमादिशब्दानां परमात्मन्येव पर्य्यवसानं ज्ञात्वा "मामेव विजानीहि मामुपास्स्वे"ति स्वात्मश[1]रीरं परमात्मानमेवोपास्यत्वेनोपदिदेशेति। "वामदेववत्" यथा वामदेवः परस्य ब्रह्मणस्सर्वान्तरा[2]त्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां[3] शब्दानां शरीरिणि पर्य्यवसानं पश्यन् "अहमि"ति स्वा[4]त्मशरीरकं परं ब्र[5]ह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्य्यादीन् व्यपदिशति "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च अहं कक्षीवान् ऋषिर्विप्र" इत्यादि, यथा च प्रह्लादः

> "सर्वगत्वादनन्तस्य स एवाहमवस्थितः।
> मत्तः सर्वमहं सर्वं मयि सर्वं सनातने" ॥

इत्यादि वदति। अस्मिन्प्रकरणे जीववाचिभिः शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने कारणञ्चोद्यपूर्वकमाह,

---

१ स्वात्मशरीरकमिति पाठान्तरम्।
२ अन्तरात्मकत्वमिति पाठान्तरम्।
३ चेति पुस्तकान्तरेऽधिकः पाठः।
४ स्वात्मकेति पाठान्तरम्।
५ ब्रह्मेति इति पाठान्तरम्।

क्रमिकत्वे चासदुत्पादप्रसङ्गः, अतो वर्तमानलक्षणमेव सर्ववस्तु पूर्वोत्तरकालयोस्तु तस्याभावमात्र तत्प्रतियोगित्वादेव चातीतत्वादिव्यवहार इति तन्न धर्मिणा धर्मत्वस्य प्राक्साधितत्वेन धर्मत्वे सिद्धे लक्षणबहुत्वस्याप्यवश्यवक्तव्यत्वात् । वर्तमानसमय एव धर्मत्वमिति न युक्तम् । यतस्तदैव धर्मत्वे सर्वस्य चित्तस्य विरक्तव्यवहारविषयत्वापत्तेः, क्रोधकाले रागसामान्यस्यानाविर्भावात् । यथा यदा कदाचिद्रागसत्त्वे त्वन्मते रक्तश्चित्तमिति व्यवहारः, तथा यदा कदाचिद्रागाभावेन चित्त विरक्तमित्यपि व्यवहारापत्तिः । एवं चातीतादिकालेऽपि रागादेश्चिताद्धिधर्मत्वाद्धर्मिणा त्रिलक्षणत्व सिद्धम् । यच्चाभावप्रतियोगितामात्रेणेत्यादि तदपि न, असति घटे ध्वंसप्रतियोगित्वादिरूपातीतत्वादेर्वृत्त्यनुपपत्तेः । संयोगित्वादिवत्प्रतियोगित्वादेरपि सम्बन्धिद्वयसत्त्व विनाऽनुपपत्तेः । सदसतोः सम्बन्धादर्शनात् । ध्वंसप्रागभावयोरसिद्धेश्च । घटो वर्तमान इतिवद् घटोऽतीतो भविष्यन्निति प्रत्ययाभ्यां घटावस्थाविशेषरूपयोरेव तत्त्वाद्, अन्यथाऽभावाभावोऽप्यतिरिक्तः स्यात् । किं च त्रयाणां लक्षणानां नैकदा एकस्मिन्वस्तुन्यभिव्यक्तिः, किं तु स्वाभिव्यञ्जक दण्डचक्रादिवस्त्वञ्जनतुल्य यस्यैवभूतस्य लक्षणस्य क्रमेणाभिव्यक्तिरिति, नाभिव्यक्तौ साङ्कर्य स्वरूपतस्तु साङ्कर्यमस्त्येव, अव्यक्तलक्षणयोर्व्यक्तेन लक्षणेनाविरोधात् । तदुक्तं पञ्चशिखाचार्यैः—रूपातिशया वृत्त्यतिशयाश्च विरुध्यन्ते सामान्यानि त्वतिशयैः सह प्रवर्तन्ते धर्माद्यनैश्वर्यान्तान्यष्टौ रूपाणि चित्तस्य, वृत्तयश्च ज्ञानाद्याः शान्तघोरमूढरूपाश्चित्तपरिणामास्तेषामतिशयोऽभिव्यक्तिरूपोत्कटतेति व्याख्यातं, गुणवृत्त्यविरोधादिति सूत्रे यथा रागस्यैव क्वचिद्विषय आविर्भाव इति न तदानीमन्यत्र सामान्याभावः, किं तु केवलं सामान्येन समन्वागत इत्यस्ति तदा

तत्र तस्य भावः, तथा लक्षणस्यापीति बोध्यम्। अयं च धर्माणामेव न धर्मिणा, तेषा त्र्यध्वत्वाभावाद् अवस्थापरिणाम उच्यते। ते वर्त्तमाना धर्मा अतीतानागताश्च धर्मास्तां तां बाल्ययौवनवार्धक्याद्यवस्थां प्राप्नुवन्तोऽन्योन्यमन्यत्वेन भेदेनोच्यन्ते। य बालो न युवेत्यादिरूपेण, स च व्यवहारोऽवस्थाभेदादेव न द्रव्यभेदात्। एवं च पूर्वावस्थान्तोऽवस्थाऽन्तरप्राप्तिरवस्थापरिणामः। अयं च यद्यप्यतीतानागतयोरप्युच्यते तथाऽपि वर्त्तमाने स्फुटोऽन्यत्र तेनैव दृष्टान्तेनानुमेय इत्युक्त प्राक्। तत्र निमित्तभेदादन्यत्वव्यवहारे दृष्टान्तः, यथैकत्वव्यञ्जिकारेखाऽङ्कविशेषो बिन्दुद्वयशिरस्कः शतव्यवहारकर्त्ता, तत एकबिन्दुलोपे दशेति बिन्दुद्वयस्यापि लोपे एकत्वव्यवहारकर्त्ता तत्समरेखाऽन्तरदाने एकादशेति यथा चैकैव स्त्री पुत्रपितृभ्रातृभिर्जनकत्वादिनि[illegible]भेदात् मातेति दुहितेति स्वसेति चोच्यते।

अत्रापि बौद्ध आह—अवस्थापरिणामाभ्युपगमे धर्मधर्मिलक्[illegible]वस्थानां चतुर्णामपि कौटस्थ्यापत्तिः व्यापारेणैव निमित्तेन सर्ववर्त्तमा[illegible]नागताद्यध्वनामन्योन्यविभागाभ्युपगमात्। यदा धर्म आश्रितः प[illegible]र्थः सव्यापारं न करोति तदाऽनागतो, यदा करोति तदा वर्त्तमानः, यदा कृत्वा निवृत्तस्तदाऽतीत इति तत्राद्यन्तयोर्विभागस्य व्यापा[illegible]निमित्तकत्वव्यापाराभावनिमित्तकत्वेन परंपरया। एवं च पूर्वधर्मातीतताया धर्मान्तराभिव्यक्तिरिति परिणामलक्षणान्नित्यत्वमवस्थानामपि त्वया वाच्यम् अवस्थाना च नित्यत्वे किमप्यनित्यं न स्यादिति धर्मधर्म्यादिरूपं सर्वं जगत् कूटस्थं प्रसज्येतेति तन्न।

एकान्तनित्यताया एव कूटस्थत्वाद् गुणिनो धर्मिणो नित्यत्वेऽपि गुणानां धर्माणां विमर्दस्य विनाशस्य कूटस्थपुरुषतोऽत्र वैलक्षण्यात्। अत्रोदाहरण यथा विनाशिना कार्याणां विनाशेनाविनाशिना शब्दादि-

तन्मात्राणां धर्ममात्र संस्थानं पञ्चभूतरूपम् आदिमदन्ते विनाशि च। एवं सत्त्वादिगुणानां धर्ममात्र महत्तत्वम् आदिमद् विनाशि च। एवमहङ्कारादयो घटादयश्च। तानि च स्वविनाशेनाविनाशिना कारणानां धर्ममात्राणि तेषां विकारसंज्ञा परिणामसंज्ञेति "वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति श्रुतेः। सत्यत्व विकारापेक्षया स्थिरत्वम्, एव च धर्मिणामेव परिणामितया न कौटस्थ्यं, सुतरां तु धर्मलक्षणावस्थानामिति बोध्यम्। तत्र भूतेन्द्रियेषु परिणामत्रयं यथा मृद्धर्मी पिण्डाकाराद्धर्माद्धर्मान्तरमुपसंपद्यमानो धर्मेण परिणमते घटाकार इति, घटाकारश्चानागतं लक्षण हित्वा वर्तमानलक्षणं प्रतिपद्यते इति लक्षणेन परिणमते घटो नवीनताऽनन्तरं पुराणता प्रतिक्षणमनुभवन्नवस्थापरिणामं प्राप्नोति धर्मादीनां सर्वेषामवस्थात्वसत्त्वेऽपि गोबलीवर्दन्यायेन भेदेन निर्देशः।एवं भूतान्तरेषु इन्द्रियेषु प्रकृत्यादिषु च योज्यम्। एते त्रयोऽपि परिणामा धर्मिस्वरूप एवानुगता अतो धर्मधर्म्यभेदाद्धर्मिपरिणाममात्रमेकमेव सामान्यतो भवति तस्यैवैते प्रकारविशेषा इति बोध्यम्। परिणामशब्दार्थश्च अवस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः। निवृत्त्युत्पत्ती अतीतता वर्तमानते।

अथ बौद्धनिरासाय धर्मातिरिक्तं धर्मिणमाह।

**शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥**

अतीतवर्तमानानागतधर्मेष्वनुपाती वर्तमानरूपेणानुगतो धर्मीत्यर्थः। एव च वर्तमानत्वावर्तमानत्ववैधर्म्येण धर्मिणो धर्मस्य च विवेक इति भावः। तत्र योग्यताऽवच्छिन्ना धर्मिणः शक्तिरेव धर्मः, दग्धशक्तेः संग्रहाय योग्यताऽवच्छिन्नेति। योग्यतावच्छिन्नेत्यस्योदकाहरणादियोग्यतावच्छिन्नेत्यर्थः। एतेन मृदादौ सतां घटादीनां तत

उत्पत्तावपि उदकाहरणादीनि न स्युः, स्वकारणेषु तेषामभावेन तत्प्राप्त्यसम्भवादित्यपास्तमिति मिश्राः। एवं चाग्नेर्दाहशक्तिवद्धर्मा अपि धर्मिणि यावद्द्रव्यभाविनः, न हि शक्तिवियोगः शक्तिमतोऽस्तिशक्ति-शक्तिमतोरभेदात्। स चानभिव्यक्तिदशायामपि मृद्येव घटस्तन्तुष्वेव पट इत्येवं फलप्रसवभेदेनाव्यक्ततया ऽनुमितसद्भाव एकस्य धर्मिणोऽनेकोऽपि दृष्टो घटकपालकणिकामृच्चूर्णरूप इति। एकत्वानेकत्वाभ्यां धर्मधर्मिणोर्भेदो भाष्य उक्तः। तत्र वर्त्तमानो धर्मः स्वव्यापारमनुभवन्नतीतानागतेभ्यो धर्मान्तरेभ्यो भिद्यते यदा त्वतीतानागतावस्थायां सामान्येनाभिव्यक्तत्वस्य विशेषराहित्येन धर्मिणि लीनो भवति तदा धर्मिस्वरूपेणाविभागात्परस्परमपि तेषामविभाग एव। एवमेव ब्रह्माद्वैतमपि बोध्यम्। प्रलये सर्ववस्तूनां परमात्मन्यविभागात् यथाकाशेऽभ्राणामिति। ते च धर्मिणो धर्मास्त्रिविधाः—शान्ता उदिता अव्यपदेश्याश्च। तत्र शान्तास्ते ये कृत्वा व्यापारमुपरताः। उदितास्ते ये सव्यापारास्ते चानागतस्य लक्षणस्य समनन्तराः। एवं वर्त्तमानस्यानन्तरा अतीताः। नन्वतीततानन्तर्यं वर्त्तमानतायाः कुतो नेति चेन्न। अनागतावस्थायाः प्रागभावस्थानीयाया वर्त्तमानावस्थायां हेतुत्वेनातीतवर्त्तमानतयोः कार्यकारणतानियामकपौर्वापर्याभावात्। एवं च सत्कार्यवादेऽपि पूर्वाभिव्यक्तघटादिव्यक्तेर्न पुनरभिव्यक्तिरिति सिद्धान्तः। तस्यापि पुनरभिव्यक्तौ कदाचित्स एवायं घट इति प्रत्यभिज्ञाऽऽपत्तेः। किं चैवं सत्यनिर्मोक्षापत्तिः, विनष्टान्तःकरणाविद्याकर्मादीनां पुनरुद्भवेन मुक्तस्यापि संसारोदयापत्तेः, न चैवमतीतताकाले तत्सत्त्वे मानाभावः, लोकानपि तान्ददृशे इत्यादिवाक्यशतसिद्धयोगिप्रत्यक्षान्यथाऽनुपपत्तेर्मानत्वात्। विषयतत्सन्निकर्षयोः प्रत्यक्षे हेतुत्वात्। न चातीतार्थस्य स्मरणमेवास्तु, पूर्वाननुभूतस्यापि

योगिना दर्शनात् । यत्तु योगजधर्म एव सन्निकर्ष इति तन्न । प्रत्यक्षं प्रति सन्निकर्षनानात्वेनाननुगमाद्धेतुताग्रहानुपपत्तेः । असत्पदार्थेन कस्यापि सन्निकर्षस्यानुपपत्तेश्च । किं च ज्ञानादेर्विषयतारूपसम्बन्धस्याप्यसत्येऽनुपपत्तिः, सतोरेव सम्बन्धदर्शनात् । तस्मात्प्रत्यक्षेषु संयोगादिरेव प्रत्यासत्तिः योगजधर्मेण तु तत्प्रतिबन्धकाधर्मतमआदिनिवृत्तिमात्रं क्रियत इति दिक् ।

नन्वव्यपदेश्यत्वं किं, न च करिष्यमाणव्यापारत्वम् । अकरिष्यमाणव्यापारकस्यापि केवलानागतलक्षणस्य वस्तुनः स्वीकारादिति चेन्न ।

सर्वस्य सर्वजातीयशक्तिकत्वेन सर्वत्र परिणामिन्यवस्थितानां सर्वविकारजननशक्तीनामेवाव्यपदेश्यत्वात् । एवं च तादृशशक्तित्वमेवाव्यपदेश्यत्वम् । न च वर्तमानातीतावस्थयोरनुभवस्मरणे प्रमाणे स्त' शक्त्याख्यानागतावस्थायां किं मानं सर्वत्र सर्वशक्तिसत्त्वे च किं मानमिति वाच्यम् । स्थावरे रसादिभिर्मधुराम्लसुरभ्यसुरभिमृदुकठिनत्वादिभिर्यद्वैश्वरूप्यम् अनन्तरूपत्वं तज्जलपृथिव्योः परिणामनिमित्तकमित्यन्वयव्यतिरेकाभ्यां प्रत्यक्षतो दृष्टम्। अतो जलभूम्योः सकलस्थावरात्मकत्वात्तच्छक्तिमत्त्वम् । शक्तिं विनाऽपि कार्यकरणेऽतिप्रसङ्गात् । तथा जङ्गमेषु यदनेकरूपत्वं तत्स्थावराणां परिणामनिमित्तकं दृष्टं मनुष्यादीनां धान्यादिस्थावरकार्याणां धान्यादिविशेषै रूपादिविशेषदर्शनात् । तथा स्थावरेषु यदनेकरूपत्वं तज्जङ्गमपरिणामनिमित्तकं गोमयदुग्धादिभिर्धान्यचम्पकादीनां विचित्ररूपरसादिदर्शनाद्, दाडिमानां च रुधिरावसेकेन तालफलतुल्यफलतादर्शनाच्च एवमादिदृष्टान्तैः सर्ववस्तुषु सर्वविकारजननशक्तिसिद्धेः । यद्यप्यतीतकार्यशक्ति-

मत्व नास्ति तथाऽपि तज्जातीयशक्तिमत्त्वं विवक्षितम्। तदुक्त भाष्ये जात्यनुच्छेदेन सर्वं सर्वात्मकमिति। एतेनान्यद्रव्यविकारव्यक्तीनामन्यथाभावेऽपि न नियमहानिः तज्जातीयव्यक्त्यन्तरजननशक्तिमत्त्वसम्भवात्। किं चैकस्मादेव चतुर्मुखशरीरादखिलदेवदानवनरपश्वादिसमुदयदर्शनेन, अगस्त्यजाठराग्नेः समुद्रशोषदर्शनेन, ब्रह्मविष्णुरुद्रपार्वतीशरीरादिषु विश्वरूपदर्शनेन, योगिना स्वशरीरमनसोरनन्तविभूतिदर्शनेनान्यतोऽप्यन्योऽत्पादनदर्शनेन सर्वत्र सर्वशक्तिसत्ताऽनुमीयते।

ननु सर्वजातीयशक्त्यङ्गीकारे कथमेकदा नाखिलविकारोत्पत्तिः कथं वा न शिलातः अङ्कुरोत्पत्तिरित्यादीति चेन्न।

देशकालावयवसंयोगविशेषरूपाकाराधर्मादिनिमित्तैः प्रतिबन्धादनेकशक्तीनामेकदा वर्तमानलक्षणपरिणामाभावोपपत्तेः, उक्तरूपसहकारिविरहाद्वा। वस्तुतः सहकारिकारणानां प्रतिबन्धनिवर्तकतैव, अतः शिलाशकलान्नाङ्कुरोत्पत्तिः, अवयवसंयोगविशेषस्य तत्प्रतिबन्धकत्वात्। नाकाश्मीरे केसरोत्पत्तिः, नापि निदाघे मेघोत्पत्तिः, न मृग्यां मनुष्योत्पत्तिः, नापुण्यवतः सुखमिति बोध्यम्। अस्मदादिशरीराच्च नाखिलप्राण्युत्पत्तिरधर्मेण प्रतिबन्धाद् ब्रह्माण्डादिशक्तिमतश्च घटादेर्ब्रह्माण्डाद्युत्पत्तिं विनैव प्रायशो नाशदर्शनात्, सा शक्तिराधारविलयाद् घटादिना सहैव लीयते, कदा चित्तु योगीश्वरादिसङ्कल्पतो घटादीनामपि प्रकृत्यापूरवशाद् अव्यवस्थिताखिलपरिणामो भवत्येव। तदुक्तम्।

विषमप्यमृतं क्व चिद्भवेदमृतं वा विषमीश्वरेच्छयेति।

एवं च शक्तिसिद्धौ सदेव सोम्येदमग्र आसीदिति श्रुतिरेव मानम्। अन्यथा कालादिभिरेवातिप्रसङ्गपरिहारेण सा न सिध्येत्,

घटो भविष्यतीति प्रत्ययश्चेति । एवं चाभविष्यद्व्यापारकशक्तिसिद्धौ हेयं दुःखमनागतमिति पूर्वोक्तमुपपन्नम्। एवं च कश्चिद्विकारो विलक्षण एव अनागतोऽतीतश्चेति । अन्यथाऽनागतदुःखस्य हेयत्वानुपपत्तेः परेषां ह्यनागतदुःखहानं सिद्धत्वान्न पुरुषार्थः स्यात् । मम त्वनागतदुःखं शक्तिरूपं चित्तेन सहैव नश्यतीत्युपपन्नं सर्वम् । यश्चैतेष्वभिव्यक्तेषु धर्मेष्वन्वयी स्थिरः सामान्यविशेषात्मा स धर्मी । एवं चाभिव्यक्तत्वानभिव्यक्तत्वं वैधर्म्येण धर्मधर्मिणोर्विवेकः ।

यस्तु बौद्धो निर्धर्मिकं धर्ममात्रं क्षणिकमिदम्, अनेकक्षणस्थायित्वे क्षणसम्बन्धरूपधर्मवत्त्वमेव पदार्थमात्रस्य स्यादिति वदति तस्यात्माऽपि क्षणिकविज्ञानरूप एव स्यादिति भोगाभावापत्तिः, अन्यविज्ञानेन कृतस्य कर्मणोऽन्येन भोगेऽतिप्रसङ्गात्, स्मरणानापत्तेश्च अन्यदृष्टस्यान्येनास्मरणात् । प्रत्यभिज्ञानाच्च धर्मी अतिरिक्तः सिध्यति धर्मान्यथात्वेऽपि प्रत्यभिज्ञादर्शनादिति दिक् ।

ननु धर्मिणोऽतिरिक्तत्वेऽप्येकस्यानेकपरिणामाङ्गीकारो युक्तः एकरूपात्कारणात्कार्यभेदे तस्याकस्मिकत्वप्रसङ्गाद् एकस्यानेकशक्तित्वेऽतिप्रसङ्गादत आह ।

**क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥**

एकस्यैव मृद्धर्मिणः प्रथमं चूर्णमृत् ततः पिण्डमृद्भवति ततश्च घटोत्पत्तौ घटमृद्भवति ततो घटस्य लये कपालमृत् ततः कणमृदित्यादिः परिणामक्रमो दृश्यते, मृद्धर्मी च सर्वत्रानुगतः मृदित्यनुगतप्रत्ययात् । न च धर्माणामयं क्रमः पौर्वापर्यात्मा न तु धर्मिण इति कथमनेन धर्मिणः परिणामबहुत्वसिद्धिरिति, वाच्यम् धर्मक्रमस्यैव धर्मिक्रमत्वात् । यस्य धर्मिणो धर्मान्तरस्य समनन्तरो

यो धर्म स एव हि तस्य धर्मिण क्रम यथा मृदेकैव चूर्णे भूत्वा सहकारिविशेषसमभिहारेण पश्चात्पिण्डो भवतीत्येक. पश्चाच्च पिण्डः प्रच्यवते घट उपजायते इत्यादिप्रकारैर्मृद्धर्मिण एव धर्मपरिणामक्रम-बहुत्वम् । एवं घटस्यानागतभावाद्वर्तमानभावप्राप्ति' पिण्डस्य वर्त-मानभावादतीतभावप्राप्तिरितिलक्षणक्रम , लक्षणात् लक्षणान्तर-प्राप्तिरूपः अतीतभावाद्वर्तमानतेति न क्रम इति प्रागेवोक्त तथा घटस्य नवस्य प्रान्ते पुराणता दृश्यते, तत्र यद्यपि प्रतिक्षणपरिणामो न प्रत्यक्षस्तथाऽपि पुराणता प्रतिक्षण भिन्नेन स्वरूपसताक्रमसमूहे नाभिव्यज्यमाना चरमावस्थाया स्फुटं प्रत्यक्षतामेतीत्यतः पुराण ताऽभिव्यक्तिहेतुतया प्रतिक्षणमवस्थापरिणामोऽनुमीयते । एव च धर्मलक्षणपरिणामाभ्या प्रतिक्षणमुपजायमानाभ्या विलक्षणोऽय प्रति-क्षणजायमानत्वात्तृतीयोऽवस्थापरिणामः, ईदृशक्षणभङ्गुरत्वमादायैव प्रपञ्चस्य स्वप्नमायाऽऽदिदृष्टान्ता श्रुतिस्मृतिषूक्ता. । त एते क्रम धर्मधर्मिणोर्भेदे सति सम्भवन्ति नेतरथेति सूत्रतात्पर्यम् ।

ननु धर्मिणो घटादेः कपालादिधर्मत्वात्कथं धर्मधर्मिणो-र्भेद इति चेदन्यधर्मापेक्षया धर्मित्वाच्चतेरदोष', यो यस्य धर्मो स तस्माद्भिन्न इत्येव नियमात् । न च धर्मिधर्मलक्षणानां भेदे कथमे-कस्या एव प्रकृतेः सर्वपरिणामित्व स्मृत्यादाउक्तमिति वाच्यम् । परमार्थधर्मिणि प्रधाने साक्षात्परम्परयाऽभेदोपचारेण निमित्तेन सर्वो-ऽपि धर्मः स एवाभिधीयते इति सर्वस्य क्रमस्य प्रधानरूपैकविष यत्वेनैव प्रतीयमानत्वेनादोषात् । परमार्थधर्मित्व च साक्षात्परम्प-रया वा सर्वविकाराश्रयत्वम्, अन्येषा त्वपारमार्थिक धर्मित्वम् आपेक्षिकत्वाद्, यथा महदादीना सत्यत्व जीवानामात्मत्व चापार-मार्थिकं शशशृङ्गदेहाद्यापेक्षिकत्वात् । एव च परमात्मन एव पार-

मार्थिकात्मत्वं न्यायसाम्याद् । अत्राभेदोपचारद्वारेणेति भाष्योक्ते धर्मधर्मिणोर्भेद एव व्यावहारिकः अभेदस्तु प्रातिभासिकस्तन्मूलं चाविभाग इति ज्ञायते । तत्रारम्भवादिभिरस्माकं धर्मधर्म्यभेदसत्कार्ययोरेव विरोधो न तु प्रपञ्चस्यानित्यतनत्वादौ तैरभेदप्रत्ययनियामकाविभागलक्षणास्यानङ्गीकारात् प्रागभावध्वंसयोरङ्गीकाराच्च । ब्रह्मविवर्ततावादोऽपि नास्माकं विरुद्धः, मायापरिणामस्य प्रपञ्चस्य परमात्मन्यतात्त्विकताया अस्माकमपीष्टत्वात् ॥

बहुरूप इवाभाति मायया बहुरूपया ।
रममाणो गुणेष्वस्या ममाहमिति बध्यते—

इति स्मृत्या मायाविकारस्य परमात्मान्यारोपावगमाद् शुक्तौ बुद्धिपरिणामरजतारोपवत् । बध्यत इत्यस्यांशत इति शेष । यद्यपि चित्तस्य व्युत्थाननिरोधसंस्काररूपौ द्वावेव परिणामौ सूत्रे उक्तौ तथाप्यन्येऽपि द्रष्टव्याः । तथा हि—चित्तस्य धर्मद्वय प्रत्यक्षमप्रत्यक्षं च—तत्र वृत्त्यात्मक प्रत्यक्ष, वृत्तिश्च साक्षिणि प्रतिबिम्बाधानसमर्थः परिणामविशेषस्तस्य ज्ञानेच्छाकृतिसुखदुःखादिरूपः परमाणुतद्रूपादिवत् साक्षिणि प्रतिबिम्बाधानाक्षमतयाऽभासमानो वस्तुमात्रोऽप्रत्यक्षः । स चानुमानमात्रगम्यस्ततः सप्तविधः ।

निरोधधर्मसंस्काराः परिणामोऽथ जीवनम् ।
चेष्टा शक्तिश्च चित्तस्य धर्मा दर्शनवर्जिता इति ॥

निरोधो वृत्तिनिरोधः स संस्कारजनकत्वेन निवृत्तियत्नवद्वाऽबहुरूपोऽनुमीयत इति प्रागुक्तम् । धर्मो दृष्टसामान्यभोगवैचित्र्याद्नुमीयते । संस्कारश्च स्मृत्या परिणामश्चित्तस्योपचयादिर्वृत्त्युत्कर्षादिभिरनुमीयते । जीवनं प्राणनादिरूपव्यापारः स सुषुप्तावपि श्वासप्रश्वा-

साभ्यामनुमीयते, चेष्टा चित्तस्य सञ्चारः स च जाग्रत्स्वप्नसुषुप्त्यादौ चित्तस्य चक्षुरादिदेशसंयोगवियोगाभ्यामनुमीयते। यद्यपि चित्त विभु तथाऽपि बाह्यसत्त्वाद्युपष्टम्भेनोपचयापचयवदौपाधिकी तत्र क्रिया-ऽप्यस्ति शक्तिर्ध्यानादिसामर्थ्यं तच्च तत्कार्यानुमेयमिति दिक् ।

अथ योगिनः सम्पन्नसर्वयमादिसाधनस्य तत्तद्विभूतिकामनया जिज्ञासितो योऽर्थस्तत्तत्संयमविषयस्तत्तत्संयमसिद्धिसूचिका विभूतयश्च वक्तव्या' केवलमुमुक्षूणां तु सत्त्वपुरुषान्यतासंयम. कर्त्तव्यस्तत्र परिणामत्रयसंयमं तद्विभूतिं चाह ।

**परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥**

अस्य धर्मिणोऽयं धर्मपरिणामस्तस्य चायं लक्षणपरिणामो लक्षणस्य चायमवस्थापरिणाम इत्येवमनुज्ञया यत्र कुत्र चिदर्थे संयमात्तत्साक्षात्कारे सति सर्ववस्तुसाधारणेषु तेषु परिणामेषु अतीतानागतज्ञान प्रणिधानलेशादेव भवतीत्यर्थ. । एकत्र ध्यानादित्रयं संयम इत्युक्तम् । अन्यविषयकसंयमात्प्रतिनियतपदार्थान्तरसाक्षात्कारो योगजधर्माद्भवतीत्यत्र शास्त्र प्रमाण धर्म विशेषात्स्वर्गविशेषो भवतीत्यत्रेव ।

संयमान्तरस्य सिद्ध्यन्तरमाह ।

**शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥**

गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानं तेषां वक्ष्यमाणात्संकेतरूपादध्यासात्संकरोऽतिविज्ञेकाग्रहण वस्तुतस्तेषा भेद एव—त्तस्तेषा प्रविभागे भेदे संयमात्साक्षात्कारपर्यन्तात्सर्वभूताना रुतानि ज्ञायन्ते ऽयं काकादिरमुमर्थमनेन शब्देन कथयतीत्यर्थ. । तत्र वागिन्द्रियजन्यः शब्दो लोकप्रतीतिसिद्धो वर्ण एव न वाचकपदरूपः ।

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु चेति स्मृतेः ।

श्रोत्र च ध्वनिरूपपरिणाममात्रविषयं, तत्र ध्वनिर्नाम वागिन्द्रियादिष्वभिहतस्योदानवायोः परिणामभेदः तदभिघातात्तदवच्छिन्नाकाशोपादानको वा न तु वाचक पदम्। स च वर्णरूपोऽप्यवाचकत्वाद्ध्वनिरित्युच्यते। तृतीयः पदरूपः स च नादानुसंहारबुद्धिर्निर्ग्राह्यः नादाख्यगकारादिवर्णान् प्रत्येक गृहीत्वाऽनु पश्चाद्या बुद्धिः संहरति एकत्वमापादयति । गौरित्येकं पदमिति तया निर्ग्राह्योऽखण्ड एकः स्फोटाख्यः अयं चान्तःकरणस्यैव ग्राह्यः तद्धर्मश्च यो विशोका वा ज्योतिष्मतीति सूत्रे प्रथमपादे हृदयपुण्डरीके प्रणवरूप उक्त अनुसंहारबुद्धेः सामानाधिकरण्येनैव तत्ग्रहजनकत्वे लाघवात् । यद्यपि पूर्वबुद्धयोऽपि वर्णाकार पदमेव गोचरयन्ति तथाऽपि न विशद, चरमे तु विज्ञाने तदतिविशदमित्येवमुक्तम् । न चानुसंहारबुद्धिः श्रोत्रस्यैवास्तु, असम्भवात्, आनुपूर्व्यैक्य हि एकपदत्वप्रतीतिविषयो वाच्य, न चानुपूर्वी श्रोत्रग्राह्या, श्रोत्रस्य शब्दमात्रग्राहकत्वात् । न च पूर्ववर्णसंस्कारैः स्मृतानां वर्णानामानुपूर्वी मनसा ग्राह्येति वाच्यम्। किमानुपूर्व्या मनसाऽनुभवः उत स्मरणम्।नाद्यः, तदा वर्णाना विनाशेन तत्तदुत्तरक्षणानां च विनाशेन तदसम्भवात् । क्षणस्यास्मदादिमनोग्राह्यत्वाच्च। अत एवान्त्योऽपि न, अत्र प्रमाण चैकं पदमिति प्रत्यय एव, अनेकेषां वर्णानामेकसमुपस्थितेरसम्भवात् परस्परमसम्बद्धस्वभावानां पदत्वसंस्पर्शरहितानां प्रत्येकमर्थानुपस्थापकानामाविर्भूयैव क्षणात्तिरोभूतानां प्रत्येक मिलितानां चापदस्वरूपताया वृद्धैरुक्तत्वात्। प्रत्येकमर्थोपस्थापकत्वेऽनुभवविरोधो द्वितीयादीनामनुच्चारणप्रसङ्गश्च । न चाग्नेयादीनां परमापूर्वे स्वर्गे वा जननीये यथा संस्का-

रद्वारा साहित्य तथा वर्णानामपि संस्कारद्वारा साहित्यम्। तादृशा-नेकसंस्कारकल्पने गौरवात्। न च स्मृत्यनुरोधेन क्लृप्ता एव ते। तेषां स्वकारणानुभवविषयस्मृतिमात्रजनकत्वात्। किं चातिरिक्त-स्यापि स्वीकारे तस्याज्ञातस्यार्थप्रत्यायकत्वासम्भव अर्थप्रत्यायनाङ्ग सम्बन्धस्याज्ञातस्य तज्जनकताया अदर्शनात्। न च प्रत्येकवर्णानुभव-जनितसंस्कारपिण्डलब्धजन्मस्मृतिविषयतया जातसहभावा वाचकाः क्रमाक्रमविपरीतक्रमानुभूतानामविशेषेणार्थबोधकत्वापत्तेः। क्रमस्य त्वनुभवाविषयस्य न स्मृतिविषयत्वमित्युक्तमेव। न चैषोऽखण्डपदे ऽपि दोषः, तद्धि प्रत्येकमेव प्रयत्नभेदभिन्नध्वनिभिः परस्परविसदृश-तत्पद व्यञ्जकैस्तुल्यस्थानकरणनिष्पन्नत्वेन गणगौरगौरित्यादौ गत्वेन सदृशैरेकमप्यनेकमिवानवयवमपि सावयवमिव व्यज्यते। यथा नियतवर्णपरिमाणसंस्थानं मुखमेकमपि मणिकृपाणदर्पणादयो विभि-न्नवर्णपरिमाणसंस्थानमनेकमादर्शयन्ति, न तु परमार्थतस्तस्य ते भागाः तस्माद्वर्णात्मना पदभेदेऽपि एकमेव स्फोटं निर्भागमेव सभा-गमिव सभेदमिव व्यञ्जन्ति। एवं च गोपदरूपस्यैकस्य स्फोटभे-दस्य गकारभागो गणादिपदस्फोटसादृश्येन न निर्धारयति स्वभा-गिनमित्योकारविशिष्टो निर्धारयति, एवमोकाररूपोऽपि भागः शोचिरादिपदसदृशतया न शक्तस्तं निर्धारयितुमिति गकारवि-शिष्टो निर्धारयतीति वाच्यम्, तच्च न सम्भवति गत्वादिनाऽभि व्यक्तेः क्षणिकत्वादिति वाच्यम्। संस्कारद्वारेण तेषां सहभावाद् वैशिष्ट्योपपत्तेः। न च भिन्नविषयत्वं, संस्कारयोः भागद्वयविषय-योरनुभवयोस्तज्जन्मनोश्च संस्कारयोरेकपदविषयकत्वात् केवलभा गानुभवेन पदमव्यक्तमनुभूयते अनुसंहारधिया तु पूर्वसंस्कारसहा कृतया व्यक्तमनुभूयते यथा दूराद्वनस्य तौ पूर्वेऽव्यक्ताः प्रत्यय

व्यक्तवनस्पतिप्रत्ययजनकाः । न चेयं विधा वर्णानामर्थप्रत्ययजनने सम्भविनी, न हि ते पूर्वमव्यक्तमर्थप्रत्ययं जनयन्तीति शक्यं वक्तुं प्रत्यक्षज्ञान एव तथा नियमात् । वर्णाधेयस्त्वर्थप्रत्ययो न प्रत्यक्षः वर्णेभ्यो जायमानो ह्यर्थे प्रत्ययो जायमानः स्फुट एव जायेत न वा जायेत न त्वस्फुट इति विशेषात् । न चानुपूर्वीविशिष्टसमूहस्यैकत्वा-देकत्वव्यवहारस्तेन रूपेणार्थप्रत्यायकत्वं चेति वाच्यम् । तदग्रदहस्यो-क्तत्वात् । स कीदृश इति चेत् । अन्तःकरणधर्मः स एक एव श्रोत्र-गृहीततत्तद्वर्णैर्महारञ्जनेन वस्त्रस्येव जवया स्फटिकस्येव वा तत्तदु-परक्ततायां सत्यां चरमवर्णग्रहकाले सति पदत्वेन प्रतीयते तत्तदु-परागनाशकं च तस्यान्तःकरणवृत्त्यन्तरमेवेति न दोषः, अत एव तत्र तत्तदुत्तरत्वादिक्रममपि गृह्यते । तथा बीजाङ्कुराद्यनेकावस्थो वृक्षरूपो धर्मी क्रमिकाभ्यस्ताभ्योऽतिरिक्तः शेषावस्थया पूर्णतया व्यज्यते । अयमाम्रवृक्ष इति, स च बीजादिभ्यो भिन्नाभिन्नः भेदा-भेदयोरनुभवात् । तथा गकारौकाराद्यनेकावस्थो गौरित्यादिरखण्ड-रूपेण क्रमिकाभ्यो गकाराद्यवस्थाभ्योऽतिरिक्तो विसर्जनीयादिचरमा-वस्थयाऽभिव्यज्यते इदं गौरिति पदं न तु गौर इतीत्यादिरूपेण । तच्च गकाराद्यवस्थाभ्यो भिन्नाभिन्नं भेदाभेदयोरनुभवात् स चार्थस्फु-टीकरणात्स्फोट इत्युच्यते । न च वर्णानां पदस्वरूपत्वाभावे कथमि-यन्तो वर्णाः क्रमविशेषविशिष्टा अस्यार्थस्य वाचका इति लोकव्यव-हार इति वाच्यम् । वर्णानां प्रत्येकरूपेण पदभेदेऽप्यवस्थाऽवस्थिनोरभेद-स्यापि सत्त्वेनैकैकस्यापि वर्णस्य बीजाङ्कुरादेर्वृक्षाभेदवद्, यदा भेद-स्यापि सत्त्वेनाक्षतेः स चैकैको वर्णः पदभावे सहकारीणि यानि वर्णान्तराणि तत्प्रतियोगित्वात् तत्सम्बन्धित्वाद् अनन्तपदरूपता-

मिवापन्नो भवतीति सर्वपदरूपत्वात्सर्वपदार्थाभिधानयोग्यतासम्पन्नो भवति। वस्तुतस्तस्य तत्त्वान्न नानात्वमत इवेत्युक्तं गोगणगौरनगर-इत्यादिषु गोत्वाभिधायिषु दृष्ट इति तत्तदभिधानशक्तिः सोमशोचिरादिषु ईश्वराद्यर्थाभिधायिषु पदेषु औवर्णो दृष्ट इति सोऽपि तत्तदभिधानशक्तिरिति अनन्तपदरूपता चैवं पूर्वगकारादुत्तरेण औरिति वर्णद्वयेन गण इति पदाद्व्यावर्त्य उत्तरश्च विसर्जनीयः पूर्वेण गकारौकाररूपवर्णद्वयेन गौरित्यादिपदेभ्यो व्यावर्त्यविशेषे गौरिति अखण्डे पदे गोत्ववाचके तादात्म्येनावस्थाप्यत इति प्रकारेण। एव ते बहवो वर्णा आनुपूर्वीविशेषसापेक्षाः पदाभेदतोऽर्थसङ्केतेन नियमिताः सहकारिविशेषेण सर्वाभिधानसमर्था अपि एतावत्सङ्ख्याका गकारौकारविसर्जनीया गोरूपमेवार्थमुपस्थापयन्तीति तेन प्रकारेण वर्णमुखेन तत्पदमेवाविवेकतः सङ्केत्यते यतः पदमेव वाच्यस्य वाचकम्। न चान्यस्यान्यरूपेण कुतः सङ्केतः, पदाख्यस्य बुद्धिग्राह्यस्य बुद्धिधर्मस्य स्फोटस्य ध्वनिरूपैरुपरक्ततया तदभेदात्। यथा सयुक्तं कपालद्वयं जलाहरणहेतुरित्यविवेकतो बालकेभ्य उपदिश्यते पटादिभ्यो घटस्य व्यावर्तकान्तरासम्भवात् ततश्च बालो घटस्य कपालाविवेकेनैव जलाहरणहेतुत्वं गृह्णाति तद्वत् स्फोटान्तरव्यावर्तनाय वर्णाविवेकेनैव सङ्केतोपदेशः सङ्केतग्रहश्च भवतीति न प्रागुक्तलोकव्यवहारानुपपत्तिरिति बोध्यम्। तदिदं स्फोटाख्यमेकबुद्धिविषयत्वादेकं पराख्यया पुरुषस्य प्रधानरूपशक्त्या एकप्रयत्नेन जनितं यावद्व्यवहारस्थायिवर्णवत् क्रमरहितं वर्णरहितम् अत एव निरंशम् अन्त्यवर्णस्य प्रत्ययरूपव्यापारेणाभिव्यक्तं परप्रतिपिपादयिषया वक्तृभिरभिधीयमानैः श्रोतृभिश्च श्रूयमाणैर्वर्णैरुपरागात्। अनादिवाग्व्यवहारवासनानां वशीकृतया लोकबुद्ध्या परमार्थवदन्योन्याभेदेन संवेदनेन प्रतीयते, न तु तदतिरि-

रूपेण । यद्यपि लाक्षाऽऽद्युपाधेरपगमे स्फटिकः स्वच्छधवलोऽनुभूयते उपाधिं विनाऽपि कदाचित् अस्य तूपाधिव्यतिरेकेण प्रतीत्यभावान्न केवलस्य प्रत्ययः । एवं च वागिन्द्रियविषयवर्णानां श्रोतृग्राह्याणां वाचकपदस्य चाविवेकरूपसङ्करः तस्य च पदस्य एतावतां वर्णानामेवमानुपूर्वीकमिलनमस्यार्थस्य वाचकमिति विषयव्यवस्था तु सङ्केतग्रहाद् भवति । सङ्केतस्तु पदपदार्थयोः सङ्केतकर्तुराहार्येतरेतराभेदारोपरूपेतरेतराध्यासरूप अभेदारोपे बीजं तु अविभाग एव त्रयाणामपि बुद्धिधर्मत्वेन परस्परमविभागात् । शब्देन बोद्धार्थस्यैव प्रत्ययात् । तथापि नाधुनिकसङ्केतो विषयव्यवस्थापकः तस्यानियतत्वात् । किं तु स्मृत्यात्मकः पाणिन्यादिस्मृत्यात्मकः । किं च स्मृत्यात्मको ज्ञानविषय एव बोधकः न स्वरूपसन्निति, न चाध्यासस्य सङ्केतत्वं कुतः ओमित्येकाक्षरब्रह्मेत्यादिशास्त्रेषु वृद्धिरादैजित्यादौ व्याकरणे कम्बुग्रीवादिमान्घटइत्यादौ लोके अमरानिर्जरा देवा इत्यादौ कोशे च योऽयं शब्दः सोऽर्थः योऽर्थः स शब्द इत्येवमितरेतराध्यासरूपस्यैव सकेतस्य दर्शनात् । शब्दवाच्यत्वलक्षणायां प्रमाणाभावाद् ईदृशानाद्यभेदारोपेणैवागमिनो मन्त्रार्थयोरभेदेनोपासनमामनन्ति, मीमांसकाश्च मन्त्रमयीं देवतामाहुः । एवभूते एव सकेते मुख्ये सतिकथं चिद्भेद परिकल्प्यास्यार्थस्याय वाचकइत्यपि कथचित्सकेतः यथा पाणिनेः कर्मणि द्वितीयेति यथा वोत्रः प्रगृह्यमिति । वाचकत्व च तादात्म्यमेवेति दिक् । यत्तु अस्मच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्व शक्तिरिति तत्कारणत्वादिसाधारणम् । एवमितरेतराध्यासरूपेण सकेतेन निमित्तेन एते शब्दार्थप्रत्ययाः सकीर्णा लोके दृश्यन्ते गौरिति शब्दो गौरित्यर्थो गौरितिज्ञानमिति तत्र शब्दार्थयोरितरेतराध्यासः सकेतग्रहेणैव

दर्शित: शब्दार्थयो. प्रत्ययेन सह तु एकाकारत्वादन्योन्या ध्यास. य एषां प्रविभागज्ञ: स सर्वज्ञवित् स एव शब्दादीना तत्वज्ञ: यथा च पदवाक्ययोस्तदर्थाना च सङ्करस्तथा वर्णपदयो-रपि तथा हि सर्वपदेषु पदान्तरतत्तदर्थसहकारेणास्ति वाक्यभवन-शक्ति. । कि च परेण बुभुत्सितार्थप्रत्यायनाय शब्दप्रयोग: परेण च प्रवृत्त्यादिविषयो बुभुत्सित: स च वाक्यार्थ एवेति सर्वे शब्दास्त त्परा इति यत्रापि केवलपदप्रयोगस्तत्रापि पदान्तरसाहित्ये-नैवार्थावगम: केवलस्यासामर्थ्यात् । एव च वाक्यमेव वाचक-पदानि तद्भागतया वर्णाना पदार्थवाचकत्ववद् वाक्यार्थवाच-कानि, एव च वर्णा यथा सर्वार्थाभिधानशक्तिप्रचित, एवं पदमपि एकैक सर्ववाक्यार्थाभिधानशक्ति इति । एव च वृक्ष इत्युक्ते आकाङ्क्षा-पूरणार्थं वृक्षोऽस्ति चलति विच्छिद्यते छिद्यते वेति पदान्तराणा योग्यताकाङ्क्षातात्पर्यादिवशादध्याहारो गम्यते इति तैर्वाक्यैर्वृक्षपदस्य सङ्करोऽविवेक' । यत्रापि क्रियाविशेषे तात्पर्यादिक नावधार्यते तत्राप्य स्तीति गम्यते सत्ताया: यदार्थेनाव्यभिचाररूपयोग्यतासत्वात् लोके-ऽस्त्यर्थ विना शुद्धपदार्थानवगतेर्वाऽव्यभिचार आकाङ्क्षासत्वाच्च । न चार्थ विशेषे तात्पर्यग्रहेऽपि तदर्थकपदानामानन्त्येन शब्दविशेषानु-माने किं नियामकं, स्वेच्छाया एव नियामकत्वात् । तथा क्रियाया असाधनाया अभावात् पचतीत्युक्ते सर्वकारकपदानामनुमानम् अनुमि-तानामपि कारकान्तरव्यावृत्त्यर्थश्चैत्रोऽग्निना तण्डुलानित्यादिरनुवाद: कदाचित्· क्व चिदध्याहारं विनाऽपि पदवाक्ययोरर्थाभेदनिमित्तक: सङ्कर: यथा छन्दोऽधीते इति वाक्यार्थे श्रोत्रियपदादस्य प्राणान्धार-यतीति वाक्यार्थे जीवति इति पदस्य प्रयोग एतावताऽपि श्रोत्रियपद-स्यादासमभिमिलितस्य नैवविधार्थबोधे सामर्थ्यं शब्दशक्तिस्वभावात् ।

त्रोपकरणभूतान् परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्व परिकल्प्यैवविधेन प्राणाग्निहोत्रेण परमात्मान वैश्वानरमाराधयेदिति-'उर एव वेदिर्लो मानि बर्हिर्हृदय गार्हपत्य' इत्यादिनोपदिश्यते। अतः परमात्मा पुरुषो त्तम एव वैश्वानर इति सिद्धम् ॥

समाप्त वैश्वानराधिकरणम् ॥ ६ ॥

इति श्री६ मद्भगवद्रामानुजाचार्यचरणकृतौ शारीरकमीमासाभाष्ये समन्वयाख्यस्य प्रथमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥



# अथ प्रथमाऽध्याये तृतीयः पादः ।

अथ द्युभ्वाद्यधिकरणम् ॥ १ ॥ **द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥**

आथर्वणिका अधीयते–

"यस्मिन्द्यौः पृथिवी चान्तरिक्ष-
मोतं मनस्सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या
वाचो विमुञ्चथाऽमृतस्यैष सेतु"रिति ।

तत्र संशयः–किमयं द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणो जीव उत परमात्मेति । किं युक्तम् । जीव इति । कुतः ।

"अरा इव रथनाभौ संहता यत्र नाड्यः
स एषोन्तश्चरते बहुधा जायमान"इति–

परस्मिञ् श्लोके पूर्ववाक्यप्रस्तुतं द्युपृथिव्याद्यायतनं 'यत्रे'ति पुनरपि सप्तम्यन्तेन परामृश्य तस्य नाड्याधारत्वमुक्त्वा पुनरपि "स एषोऽन्तश्चरते बहुधा जायमान" इति तस्य[1] बहुधाजायमानत्वञ्चोच्यते । नाडीसम्बन्धो देवादिरूपेण बहुधाजायमानत्वञ्च जीवस्यैव धर्मः[2] । अस्मिन्नपि श्लोके "ओतं मनस्सह प्राणैश्च सर्वै"रिति प्राणपञ्चकस्य मनसश्चाश्रयत्वमुच्यमानं जीवधर्म एव । एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथाकथञ्चित्सङ्गमयितव्यम्–इत्येवं प्राप्ते प्रचक्ष्महे–

'द्युभ्वाद्यायतनं स्वशब्दात्' ।

द्युपृथिव्यादीनामायतनं परं ब्रह्म । कुतः । 'स्वशब्दात्', परब्रह्मासाधारणशब्दात् । "अमृतस्यैष सेतु"रिति परस्य ब्रह्मणोऽसाधारणशब्दः ।

---

१ तस्येति लि पु नास्ति ।
२ जीवधर्म इति लि पु ।

"तमेव विद्वानमृत इह भवति
नान्यः पन्था अयनाय विद्यत"इति–

सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतु.[1] श्रूयते । सिनोतेश्च बन्धनार्थत्वात्सेतुः, अमृतस्य प्रापक इत्यर्थः । सेतुरिव वा सेतुः । नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः । ससारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इत्यर्थः । आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तः । आप्नोतीति ह्यात्मा, स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति, अतस्सोपि तस्यैव शब्दः । "यस्सर्वज्ञस्सर्ववि"दित्यादयश्चोपरितनाः परस्यैव ब्रह्मणश्शब्दाः । नाड्याधारत्वं तस्यापि सम्भवति,

"सन्तत शिराभिस्तु लम्बत्याकोशसन्निभ"मित्यारभ्य

"तस्याश्शिखाया मध्ये परमात्मा व्यवस्थित" इति श्रवणात् ।

'बहुधा जायमान' इत्यपि परस्मिन् ब्रह्मणि सङ्गच्छते,

"अजायमानो बहुधा विजायते
तस्य धीराः परिजानन्ति योनि"मिति–

देवादीना समाश्रयणीयत्वाय तत्तज्जातीयरूपसस्थानगुणकर्मसमन्वितः स्वकीय स्वभावमजहदेव स्वेच्छया बहुधा विजायते पर पुरुष इत्यभिधानात् । स्मृतिरपि–

"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृति स्वामधिष्ठाय सम्भवाम्यात्ममायये"ति ।

मनःप्रभृतिजीवोपकरणाधारत्व च सर्वाधारस्य परस्यैवोपपद्यते ।

इतश्च परमपुरुषः–

## मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥

अथ द्युपृथिव्याद्यायतनभूतः पुरुषः ससारबन्धान्मुक्तैरपि प्राप्यतया व्यपदिश्यते–

---

[1] हेतुश्चेति मु॰ पु॰ ।

"यदा[1] पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति[2] ॥
यथा नद्यस्स्यन्दमानास्समुद्रे
ऽस्तं[3] गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्य"मिति ।

संसारबन्धाद्विमुक्ता एव हि विधूतपुण्यपापा निरञ्जना[4] नामरूपाभ्यां विनिर्मुक्ताश्च । पुण्यपापनिबन्धनाऽचित्संसर्गप्रयुक्त[5]नामरूपभात्त्वमेव हि संसारः । अतो विधूतपुण्यपापैर्निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमं साम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव ।

एवं[6] परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य प्रत्यगात्मासाधारणशब्दाभावाच्चायं पर एवेत्याह—

## नानुमानमतच्छब्दात्प्राणभृच्च ॥ ३ ॥

यथाऽस्मिन् प्रकरणे प्रतिपादकशब्दाभावात् प्रधानं न[7] प्रतिपाद्यम्, एवं प्राणभृदपीत्यर्थः । अनुमीयत इत्य'नुमानं' परोक्तं प्रधानमुच्यते, अनुमानप्रमितत्वादनुमान[8]मिति वा । 'अतच्छब्दात्'—तद्वाचिशब्दाभावादित्यर्थः । अर्थाभावे यदव्ययमित्यव्ययीभावः ।

---

१ यथेति लि पु॰ पाठः ।
२ उपैति दिव्यमिति लि पु पाठः ।
३ समुद्रे ऽस्तमिति मु पु पाठः ।
४ पापनिरञ्जना इति लि पु पाठः ।
५ प्रसक्तेति लि पु पाठः ।
६ एवमिति मु पु नास्ति ।
७ नेति लि पु त्रुटितम् ।
८ आनुमानमिति पु द्वयेऽप्यत्र पाठः, न तु युक्तः ।

इतश्चाय न प्रत्यगात्मा ।

## भेदव्यपदेशात् ॥ ४ ॥

"समाने वृक्षे पुरुषो निमग्नो
ऽनीशया शोचति मुह्यमानः ।
जुष्ट यदा[1] पश्यत्यन्यमीश-
मस्य महिमानमेति[2]वीतशोकः" ॥-

इत्यादिभिर्जीवाद्विलक्षणत्वेनाय[3] व्यपदिश्यते । अनीशया[4]= भोग्यभूतया प्रकृत्या मुह्यमानश्शोचति जीवः । अथ यदा स्वस्मादन्य सर्वस्येश प्रीयमाणम्[5], अस्य-ईश्वरस्य महिमान च निखिलजगन्नियमनरूप पश्यति, तदा[6] वीतशोको भवति ।

## प्रकरणात् ॥ ५ ॥

प्रकरणञ्चेदं परस्य ब्रह्मण इत्य"ऽदृश्यत्वादिगुणको धर्मोक्ते"रित्यत्रैव दर्शितम्,[7] नाडीसम्बन्धबहुधाजायमानत्वमनःप्राणाधारत्वैश्च प्रकरणविच्छेदाऽऽशङ्कामात्रमत्र पर्यहार्ष्म[8] ।

## स्थित्यदनाभ्यां च ॥ ६ ॥

"द्वा सुपर्णा[9] सयुजा सखाया
समानं वृक्ष परिषस्वजाते ।
तयोरन्यः पिप्पल स्वाद्वत्त्य

१ यथेति लि पु पाठ ।
२ महिमानमितीति पु द्वयेऽपि पाठः, न तूपनिषदनुसारी ।
३ त्व नायमिति लि पु पाठ ।
४ अतिशया-इति तु लि· पु पाठापभ्रश ।
५ प्रियमाणेति पु द्वयेऽपि पाठ , पर त्वऽशुद्धः ।
६ तथेति लि पु ।
७ प्रतिपादितमिति लि पु पाठ· ।
८ °त्वेचप्रकरणविच्छेदाशङ्कामात्रपर्यहार्य-इति लि· पु पाठ· प्रामादिक ।
९ सुपर्ण-इति लि पु पाठ ।

ऽनश्नन्नन्यो ऽभि[1]चाकशीति'' ॥—

इत्येकस्य कर्मफलादनमन्यस्य च कर्मफलमनश्नत एव दीप्यमानतया शरीरान्तःस्थितिमात्रं प्रतिपाद्यते। तत्र कर्मफलमनश्नन्दीप्यमान एव सर्वज्ञोऽमृतसेतुः सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति, न पुनः कर्मफलमदन् शोचन्प्रत्यगात्मा। अतो द्युभ्वाद्यायतनं परमात्मेति सिद्धम् ॥

द्युभ्वाद्यधिकरणं समाप्तम् ॥ १ ॥

---

अथ भूमाधिकरणम् ॥ २ ॥ **भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥**

इदमामनन्ति च्छन्दोगाः 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्प''मिति। अत्राय 'भूम'—शब्दो भावप्रत्ययान्तो व्युत्पाद्यते, तथा हि, पृथ्वादिषु बहुशब्दः पठ्यते, ततः ''पृथ्वादिभ्य इमनिज्वे''ति इमनिच्प्रत्यये कृते ''बहोर्लोपो भू च बहो''रिति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति। भूमा—बहुत्वमित्यर्थः। अत्र चाय[1] बहुशब्दो वैपुल्यवाची, न सख्यावाची, ''यत्रान्यत् पश्यति'तदल्प''मित्यल्पप्रतियोगित्वश्रवणात्। अल्पशब्द[2]निर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव धर्मिपरश्च[3] निश्चीयते, न धर्ममात्रपरः। तदेव[4] भूमेति विपुल इत्यर्थः। वैपुल्यविशेष्यश्चेहात्मेत्यवगतः, ''तरति शोकमात्मवि''दिति प्रक्रम्य भूमविज्ञानमुपदिश्य 'आत्मैवेद सर्व'मिति तस्यैवोपसहारात्। अत्र सशय्यते—किमय भूमगुणविशिष्टः प्रत्यगात्मोत परमात्मेति। किं युक्तम्। प्रत्यगात्मेति। कुतः। 'श्रुत ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवि'दित्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिप्राणपर्यन्तेषूपास्यतयोपदिष्टेषु 'अस्ति भगवो

---

१ अन्यो अभीति लि पु पाठ।

२ अत्रायमिति पाठान्तरम्।

३ अन्यशब्देति मु पु पाठः।

४ ह्येवमेवेत्युभयत्रैव पाठ, परन्तु 'श्रुत ह्येव मे'-इत्येवोपनिषदि।

नाम्नो भूय, अस्ति भगवो वाचो भूय' इत्यादयः प्रश्नाः, "वाग्वाव नाम्नो भूयसी, मनो वाव वाचो भूय" इत्यादीनि च प्रतिवचनानि प्राणात् प्राचीनेषु दृश्यन्ते, प्राणे तु न पश्यामः। अतः प्राणपर्यन्त एवा-यमात्मोपदेश इति प्रतीयते। तेनेह प्राणशब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव, न वायुविशेषमात्रम्। 'प्राणो ह पिता प्राणो ह माते'त्याद-यश्च प्राणस्य चेतनतामवगमयन्ति 'पितृहा मातृहे'त्यादिना सप्राणेषु पितृप्रभृतिषूपमर्दकारिणि हिंसकत्वनिमित्तोपक्रोशवचनात्, तेष्वेव विग-तप्राणेष्वत्यन्तोपमर्दकारिण्यप्युपक्रोशाभाववचनाच्च हिंसायोग्यश्चेतन एव प्राणशब्दनिर्दिष्टः। अप्राणेषु स्थावरेष्वपि चेतनेषूपमर्दभावाभावयो-र्हिंसातदभावदर्शनाच्च हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते। अत एव चाऽरनाभिदृष्टान्तोपन्यासेन प्राणशब्दनिर्दिष्टः पर इति न भ्रमितव्यम्, परस्य हिंसाप्रसङ्गाभावात्। जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तस्थितित्वेन प्रत्य-गात्मन्येवाऽरनाभिदृष्टान्तोपपत्तेश्च। अयमेव च 'प्राण'-शब्दनिर्दिष्टो भूमा, 'अस्ति भगवः प्राणाद् भूय' इति प्रश्नस्य'दोवाव प्राणाद् भूय' इति प्रतिवचनस्य चाभावाद्भूमशब्दनात् प्राक् प्राणप्रकरणस्याविच्छेदात्। किञ्च, प्राणवेदिनोऽतिवादित्वमुक्त्वा, तमेव 'एष तु वा अतिवदती'ति प्रत्यभिज्ञाप्य, 'यस्सत्येनातिवदती'ति तस्य सत्यवदनं प्राणोपासनाङ्गत-योपदिश्य,[1]उपादेयस्य सत्यवदनस्य शेषितया पूर्वनिर्दिष्टप्राणयाथात्म्य विज्ञानं'यदा[2]वै विजानात्यथ सत्यं वदती'त्युपदिश्य, तत्सिद्ध्यर्थं च मन-नश्रद्धानिष्ठाप्रयत्नानुपदिश्य, तदारम्भाय च प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्य-गात्मस्व[3]रूपस्य सुखरूपताज्ञानमुपदिश्य तस्य च सुखस्य विपुलता 'भूमा त्वेव विजिज्ञासितव्य' इत्युपदिश्यते, तदेव प्रत्यगात्मन एवाविद्यावियुक्त रूपं विपुलसुखमित्युपदिष्टमिति'तरति शोकमात्मवि'दित्युपक्रमाविरोधश्च,

१ उपदिश्यत इति म पु पाठ ।
२ यदेति लि पु पाठ ।
३ स्वेति नास्ति लि पु ।

अतो भूमगुणविशिष्टः प्रत्यगात्मा । यत एव भूमगुणविशिष्ट', अत एवा[1]'ह'मर्थे प्रत्यगात्मनि 'अहमेवाधस्तादहमुपरिष्टा'दित्यारभ्य 'अहमेवेद सर्वे'मिति प्रत्यगात्मनो वैभवमुपदिशति । एव प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्य इत्येव प्राप्तेऽभिधीयते–

'भूमा सप्रसादादध्युपदेशात्',

[2]भूमगुणविशिष्टो न प्रत्यगात्माऽपि तु परमात्मा । कुतः । सप्रसादादध्युपदेशात् । सप्रसादः–प्रत्यगात्मा, "एष सप्रसादोऽस्माच्छरीरात्समुत्थाय पर ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इत्युपनिषत्प्रसिद्धेः । सप्रसादात् प्रत्यगात्मनोऽधिकतया भूमविशिष्टस्य सत्यशब्दाभिधेयस्योपदेशादित्यर्थः । सत्यशब्दाभिधेय च पर ब्रह्म । एतदुक्त भवति, यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिकतयो[3]त्तरोत्तराभिधानात्पूर्वेभ्य उत्तरेषामर्थान्तरत्वम्, एव प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनो ऽधिकतया निर्दिष्टस्सत्यशब्दाभिधेयस्तस्मा[4]दर्थान्तरभूत एव । सत्यशब्दनिर्दिष्ट एव भूमेति सत्याख्य पर ब्रह्मैव भूमेत्युपदिश्यत इति । तदाह वृत्तिकारः–"भूमा त्वेवेति भूमा ब्रह्म, नामादिपरम्परया ऽऽत्मन ऊर्ध्वमस्योपदेशा"दिति । प्राणशब्दनिर्दिष्टादधिकतया सत्यस्योपदेशः कथमवगम्यत इति चेत्, "स वा एष एव पश्यन्नेव मन्वान एवं विजानन्नतिवादी भवती"ति प्राणविदो ऽतिवादित्वमुक्त्वा[5] "एष तु वा अतिवदति यः सत्येनातिवदती'ति सत्यवेदित्वेनातिवादिन 'तु'शब्देन पूर्वस्मादतिवादिनो व्यावर्तयति । अत

१ अत एवेत्यस्य स्थाने यत एवा–इति लि पु ।

२ सप्रसाद इति अत्राधिक भवति मु पु ।

३ °धिकतयेति लि॰ पु॰ पाठ ।

४ °भिधेयतस्तस्मा°दिति लि॰ पु पाठ' ।

५ अतिवादित्वे मुक्त्वेत्यपभ्रष्ट पाठो लि॰ पु ।

एव 'एष तु वा अतिवदती'त्यत्र प्राणातिवादिनो न प्रत्यभिज्ञा । अतोऽस्याः तिवादित्वनिमित्त सत्य पूर्वातिवादित्वनिमित्तात्प्राणादधिकमिति विज्ञायते। ननु च प्राणवेदिन एव सत्यवदनमङ्गत्वेनोपदिष्टम्, अत.[1] प्राणप्रकरणाविच्छेद इत्युक्तम्, नैतद्युक्तम्[2]। 'तु'शब्देन ह्यतिवाद्यन्यः प्रतीयते, न तु तस्यैवातिवादिनः सत्यवदनाङ्गविशिष्टतामात्रम्,[3]। 'एष तु वा अग्निहोत्री यः सत्य वदती' त्यादिष्वग्निहोत्र्यन्तराप्रतीते. प्रतीतस्यैवाग्निहोत्रिणः सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते । अत्र त्वतिवाद्यन्तरत्वनिमित्त सत्यशब्दाभिधेय पर ब्रह्म प्रतीयते । सत्यशब्दश्च "सत्य ज्ञानमनन्त ब्रह्मे"त्यादिषु परस्मिन् ब्रह्मणि प्रयुक्तः । अतस्तन्निष्ठस्यातिवादिनः पूर्वस्मादधिकत्व सम्भवतीति वाक्यस्वरससिद्धमन्यत्व न बाधितव्यम् । अतिवादित्व हि वस्त्वन्तरात्पुरुषार्थतया ऽतिक्रान्तस्वोपास्यवस्तुवादित्वम् । नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्वोपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात्प्राणविदो ऽतिवादित्वम्, तस्यापि सातिशयपुरुषार्थत्वान्निरतिशयपुरुषार्थतयोपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति 'एष तु वा अतिवदति यस्सत्येनातिवदती'त्युक्तम् । सत्येनेतीत्थभूतलक्षणे तृतीया, सत्येन[4] परेण ब्रह्मणोपास्येनोपलक्षितो योऽतिवदतीत्यर्थः । अत एवैव शिष्यः प्रार्थयते "सोऽह भगवः सत्येनातिवदानी[5]"ति, आचार्यश्च "सत्य त्वेव विजिज्ञासितव्य" मित्याह । "आत्मन प्राण"इति च प्राणशब्दनिर्दिष्टस्यात्मन उत्पत्तिरुच्यते । अतः 'तरति शोकमात्मवि'दिति प्रक्रान्त आत्मा प्राण[6]शब्दनिर्दिष्टादन्य इति गम्यते । यत्तूक्तमस्ति भगवः प्राणाद्भूय इति प्रश्नस्याऽऽदेवाव

१ 'पदिष्टत -इति लि पु भ्रश ।
२ नैतद्युक्तमिति लि पु त्रुटितम् ।
३ मात्रे-इति लि पु भ्रश ।
४ सत्येवेति लि पु पाठ ।
५ वदामीति लि पु पाठ ।
६ प्रक्रान्त आत्मनो प्राणेति लि प पाठो न युक्त ।

प्राणाद्भूय इति प्रतिवचनस्य चादर्शनात्[1] अक्रान्त आत्मोपदेशः प्राणोपदेश-
पर्यवसानो गम्यत इति, तदयुक्तम्, न हि प्रश्नप्रतिवचनाभ्यामेवार्था-
न्तरत्वं गम्यते, प्रमाणान्तरेणापि तत्सम्भवात्। उक्तं च प्रमाणान्तरम्।
अस्ति भगवः प्राणाद्भूय इत्यपृच्छतो[2]ऽयमभिप्रायः—नामादिष्वाशाप-
र्यन्तेष्वप्यु[3]त्तरोत्तरभूयस्त्वदिष्टेषु तद्वदिन आचार्येणातिवादित्वं[4] नोक्तम्
प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु पुरुषार्थभूयस्त्वातिशयं मत्वा
नेन "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवती"त्य-
तिक्रान्तवस्तुवादि[5]त्वमुक्तम्। अतोऽत्रैवात्मोपदेशः समाप्त इति मत्वा
शिष्यो न पप्रच्छ। आचार्यस्त्विदमपि सातिशयं मत्वा निरतिशयपुरुषा-
र्थभूतं सत्यशब्दाभिधेयं परं ब्रह्म "एष तु वा अतिवदति यः सत्येनाति
वदती"ति स्वयमेवोपचिक्षेप। शिष्योऽपि परमपुरुषार्थरूपे परस्मिन्
ब्रह्मण्युपक्षिप्ते तत्स्वरूपतदुपासन[6]याथात्म्यबुभुत्सया 'सोऽहं भगवः स
त्येनातिवदानी'ति प्रार्थयामास। ततो ब्रह्मसाक्षात्कारनिमित्तातिवादि-
त्वसिद्धये ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनं 'सत्यं त्वेव विजिज्ञासि-
तव्य'मित्युपदिश्य, तदुपायभूतं ब्रह्ममननं "मतिस्त्वेव विजिज्ञासितव्ये"त्यु
पदिश्य, श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमर्थसिद्धं मत्वा
श्रवणोपायभूतां ब्रह्मणि श्रद्धां "श्रद्धा त्वेव विजिज्ञासितव्ये"त्युपदिश्य, तदु
पायभूतां च तन्निष्ठां "निष्ठा त्वेव विजिज्ञासितव्ये"त्युपदिश्य, तदुपायभूत
तदुद्योगभूत[7]प्रयत्नरूपां कृतिमपि "कृतिस्त्वेव विजिज्ञासितव्ये" त्युप-
दिश्य, श्रवणाद्युपक्रमरूपकृतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहितस्य
ब्रह्मणः सुखरूपता ज्ञातव्येति "सुखं त्वेव विजिज्ञासितव्य' मित्युपदिश्य,

---

१ अस्ति भगवः प्राणाद्भूय इति प्रश्नस्य दैवाव प्राणाद्भूय इति प्रश्नस्यादो वाव प्राणाद्भूय इति प्रतिवचनस्यादर्शनादिति लि पु विभ्रष्टः पाठः।

२ इत्यत्र पृच्छत इति लि पु पाठो नैव युक्तः।

३ अपिशब्दो नास्ति लि पु।

४ °वादित्वे—इत्यपभ्रंश लि पु।

५ वस्त्वतिवादीति लि पु।

६ तत्स्वरूपं तदुपासनमिति व्यस्तपाठो लि पु प्रामादिकः।

७ भूतेति नास्ति सु पु।

निरतिशयविपुलमेव सुख परमपुरुषार्थरूप भवतीति तस्यैव ब्रह्मणः सुखा रूपस्य निरतिशयविपुलता ज्ञातव्येति "भूमा त्वेव विजिज्ञासितव्य" इत्युपदिश्य, निरतिशयविपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे' ति । अयमर्थ —अनवधिकातिशयसुखरूपे ब्रह्मण्यनुभूयमाने ततोऽन्यत्किमपि न पश्यत्यनुभविता, ब्रह्म स्वरूपतद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य। अत ऐश्वर्यापरपर्यायविभूतिगुणविशिष्ट निरतिशयसुखरूप ब्रह्माऽनुभवस्तद्व्यतिरिक्तस्य वस्तुनोऽभावादेव किमप्यन्यन्न पश्यति, अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दु.ख च न पश्यति । तदेव हि सुखम्, यदनुभूयमान पुरुषानुकूल भवति । ननु चेदमेव जगद् ब्रह्मणोऽन्यतया ऽनु[1]भूयमान दुःखरूप परिमितसुखरूप च भवत्कथमिव ब्रह्मविभूतित्वेन तदात्मकतया ऽनुभूयमान सुखरूपमेव भवेत् । उच्यते—कर्मवश्याना क्षेत्रज्ञाना ब्रह्मणो ऽन्यत्वेनानुभूयमान कृत्स्न जगत्तत्तत्कर्मानुरूप दुःख च परिमितसुख च भवति । अतो ब्रह्मणो[2]ऽन्यतया परिमितसुखत्वेन दुःखत्वेन च जगदनुभवस्य कर्मनिमित्तत्वात् कर्मरूपाविद्याविमुक्तस्य तदेव जगद् विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गत सुखमेव भवति, यथा पित्तोपहतेन पीयमान पयः पित्ततारतम्येनाल्पसुख विपरीत च भवति । तदेव पयः पित्तानुपहतस्य सुखायैव भवति । यथैव राजपुत्रस्य पितुर्लीलोपकरणमतथात्वेना[3]नुसन्धीयमान प्रियत्वमनुपगत तथात्वानुसन्धाने प्रियतम भवति, तथा निरतिशयानन्दस्वरूपस्य ब्रह्मणोऽनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य लीलोपकरण तदात्मक चानुसन्धीयमान जगन्निरतिशयप्रीतये भवत्येव । अतो जगदैश्वर्यविशिष्टमनवधिकातिशयसुखरूप ब्रह्मानुभवँस्ततोऽन्यत् किमपि न पश्यति,[4] दु ख च न पश्यति । एतदेवोपपादयति वाक्यशेष· "स वा एष एव पश्यन्नेव

---

१ ह्यनु—इति· लि पु· पाठ ।

२ ब्रह्मणोऽन्यत्वेनानुभूयमानम् अन्यतयेति मु पु· ऽत्राधिक भवति न तु युक्तम ।

३ करणमेव तथात्वेनेति लि पु प्रामादिकम् ।

४ किमपि नश्यतीति लि· पु ।

मन्वान एव वि[1]जानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स[2] स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति अथ ये ऽन्यथा ऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्व ऽकामचारो भवती''ति । स्वराट्=अकर्मवश्य' । अन्यराजानः=कर्मवश्याः । तथा,

"न पश्यो मृत्यु पश्यति न रोग नोत दुःखताम् ।
सर्व ह पश्यः पश्यति सर्वमाप्नोति सर्वश''इति च ।

निरतिशयसुखरूपत्व च ब्रह्मणा 'आनन्दमयोऽभ्यासा'दित्यत्र प्रपञ्चितम् । अतः प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोऽर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशाद्भूमा पर ब्रह्म ।

## धर्मोपपत्तेश्च ॥ ८ ॥

अस्य भूम्नो ये धर्मा आम्नायन्ते तेऽपि परस्मिन्नेवोपपद्यन्ते । 'एतदमृत'मिति स्वाभाविकममृतत्वम् 'स्वे महिम्नी'त्यनन्याधारत्व[3] स एवाधस्ता'दित्यादि 'स एवेद सर्व'मिति सर्वात्मकत्वम्[4] 'आत्मनः प्राण' इत्यादि प्राणप्रभृतिसर्वस्योत्पादकत्वमित्यादयो हि धर्माः परमात्मन एव । यत्त्व'ऽहमेवाधस्ता'दित्यादिना सर्वात्मकत्व[4]मुपदिष्टम्, तद्भूमविशिष्टस्य ब्रह्मणोऽहग्रहेणोपासन[5]मुपदिश्यते, "अथाऽतो ऽहङ्कारादेश" इत्यहंग्रहोपदेशोपक्रमात् । अह[6]मर्थस्य प्रत्यगात्मनोऽपि ह्यात्मा परमात्मेत्यन्तर्यामिब्राह्मणादिषूक्तम । अतः प्रत्यगर्थस्य परमात्मपर्यवसानादऽहशब्दोऽपि परमात्मपर्यवसायीति प्रत्यगात्मशरीरकत्वेन परमात्मानुसन्धानार्थो ऽयमहग्रहोपदेश' । परमात्मन. सर्वशरीरतया सर्वात्मत्वात् प्रत्यगात्मनोऽप्यात्मा परमात्मा । तदेव[7] "अथात आत्मादेश" इत्या-

१ मत्वानरूप क्षि—इति लि पु ।

२ स इति नास्ति लि पु ।

३ महिम्नीत्यारभ्यानन्याधारत्वमिति लि पु पाठ. ।

४ सर्वात्मत्वमिति लि पु पाठः ।

५ ब्रह्मणोपासनमिति लि पु पाठः ।

६ स अहमिति लि पु पाठ' ।

दिना "ऽऽत्मैवेदं सर्व"मित्यन्तेनोच्यते । एतदेवो[1]पपादयितुं प्रत्यगात्मनोऽध्यात्मभूतात्परमात्मनः सर्वस्योत्पत्तिरुच्यते "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राण आत्मनः आकाश" इत्यादिनोपासकस्यान्तर्यामितयाऽवस्थितात्परमात्मनः सर्वस्योत्पत्तिरित्यर्थः । अतः परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहरहोपासनं कर्त्तव्यम् । तस्माद्भूमविशिष्टः परमात्मेति सिद्धम् ॥

भूमाधिकरणं समाप्तम् ॥ २ ॥

---

अथाक्षराधिकरणम् ॥ ३ ॥ **अक्षरमम्बरान्तधृतेः ॥ ६ ॥**

वाजसनेयिनो गार्गीप्रश्ने[2] समामनन्ति—"स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यऽस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छाय"मित्यादि । तत्र संशयः—किमेतदक्षरं प्रधानम्, जीवो वा, उत परमात्मेति । किं युक्तम् । प्रधानमिति । कुतः । 'अक्षरात्परतः पर"इत्यादिष्वक्षरशब्दस्य प्रधाने प्रयोगदर्शना, दस्थूलत्वादीनां च तत्र समन्वयात् । "यया तदक्षरमधिगम्यत" इत्यादिषु परस्मिन्नप्यक्षरशब्दो दृश्यत इति चेन्न, प्रमाणान्तरप्र[3]सिद्धश्रुतिप्रसिद्धयोः प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीतेः, प्रतीतपरिग्रहे विरोधाभावात् । किंच, "यदूर्ध्वं गार्गि दिवो यदवाक्[4] पृथिव्या" इत्यारभ्य सर्वस्य कालत्रितयवर्त्तिनः कारणभूताकाशाधारत्वे प्रतिपादिते "कस्मिन् नु[5] खल्वाकाश ओतश्च प्रोतश्चे"त्याकाशस्यापि कारणं तदाधारभूतं किमिति पृष्टे प्रत्यु[6]च्यमानमक्षरं सर्वविकारकारणतया तदाधारभूतं प्रमाणान्तरप्रसिद्धं[7] प्रधानमिति प्रतीयते । अतोऽक्षरं प्रधानम् । इति प्राप्ते—उच्यते—

---

१ तदेवेदमिति लि पु ।
२ गार्गिप्रश्न इति पु॰ द्वयेऽपि पाठः ।
३ प्रेति नास्ति लि पु ।
४॰ अर्वागिति मु पु पाठः प्रायः सर्वत्र । लि पु अत्र 'अर्वा'गिति ।
५ न्विति नास्ति लि॰ पु॰ ।
६ प्रतीति नास्ति लि पु ।
७ 'न्तरभूत प्रसिद्धमिति मु पु ।

'अक्षरमम्बरान्तधृतेः'

अक्षरं परं ब्रह्म। कुतः। अम्बरान्तधृतेः, अम्बरस्य–आकाशस्य अन्तः पारभूतम् अव्याकृतमम्बरान्तः, तस्य धृतेः। तदाधारतयाऽस्याक्षरस्योपदेशादिति यावत्। अयमर्थः–"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे"त्यत्राकाशशब्दनिर्दिष्टं न वायुमदम्बरम्, अपि तु तत्पारभूतमव्याकृतम्, अतस्तस्याव्याकृतस्याप्याधारत्वेनोच्यमानमक्षरं नाव्याकृतं भवितुमर्हतीति। नन्वाकाशशब्दनिर्दिष्टो न वायुमानिति कथमवगम्यते? उच्यते, "यदूर्ध्वं गार्गि दिवो यदवाक्[1] पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं चे"त्युक्ते त्रैकाल्यवर्तिनो विकारजातस्याधारतया निर्दिष्ट आकाशो न वायुमदाकाशो भवितुमर्हति, तस्यापि विकारान्तर्गतत्वात्। अतो ऽत्राकाशशब्दनिर्दिष्टं भूतसूक्ष्ममिति प्रतीयते। ततः[2] तस्यापि भूतसूक्ष्मस्याधारभूतं किमिति पृच्छ्यते[3] "कस्मिन्नु[4] खल्वाकाश ओतश्च प्रोतश्चे"ति। अतस्तदाधारतया निर्दिश्यमानमक्षरं न प्रधानं भवितुमर्हति। यत्तु श्रुतिप्रसिद्धात् प्रमाणान्तरप्रसिद्धं प्रथमं प्रतीयत इति, तच्च, अक्षरशब्दस्यावयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात्। सम्बन्धग्रहणदशायामऽर्थस्वरूपं येन प्रमाणेनावगम्यते, न तत्प्रतिपादनदशायामपेक्षणीयम्।

एवं तर्ह्यक्षरशब्दनिर्दिष्टो जीवोऽस्तु, तस्य भूतसूक्ष्मपर्यन्तस्य कृत्स्नस्याचिद्वस्तुन आधारत्वोपपत्तेः, अस्थूलत्वाद्युच्यमानविशेषणोपपत्तेश्च। "अव्यक्तमक्षरे लीयते" "यस्याव्यक्तं शरीरम्, यस्याक्षरं शरीरम्" "क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत" इत्यादिषु प्रत्यगात्मन्यप्यक्षरशब्दप्रयोगदर्शनादित्यत्रोत्तरम्–

## सा च प्रशासनात् ॥ १० ॥

१ अर्वागिति पुन. पुस्तकद्वयेऽपि।

२ तत इति नास्ति लि॰ पु।

३ पृच्छ्यते–इति लि पु।

४ तस्मिन्नु–इति मु पु पाठ.।

सा चाम्बरान्तधृतिरस्याक्षरस्य प्रशासनादेव भवतीत्युपदिश्यते, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्द्धमासा मासा[1] ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ती"त्यादिना प्रशासनं प्रकृष्टं शासनम् । न चेदृशं स्वशासनाधीन[2]सर्ववस्तुविधरणं बद्धमुक्तोभयावस्थस्यापि प्रत्यगात्मनः सम्भवति । अतः पुरुषोत्तम एव प्रशासित्रक्षरम् ।

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यभावः-अन्यत्वं, प्रधानादिभावं । अस्याक्षरस्य[3] परमपुरुषादन्यत्वं वाक्यशेषेण[4] व्यावर्त्यते "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु[5] खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे"ति[6] । अत्र द्रष्टृत्वश्रोतृत्वाद्युपदेशादस्याक्षरस्याचेतनभूतप्रधानभावो व्यावर्त्यते, सर्वैरदृष्टस्यैव सतस्सर्वस्य द्रष्टृत्वाद्युपदेशाच्च प्रत्यगात्मभावो व्यावर्त्यते । अत इयमन्यभावव्यावृत्तिरस्याक्षरस्य परमपुरुषतां द्रढयति । एवं वा ऽन्यभावव्यावृत्तिः, अन्यस्य सद्भावव्यावृत्तिरन्यभावव्यावृत्तिः । यथैतदक्षरमन्यैरदृष्टं सदन्येषां द्रष्टृ च सत् स्वव्यतिरिक्तस्य समस्तस्याधारभूतम्, एवमनेनादृष्टमेतस्य द्रष्टृ च सदेतस्याधारभूतमन्यन्नास्तीति वदन् 'नान्यदतोऽस्ति द्रष्टृ'त्यादिवाक्यशेषो ऽस्य सद्भावं व्यावर्तयन्नस्याक्षरस्य प्रधानभावं प्रत्यगात्मभावं च प्रतिषेधति । किं च, एतस्य वा अक्षरस्य

१ मासा इति नास्ति पु द्वयेऽपि ।
२ शासनं स्वशासनाधीनेति मु पु पाठः ।
३ अक्षरस्यापीति लि पु पाठ ।
४ शेषे-इति मु पु पाठ ।
५ तस्मिन्-इति लि पु पाठ ।
६ 'श्चेतीति-इति लि पु पाठ ।

प्रशासने गार्गि ददतो[1] मनुष्याः[2] प्रशंसन्ति यजमानं देवा दर्वीं पितरो ऽन्वायत्ता" इति श्रौतं स्मार्तञ्च यागदानहोमादिकं सर्वं कर्म यस्याज्ञया[3] प्रवर्तते तदक्षरं परब्रह्मभूतः पुरुषोत्तम एवेति विज्ञायते। अपि च, "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद् भवति यो वा एतदक्षरं गार्ग्यऽविदित्वा[4]ऽस्माल्लोकात् प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः" इति यदज्ञानात्संसारप्राप्तिः, यज्ज्ञानाच्चामृतत्वप्राप्तिः, तदक्षरं परं[5] ब्रह्मैवेति सिद्धम्॥

अक्षराधिकरणं समाप्तम्॥ ३॥

---

अथेक्षतिकर्माधिकरणम् ४। **ईक्षतिकर्मव्यपदेशात्सः॥ १२॥**

आथर्वणिकाः सत्यकामप्रश्नेऽधीयते—'यः पुनरेतं त्रिमात्रेणैवो-मित्येतेनैवाक्षरेण[6] परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत, इति। अत्र ध्यायतीक्षतिशब्दावेकविषयौ[7], ध्यानफलत्वादीक्षणस्य 'यथाक्रतुरस्मिंल्लोके पुरुष' इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात्, परं पुरुषमित्युभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च। तत्र संशय्यते—किमिह परं पुरुषमिति निर्दिष्टो जीवसमष्टिरूपाण्डाधिपति[8]श्चतुर्मुख उत सर्वेश्वरः पुरुषोत्तम इति। किं युक्तम्। समष्टिक्षेत्रज्ञ इति। कुतः। "स यो ह वै तद् भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयती"ति प्रक्रम्यैकमात्रं प्रणवमुपासीनस्य

---

१ वदत इति लि पु।
२ मनुष्यानिति क्वचित्।
३ परस्याज्ञाप्रवदते—इति लि॰ पु पाठः।
४ गार्गि विदित्वेति मु पु॰ अत्र पाठः।
५ परमिति नास्ति लि पु।
६ त्रिमात्रेणोमित्यनेनैवेति पु द्वयेऽपि पाठः।
७ शब्दौ विवेकविषयाविति लि पु॰ पाठ।
८ रूपेन्द्राधिप इति लि॰ पु पाठः।

## जीवमुख्यप्राणलिङ्गान्नेति चेत्, न, उपासात्रैविध्या[1]-दाश्रितत्वादिह[2] तद्योगात् ॥ ३२ ॥

"न वाच विजिज्ञासीत वक्तार विद्यात् त्रिशीर्षाणं त्वाष्ट्रमहनम-रुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छम्" इत्यादिजीवलिङ्गात्, 'यावद-स्मिन् शरीरे प्राणो वसति तावदायु अथ खलु प्राण एव प्रज्ञात्मेदं शरीर परिगृह्योत्थापयती"ति मुख्यप्राणलिङ्गाच्च नाध्यात्मसम्बन्धभूमेति चेत्, उपासात्रैविध्याद्धेतोः—उपासनात्रैविध्यमुपदेष्टु तत्तच्छब्देनाभिधानं निखि-लकारणभूतस्य ब्रह्मणः । स्वरूपेणानुसन्धान भोक्तृवर्गशरीरकत्वेनानुस-न्धान भोग्यभोगोपकरणशरीरकत्वेनानुसन्धानञ्चेति त्रिविधमनुसन्धान-मुपदेष्टुमित्यर्थः । तदिद त्रिविध ब्रह्मानुसन्धान प्रकरणान्तरेऽप्याश्रितम् "सत्य ज्ञानमनन्त ब्रह्म' "आनन्दो ब्रह्मे"त्यादिषु स्वरूपानुसन्धान 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तञ्चा-निरुक्तं च निलयन चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्च सत्य चानृ-तञ्च समभव"दित्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया चानुसन्धानम् । इहापि प्रकरणे तत् त्रिविधमनुसन्धान युज्यत एवेत्य-र्थः । एतदुक्तम्भवति । यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतन-विशेषाणाञ्च परमात्मासाधारणधर्मयोगस्तदभिधायिना शब्दानां परमा-त्मवाचिशब्दैः सामानाधिकरण्यं वा दृश्यते, तत्र परमात्मनस्तत्तद्वि-दविद्विशेषान्तरात्मत्वानुसन्धान प्रतिपिपादयिषितमिति ।

अतोऽत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम् ॥

समाप्तमिन्द्रप्राणाधिकरणम् ॥

इति श्रीमद्भगवद्रामानुजाचार्य्यचरणकृतौ शारीरकमीमांसाभाष्ये समन्वयाख्यस्य प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥

---

१ उपास्यत्रैविध्यादित्येकस्मिन्पुस्तके पाठः, स तु न युक्त', भाष्याद्यपरिगृही तत्वात् ।

२ इह चेति चकारघटित सूत्रपाठ एकस्मिन् पुस्तके भवति, न तु युक्त , प्रायो ऽनुपलम्भात् 'इह तद्योगा'दित्येतद्व्याचष्टे इहार्पीतो'तिश्रुतप्रकाशिकाविरोधाच्च ।

# अथ प्रथमाऽध्याये द्वितीयः पादः ।



प्रथमे पादे, ऽधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणामल्पास्थिरफलत्वमवगम्य वेदान्तवाक्येषु चाऽऽपातप्रतीतानन्तस्थिरफलब्रह्मस्वरूपतदुपासनसमुपजातपरमपुरुषार्थलक्षणमोक्षापेक्षोऽवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिर्वेदान्तवाक्यानां परस्मिन् ब्रह्मणि निश्चितप्रमाणभावस्तदितिकर्त्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तम् ।

शास्त्रारम्भसिद्धये, अनन्तविचित्रास्थिरत्रसरूपभोक्तृभोग्यभोगोपकरणभोगस्थानलक्षणनिखिलजगदुदयविभवलयलील महानन्दैककारणं परं ब्रह्म "यतो वा इमानी"त्यादिवाक्यं बोधयतीति च प्रत्यपादि, जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधायि, शास्त्रप्रमाणकत्वञ्च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि स्वरूपेणैव परमपुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयान्निरूप्यत इत्यब्रूम, निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म चेतनाद्यन्वयादानुमानिकप्रधानादर्थान्तरभूतश्चेतनविशेष एवेत्युपापीपदाम, स च स्वाभाविकाऽनवधिकातिशयानन्दविपश्चित्त्वनिखिलचेतनभयाभयहेतुत्वसत्यसङ्कल्पत्वसमस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्तोभयावस्थाज्जीवशब्दाभिलपनीयाच्चार्थान्तरभूत इति च समार्थयामहि[1] स चाप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूप इत्युदैरिराम, आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवच्चिर्दिश्यमानस्सकलेतरचेतनाचेतनविलक्षणः स एवेति समगरिष्महि, परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयो द्युसम्बन्धितया प्रत्यभिज्ञानात्स एवेत्यातिष्ठामहि, परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्टेन्द्रादिशब्दैरभिधीयत इत्यब्रूमहि । तदेवमतिपतितसकलेतरप्रमाणसम्भावनाभूमिस्सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेत-

१ समादधीमहीति पाठान्तरम्, न तु युक्तम ।

रसमस्तवस्तुविलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम् ।

अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु, यद्यपि वेदान्तवेद्यं ब्रह्मैव, तथाऽपि कानिचिद् वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्तर्भूतवस्तुविशेषस्वरूपप्रतिपादनपराण्येवेत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते । तत्राऽस्पष्टजीवलिङ्गानि वाक्यानि द्वितीये पादे विचार्यन्ते, स्पष्टलिङ्गानि तृतीये, तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥

अथ सर्वत्र प्रसिद्ध्यधिकरणम्१ ।

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

इदमाम्नायते छान्दोग्ये "अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूप" इत्यादि । अत्र स क्रतुं कुर्वीतेति प्रतिपादितस्योपासनस्य उपास्यो मनोमयः प्राणशरीर इति निर्दिश्यत इति प्रतीयते । तत्र संशयः, किं मनोमयत्वादिगुणकः क्षेत्रज्ञ उत परमात्मेति । किं युक्तम् । क्षेत्रज्ञ इति । कुतः । मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्, परमात्मनस्त्व"प्राणो ह्यमना" इति तत्प्रतिषेधाच्च । न च 'सर्वं खल्विदं ब्रह्मे'ति पूर्ववाक्यनिर्दिष्टं ब्रह्मात्रोपास्यतया सम्बन्द्धुं शक्यते, 'शान्त उपासीते'त्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मक[illegible]पदेशायोपात्तत्वात् । न च 'स क्रतुं कुर्वीते'त्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म सम्बध्यत इति शक्यं वक्तुम्, स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात् । 'मनोमयः प्राणशरीर' इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः ।

एवं निश्चिते जीवत्वे 'एतद्ब्रह्मे'त्युपसंहारस्थं ब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इत्येवं प्राप्ते ब्रूमः, "सर्वत्र प्रसिद्धोपदेशात्" । मनोमयत्वादिगुणकः परमात्मैव । कुतः । सर्वत्र वेदान्तवाक्येषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरिहोपदेशात्, प्रसिद्धं हि

मनोमयत्वादि ब्रह्मणः, यथा "मनोमयः प्राणशरीरनेता," "स एषो ऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयोऽमृतमयो[1] हिरण्मयः," "हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति," "न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन" तथा "प्राणस्य प्राणः," "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति," "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इत्यादिषु। मनोमयत्वम्, विशुद्धेन मनसा ग्राह्यत्वम्। प्राणशरीरत्वम्, प्राणस्याप्याधारत्वनियन्तृत्वञ्च। एवं च सति 'एष म आत्माऽन्तर्हृदय एतद्ब्रह्मे'ति ब्रह्म-शब्दोऽपि मुख्य एव भवति। 'अप्राणो ह्यमना'इति मनआयत्तं ज्ञानं प्राणायत्तां स्थितिञ्च ब्रह्मणो निषेधति।

अथवा—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'त्यत्रैवोपासनं विधीयते, सर्वात्मकं ब्रह्म शान्तः सन्नुपासीतेति। "स क्रतुं कुर्वीते"ति तस्यैव गुणोपादानार्थोऽनुवादः। उपादेयाश्च गुणा मनोमयत्वादयः। अतः सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः। तत्र सन्देहः, किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यत उत परमात्मेति। किं युक्तम्। प्रत्यगात्मेति। कुतः। तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः, सर्व-शब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्, ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव, परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वेश्वरस्यापहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते। प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्मशब्दः प्रयुज्यते, अत एव 'परमात्मा परं ब्रह्मे'ति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेर्बृहत्त्वं च विद्यते, "स चानन्त्याय कल्पते" इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां 'तज्जला'निति हेतुनिर्देशोऽप्युप-

१ मनोमयोऽमृतो हिरण्मय इति पाठान्तरम्, अमृतं हिरण्मय इति पुस्तकान्तरे।

पद्यते । तदयमर्थः—अयं जीवात्मा स्वतोऽपरिच्छिन्नरूपत्वेन ब्रह्मस्वरूपः सन्ननाद्यविद्यया देवतिर्य्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठत इति ।

अत्र प्रतिविधीयते सर्वत्र प्रसिद्धोपदेशात्, सर्वत्र सर्वं खल्विदं ब्रह्मेति निर्दिष्टे सर्वस्मिञ् जगति ब्रह्मशब्देन तदात्मतयाऽभिधीयमानं परं ब्रह्मैव, न प्रत्यगात्मा । कुतः । "प्रसिद्धोपदेशात्', "तज्जलान्"िति हेतुतः, "सर्वं खल्विदं ब्रह्मे"ति प्रसिद्धवदुपदेशात्[1] । ब्रह्मणो जातत्वाद् ब्रह्मणि लीनत्वाद्ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते यस्माज्जगज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धास्तदेवात्र ब्रह्मेति प्रतीयते, तच्च परमेव ब्रह्म । तथाहि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे"ति प्रक्रम्य "आनन्दो ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते । तथा "स कारणङ्करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप" इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते । एवं हि सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम् । अतः परब्रह्मणो जातत्वात्तस्मिल्ँ लीनत्वात् तेन प्राणनात् तदात्मकतया तादात्म्यमुपपन्नम् । अतस्सर्वप्रकारं सर्वशरीरकं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परब्रह्मणस्सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति । परब्रह्म हि कारणावस्थकार्यावस्थसूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम् । एवंभूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणः सकलहेयप्रत्यनीककल्याणगुणाकरत्वञ्च विरुध्यते, प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यऽप्रसङ्गात्, प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम् ॥ यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यत इति, तदसत्, जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासम्भवात् । मुक्तस्यानवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं

१ प्रसिद्धवन्निर्देशादिति पाठान्तरम् ।

जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न सम्भवतीति जगद्व्यापारवर्जमित्यत्र वक्ष्यते। जीवकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः, तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात्। अतः परमात्मैवात्र ब्रह्मशब्दाभिधेयः। इममेव सूत्रार्थमभियुक्ता बहु मन्यते, यदाह वृत्तिकारः "सर्वं खल्विति सर्वात्मा ब्रह्मेश" इति।

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यऽनादर" इति। मनोमयः=परिशुद्धेन मनसैकेन ग्राह्यः, विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते। अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते, मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात्। प्राणशरीरः=जगति सर्वेषां प्राणानां धारकः, प्राणो यस्य शरीरमाधेयं विधेयं शेषभूतञ्च स प्राणशरीरः। आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीत्युपपादयिष्यते। भारूपः=भास्वररूपः, अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः। सत्यसङ्कल्पः=अप्रतिहतसङ्कल्पः। आकाशात्मा=आकाशवत् सूक्ष्मस्वच्छस्वरूपः, सकलेतरकारणभूतस्याप्याकाशस्याप्यात्मभूत इति वा ऽऽकाशात्मा। स्वयं च प्रकाशते ऽन्यांश्च प्रकाशयतीति वा ऽऽकाशात्मा। सर्वकर्मा=क्रियत इति कर्म, सर्वं जगद्यस्य कर्म असौ सर्वकर्मा, सर्वा क्रिया यस्यासौ वा सर्वकर्मा। सर्वकामः=काम्यन्त इति कामा भोग्यभोगोपकरणादयः, ते परिशुद्धाः सर्वविधास्तस्य सन्तीत्यर्थः। सर्वगन्धस्सर्वरसः=अशब्दमस्पर्शमित्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधारणा निरवद्याः निरतिशयाकल्याणाः स्वभोग्यभूताः सर्वविधाः गन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः=उक्तमिदं रसपर्यन्तं सर्वं कल्याणगुणजातं स्वीकृतवान्। अभ्यात्त इति भुक्ता ब्राह्मणा इतिवत्कर्त्तरि क्तः प्रतिपत्तव्यः। अवाकी=वाक् उक्तिः, सोऽस्य नास्तीत्यवाकी। कुत इत्याह "अनादर" इति, अवा-

प्तसमस्तकामत्वेनादर्त्तव्याभावात् आदररहित, अत एवावाकी=अजल्पाकः परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्य्यन्तमखिल जगत्तृणीकृत्य जोषमासीन इत्यर्थः । त एते गुणाः विवक्षिताः परमात्मन्येवोपपद्यन्ते ।

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

तमिम गुणसागर पर्य्यालोचयता खद्योतकल्पस्य शरीरसम्बन्धनिबन्धनापरिमितदुःखसम्बन्धयोग्यस्य बद्धमुक्तावस्थजीवस्य प्रस्तुतगुणलेशसम्बन्धगन्धोऽपि नोपपद्यत इति नास्मिन्प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ।

## कर्म्मकर्तृव्यपदेशाच्च ॥ ४ ॥

"एतमितः प्रेत्याभिसम्भवितास्मी"ति प्राप्यतया पर ब्रह्म व्यपदिश्यते, प्राप्तृया च जीवः, अतः प्राप्ता जीव उपासकः, प्राप्य पर ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ।

## शब्दविशेषात् ॥ ५ ॥

"एष म आत्माऽन्तर्हृदय" इति शारीरः षष्ठ्या निर्दिष्ट उपास्यस्तु प्रथमया । एव समानप्रकरणे वाजिनाञ्च श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः, यथा "व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयो यथा ज्योतिरधूम"मिति । अन्तरात्मन्निति सप्तम्यन्तेन शारीरो निर्दिश्यते, पुरुषो हिरण्मय इति प्रथमयोपास्यः । अतः पर एवाऽऽत्मोपास्यः ।

इतश्च शारीरादन्यः ।

## स्मृतेश्च ॥ ६ ॥

"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च,"

"यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्,"

'ईश्वरस्सर्वभूताना हृद्देशेऽर्जुन तिष्ठति

भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया

तमेव शरणङ्गच्छे"ति च शारीरकमुपासक परमात्मानं चोपास्य स्मृतिर्दर्शयति ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेत्, न, निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

अल्पायतनत्वमर्भकौकस्त्वम्, तद्व्यपदेशोऽल्पत्वव्यपदेशः। "एष म आत्माऽन्तर्हृदय" इत्यणीयसि हृदयायतने स्थितत्वादणीयान् "व्रीहेर्वा यवाद्वे"त्यादिना ऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नाय परमात्मा ऽपि तु जीव एव, "सर्वगत सुसूक्ष्म यद्भूतयोनि परिपश्यन्ति धीरा" इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वावगमाज्जीवस्य चाराग्रमात्रत्वव्यपदेशादिति चेन्नैतदेवम्, परमात्मैव ह्यणीयानित्येव निचाय्यत्वेन व्यपदिश्यते, एव निचाय्यत्वेन–एवं द्रष्टव्यत्वेन, एवमुपास्यत्वेनेति यावत्, न पुनरणीयस्त्वमेवास्य स्वरूपमिति। व्योमवच्चाय व्यपदिश्यते, स्वाभाविक महत्त्व चा ैव व्यपदिश्यते "ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य" इति, अत उपासनार्थमेवाल्पत्वव्यपदेशः। तथा हि "सर्व खल्विद ब्रह्म तज्जलानिति शान्त उपासीते" ति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्यात्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मक ब्रह्मोपासीतेत्युपासन विधाय, "अथ खलु क्रतुमयोऽय पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवती" ति यथोपासन प्राप्यसिद्धिमभिधाय, 'स क्रतु कुर्वीते'ति गुणविधानार्थमुपासनमनूद्य "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस. सर्वमिदमभ्यात्तोऽवाक्यऽनादर" इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणाश्चोपादेयान् प्रतिपाद्य, "एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वे" त्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयो[1]पास्यस्य परमपुरुषस्योपासनार्थमवस्थानमुक्त्वा, "एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यस्सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर" इत्यऽन्तर्हृदये ऽवस्थितस्योपास्यमानस्य प्राप्याकारन्निर्दिश्य, 'एष म आत्मान्तर्हृदय एतद्ब्रह्मे'त्येवम्भूत पर ब्रह्म पर-

१ तथा कर्मतयेति पाठान्तरम।

मञ्चारुण्येनास्मद्बुद्धिजीविषयेऽस्मद्धृदये सनिहितमितीदमनुसन्धान वि-
धाय, "एतमितः प्रेत्याभिसम्भवितास्मी" ति यथोपासनं प्राप्तिनिश्चया-
नुसन्धान च विधाय, "इति यस्य स्यादद्धा न विचिकित्साऽस्ती" ति एव-
विधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न सशयोऽस्तीत्युपसहृ-
तम् । अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वञ्च ॥

## सम्भोगप्राप्तिरिति चेत्, न, वैशेष्यात् ॥ ८ ॥

जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्त्तित्वमभ्युपगतञ्चेत्तद्वदेव
शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत्, न, हेतुवैशेष्यात् । न हि
शरीरान्तर्वर्त्तित्वमेव सुखदुःखोपभोगे हेतुरपि तु पुण्यपापरूपकर्मपरवश-
त्वम् । तत्त्वऽपहतपाप्मनः परमात्मनो न सम्भवति, तथा च श्रुतिः
"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती' ति ।

सर्वत्रप्रसिद्ध्यधिकरणं समाप्तम् १ ॥

---

यदि परमात्मा न भोक्ता, एव तर्हि सर्वत्र भोक्तृतया प्रतीयमानो
जीव एव स्यादित्याशङ्क्याह—

अथाऽत्त्रधिकरणम २ ।

## अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्लीष्वाम्नायते

"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन [१]
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स" इति ।

अत्र, ओदनोपसेचनसूचितोऽत्ता किं जीव एव उत परमात्मेति
सन्दिह्यते । किं युक्तम् । जीव इति । कुतः । भोक्तृत्वस्य कर्मनिमित्तत्वात्,
जीवस्यैव तत्सम्भवात् ।

अत्रोच्यते—"अत्ता चराचरग्रहणात्" । अत्ता परमात्मैव । कुतः ।
चराचरग्रहणात्, चराचरस्य कृत्स्नस्याऽत्तृत्व हि तस्यैव सम्भवति । न
चेदङ्कर्मनिमित्त भोक्तृत्वम्, अपितु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य

---

१ ओदन—इति पुल्लिङ्गपाठ प्रामाणिक' ओदनमिति तु क्वचित ।

ब्रह्मणो विष्णोः सहर्तृत्वम्, "सोऽध्वनः पारमाप्नोति तद्विष्णोः परम पद"मित्यत्रैव दर्शनात्, तथाच मृत्युर्यस्योपसेचनमिति वचनात् ब्रह्म च क्षत्र चेति कृत्स्नञ्चराचरं जगदिहादनीयौदनत्वेन गृह्यते, उपसेचन हि नाम स्वयमद्यमान सदन्यस्यादनहेतुः, अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमित्यवगम्यते । ईदृश चादनमुपसहार एव । तस्मादीदृश जगदुपसहारित्वरूपम्भोक्तृत्व परमात्मन एव ।

## प्रकरणाच्च ॥ १० ॥

प्रकरणञ्चेदं परस्यैव ब्रह्मणः

"महान्त विभुमात्मानम्मत्वा धारो न शोचति" ।

"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन

यमेवैष वृणुते तेन[1] लभ्यः तस्यैष आत्मा विवृणुते[2] तनू स्वा"मिति

प्रकृत, 'क इत्था वेद यत्र स' इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव प्रस्तुत पूर्व प्रत्यभिज्ञायते ।

अथ स्याचाय ब्रह्मक्षत्रौदनसूचितः पुरुषोऽपहतपाप्मा परमात्मा, अनन्तरम्

"ऋतम्पिबन्तौ सुकृतस्य लोके गुहा प्रविष्टौ परमे परार्द्धे ।

छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता"

इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात् । द्वितीयश्च प्राणो बुद्धिर्वा स्यात् । ऋतपान हि कर्मफलभोग एव, स च परमात्मनो न सम्भवति, बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योपकरणभूतयोर्यथाकथञ्चित्पानेऽन्वयः सम्भवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते, तदेकप्रकरणस्वात्पूर्वप्रस्तुतोऽत्ताऽपि स एव भवितुमर्हतीति, अत्रोच्यते—

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

---

१ स तेनेति क्वाचित्कपाठस्तु नास्त्युपनिषदि ।
२ आत्मा वृणुते—इति पाठोऽन्यत्र ।

न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टावृतं पिबन्तावित्युच्येते अपि तु जीवात्मपरमात्मानौ हि तथा व्यपदिश्येते । कुतः । तद्दर्शनात्, अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते । परमात्मनस्तावत्,

"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितङ्गह्वरेष्ठं पुराणम् ।

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"ति ।

जीवस्यापि,

"या प्राणेन सम्भवत्यदितिर्देवतामयी ।

गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायते"ति ।

कर्मफलान्यत्तीत्यदितिर्जीव उच्यते । प्राणेन सम्भवतीति प्राणेन सह वर्त्तते । देवतामयी, इन्द्रियाधीनभोगा । गुहां प्रविश्य तिष्ठन्ती, हृदयपुण्डरीकोदरवर्त्तिनी । या भूतेभिर्व्यजायत, पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायते । एवञ्च सति 'ऋतं पिबन्ता'विति व्यपदेशश्छत्रिणो गच्छन्तीतिवत्प्रतिपत्तव्यः । यद्वा, प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ।

## विशेषणाच्च ॥ १२ ॥

अस्मिन् प्रकरणे जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते ।

"ब्रह्मजज्ञन्देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेती" ति ।

ब्रह्मजज्ञो जीवः, ब्रह्मणो जातत्वाज् ज्ञत्वाच्च, तन्देवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः । तथा

"यस्सेतुरीजानानामक्षरम् ब्रह्म यत्परम्

अभयं तितीर्षतां पारन्नाचिकेतं शकेमही" त्युपास्यः परमात्मोच्यते, नाचिकेतम्, नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः । "आत्मानं रथिनं विद्धि शरीरं रथमेव च"त्यादिनोपासको जीव उच्यते, तथा ।

"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पद"मिति प्राप्यप्राप्ता-

रावभिधीयेते जीवपरमात्मानौ । इहापि च्छायातपावित्यज्ञत्वसर्वज्ञत्वाभ्यान्तावेव विशिष्य व्यपदिश्येते ।

अथ स्यात्–

"येय प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके' इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयत इति, नैतदेवम् । न हि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽय प्रश्नः, तथा सति पूर्ववरद्वयवरणानुपपत्तेः । तथा हि, पितुः सर्ववेदसदक्षिणक्रतुसमाप्तिवेलाया दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्य मन्यमानेन कुमारेण नचिकेतसाऽऽस्तिकाग्रेसरेण स्वात्मदानेनाऽपि पितुः क्रतुसाद्गुण्यमिच्छता कस्मै मा दास्यसीत्यसकृत् पितर पृष्टवता स्वनिर्बन्धरुष्टपितुर्वचनात् मृत्युसदन प्रविष्टेन स्वसदनात्प्रोषुषि यमेऽतद्दर्शनात्[1] तत्र तिस्रो रात्रीरुपोषुषा स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रत्ते वरत्रये आस्तिक्यातिरेकात्प्रथमेन वरेण स्वात्मान प्रति पितुः प्रसादो वृतः । एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते । द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूताग्निविद्या वृता, तदपि देहातिरिक्तात्मानभिज्ञस्य न सम्भवति, अतस्तृतीयेन वरेण यदिद व्रियते

"येय प्रेते विचिकित्सा मनुष्ये अस्तीत्येके, नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽह वराणामेष वरस्तृतीय" इति,

अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽय प्रश्नः क्रियते । एव च येय प्रेत इति न शरीरवियोगमात्राभिप्रायम् अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम्, यथा "न प्रेत्य सञ्ज्ञाऽस्ती' ति । अयमर्थः, मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषयवादिविप्रतिपत्तिनिमित्तास्ति-

१ तद्दर्शनादित्येव तु सर्वत्र पुस्तके लभ्यते, सोपि तदर्शनं निमित्तीकृत्येति योजयितुं शक्य ।

नास्त्यात्मिका येय विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्य त्वयाऽनुशिष्टोऽहं विद्या जानीयामिति। तथा हि बहुधा विप्रतिपद्यन्ते—केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षण मोक्षमाचक्षते, अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम्, अपरे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षण कैवल्यरूपम्, अपरे ऽपहतपाप्मान परमात्मानमभ्युपगच्छन्तस्तस्यैवोपाधिससर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणमोक्षमातिष्ठन्ते, त्रैय्यन्तनिष्णातास्तु निखिलजगदेककारणस्याऽशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते । तत्र मोक्षस्वरूप तत्साधन च त्वत्प्रसादाद्विद्यामिति—नचिकेतसा पृष्टो मृत्युः तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभनेन चैन परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानम्परमात्मोपासन तत्पदप्राप्तिलक्षणम्मोक्ष च "तं दुर्दर्शं गूढमनुप्रविष्ट"मित्यारभ्य "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पद"मित्यन्तेनोपदिश्य तदपेक्षिताश्च विशेषानुपदिदेशेति सर्व समञ्जसम् । अतः परमात्मैवात्तेति सिद्धम् ॥

अत्त्रऽधिकरण समाप्तम् ॥ २ ॥

---

अथाऽन्तराधिकरणम् ३ ।

## अन्तर उपपत्तेः ॥ १३ ॥

इदमामनन्ति छन्दोगाः "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्मे"ति। तत्र सन्देहः, किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मा? उत चक्षुरिन्द्रियाधिष्ठातृदेवताविशेषः? उत जीवात्मा? अथ परमात्मे?ति। किं युक्तम् । प्रतिबिम्बात्मेति । कुतः । प्रसिद्धवन्निर्देशात् दृश्यत इत्यपरोक्षाभिधानाच्च ।

जीवात्मा वा, तस्यापिहि चक्षुषि विशेषेण सन्निधानात्प्रसिद्धिरुपपद्यते, उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनः शरीरे स्थितिगती निश्चिन्वन्ति। "रश्मिभिरेषोऽस्मिन्प्रतिष्ठित" इति श्रुतिप्रसिद्ध्या चक्षुःप्रतिष्ठो देवताविशेषो वा, एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतम इति प्राप्ते प्रचक्ष्महे—अन्तर उपपत्तेः, अक्ष्यन्तर. परमात्मा। कुतः। "एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्म," "एत संयद्वाम इत्याचक्षते एत हि सर्वाणि वामान्यभि संयन्ति," "एष उ एव वामनीरेष हि सर्वाणि वामानि नयति," "एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाती" त्येषा गुणाना परमात्मन्येवोपपत्तेः।

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

चक्षुषि स्थितिनियमनादयः परमात्मन एव "यश्चक्षुषि तिष्ठ"न्नित्यादिना व्यपदिश्यन्ते,'य एषोऽक्षिणि पुरुष' इति स एव प्रतीयते। अतः प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्यते, तत एव दृश्यत इति साक्षात्कारव्यपदेशोऽपि योगिभिर्दृश्यमानत्वादुपपद्यते।

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

इतश्चाक्ष्याधारः पुरुषोत्तमः,"कं ब्रह्म खं ब्रह्मे"ति प्रकृतस्य सुखविशिष्टस्य ब्रह्मण उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थं च 'य एषोऽक्षिणि पुरुष' इत्यभिधानात्। एवकारो नैरपेक्ष्य हेतोर्द्योतयति।

नन्वग्निविद्याव्यवधानात् 'कं ब्रह्म खं ब्रह्मे'ति प्रकृत ब्रह्म नेह सन्निधत्ते, तथाहि, अग्नयः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे' ति ब्रह्मविद्यामुपदिश्य, "अथ हैनङ्गार्हपत्योऽनुशशासे"त्यारभ्या ऽग्नीनामुपासनमुपदिदिशुः। न चाग्निविद्या ब्रह्मविद्याङ्गमिति वक्तुं शक्यम्, ब्रह्मविद्याफलानन्तर्गततद्विरोधिसर्वायुःप्राप्तिसन्तत्यविच्छेदादिफलश्रवणात्। उच्यते, "प्राणो ब्रह्मे"तदमृतमेतदभयमेतद्ब्रह्मे"त्युभयत्र ब्रह्मसशब्दनात् "आचार्यस्तु ते गतिं वक्ते" त्यग्निवचनाच्च गत्युपदेशात् पूर्वं ब्रह्मविद्याया असमाप्तेस्तन्मध्यगताग्निविद्या ब्रह्मविद्याङ्गमिति निश्चीयते। अथ हैन गार्ह-

पत्योऽनुशशासेति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च । किञ्च व्याधिभिः प्रति[1]पूर्णोऽस्मी इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकामोपहतिपूर्वकगर्भजन्मजरामरणादिभवामया[2]भितप्तायोपकोसलाय एषा 'सोम्य तेऽस्मद्विद्याऽऽत्मविद्या चे'ति समुच्चित्योपदेशान्मोक्षैकफलात्मविद्याङ्गत्वमग्निविद्याया प्रतीयते । एव चाङ्गत्वेऽवगते सति फलानुकीर्त्तनमर्थवाद इत्यवगम्यते । न चात्र मोक्षविरोधि फल किञ्चिच्छ्रूयते "अपहते पापकृत्यां लोकीभवति सर्वमायुरेतिज्योग् जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयन्त भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्चे"त्यमीषा फलाना मोक्षाधिकृतस्यानुगुणत्वात् । अपहते पापकृत्याम्, ब्रह्मप्राप्तिविरोधिपापकर्म्मा ऽपहन्ति । लोकी भवति, तद्विरोधिनि पापे निरस्ते ब्रह्मलोक प्राप्नोति । सर्वमायुरेति, ब्रह्मोपासनपरिसमाप्तेर्यावदायुरपेक्षित तत्सर्वमेति । ज्योग्जीवति व्याधिभिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति । नास्यावरपुरुषाः क्षीयन्ते, अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयश्चब्रह्मविद एव भवन्ति । नास्याब्रह्मवित्कुले भवती 'ति श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते । उप वयन्त भुञ्जामोऽस्मिंश्च लोके ऽमुष्मिँश्च, वयमग्नयस्तमेनमुपभुञ्जामः यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति । अतोऽग्निविद्यायाः ब्रह्मविद्याङ्गत्वेन तत्सन्निधानाविरोधात्सुखविशिष्टप्रकृतमेव ब्रह्मेहोपासनस्थानविधानार्थं गुणवधानार्थं चोच्यते । नन्वा'चार्य्यस्तु ते गति वक्ते'ति गतिमात्रपरिशेषणादाचार्य्येण गतिरेवोपदिश्यते इति गम्यते, तत्कथ स्थानगुणविध्यर्थतोच्यते । तदभिधीयते,आचार्य्यस्ते गति वक्तेत्यस्यायमभिप्रायः ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासमुपकोसलमुज्जीवयितु स्वपरिचरणप्रीता गार्हपत्यादयो गुरोरग्नयस्तस्मै ब्रह्मस्वरूपमात्र तदङ्गभूताञ्चाग्निविद्यामुपदिश्य "आचार्य्याद्धैव विद्या विदिता साधिष्ठ प्रापयती[3]"तिश्रुत्यर्थमालोच्य साधुतमत्वप्राप्त्यर्थमाचार्य एवास्य सयद्वामत्वादिगुणक परं ब्रह्म तदुपासन-

---

[1] परीति पुस्तकेषु प्राय पाठः ।
[2] भवभयेति पाठान्तरम ।
[3] प्रापदिति–इति तु पाठान्तरम् ।

स्थानमर्चिरादिका च गतिमुपदिशत्विति मत्वाऽऽचार्य्यस्तु ते गतिं वक्तेत्यवोचन्। गतिग्रहणमुपदेश्यविद्याशेषप्रदर्शनार्थम्, अत एवाचार्य्योऽपि "अहन्तु ते तद्वक्ष्यामी"त्यभिधाय यथा "पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत" इत्युपक्रम्य संयद्वामत्वादिकल्याणगुणविशिष्ट ब्रह्माक्षिस्थानोपास्यमर्चिरादिकाञ्च गतिमुपदिदेश। अतः 'कं ब्रह्म खं ब्रह्मे'ति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राभिधानादयमक्ष्याधारः परमात्मा। ननु च 'कं ब्रह्म खं ब्रह्मे'ति परं ब्रह्माभिहितमिति कथमवगम्यते यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे। यावता कं ब्रह्म खं ब्रह्मेति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति, 'नाम ब्रह्म' 'मनो ब्रह्मे'त्यादिवचनसारूप्यात्तत्राह—

## अत एव च स ब्रह्म ॥ १६ ॥

यतस्तत्र "यदेव कं तदेव खं"मिति सुखविशिष्टस्यैवाकाशस्याभिधानम्, अत एव 'खं'—शब्दाभिधेयः स आकाशः परं ब्रह्म। एतदुक्तं भवति, अग्निभिः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'त्युक्ते उपकोसल[1] उवाच "विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामी"ति। अस्यायमभिप्रायः, न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितम्, जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्ममोपदेशाय प्रवृत्तत्वात्। अतो ब्रह्मैवोपास्यमुपदिष्टम्। तत्र प्रसिद्धैः प्राणादिभिस्समानाधिकरणं ब्रह्म निर्दिष्टम्। तेषु प्राणविशिष्टत्वं जगद्धरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति 'विजानाम्यहं यत्प्राणो ब्रह्मे'त्युक्तवान्, तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यत्वेन विशेषणत्वम्? उतान्योन्यव्यवच्छेदकतया निरतिशयानन्दब्रह्मस्वरूपसमर्पणपरत्वेन वा? तत्र पृथग्भूतयोः शरीरतया विशेषणत्वे वैषयिकसुखभूताकाशयोर्नियामकत्वं ब्रह्मणः स्यादिति स्वरूपावगतिर्न स्यात्। अन्योऽन्यव्यवच्छेदकत्वे अपरिच्छिन्नानन्दैकस्वरूपत्वं ब्रह्मणः स्यादित्यन्यतरप्रकारनिर्दिधार-

---

१ उपकोशल इति तालव्यघटितपाठोऽपि दृश्यते न तु युक्तः।

यिषया "क च तु ख च न विजानामी"त्युक्तवान् । उपकोसलस्येममाशयं जानन्तोऽनयो "यद्वाव क तदेव ख यदेव ख तदेव क"मित्यूचिरे । ब्रह्मणस्सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः । अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूप चेति निगमितम् 'प्राणञ्च हास्मै तदाकाश चोचु'रिति । अतः "क ब्रह्म ख ब्रह्मे"त्यत्रापरिच्छिन्नसुख ब्रह्म प्रतिपादितमिति पर ब्रह्मैव तत्र प्रकृतम्, तदेव चात्राक्ष्याधारतयाऽभिधीयत इत्यक्ष्याधारः परमात्मा ।

## श्रुतोपनिषत्कगत्यभिधानाच्च[1] ॥ १७ ॥

श्रुतोपनिषत्कस्याधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाना ऽर्चिरादिका गतिर्या, तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुष श्रुतवते'ति "अर्चिषमेवाभि[2]सम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्ष"मित्यारभ्य "चन्द्रमसो विद्युतन्तत्पुरुषोऽमानवः स एनान्[3] ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त नावर्तन्त" इत्यन्तेनोपदिशतीत्यतोऽयमक्षिपुरुषः परमात्मा

## अनवस्थितेरसम्भवाच्च नेतरः ॥ १८ ॥

प्रतिबिम्बादीनामक्षिणि नियमेनाऽनवस्थानादमृतत्वादीना च निरुपाधिकानान्तेष्वसम्भवाच्च परमात्मन इतरश्छायादिरक्षिपुरुषो भवितुमर्हति । प्रतिबिम्बस्य तावत्पुरुषान्तरसन्निधानायत्तत्वान्न नियमेनावस्थानसम्भव, जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम्, देवतायाश्च "रश्मिभिरेषोऽस्मिन् प्रतिष्ठित"इति रश्मिद्वारेणावस्थितिवचनाद्देशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानम् । सर्वेषामेवैषा निरुपाधिकाऽमृतत्वादयो न सम्भवन्त्येव । तस्मादक्षिपुरुषः परमात्मा ॥

अन्तराधिकरणं समाप्तम् ॥ ३ ॥

---

१ चरहित सूत्रपाठो लिखितपुस्तके ।
२ अर्चिषमभीति मु पु पाठो न युक्त' ।
३ एतानिति पाठः पुस्तकद्वये 'पि न युक्त. ।

'स्थानादिव्यपदेशाच्चे'त्यत्र "यश्चक्षुषि तिष्ठ'न्नित्यादिना प्रतिपाद्यमानस्वक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धं कृत्वाऽक्षिपुरुषस्य परमात्मत्वं साधितम्। इदानीं तदेव समर्थयते—

अथान्तर्याम्यधिकरणम् ४।

**अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥**

काण्वा माध्यन्दिनाश्च वाजसनेयिनः समामनन्ति—"यः पृथिव्यान्तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत' इति। एवमप्स्वग्न्यन्तरिक्षवायुद्य्वादित्य[1]दिक्चन्द्रतारकाऽऽकाशतमस्तेजस्सु देवतेषु च, सर्वेषु च भूतेषु, प्राणवाक्चक्षुःश्रोत्रमनस्त्वग्विज्ञानरेतःस्वात्मात्मीयेषु च तिष्ठन्तं तत्तदन्तरभूतं तत्तदऽवेद्य[2] तत्तच्छरीरकं तत्तद्यमयन्तं कञ्चिन्निर्दिश्य "एष त आत्माऽन्तर्याम्यमृत" इत्युपदिश्यते। माध्यन्दिनपाठे तु 'यस्सर्वेषु लोकेषु तिष्ठन् यः सर्वेषु देवेषु[3] यस्सर्वेषु यज्ञेष्वि"ति च पर्यायाः, "यो विज्ञाने तिष्ठ"न्नित्यस्य पर्यायस्य स्थाने "य आत्मनि तिष्ठ"न्निति पर्यायः 'स त आत्माऽन्तर्याम्यमृत"इति च विशेषः। तत्र संशय्यते—किमयमन्तर्यामी प्रत्यगात्मोत परमात्मेति। किं युक्तम्। प्रत्यगात्मेति। कुतः। वाक्यशेषे 'द्रष्टा श्रोते'ति करणायत्तज्ञानताश्रुतेरेव द्रष्टुरेवान्तर्यामित्वोपदेशा"न्नान्योऽतोऽस्ति द्रष्टे"ति द्रष्ट्रन्तरनिषेधाच्चेत्येवं प्राप्तेऽभिधीयते—

'अन्तर्याम्यधिदैवाधिलोकादिषु[4] तद्धर्मव्यपदेशात्'। अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्याम्यपहतपाप्मा परमात्मा नारायणः। काण्वपाठसिद्धेभ्योऽधिदैवादिमद्भ्यो वाक्येभ्यो[5]ऽधि-

---

१ अमृत इत्येवसिद्धमन्तरिक्षवाय्वादित्येत्यादि लि० पु० पाठ, अप्स्वग्न्य वाय्वादित्येति मु पु पाठ। श्रुत्यनुसारेण तु स्थापित।

२ तत्तद्वेद्यमिति मुद्रितपुस्तके लिखितपुस्तके च पाठः। तत्र तत्तद्वेद्य यस्येत्यर्थ कथञ्चिद्योजनीय।

३ वेदेष्विति पाठान्तरम्।

४ अन्तर्याम्यधिलोकादिष्विति मुद्रितपुस्तके ऽत्र स्थाने पाठः।

५ वाक्येभ्य इति नास्ति लि० पु।

कान्यधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थम-धिदैवाधिलोकादिष्वित्युभयोरुपादानम् । तदेवमुभयेष्वपि वाक्येष्वन्त-र्यामी परमात्मेत्यर्थः । कुतः । तद्धर्मव्यपदेशात्—परमात्मधर्मो ह्ययम् यदेक एव सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति । तथा ह्युद्दालकप्रश्नः 'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयती' त्युपक्रम्य तमन्तर्यामिणं ब्रूहीति, तस्य चोत्तरं 'यः पृथिव्यां तिष्ठ'न्नित्या-रभ्योक्तम् । तदेतत्सर्वाल्लोकान् सर्वाणि च भूतानि सर्वाणि च दैव-तानि सर्वान् वेदान् सर्वांश्च यज्ञानन्तःप्रविश्य सर्वप्रकारं नियमनं सर्वश-रीरतया सर्वस्यात्मत्वं च सर्वज्ञात्सत्यसङ्कल्पात् पुरुषोत्तमादन्यस्य न सम्भवति । तथा हि,[1] "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा" "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभव"दित्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्यात्मत्वमित्यादीनि वदन्ति । तथा सुबालोपनिषदि "नैवेह किञ्चनाग्र आसीदमूलमना-धारमिमाः[2] प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यं च नारायण" इत्यारभ्य "अन्तःशरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद यस्यापः शरीर"मित्यादि "यस्य मृत्युः शरीरं यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेद स[3] एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति परस्यैव ब्रह्मणः सर्वात्मत्वं सर्वशरीर-कत्वं सर्वनियन्तृत्वं च प्रतिपाद्यते । स्वाभाविकं चामृतत्वं परमात्मन एव धर्मः । न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिकम्, अपि तु स्वभा-वत एव सर्वज्ञत्वात्सत्यसङ्कल्पत्वाच्च स्वत एव । तथा च श्रुतिः—

"पश्यत्यचक्षुस्स शृणोत्यकर्णः ।
अपाणिपादो जवनो ग्रहीते[4]"ति ।

१ हीति नास्ति सु॰ पु॰ । २ अनाधारा इमा इति पू॰ पाठ॰ ।
३ स इति नास्ति पु॰ द्वयेऽपि ।
४ एवमेव व्युत्क्रमेण प्रथमद्वितीयपादौ पुस्तकद्वये ऽपि स्तः ।

न च दर्शनश्रवणादिशब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचका अपि तु रूपादिसाक्षात्कारस्य। स च रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा, परस्य तु स्वत एव। "नान्योऽतोऽस्ति द्रष्टे"त्येतदपि पूर्ववाक्योदितात्रियन्तुर्द्रष्टुरन्यो द्रष्टा नास्तीति वदति। "य पृथिवी न वेद" "यमात्मा न वेद" इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत्पूर्वमुक्तम् तदेवा 'ऽदृष्टो द्रष्टाऽश्रुतः श्रोते'ति निगमय्य 'नान्योऽतोऽस्ती' त्यादिना तस्य नियन्तुर्नियन्त्रन्तरं निषिध्यते। 'एष त आत्मा' 'स त आत्मे'ति च 'त' इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानो ऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति।

## न च स्मार्त्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥

स्मार्त्तं, प्रधानं, शारीरो, जीवः। स्मार्त्तं शारीरश्च नान्तर्यामी, अतद्धर्माभिलापात्—तयोरसम्भावितधर्माभिलापात्। स्वभावत एव सर्वस्य द्रष्टृत्वं[1] सर्वस्य नियन्तृत्वं सर्वस्यात्मत्वं स्वत एवामृतत्वं च तयोर्न सम्भावनागन्धमर्हति। एतदुक्तम्भवति, यथा स्मार्त्तमचेतनं सर्वज्ञत्वसर्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति, तथा जीवोऽप्यतद्धर्मत्वादिति। अमीषाङ्गुणानां परमात्मन्यन्वयः, प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः।

निरपेक्षं च हेत्वन्तरमाह—

## उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥

उभये माध्यन्दिनाः काण्वाश्चा ऽन्तर्यामिणो नियाम्यत्वेन वागादिभिरचेतनैस्सममेनं शारीरमपि विभज्याधीयते "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत" इति माध्यन्दिनाः, 'यो विज्ञाने तिष्ठ'न्नि

१ सर्वस्य श्रोतृत्वमित्यधिकः पाठो लिखितपु।

त्यादि च काण्वाः । परमात्मनियाम्यतया तस्माद्विलक्षणत्वेनैनमधीयत इत्यर्थः । अतोऽन्तर्य्यामी प्रत्यगात्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम् ॥

समाप्तमन्तर्याम्यधिकरणम् ॥ ४ ॥

---

अथादृश्यत्वाधिकरणम् ५ ।

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥

आथर्वणिका अधीयते—"अथ परा यया तदक्षरमधिगम्यते

यत्तदद्रेश्य[1]मग्राह्यमगोत्रमवर्ण-

मचक्षुःश्रोत्रन्तदपाणिपादम् ।

नित्य विभु सर्वगत सुसूक्ष्म-

न्तदव्यय यद्भूतयोनिम्परिपश्यन्ति धीरा"इति,

तथोत्तरत्रा"क्षरात् परतः परः" इति । तत्र सन्दिह्यते—किमिहा दृश्यत्वादिगुणकमक्षरम् अक्षरात् परतः परश्च प्रकृतिपुरुषौ,वयोभयत्र परमात्मैवेति । किं प्राप्तम्[2]। प्रकृतिपुरुषाविति । कुतः । अस्याक्षरस्या'दृष्टो द्रष्टे'त्यादाविव न द्रष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयते । 'अक्षरात् परतः पर' इति च सर्वस्माद्विकारात् परभूतादक्षरादस्मात्परः क्षेत्रज्ञ. समष्टिपुरुषः प्रतिपाद्यते । एतदुक्तम्भवति—रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिभूताश्रय दृश्यत्वादिकं प्रतिषिध्यमान पृथिव्यादिसजातीयसूक्ष्मरूपाचेतनमेवोपस्थापयति, तच्च प्रधानमेव, तस्मात्परत्वञ्च समष्टिपुरुषस्यैव प्रसिद्धम्, तदधिष्ठितञ्च प्रधान महदादिविशेषपर्य्यन्त विकारजात प्रसूत इति । तत्र दृष्टान्ता उपन्यस्यन्ते—

'यथोर्णनाभिः[3] सृजते गृह्णते च

यथा पृथिव्यामोषधयः सम्भवन्ति ।

यथा सतः पुरुषात्केशलोमानि

---

१ यत्तदतीन्द्रियमिति लि पु पाठ ।

२ किं तावत्प्राप्तमिति लि॰ पु पाठ॰ ।

३ यथोर्णुनाभिरिति मुद्रितपुस्तके पाठो ऽत्रान्यत्र च भवति ।

तथाऽक्षरात्सम्भवतीह विश्व''मिति।

अतो ऽस्मिन् प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते इत्येव प्राप्ते ऽभिधीयते[1]–

'अदृश्यत्वादिगुणको धर्मोक्तेः,' अदृश्यत्वादिगुणको ऽक्षरात्परतः परश्च परमपुरुष एव। कुतः। तद्धर्मोक्तेः–'यस्सर्वज्ञस्सर्ववि'दित्यादिना सर्वज्ञत्वादिका[2]स्तस्यैव धर्मा उच्यन्ते। तथाहि, 'यया तदक्षरमधिगम्यत' इत्यादिना ऽदृश्यत्वादिगुणक[मक्षरमभिधाय 'तथाऽक्षरात्सम्भवतीह विश्व'मिति तस्माद्विश्वसम्भवञ्चाभिधाय

''यस्सर्वज्ञः सर्वविद् यस्य ज्ञानमयन्तपः।

तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायत''इति–

भूतयोने][3] रक्षरस्य सर्वज्ञत्वादि प्रतिपाद्यते। पश्चादक्षरात्परतः पर इति च प्रकृतमदृश्यत्वादिगुणक भूतयोन्यक्षरम् सर्वज्ञमेव परत्वेन व्यपदिश्यते। अतो'ऽक्षरात्परतः पर' इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्ते, तस्य सर्वज्ञस्य विश्वयोनेस्सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवात्। अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते।

इतश्च न प्रधानपुरुषौ[4]।

## विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ॥ २३॥

विशिनष्टि हि प्रकरणं प्रधानात् पुरुषाच्च[5] भूतयोन्यक्षरम्, व्यावर्त्तयतीत्यर्थः, एकविज्ञानेन सर्वविज्ञानोपपादनादिभिः। तथा ताभ्यामस्याक्षरस्य भेदश्च व्यपदिश्यते 'अक्षरात्परत पर' इत्यादिना। तथा हि, ''स ब्रह्मविद्या सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहे''ति

१ ब्रूम इति लि पु॰ पाठ।
२ य सर्वज्ञ सर्वविदित्यादिका इति लि पु पाठ।
३ [ ] अङ्कलितपाठो लि पु त्रुटितः।
४ सूत्रानन्तरम 'इतश्च न प्रधानपुरुषा'विति लि॰ पुस्तके ऽस्ति।
५ प्रधानाच्च पुरुषाच्चेति मु पु पाठ।

सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता । परविद्यैव च सर्वविद्याप्रतिष्ठा । तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाऽथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ—कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्भवती''ति ब्रह्मविद्यायाः सर्वविद्याऽऽश्रयत्वाद् ब्रह्मविज्ञानेन सर्वं विज्ञातम्भवतीति कृत्वा ब्रह्मस्वरूपमनेन पृष्टम् । ''तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा चे''ति ब्रह्म प्रेप्सुना द्वे विद्ये वेदितव्ये, ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः । अत्र परोक्षं शास्त्रजन्यं ज्ञानम् । अपरोक्षं योगजन्यं ज्ञानम् । तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षज्ञानम् । तच्च भक्तिरूपापन्नं 'यमेवैष वृणुते तेन लभ्य'[1] इत्यत्रैव विशिष्यमाणत्वात् । तदुपायश्चागमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम्,

> तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति
>
> यज्ञेन दानेन तपसाऽनाऽऽशकेने''ति श्रुतेः ।

आह च भगवान् पराशरः—

> 'तत्प्राप्तिहेतुर्ज्ञानं च[2] कर्म्म चोक्तं महामुने ।
>
> आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते'' इति ।

'तत्राऽपरा ऋग्वेदो यजुर्वेद' इत्यादिना 'धर्मशास्त्राणी'त्यन्तेनाऽऽगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम्, साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुभूतत्वात् । ''अथ परा यया तदक्षरमधिगम्यत'' इत्युपासनाख्यं ब्रह्मसाक्षात्कारलक्षणं भक्तिरूपापन्नं ज्ञानमुच्यते । 'यत्तदद्रेश्य'मित्यादिना परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणः स्वरूपमुच्यते । 'यथोर्णनाभिः सृजते गृह्णते चे'त्यादिना यथोक्तस्वरूपात् परस्माद् ब्रह्मणोऽक्षरात् कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता, 'विश्व'मिति वचनाच्चाचेतनमात्रस्य ।

१ स तेन लभ्य इति मु पु ।
२ हेतुर्विज्ञानमिति क्वचित्पाठो भवति ।

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।

अन्नात्प्राणो मनस्सत्य लोकाः कर्मसु चामृत" मिति–

ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते । तपसा ज्ञानेन, "यस्य ज्ञानमय तप" इति वक्ष्यमाणत्वात् । चीयते–उपचीयते, 'बहु स्या'मिति सङ्कल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुख भवतीत्यर्थः । 'ततोऽन्नमभिजायते', अद्यत इत्यन्नम्, विश्वस्य भोक्तृवर्गस्य भोग्यभूत भूतसूक्ष्ममव्याकृत परस्माद् ब्रह्मणो जायत इत्यर्थः । प्राणमनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्त सर्वं विकारजात तस्मादेव जायते । 'यस्सर्वज्ञस्सर्ववि'दित्यादिना सृष्ट्युपकरणभूत सार्वज्ञ्यसत्यसङ्कल्पत्वादिकमुक्तम् । सर्वज्ञात्सत्यसङ्कल्पात्परस्मात् ब्रह्मणो ऽन्नादेतत् कार्याकार ब्रह्म नामरूपविभक्त भोक्तृभोग्यरूप च जायते । 'तदेतत्सत्य'मिति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते ।

मन्त्रेषु कर्माणि कवयो यान्यऽपश्य-
स्तानि त्रेतायां बहुधा सन्ततानि ।
तान्याचरत नियत सत्यकामा" इति–

सार्वज्ञ्यसत्यसङ्कल्पत्वादिकल्याणगुणाकरमक्षर पुरुष स्वतस्सत्य[१] कामयमानास्तत्प्राप्तये फलान्तरेभ्यो विरक्ता ऋग्यजुस्सामाथर्वसु कविभिर्दृष्टानि वर्णाश्रमोचितानि त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरतेति । 'एष वः पन्था' इत्यारभ्य 'एष वः पुण्यस्सुकृतो ब्रह्मलोक'इत्यन्तेन कर्मानुष्ठानप्रकार श्रुतिस्मृतिचोदितेषु कर्मस्वेकतरकर्मवैधुर्येपीतरेषामनुष्ठितानामपि निष्फलत्वमयथानुष्ठितस्य चाननुष्ठितसमत्व[२]मभिधाय,

"प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवर येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू[३] ते पुनरेवापियन्ति" ॥

---

१ सत्य नित्यमिति लि पु पाठ ।
२ निष्फलत्वमयथानुष्ठितसमत्वमभिधायेति लि· पु पाठ· ।
३ जरामृत्युमिति क्वचित्पाठो भवति ।

इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चाऽवरं कर्माचरता पुनरावृत्तिमुक्त्वा "तपश्श्रद्धे ये ह्युपवसन्ती" त्यादिना पुनरपि फलाभिसन्धिरहित ज्ञानिनाऽनुष्ठित कर्म ब्रह्मप्राप्तये भवतीति प्रशस्य, "परीक्ष्य लोका" नित्यादिना केवलकर्मफलेषु विरक्तस्य यथोदित-कर्मानुगृहीत ब्रह्मप्राप्त्युपायभूत ज्ञानम् जिज्ञासमानस्य चाचार्योपसदन विधाय, "तदेतत्सत्य यथा सुदीप्ता"दित्यादिना "सोऽविद्याग्रन्थि विकिरतीह सोम्ये"त्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैः स्वरूपगुणै[1] सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्व तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय, "आविस्सन्निहित"मित्यादिना तस्यैवाक्षरस्याव्याकृतात्परतोऽपि पुरुषात्परभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारमुपासनस्य च परभक्ति[2]रूपत्व मुपासीनस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवफल चोपदिश्योपसहृतम् । अत एव विशेषणाद्भेदव्यपदेशाच्च नास्मिन् प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते । भेदव्यपदेशोऽपि हि ताभ्या परस्य ब्रह्मणोऽत्र विद्यते—

"दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः पर" इत्यादिभिः ।

अक्षरादव्याकृतात्परो य. समष्टिपुरुष., तस्मादपि परभूतोऽदृश्यत्वादिगुणको ऽक्षरशब्दाभिहितः परमात्मेत्यर्थः । अश्नुत इति वा न क्षरतीति वा ऽक्षरम् । तदव्याकृतेऽपि स्व[3]विकारव्याप्त्या वा महदादिवत्नामान्तराभिलापयोग्यक्षरणाभावाद्वाऽक्षरत्व कथञ्चिदुपपद्यते ।

## रूपोपन्यासाच्च ॥ २४ ॥

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशश्श्रोत्रे वाग्विवृताश्च वेदाः ।

---

१ स्वरूपगुणैरिति लि पु पाठ प्रामादिकः ।
२ परमभक्तीति लि पु पाठ ।
३ अक्षर तदव्याकृत स्वेति लि पु प्रामादिक ।

वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां [1]पृथिवी ह्येष सर्वभूतान्तरात्मा ॥-

इतीदृश रूप सर्वभूतान्तरात्मनः परमात्मन एव सम्भवति,[2] अतश्च परमात्मा ॥

अदृश्यत्वादिगुणकाधिकरणं समाप्तम् ॥ ५ ॥

---

अथ वैश्वानराधिकरणम् ६ ।

**वैश्वानरस्साधारणशब्दविशेषात् ॥ २५ ॥**

इदमामनन्ति च्छन्दोगाः "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूही"ति प्रक्रम्य "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति । तत्र सन्देहः-किमयं वैश्वानर आत्मा परमात्मेति शक्यनिर्णय उत नेति । किं प्राप्तम् । अशक्यनिर्णय इति । कुतः । 'वैश्वानर'-शब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात् । जाठराग्नौ तावत्-"अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोती"ति । महाभूततृतीये च-"विश्वस्मा अग्निं[3] भुवनाय देवा वैश्वानरं केतुमह्ना मकृण्व"न्निति । देवतायां च-"वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्री"रिति । परमात्मनि च-"तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्"[4], "स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत"[5]इति च । वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वेषु नुगुणतया नेतु शक्यानि[6] । इत्येवं प्राप्तेऽभिधीयते-

'वैश्वानरस्साधारणशब्दविशेषात्'

---

१ नाभिपद्भ्यामिति लि पु पाठो नैव युक्तः ।
२ सन्ति चेति लि पु पाठ ।
३ विश्वस्य अग्निमिति लि पु पाठ ।
४ हृदये वैश्वानरेन्द्रस्यादिति लि॰ पु पाठ ।
५ ऽग्निहृदय अग्नौ त इति लि पु पाठ ।
६ नतुमशक्यानीति लि पु पाठो विपरीतार्थकः ।

वैश्वानरः परमात्मा । कुतः । साधारणशब्दविशेषात् । विशेष्यत इति[1] विशेषः, साधारणस्य 'वैश्वानर'–शब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः । तथाहि, औपमन्यवादयः पञ्चेमे महर्षयः समेत्य "को न आत्मा किं ब्रह्मे"ति विचार्य "उद्दालको ह वै भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामे"त्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः, स चोद्दालक एतान्वैश्वानरात्मजिज्ञासूनभिलक्ष्याऽऽत्मनश्च तत्राऽकृत्स्नवेदित्वं मत्वा तान्होवाच "अश्वपतिर्वै भगवन्तोऽयं कैकेय[2]स्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामे"ति, ते चोद्दालकषष्ठास्तमश्वपतिमभ्याजग्मुः, स च तान्महर्षीन् यथार्हं पृथगभ्यर्च्य 'न मे स्तेन' इत्यादिना 'यक्ष्यमाणो ह[3] वै भगवन्तोऽहमस्मी'त्यन्तेनात्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य[4] 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु [मे] भगवन्त'[5] इत्यवोचत्, ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानास्तमेवात्मानमस्माकं ब्रूहीत्यवोचन् । तदेव 'को न आत्मा किं ब्रह्मे'ति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मज्ञसकाशमागम्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति विज्ञायते, आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते । किञ्च, "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वऽन्नमत्ति तद्यथेषीकातूलमग्नौ[6] प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त" इति च वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ।

इतश्च वैश्वानरः परमात्मा—

१ विशेष्य इतीति लि पु पाठः ।
२ केकय इति पु० द्वयेऽपि पाठः स न युक्तः ।
३ 'हे'ति पु० द्वयेऽपि पाठः, उपनिषदि तु न भवति ।
४ प्रतिज्ञाप्येति लि पु पाठः स तु न युक्तः ।
५ मे–इति पु द्वयेऽपिनास्ति । भगवन्त इति मु पु पाठः ।
६ इषीकतूलेति मु पु पाठो, न तूपनिषदि तथा ।

स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

द्युप्रभृति पृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते, तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम्, तदिह तदेवेदमिति 'स्मर्यमाणं' प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे ऽनुमानम् लिङ्गमित्यर्थः। 'इति'शब्दः प्रकारवचनः, इत्थंभूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वे ऽनुमानं स्यात्। श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम्, यथा ऽऽथर्वणे—

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे"ति,

अग्निरिह द्युलोकः "असौ वै लोको ऽग्नि"रिति श्रुतेः।
स्मरन्ति च मुनयः

"द्यां मूर्धानं[1] यस्य विप्रा वदन्ति
खं वै नाभिं चन्द्रसूर्यौ च नेत्रे।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च
सो ऽचिन्त्यात्मा सर्वभूतप्रणेते"ति,
यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः" इति च।

इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते। तथाहि, तैरौपमन्यवप्रभृतिभिर्महर्षिभिः 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूही'ति पृष्टः कैकेय[2]स्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मन्येतैः किञ्चिज्ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ। तत्र 'औपमन्यव कं त्वमात्मानमुपास्स' इति पृष्टे 'दिवमेव भगवो राज'न्निति तेन चोक्ते दिवि तस्य

१ द्यौमूर्द्धानमिति लि पु। २ केकय इति पु॰ द्वये ऽपि पुन पाठ.।

पूर्णवैश्वानरात्मबुद्धिं निवर्तयन्वैश्वानरस्य 'द्यौर्मूर्धे'ति चोपदिशस्तस्या वैश्वानरांशभूताया दिव'स्सुतेजा' इति गुणनामधेयं प्राचिख्यपत् । एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशाऽप्पृथिवीनामेकैकेनैकैक[1]मुपास्यमानतया कथितानां 'विश्वरूप' 'पृथग्वर्त्मा' 'बहुलो' 'रयि.' 'प्रतिष्ठे'त्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुःप्राणसन्देहबस्तिपादावयवत्वं चोपदिष्टम् । सन्देहो मध्यकाय उच्यते । अत एवंभूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव ।

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेत्, न, तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २७ ॥**

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति, तन्न, शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्याप्यग्नेरिह प्रतीयमानत्वात् । शब्दस्तावद्वाजिनां वैश्वानरविद्याप्रकरणे "स एषोऽग्निर्वैश्वानर" इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते । अस्मिन्प्रकरणे च "हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय" इति वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियते 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम् स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहे"त्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते, तथा वैश्वानरस्यास्मिन्पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनः समामनन्ति "स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदे" ति । अतोऽग्निशब्दसामानाधिकरण्यादग्नित्रेतापरिकल्पनात्प्राणाहुत्याधारभावादन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत्, तन्न, तथादृष्ट्युपदेशात्=पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टो[2]पासनस्योपदेशात् । अग्निशब्दादिभिर्हि न केवलो

१ एकैकमित्येव पाठ. । एकैकमिति कथनक्रियाविशेषणम्, उपास्यमानत्वेन एकैकतया कथितानामादित्यादीनामित्यर्थः ।

२ तद्विशिष्टस्येति लि पु व्यस्त पाठ' ।

जाठरः प्रतिपाद्यते, अपि तु जाठराग्निविशिष्टः परमात्मा—कथमिदमवगम्यत इति चेत्। असम्भवात्=जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात्[1] त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः। यथोक्तं भगवता—

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विध"मिति।

जाठरानलशरीरो भूत्वेत्यर्थः। अतस्तद्विशिष्टस्योपासनमत्रोपदिश्यते। किञ्च, पुरुषमपि चैनमधीयते वाजसनेयिनः—"स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इति। न हि जाठरस्य केवलस्य पुरुषत्वम्, परमात्मन एव हि निरुपाधिकं पुरुषत्वम्, यथा 'सहस्रशीर्षा पुरुषः' 'पुरुष एवेदं सर्व'मित्यादौ।

## अत एव न देवता भूतं च ॥ २८ ॥

उक्तेभ्य एव हेतुभ्यो देवतायाश्च तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः।

## साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वं तथैव परमात्मन उपास्यत्वं चोक्तम्॥ जैमिनिस्त्वाचार्यो वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मन एव 'साक्षात्'—अव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति मन्यते। एतदुक्तं भवति, यथा वैश्वानरशब्दः साधारणोऽपि परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयते, एवमग्निशब्दोऽप्यग्रनयनादिना येनैव गुणेन योगाज्ज्वलने वर्तते, तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवादस्मिन् प्रकरणे परमात्माऽसाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति।

---

१ शरीरत्वसम्भवादिति लि॰ पु॰ पाठो विपरीतार्थकः।

यस्त्वेतमेव प्रादेशमात्रमभिविमानमित्यपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते? तत्राह–

**अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥**

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य आचार्यो मन्यते, 'द्यौर्मूर्धा ऽऽदित्यश्चक्षुर्वायुः प्राण आकाशो मध्यकाय आपो बस्तिः पृथिवी पादा'विति द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नमिदमभिव्याप्तवतो विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ।

मूर्द्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं[1] परस्य ब्रह्मणः किमर्थमिति चेत्, तत्राह–

**अनुस्मृतेर्बादरिः ॥ ३१ ॥**

तथोपासनार्थमिति बादरिराचार्यो मन्यते । "यस्त्वेतमेव प्रादेशमात्रमभिविमान[2]मात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वऽन्नमत्ती"ति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते । 'एतमेव'मिति उक्तप्रकारेण पुरुषाकारमित्यर्थः । सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदत्र भोग्यं तदत्ति, सर्वत्र वर्त्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति । यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते, तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते ।

यदि परमात्मा वैश्वानरः, कथं तर्हि उर:प्रभृतीनां वेद्यादित्वोपदेशः, यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह–

**सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३२ ॥**

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूताया उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्र-

१ पुरुषधर्मविरुद्धत्वमिति लि॰ पु॰ पाठः ।
२ यस्त्वेतमेवमभिविमानमिति मु॰ पु॰, यस्त्वेतमेवमप्रादेशमात्रमभिविमानमिति लि॰ पु॰ पाठः ।

त्वसम्पादनायाऽयमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते । तथाहि, परमात्मोपासनोचितमेव फलं प्राणाहुत्याग्निहोत्रसम्पत्तिं च दर्शयति श्रुतिरियम्—"स य इदमऽविद्वा[1]नग्निहोत्रं जुहोति यथा ङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात् अथ य एतदेवं विद्वानऽग्निहोत्रं जुहोति[2] तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त" इति ।

## आमनन्ति चैनमस्मिन् ॥ ३३ ॥

एवं परमपुरुषं द्युमूर्धत्त्वादिविशिष्टं वैश्वानरमस्मिन् उपासकशरीरे प्राणाहुत्याधारत्वाया ऽऽमनन्ति च "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा" इत्यादिना । अयमर्थः—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय 'सर्वेषु लोकेष्वि'त्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्या ऽस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं 'तस्य ह वा एतस्ये'त्यादिनोपदिशति यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतानऽग्न्यादित्यादीन्[3] सुतेजोविश्वरूपादिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु सम्पादयन्तीति[4] । 'मूर्धैव सुतेजाः' उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः । 'चक्षुर्विश्वरूपः' आदित्य इत्यर्थः । 'प्राणः पृथग्वर्त्मा' वायुरित्यर्थः । 'सन्देहो बहुलः', उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः । 'बस्तिरेव रयिः', अस्य बस्तिरेव तदवयवभूता आप इत्यर्थः । 'पृथिव्येव पादौ', अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवमुपासकस्स्वशरीर एव परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुसंधाय स्वकीयान्युरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिर्बर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानऽग्निहो-

१ इदं विद्वानिति मु पु पाठोऽत्र विपरीतार्थः प्रामादिकः ।

२ विद्वानग्निहोत्रं जुहोतीत्येतावन्मु० पु० नास्ति ।

३ भूतान् द्युम्वादित्यादीनिति ल पु पाठः । द्य्वादित्यादीनित्येव तु युक्तम् ।

४ सपादयति—इति मु पु पाठः ।

"capable of creating the earth &c, such a one cannot be "proved to exist,—as there could be no (cognisable) concomitance "with such a one, and through concomitance too, we could only "prove the existence of an agent similar in nature to the one "perceived in the case brought forward as the corroborative "instance"

*Reply* This objection does not apply to the case, as what the Inference is sought to prove is not any particular kind of creator All that the premiss put forward proves is the fact of the Substances under consideration being preceded by an intelligent being in general, and this necessarily establishes his particular character in the shape of the capability of creating the Earth &c —as the existence of no general entity can be proved without the accompaniment of a particular characteristic

*Objection* "Let the existence of the general entity be not established, what of that ?"

*Reply* Not so, because the concomitance of the general entity is not set aside along with its *causedness* If an inference did not establish that which is invariably concomitant with the Reason or *Probans*, then the sight of smoke too would not prove the existence of Fire in general, as in this case too the existence would not be established of the particular Fire, which has not yet been perceived to be in any way related to the smoke seen and no Universal Essence of Fire could have an existence apart from a particular Fire

*Objection* "An Inferential Reasoning has two factors—one "consisting of the recognition of invariable concomitance between "the *Probandum* and the *Probans* ( the Major Premiss), and "another in the cognition of the relationship between the Subject and "the *Probans* or middle term (the minor Premiss), and the Major "Premiss establishes the existence of the generality, and the "Minor Premiss establishes that of the particular, in the form of "the Fire located in the mountain (where from the smoke is seen "a issuing) If it were not so, wherein would lie the use of the

"Minor Premiss? And where could be the validity of that "Inference which applies to something that has been previously "cognised?"

*Reply* If such be the case, then, the same may be said with regard to the inference of God's existence also As apart from 'attachment' all other characterestics of the 'Actor' in general are present in God also *

The objector's standpoint may be thus summed up "An "Inference establishes the existence of a particular entity also, "when there is no means of right knowledge pointing to the "contrary, as for instance, in the case of the Smoke and Fire, we "find no incongruity in the inference, from smoke, of the parti- "cular fire located in the mountain side, specially as we often "find the individual particulars (of generalities) occupying differ- "ent points in space and time In the case of the inference of God "however, we cannot have any individual particular proved, as we "have means of right knowledge pointing to the contrary For ins- "tance, the inference cannot prove the fact of the effects (Earth "&c) being preceded by a Body (of the God), because if there "be a body, it would necessarily contain the Sense-organs, and "having these organs, the God could not have any knowledge of "the material causes (atoms), the accessories (in the shape of the "Karmic tendencies of Souls) and the potencies of various ins- "trumentalities—all of which are supersensuous,—in the matter "of the creation of Earth &c, and as such He could not be the "creator of these Then as for the creation not being preceded "by a Body (of God), it is absolutely impossible to prove this, be- "cause, as a matter of fact, we find that what a *doer* (of any act) "does is—(1) to ascertain the power or capability of the instru- "ments, (2) to desire to fulfil the particular act by means of "those instruments, (3) to put forth an effort, (4) to put the "body into action, (5) to supervise over the various causes

* This sentence as it stands in the printed text is not intelligible, Nor has the translator any *M S* by him, so he has translated the sentence in accordance with the only possible interp etation of which it was capable

"(material and others), & (6) to do the act, and if he does not "*ascertain*, or desire, or put forth his effort, or put his body into "action, he does not do the act And from these affirmative and nega- "tive universal instances (of the *acting* with the *ascertaining* &c) "we conclude that like the Intelligence, (of God) the Body also would "be a necessary means to the production of effects,—as indicated by, "the same means by which the invariable concomitance is recognised "after a due recognition of all conditions and limitations, and hence "we cannot discard this notion of the necessity of the previous exis- "tence of the Body, just as in the case of the inference from smoke, "we do not discard the notion of the capacity in Fire of being pro- "duced out of (or of changing the condition of) parts Even with all "this, if you discard the notion of the existence of the Body, then "you can as reasonably discard the notion of that of Buddhi "also It might be argued that—'God, being possessed of great "powers, would bring about the creation, even without having a "body or intelligence for Himself, but He could not do so without "a *knowledge* of the nature of the material and accessory causes, "as no such action is met with in ordinary experience' But "in that case my purpose also has become fulfilled, as mere "desire not being operative without the intervention of effort, it "is not as capable of bringing about effects as the Body which "operates directly by itself.

**Page 56.**] "It may be asked—where, in that case, would "there be room for the general precedence of an intelligent "creator?' But as a matter of fact, there could be no room for "it, as such a creator could not rightly be regarded either as "bodied or bodiless, and the existence of a mere 'generality, 'without the specifications (in the shape of corporeality or other- "wise), cannot be established It may be asked—what is the "flaw in the inferential argument put forward in support of such "a being?' We reply that there is no actual flaw, but the man "who in the absence of any specific character, would put forward "an argument to prove the unprovable existence of the mere "generic entity, which, in such a case, would be as much an ab-

"surdity as the hare's horn,' would stand self-condemned, just "like a man who would take up a sharp sword to strike at empty "space If you should not be satisfied without my showing "some flaw in your inference, then we would point out that it is "open to the fallacy of *Kālātyayāpadishta*,' in as much as the 'inference of the precedence of a bodiless being is set aside by "the means whereby the invariable concomitance (of cause and "effect) is recognised, and the invariable concomitance thus con-"tradicting the desired character of bodilessness, the Inference "becomes open to the fallacy of '*Viçēshaviruddha*,' which is only "a particular from of the fallacy of '*Viruddha*'"

To the above we make the following reply Does the nature of the *actor* necessarily consist in being bodied ? or does it consist in the character of being the operator of instruments recognised as capable of bringing about the necessary effects ? The former alternative could not be accepted, as in that case a person in deep sleep, or one who is not doing anything towards an action, would also have to be regarded as the 'actor' (as even in these conditions he would have his body all the same) We must then accept the second alternative, as it is only when this character is present that we find the effect coming about This charecter can belong to a bodiless being also, as we find in the case of the Soul (which is an immaterial thing) operating to-wards the moving of the body It might be argued that the body belongs to the soul, who has obtained it through its pre-vious deeds (and as such the operating Soul cannot be regarded as strictly bodiless) True, the body belongs to the Soul, but it is not the body that supplies the force impelling itself, as any such impulsion by itself would involve a contradiction It may be urged that the body may be regarded as the means of impulsion, in as much as it is the object of the impelling But in the case of God also we have the atom as the object to be impelled or operated upon

*Objection* "The impelling of the Soul's body is found to be brought about by desire and effort, and not when the body

does not exist, and from this we infer that the body is the means or author of its own impelling, through the said desire and effort"

*Reply* Not so, as the body can be only accepted as impelling or giving rise to desire and effort (and not to its own operations) After the desire and effort have been brought about, and when these begin to operate towards impelling (the body to a certain course of action), the body ceases to be the impelling agent, as the body being the *object* of this impelling could not, at the same time, be its *doer* And thus we find that there is no similarity between the action of the soul and that of the body Then again, we often meet with cases where certain inanimate things are moved to action by an intelligent being, merely through his own desire and effort, independently of all actions of the body On the other hand we never find any action apart from an intelligent being All these facts go to establish the existence of God

*Objection* "The body would be necessary for the production of desire and effort also"

*Reply* The body may be required for the appearance of such desire and effort as are adventitious, where however these are natural, the body would not be necessary Nor is there any inconsistency in believing the Intellect, Desire and Effort to be eternal, as we have seen, in the case of Colour &c., that they are of two kinds—eternal and non-eternal, and the same could very well be the case with Intellect &c, also

This is the ultimate point at which the discussion with regard to the existence of God must rest We now proceed with the discussion as to the details of the process (of creation)

**Page 57**] *Objection*, "The atoms themselves presided over by the Souls would operate towards creation (and as such there would be no need of an extraneous God)"

*Reply* This cannot be, because the Souls depend for their cognitions upon the sense-organs obtained in accordance

with their previous deeds, and as such before they have obtained the physical body, they could not have the cognition of any thing (and hence they could not superintend the operations of the atoms)

*Objection* "The Souls also are endowed with a natural intelligence pervading over all things (and hence there could be no absence of cognition)"

*Reply* If the (cognitive) intelligence of the soul were natural to it (and remained with it always), then, by what agency could this intelligence have been deranged, whereby when the soul comes to have a body (after birth), he looks upon all things as wholly new (If the intelligence had remained with the soul permanently nothing would be new to it)

*Objection* "On account of the disappearance of the bodily covering (at death), the Intelligence turns inwards into the soul itself, and does not operate outwards (towards cognitions)"

*Reply* In as much as the Intelligence is all-pervading, it could never cease to be connected with cognisable objects, and being eternal, its character of illuminating (making cognisable) objects could never cease to exist, and as such what could be the meaning of the said 'disappearance'?

*Objection* "What we mean by 'disappearance' is the *stopping of the functioning* (of Intelligence)"

*Reply* If such be the case, then how could the souls have any cognition of objects?

*Objection* "In certain cases the functioning of the Intelligence does not cease (and in these cases the Soul would have the cognitions)"

*Reply* Whence this diversity?

*Objection* "It is due to the peculiarities of the proximity of sense-organs"

सीमानं कृत्वा समुद्रपर्यन्तं भद्राश्वनामकं वर्षस्तन्नामैव स देशः। तथा सुमेरोः पश्चिमदिशि तत्ससक्तो गन्धमादनः पर्वतस्तमारभ्य समुद्रपर्यन्तं केतुमालनामा देशस्तन्नामकमेव वर्षम्। छत्राकारस्य सुमेरोरधोभागे वर्षमिलावृतम्। चतुर्दिक्षु च पर्वताश्छत्रपार्श्वस्थावरणावास इव मेरुपार्श्वेष्वेव ससक्ता इति बोध्यम्।

मेरोश्चतुर्दिशस्तत्र नवसाहस्रविस्तृतम्।

इलावृतं महाभाग चत्वारस्तत्र पर्वता इति।

विष्णुपुराणात्। ते पर्वताश्च प्रत्येकं पादोनसहस्रायामा इति बोध्यम्। तदेवं पर्वतैः सह जम्बूद्वीपं लक्षयोजनविस्तारम्। तदेव सुमेरुणा सह सुमेरोश्चतुर्दिक्षु पञ्चाशत्पञ्चाशद्योजनसहस्रेण स्थितं जम्बूद्वीपं सुमेरोश्च परिमाणं चतुरशीतिसाहस्रं योजनैरस्य चोच्छ्रयः।

प्रविष्टः षोडशाधस्ताद् द्वात्रिंशन्मूर्ध्नि विस्तृतः।

मूले षोडशसाहस्रो विस्तारस्तस्य भूभृतः

इति। सोऽयं जम्बूद्वीपो द्विगुणेन लवणोदधिना वलयाकृतिना वेष्टितः। ततो जम्बूद्वीपक्रमेण उत्तरोत्तरं द्विगुणद्विगुणाः शाककुशक्रौञ्चशाल्मलिगोमेदपुष्करद्वीपाः स्वस्वद्वीपाद् द्विगुणाः समुद्राश्च सर्षपराशिकल्पा नात्यन्तमुच्छ्रिता नापि भूमेः समाः कूलद्वयस्थितविचित्रशैलावतंसा इक्षुरससुरासर्पिर्दधिमण्डक्षीरस्वादूदका वलयाकृतयः समुद्राः सर्वे लोकालोकपर्वतपरिवाराद्वीपाः सप्तसमुद्रपरिवेष्टिता वलयाकृतयः इतरलोकसहिताः पञ्चाशत्कोटियोजनपरिमिताः। तदेतत्समग्रं पञ्चाशत्कोटिपरिमितं भूगोलं सुप्रतिष्ठितमण्डमध्ये व्यूढं तादृशं च शतकोटिविस्तारमण्डं सप्तावरणसहितमपि प्रधानस्याणुरवयवो यथाऽऽकाशे खद्योतः प्रकृतिं प्रकृत्य।

अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ।
ईदृशास्तत्र दृश्यन्ते कोटिकोटिशतानि चेति
विष्णुपुराणात् ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदिति

श्रुतेश्च शक्तिशक्तिमतोरविभागेन शक्त्यंशेषु शक्तिमदंशत्वम-पीति तदाशयः । तत्र पाताले जलधौ पर्वतेषु चैतेषु देवनिकाया देव-समूहा असुरगन्धर्वकिन्नरकिंपुरुषयक्षराक्षसोरगभूतप्रेतपिशाचापस्मार-काप्सरोब्रह्मराक्षसकूष्माण्डविनायकाश्च प्रतिवसन्ति । सर्वेषु द्वीपेषु पुण्यात्मानो देवा मनुष्याश्च प्रतिवसन्ति । सुमेरुस्त्रिदशानामुद्यान-भूमिः । अत्र मिश्रवनं नन्दनं चैत्ररथं सुमानसमित्युद्यानानि । सुधर्मा देवसभा सुदर्शनं पुरम् । वैजयन्तः प्रासादः । तदूर्ध्वमन्तरिक्षलोके रव्यादयो ग्रहा अश्विन्यादीनि नक्षत्राणि तदितरक्षुद्रज्योतीरूपास्तार-काश्च सर्वोपरिमे ढिकावन्निश्चलतयास्थिते ध्रुवसञ्ज्ञके ज्योतिर्विशेषे वा रज्वा निबद्धा वायोः प्रतिनियतसञ्चारेण कालविशेषैरवधृतगतयः सुमेरोरुपर्युपरिभावेन संनिविष्टाः दिवि भुवर्लोके भ्रमन्ति । न च सुमे-रोरुपरि ज्योतिर्मण्डलभ्रमणे कथं मेरुणा ज्योतिश्चक्रस्यावरणं यतो रात्रिदिनव्यवस्थेति वाच्यम् । वृत्तेन सूर्यव्यवधानवद् मेरोरेकपार्श्व-स्थस्य सूर्यादेः पार्श्वान्तरेण व्यवधानसम्भवात् । माहेन्द्ररूपस्वर्लोक-निवासिनः षड्देवजातीयाः समूहा त्रिदशा अग्निष्वात्ता याम्यास्तुषिता अपरिनिर्मितवशवर्तिनः परिनिर्मितवशवर्तिनश्चेति सर्वे सङ्कल्पसिद्धा अणिमाद्यैश्वर्ययुक्ता ब्रह्मदिनरूपकल्पायुषो वृन्दारकाः पूज्या. काम-भोगिनः पित्रोः संयोगं विनैव लब्धदेहा उत्तमानुकूलाभिरप्सरोभिः कृतपरिवाराश्च । ततो महर्लोके प्राजापत्ये पञ्चविधो देवनिकायः कुमुदा

स्वभव. प्रतर्दनाऽञ्जनाभा प्रविताभा इति एते सर्वे महाभूतानां परिणमने स्वतन्त्रा ध्यानमात्रतृप्ता कल्पकल्पसहस्रायुष । ततो ब्रह्मण प्रथमे जनलोके चतुर्विधो देवनिकाय. ब्रह्मपुरोहिता ब्रह्मकायिका ब्रह्ममहाकायिका अमरा इति । ते सर्वे भूतानामिन्द्रियाणां च परिणमने समर्थाः द्विसहस्रकल्पायुषः । द्वितीये ब्रह्मणो लोके तपसि त्रिविधा देवनिकाया. आभासुरा महाभासुराः सप्तमहाभासुरा इति । एते सर्वे-भूतेन्द्रियान्तःकरणानां परिणमने समर्था स्वेच्छयाऽन्यनिर्माणे चित्तनिर्माणे च समर्था. ध्यानतृप्ता ऊर्ध्वरेतसो ऽस्खलितरेतः ऊर्ध्वे सत्यलोकादौ अप्रतिहतज्ञाना' अधोऽधोलोकेषु अनावृतज्ञानविषया उत्तरोत्तर द्विगुणायुषश्च । तृतीये ब्रह्मण' सत्यलोके चत्वारो देवनिकाया अकृतभवनन्यासा स्वप्रतिष्ठा उपर्युपरिस्थिताः पूर्वपूर्वापेक्षयोर्ध्वमूर्ध्वस्थिता' । सत्यलोकेऽप्यवान्तरलोकभेदात् मूलप्रकृते परिणमने समर्थाः । सर्वे यावत्सर्गायुषश्च तेषां नामानि तु अच्युताः शुद्धनिवासा' सत्याभाः सञ्ज्ञासञ्ज्ञिनश्च । तत्राद्याः सवितर्कध्यानेनैव सुखिनः । द्वितीयाः सविचारध्यानसुखा । तृतीया आनन्दमात्रध्यानसुखा । तुरीया अस्मितामात्रध्यानसुखा । ते लोके चतुर्दशभुवनमध्ये एव तिष्ठन्ति न ब्रह्माण्डाद्बहिः । न चाण्डस्य सर्वजीवसाधारण्यात् कथ ब्रह्माण्डसञ्ज्ञेति वाच्यम् । सर्वेषामेषा हिरण्यगर्भस्य लिङ्गदेहेन सर्वलोकव्यापनादशाभिभावेन सर्वजीवाना तदभेदाच्च सर्वेश ब्रह्मतया ब्रह्माण्डत्वादिति' । विदेहप्रकृतिलयास्तु मुक्तप्रायत्वाद् ईश्वरकोटित्वात् ब्रह्माण्डस्यान्तर्बहिश्च स्वातन्त्र्येण तेषा व्यापाराद् न लोकवासिजनमध्ये गणिता इत्येतत्सर्व भुवन वैराग्यातिशयाद् सूर्यद्वारे सूर्यान्तश्छिद्रे ब्रह्मलोकद्वारभूते सुषुम्णाया वा सयम कृत्वा योगिना साक्षात्करणीयम् । एवं योगशास्त्रोक्तेनान्यत्रापि सयमेनेद भुवन द्रष्टव्यम् । एव सयम तावद भ्यसेत् यावदिद सर्वदृष्ट भवतीति दिक् ।

**चन्द्रे ताराव्यूहज्ञानम् ॥ २६ ॥**

चन्द्रे संयमं कृत्वा ताराव्यूहं जानीयात् ।

**ध्रुवे तद्गतिज्ञानम् ॥ २७ ॥**

ताराव्यूहज्ञानानन्तरं ध्रुवे संयमं कृत्वा ताराणां गतिं जानीयात् । एवं यत्र कुत्र चिद्विमाने कृतसंयमः सर्वाणि तानि साक्षात्कुर्यात् ।

**नाभिचक्रे कायव्यूहज्ञानम् ॥ २८ ॥**

शरीरमध्यवर्त्तिनाभिकन्दरूपं कदलीकन्दवदादावुत्पद्यते । यतः शाखापल्लवादिवच्छिरःपादादिकमवयवजातमूर्ध्वमधश्चाविर्भवति । तत्र नाभिचक्रे संयमेन साक्षात्कारपर्यन्तेन कायस्थपदार्थवातपित्तत्व-गसृगादिव्यूहं जानीयाद् । वातपित्तश्लेष्माणस्त्रयो दोषाः, धातवः सप्त रसलोहितमांसस्नाय्वस्थिमज्जाशुक्राणि पूर्वपूर्वमेषां बाह्यमित्येषां विन्यासः ।

**कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ २९ ॥**

जिह्वाया अधस्तात्तन्तुस्ततोऽधस्तात्कण्ठस्ततोऽधःकूप उरः पर्यन्तं, तत्र संयमात् क्षुत्पिपासे न बाधेते ।

**कूर्मनाड्यां स्थैर्यम् ॥ ३० ॥**

उरसि कुण्डलितसर्पगोधाऽन्यतरवत् स्थिता कूर्माकारा या नाडी तस्यां कृतसंयमः स्थिरां चित्तवृत्तिं लभत इत्यर्थः ।

**मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३१ ॥**

शिरःकपालमध्यस्थच्छिद्रस्यान्तः स्वप्रकाशरूपं ज्योतिरस्ति । तत्र संयमपूर्वकात्साक्षात्कारात् द्यावापृथिव्योरन्तश्चारिसिद्धदर्शनं भवतीत्यर्थः । मूर्धशब्देन सुषुम्णा नाडी लक्ष्यत इति मिश्राः ।

**प्रातिभाद्वा सर्वम् ॥ ३२ ॥**

प्रातिभं स्वप्रतिभोत्थमनौपदेशिकं ज्ञानं संसारतरणोपायत्वा-त्तारकं विवेकजस्य वक्ष्यमाणस्य सार्वज्ञ्यस्य पूर्वरूपं लिङ्गं यथा-सूर्यस्योदयपूर्वरूपं प्रभा तेनोत्पन्नेन योगी सर्वमेवातीतानागतादि जानाति। पूर्वोक्तसंयमं विनाऽपीत्यर्थः। प्रातिभस्यापि चणतः क्रमा-दिसंयमजन्यताया वक्ष्यमाणत्वादस्या अपि परम्परया संयमसिद्धित्वेन तासु गणनमिति बोध्यम्। यद्यपि तारकं सर्वविषयमित्यागामिसूत्रे विवेकज्ञानमेव तारकं प्रातिभं च वक्ष्यते, तथाऽप्यत्र प्रातिभादिति हेतुवचनाद् विवेकज्ञानपूर्वरूपमेव लक्षणया प्रातिभं तारकं चेति व्याख्यातम्।

इदानीं संयमस्य सत्त्वपुरुषान्यताख्यातिरूपां मुख्यां सिद्धिं विवक्षुस्तत्संयमहेतुभूतायाश्चित्तसंविदः कारणमाह।

**हृदये चित्तसंवित्॥ ३३॥**

यदिदमस्मिन् बृहत्त्वात् ब्रह्मणो जीवस्य पुरे शरीरे दहरं संगतं पुण्डरीकाकारं वेश्म तत्र विज्ञानं विज्ञानवृत्तिकमन्तःकरणं ब्रह्मणः सिंहासनकल्पं विद्यतेऽतस्तस्मिन्हृदयाख्ये वेश्मनि संयमात् चित्तसाक्षात्कारो भवतीत्यर्थः।

एवंभूतेषूक्तेषु संयमेषु भावनाप्रकारो योगशास्त्रविशेषाद् गुरुमु-खाच्च प्रत्येतव्यः। चित्ते च ज्ञाते ततो विवेकेनात्मसाक्षात्कारो भवतीति क्रमानुसारेणाह।

**सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्स्वार्थसंयमात्पुरुषज्ञानम्॥ ३४॥**

सत्त्वाधिक्याद्बुद्धेः सत्त्वं यद्बुद्धिसत्त्वं प्रख्याशीलतया समा-नसत्त्वाधीनवृत्तिके रजस्तमसी अभिभूय सत्त्वपुरुषान्यतासाक्षात्का-

रूपेण परिणत प्रकृष्टज्ञानैश्वर्यानन्दादिमयमात्माकारतयाऽऽत्मकल्प तस्मादपि परिणामिनोऽत्यन्तविधर्मा पुरुषः परिणामशून्यत्वाद् अत एव शुद्धोऽन्यश्चितिमात्ररूपः । एव च तादृशचित्तेनासङ्कीर्णस्य बाह्याद्याकारचित्तेनासङ्कीर्णत्वमर्थात्सिद्धमित्यत्यन्तासङ्कीर्णत्व पुरुषस्य । एव तयोरत्यन्तासङ्कीर्णयोर्यः प्रत्ययाविशेष. प्रत्यययोर्विविच्याग्रहण स भोगः । अयमविवेको बुद्धिधर्मः तत्र बुद्धेः प्रत्यय सुखादिमती विषयाद्याकारवृत्तिः, पुरुषस्य च प्रत्ययो बुद्धिवृत्तिप्रतिबिम्बावच्छिन्नश्चैतन्यांशः, सुखाद्यात्मकशब्दाद्यनुभवनामा । यद्यपि पौरुषेयः प्रत्ययः पुरुषातिरिक्तो न भवति, तथाऽपि दृश्योपरागेण परिच्छिन्नांश एव प्रत्ययः पुरुषस्त्वपरिच्छिन्नो महाकाशवदिति तयोर्भेदः । तयोरविवेके बीज तु पुरुषस्य दर्शितविषयत्वम् । यतो बुद्ध्या पुरुषे प्रतिबिम्बमर्पितं ततो जपास्फटिकयोरिव धर्मसङ्करादविवेकः धर्माविवेकेनैव च धर्मिणोः साङ्कर्यं तद्धर्मविवेकेनैव निरसितुं शक्यत इति धर्मविवेकसंयमः कार्य इति प्रतिपादयितुमत्र भोगो लक्षित. । एवमुभयात्मकस्य भोगस्य मध्ये यः सत्त्वस्यांशो भोगप्रत्ययः स परप्रयोजनकत्वाद् दृश्यः । यस्तु तस्मात्परार्थादन्यो विशिष्टश्चितिमात्र पुरुषांशप्रत्ययः स परस्य बुद्ध्यादेरदृश्यत्वात्स्वार्थो भोगाख्यस्तत्र यथोक्तविवेकेन साक्षात्कारपर्यन्तात्संयमात् पुरुषविषयः साक्षात्कारो भवति दिव्यः । एवं चाय मुख्यो भोगोऽविविक्तप्रत्ययात्मकोंऽशभेदेनोभयोरेव भवति । यस्तु "चिदवसानो भोग" इति साङ्ख्यसूत्रे उक्तः स गौणः पुरुषस्यैव । यस्तु विकारान्तर्गतो भोगः शब्दाद्याकारवृत्तिरूपः स बुद्धेरेव तावेतौ भोगापवर्गौ बुद्धावेव वर्तमानाविति तत्र तत्र भाष्यात् । स हि तत्फलस्य भोक्तेति तत्र तत्र भाष्यकृता विपाकफलस्य सुखादेर्भोगान्तरवचनाच्चेति बोध्यम् ।

नन्विदं पुरुषज्ञानं किं बुद्धेरुत पुरुषस्य, आद्ये बुद्धेश्चेतनत्वापत्तिः। अन्त्ये स्वस्य स्वज्ञेयत्वे कर्तृकर्मविरोधः सदैव ज्ञानप्रसङ्गश्चेति चेन्न बुद्धिसत्त्वधर्मेण पुरुषाकारप्रत्ययेन जडतया पुरुषो न भास्यते किं तु पुरुष एव स्वस्वरूपाकारां बुद्ध्यारूढां वृत्तिं स्वस्मिन्प्रतिबिम्बितां पश्यतीत्यदोषात्। एवं च स्वप्रतिबिम्बवत् स्वाकारबुद्धिवृत्ते प्रतिबिम्बनात्मकमेव दर्शनं पुरुषस्य पुरुषज्ञानं यथा घटाद्याकारवृत्ति प्रतिबिम्बनरूपं वृत्तिदर्शनमेव पुरुषस्य घटदर्शनम्। न चात्र कर्मविरोधः। तत्र हि स्वस्मिन्स्वसम्बन्धानुपपत्तिरेव बीजं प्रकाशसम्बन्धस्यैव प्रकाश्यत्वात् स च सम्बन्ध एकस्मिन्नपि बिम्बप्रतिबिम्बाख्यरूपभेदेनोपपन्नः। आत्माकारवृत्त्यवच्छिन्नो हि ज्ञेयः ज्ञाता केवलश्च ज्ञेयः ज्ञाता इति विशेषात् स्वप्रकाशत्वं चात्मनः स्वज्ञेयत्वमेव "चेतनात्मा स्ववेदन" इति स्मृतेः। एतेनात्मनो ज्ञेयत्वाभाव एवेति चिन्त्यम्।

यत्तु वृत्तिव्याप्य एवात्मा न फलव्याप्य इति। अत्र केचित् फलव्याप्यत्वस्य सामान्यतो व्यवहारहेतुतया क्लृप्तत्वेन चैतन्याख्यफलव्याप्यतां विना चैतन्यव्यवहारानुपपत्तिः, अन्यथा घटादिव्यवहारस्याऽपि वृत्तिव्याप्यत्वेनैवोपपत्तौ विश्वप्रकाशकतया चैतन्यकल्पनावैयर्थ्यापत्तेः, "यतो वाचो निवर्तन्ते ऽप्राप्यमनसा सहेति" तु अस्मदादिमनोवृत्त्यगोचरत्वमेव प्रतिपादयति।

अध्यात्मयोगाधिगमेन देवं।

मत्वा धीरो हर्षशोकौ जहातीति श्रुत्या योगिमनोविषयत्वावगमाच्च। पुरुषस्यैव स्वज्ञातृत्वं श्रुतिराह विज्ञातारमरे केन विजानीयादिति। आत्मा यदि न नित्यज्ञानरूपः स्यात्तदाकेन ज्ञाना-

न्तरेण विज्ञातारमात्मानं लोको विजानीयादिति तदर्थः । इयं हि श्रुतिर्न प्रेत्यसंज्ञाऽस्तीति यत्त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति पूर्ववाक्येन स्वयं ज्ञानस्वरूपोऽपि सर्वकरणविलयात् सर्वदृश्यविलयाच्च मोक्षकाले किमपि न पश्यतीति मैत्रेयी प्रत्युक्ते मोक्षकाले नाभिव्यक्त्यात्मा ज्ञानस्वरूप एव माऽस्त्विति तदाशङ्कां मनसि निधाय तन्निरासाय प्रववृते, आत्मा यदि ज्ञानस्वरूपो न स्यात् तद्विषयकज्ञानान्तरकल्पनेऽनवस्था स्यादित्याशयिका।एतेनेयं श्रुतिः पुरुषस्य सदैवाज्ञेयत्वं वदतीति व्याख्यानं चिन्त्यम् ।

**ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते॥३५॥**

ततः स्वार्थसंयमजन्यपुरुषसाक्षात्कारात् । यत्तु स्वार्थसंयमादिति, तन्न तज्जन्यायाः पुरुषज्ञानरूपसिद्धेरुक्तत्वेन चकाराभावेन च पुरुषज्ञानस्यैव पूर्वसूत्रे विशेष्यतया च यत्परामर्शस्यैवौचित्यात् ततो मनआदीनां प्रातिभादिसंज्ञकशक्तिविशेषरूपाः सिद्धयो भवन्ति तत्र प्रतिभोपदेशादिनैरपेक्ष्येण सूक्ष्मादीनां मानं संयमार्थज्ञानं तत्सामर्थ्यं प्रातिभम् । एवं श्रावणाद्यपि । वेदनाद्यास्तु त्वक्चक्षूरसनाघ्राणानां सामर्थ्यसंज्ञाः । तत्र प्रातिभात् सूक्ष्मव्यवहितं विप्रकृष्टातीतानागतज्ञानं श्रावणात् तेषां दिव्यशब्दानां च श्रवणं, वेदना दिव्यस्पर्शज्ञानम्, आदर्शो दिव्यरूपज्ञानम् आस्वादो दिव्यरसज्ञानं, वार्त्ता दिव्यगन्धज्ञानं कामनां विनाऽपि जायते ।

**ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३६ ॥**

ते प्रातिभादयस्ते, समाहितचित्तस्य जायमाना उपसर्गास्तस्य समाहितस्य यद्दर्शनं पुरुषैकाग्र्यं तद्विरोधित्वाद् व्युत्थितचित्तस्य तु जायमाना सिद्धयो भवन्ति अतस्ता उपेक्ष्य पुरुषदर्शनाभ्यास एव कार्य इति भावः ।

सिद्ध्यन्तरमाह ।

**बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३७ ॥**

चञ्चलस्य सदैकत्रानवस्थितस्य मनसो धर्माधर्मवशादेकशरीरे या प्रतिष्ठा ज्ञानहेतुः स बन्धविशेष स बन्ध.। तादृशबन्धकारणस्य कर्मणः शैथिल्य देहबन्धनात्तमता समाधिसामान्यबलाद्भवति। तथा एवंप्रकारेण अनयानाड्याचित्त शरीरे प्रविशति निर्गच्छतीत्येवं चित्तगतिसाक्षात्कारश्चितस्य प्रचारसवेदनं तदपि समाधिसामान्यबलजमेव । एव कर्मनिमितकस्य निर्गमप्रतिबन्धकसयोगविशेषस्य क्षयात् चित्तप्रचारसवेदनाच्च योगिचित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति निक्षिप्त चित्त चेन्द्रियाण्यनुपतन्ति यथा मधुकरराजमुत्पतन्तं मक्षिका अनूत्पतन्ति निविशमानमनुनिविशन्त इति दिक् ।

योगशास्त्रोक्तसयमविशेषेणोदानजयात् सिद्धिमाह ।

**उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च॥३८॥**

प्राणापानादिरूपा सर्वेन्द्रियवृत्तिजीवननाम्नी न च सुषुप्तौ चक्षुराद्युपरमेऽपि प्राणादिवृत्तीना दर्शनात्सर्वेन्द्रियाणामित्यसङ्गत किं तु जीवनयोनियत्नवशात् अन्तःकरणस्यैव वृत्तिरिति युक्तमिति वाच्यम् । सुप्तेन्द्रियाणा ज्ञानकर्मलक्षणवृत्त्योरेव प्रतिषेधेन प्राणादिवृत्तेः सत्वेप्यक्षतेः। न च बाह्यवायुभिरन्तस्थप्राणाना तुल्यलक्षणत्वाद् वायुविशेषा एव प्राणादयः सन्तु किमर्थं करणाना वायुतुल्यक्रियाकल्पनमिति वाच्यम्। प्राणात् शुद्धां च वायुश्चेति श्रुतौ वायोः प्राणकार्यत्वश्रवणात् "न वायुक्रिये पृथगुपदेशादि"ति वेदान्तसूत्रे वायुतत्स्वचाराभ्यामतिरेकस्य प्राणावधारणाच्च । किं चान्तःकरणस्य शोकादिना प्राणस्य कम्पः

सोऽविमुक्ते प्रतिष्ठित इति, सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति, वरणायां नाश्यां मध्ये प्रतिष्ठित इति, का वै वरणा का च नाशीति, सर्वाणीन्द्रियकृतानिपापानि वारयति नाशयतीति वरणा नाशीति, कतमचास्य स्थानं भवतीति, भ्रुवोर्घ्राणस्य च यस्सन्धिस्स एष द्युलोकस्य परस्य च सन्धिर्भवतीति" । अस्यार्थः । य एष प्रसिद्धः परमात्माऽनन्तोऽव्यक्तः स्वरूपेणानभिव्यक्तो दुर्विज्ञेय इति यावत् । तं कथं विजानीयामित्यत्रिप्रश्ने कृते याज्ञवल्क्यस्योत्तरं "स" इति । परमात्मा जीवात्मन्यविमुक्ते व्यवहारतः संसारिणि प्रतिष्ठितः परस्यैव प्रत्यक्त्वादित्यर्थः । पुनरत्रिरपृच्छ-"त्स" इति । याज्ञवल्क्यो ब्रूते "वरणाया" मिति । वरणादिपदार्थं वदनपदे निर्वक्ति "सर्वाणी" ति । सर्वानिन्द्रियवृत्तिकृतान्दोषान्वारयति तेन वरणा भ्रुवावित्यर्थः । तान्दोषान्नाशयतीति नाशी । तथा च नियम्यजीवद्वारनियन्तुरीश्वराधिष्ठानत्वान्नाश्या भ्रुवोः पापनाशकत्वमिति सिद्धम् । तत्रापि स्थानविशेषजिज्ञासया पृच्छति "कतमच्चे" ति । पूर्वोक्तमध्यशब्दार्थं स्पष्टयति "भ्रुवो" रिति । तदेव स्थानमित्यर्थः । स सन्धिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य सन्धित्वेन ध्येय इत्याह "स" इति । तस्मात्परमेश्वरोपास्तिपरं वैश्वानरवाक्यमिति सिद्धम् ।

इति प्रथमाध्यायस्य द्वितीयः पादः ॥

---

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ । ३ । १ ॥

पूर्वं त्रैलोक्यात्मा वैश्वानरः परमात्मेत्युक्तम् । तर्हि त्रैलोक्यायतनमन्यदित्याशङ्क्य समाधानाक्षेपसङ्गतिः ।

यद्वोपक्रमस्थसाधारणशब्दस्य वाक्यशेषस्थलिङ्गेन द्युमूर्धत्वादिना ब्रह्मपरत्ववदिहाप्युपक्रमस्थसाधारणायतनत्वस्य वाक्यशेषस्थसेतुश्रुत्या परिच्छिन्ने प्रधानादौ सेतुशब्दार्हव्यवस्थाऽस्त्विति दृष्टान्तसङ्गतिः । प्रायशो निर्विशेषे ब्रह्मण्यस्मिन्पादे वाक्यानां समन्वयप्रतिपादनाच्छ्रुत्यध्यायपादसङ्गतयो बोध्याः । अत्र पूर्वपक्षे प्रधानाद्युपास्तिः फलं, सिद्धान्ते ब्रह्मप्रमितिरिति विवेकः । अथर्वणे श्रूयते । "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं विजानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतु"रिति । अस्यार्थः । लोकत्रयाधिष्ठानत्वोक्त्या पञ्चीकृतभूताधिष्ठानत्वमाह "यस्मि"न्निति । कार्यब्रह्माख्यसमष्ट्यन्तः करणस्यात्मन्येव कल्पितत्वमाह "मन"इति । इन्द्रियसमष्टिदेवतानां तत्रैव कल्पितत्वं सूचयति "सहे"ति । प्राणैरिन्द्रियाधिष्ठानदेवैः । चकारेण भूतसूक्ष्माविद्याजीवान्तर्यामिणामध्यस्तत्वं ध्वनितम् । सविलासं प्रकृतिं मायाख्यां श्रुत्युक्ततर्काग्निना विलाप्य तमेवाधिष्ठानभूतमद्वयमात्मानं विजानथेति मुमुक्षून्प्रत्याह माता श्रुति 'स्तमेवे"ति । वाच्यवाचककल्पनानामैक्यसाक्षात्काराद्बाधमाह, "अन्या"इति । एष साक्षात्कारस्सविलासाविद्यानिवृत्तिलक्षणामृतत्वस्य सेतुर्व्यवस्थापक इत्याह, "अमृतस्ये"ति । विजानथेत्यनेनोक्तः साक्षात्कार एष इत्युच्यते । अमृतस्यामृतत्वस्य । अत्र द्युभ्वादीनामोतत्वश्रवणात्किञ्चिदायतनं प्रतीयते । तत्किं प्रधानमुतजीव आहोस्विद्ब्रह्मेति संशयः । तत्र प्रधानादिरिति प्राप्ते ब्रूमो "द्युभ्वाद्यायतनं स्वशब्दात्" । द्युभ्वाद्यायतनं द्यौश्च भूश्च द्युभुवौ द्युभुवावादी यस्य द्यौः पृथिव्यन्तरिक्षमित्येवमात्मकस्य तद्द्युभ्वादि तदाय-

तनं ब्रह्मैव । कुतः । स्वशब्दात्स्वस्य परब्रह्मणो वाचको य आत्मशब्दस्तस्मादित्यर्थः । "तमेवैकं विजानथात्मान"मित्यात्मशब्दश्रवणादिति ॥

## मुक्तोपसृप्यव्यपदेशात् ॥ १ । ३ । २ ।

किं च द्युभ्वाद्यायतनं ब्रह्मैव । कुतः । मुक्तैरुपसृप्यं मुक्तोपसृप्यम् । भावप्रधानो निर्देशो, मुक्तोपसृप्यत्वव्यपदेशादिति । यद्वा, मुक्तैरुपसृप्यं प्राप्यं यत्तस्यैवात्र निर्देशादित्यर्थः । "मुक्तोपसृप्यत्वव्यपदेशा"दिति पाठे न कश्चित्प्रयासः । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे", "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य"मिति । इदं च मुक्तोपसृप्यत्वं ब्रह्मण एव श्रुत्यन्तरे प्रसिद्धं,"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत"इति । अपि च "तमेवैकं विजानथात्मानमन्या वाचो विमुञ्चथे"ति वाग्विमोकपूर्वकं विज्ञेयत्वं ब्रह्मलिङ्गम् । श्रुत्यन्तरे तथा दृष्टत्वात, "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणो नानुध्यायाद्बहून्शब्दान्वाचो विग्लापनं हि त"दिति । हृदयग्रन्थिर्मिथ्याज्ञानद्वारा द्वेषादिः । तद्रहितो भूत्वा छिन्नसंशयः सन्क्षीणकल्मषो यस्तस्य हृदये परमात्मा प्रकाशत इत्यर्थः । दृष्ट इति निमित्ते सप्तमी, तद्दर्शनार्थमित्यर्थः । यद्वा यथाश्रुत एवार्थः । यथा नद्यः स्वनामरूपाभ्यां विनिर्मुक्ताः समुद्रं प्राप्य तदात्मना तिष्ठन्ति, तथा विद्वानपि साक्षात्कृतब्रह्मा नामरूपकारणादविद्यातो विमुक्तः परादव्याकृताख्यादज्ञानात्परमस्पृष्टानर्थं पुरुषं पूर्णं दिव्यमखण्डचिद्धातुमात्मत्वेना-

प्रीतीति मुक्तोपसृप्यत्ववाक्यार्थः । यदा ज्ञानावस्थायामस्य विदुषो हृदि स्थिताः कामादयस्तन्मूलाऽविद्या च निवर्तते, पुनर्जन्मसंपादककर्माभावावस्थां वक्तयथेति । धीरो विवेकज्ञानी । विवेकज्ञानमत्र पदार्थज्ञानम् । प्रज्ञामभेदलक्षणवाक्यार्थज्ञानम् । वाक्यार्थज्ञानार्थित्वेन कर्मकाण्डे वैमुख्यं मुमुक्षुणा कार्यमित्याह "नानुध्याया"दिति । अनात्मार्थशब्दाध्ययनफलमाह "वाच"इति । वाच इत्येतत्कण्ठताल्वादीनामष्टस्थानानामुपलक्षणम् । वागादिशोषणमेव बहुशब्दचिन्तनफलमित्यर्थः । तस्माद्द्युभ्वाद्यायतनं परं ब्रह्म ॥

**नानुमानमतच्छब्दात् ॥ १ । ३ । ३ ॥**

अनुमीयत इत्यनुमानं सांख्यपरिकल्पितप्रधानं न द्युभ्वाद्यायतनम् । कस्मात् । अतच्छब्दात्तस्य प्रधानस्यानुमानस्य शब्दस्तच्छब्दः । न सोऽतच्छब्दः । तस्मात्प्रधानप्रतिपादकशब्दस्याश्रवणादित्यर्थः । प्रत्युत तद्विरोधिशब्दा एव "यः सर्वज्ञः सर्ववि"दित्यादयो वर्तन्त इति भावः ॥

**प्राणभृच्च ॥ १ । ३ । ४ ॥**

प्राणभृज्जीवोऽपि न द्युभ्वाद्यायतनम् । कुतः । अतच्छब्दादेव । यद्यप्यात्मशब्दस्साधारणस्तथाऽपि जीवस्य सर्वज्ञत्वं द्युभ्वाद्यायतनत्वं चाञ्जसा न सम्भवतीत्यात्मशब्दस्यातच्छब्दत्वमेव ॥

जीवनिरासे हेत्वन्तरमाह

**भेदव्यपदेशात् ॥ १ । ३ । ५ ॥**

न प्राणभृद्द्युभ्वाद्यायतनम् । कुतः । भेदव्यपदेशात् । "तमेवैकं विजानथे"ति ज्ञातृज्ञेयभावेन भेदव्यपदेशादि-

त्यर्थः । जीवस्य मुमुक्षुत्वेन ज्ञातृत्वात्परिशेषाज्ज्ञेयं द्युभ्वाद्यायतनं परं ब्रह्मेति ॥

तत्रैव हेत्वन्तरमाह

**प्रकरणाच्च ॥ १ । ३ । ६ ॥**

"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञात"मित्युपक्रमात्परमात्मन एवेदं प्रकरणम् । न हि जीवज्ञानात्सर्वज्ञानं सम्भवति । तस्मात्प्रकरणादपि न प्राणभृदित्यर्थः ॥

अपि च

**स्थित्यदनाभ्यां च ॥ १ । ३ । ७ ॥**

न प्राणभृद्द्युभ्वाद्यायतनम् । कुतः । स्थित्यदनाभ्याम् । स्थितिश्चादनं च ताभ्यामिति पञ्चमीद्विवचनम् । द्युभ्वाद्यायतनं प्रकृत्य "द्वा सुपर्णे"ति मन्त्रे जीवस्यादनं परमात्मनः स्थितिरिति द्वे निर्दिश्येते । "तयोरन्यः पिप्पलं स्वाद्वत्ती"त्यदनं, "अनश्नन्नन्यो ऽभिचाकशीती"त्यौदासीन्येन स्थितिर्निर्दिश्यते । इदं च द्युभ्वाद्यायतनस्य ब्रह्मत्वे घटते नान्यथेति । तस्माद्द्युभ्वाद्यायतनं परं ब्रह्म ज्ञेयमिति सिद्धम् ॥

**भूमा सम्प्रसादादध्युपदेशात् ॥ १ । ३ । ८ ॥**

पूर्वमात्मशब्दाद्द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम् । तदयुक्तं, "तरति शोकमात्मवि"दित्यत्राब्रह्मण्यप्यात्मशब्दप्रयोगादित्याक्षेपसङ्गत्याऽस्यारम्भः । पूर्वपक्षे प्राणोपास्तिः फलं, सिद्धान्ते ब्रह्मप्रमितिरिति । एवमेव निर्विशेषवाक्यविचारे पूर्वपक्षे यस्य कस्य चिदुपास्तिः, सिद्धान्ते ब्रह्मज्ञानमेवेति बोध्यम् । छान्दोग्ये श्रूयते "श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मां भगवाञ्शोकस्य परं पारं तारय"त्विति नारदेन

पृष्टः सनत्कुमारो नाम ब्रह्मेत्युपदिदेश । पुनर्नारदः, "अस्ति भगवो नाम्नो भूय" इति पप्रच्छ । तस्योत्तरं "वाग्वाव नाम्नो भूयसी"ति । तथा, "अस्ति भगवो वाचो भूय"-इति प्रश्ने, "मनोवाव वाचो भूय" इत्युत्तरम् । एवं प्राण-पर्यन्तं भूयःप्रश्नोत्तरे दृश्येते । प्राणोपदेशानन्तरं प्रश्न विनैवेदं श्रूयते, "एष तु वा अतिवदति यः सत्येनातिवदती"ति, "भूमात्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्प"मित्यादि । अस्यार्थः । नाल्पे सुखमस्ति । भूमैव सुखम् । तस्मान्निरतिशयं सुखमिच्छता भूमैव विजिज्ञासितव्यो विशेषेण ज्ञातुमेष्टव्य इति सनत्कुमारेणोक्ते मुमुक्षुर्नारदस्तदुपश्रुत्य भगवन्भूमानमेव विशेषेण ज्ञातुमिच्छामीत्याह "भूमानं भगव" इति । भूम्नो लक्षणमाह "यत्रे"ति । व्यवहारातीतं पूर्णं वस्त्वेव भूमेत्यर्थः । लक्षणं व्यतिरेकमुखेन स्पष्टयितुं परिच्छिन्नलक्षणमाह, "अथे"ति । एवं स्थिते संशयः, किं प्राणो भूमा, उत परमात्मेति । "प्राणो वा आशाया भूया"निति पूर्वं प्राणस्य सन्निधानात्प्राणो भूमेत्युक्तम् । न च "तरति शोकमात्मवि"दिति प्रश्नवाक्य आत्मोपक्रमेणात्मप्रकरणात्सन्निधेर्दुर्बलत्वमिति वाच्यम्, "नाम ब्रह्मेत्युपास्वे"ति समाधानवाक्ये नामादेरब्रह्मण एवोपदेशेन प्रश्नस्थात्मशब्दस्यापि नामादिपरत्वेनानात्मपरत्वादात्मप्रकरणासिद्धेः, प्रश्नोत्तरयोरेकार्थत्वनियमात् । तस्मात्प्राणो भूमेति प्राप्ते ब्रूमः । भूमा परमात्मैव । कुतः । संप्रसादादध्युपदेशात् । सम्यक्प्रसीदत्यस्मिञ्जीवस्वरूपमिति संप्रसादः सुषुप्त्यवस्था तस्यां चावस्थायां प्राणो जागर्तीति सम्प्रसादशब्देन प्राण-

उच्यते । प्राणादूर्ध्वं भूम्न उपदेशादित्यर्थः । प्राणोपदेशानन्तर "मेष तु वा अतिवदति यः सत्येनातिवदती"ति "तु"शब्देन प्राणवादस्यानतिवादत्वमुक्त्वा सत्यशब्दवाच्यपरमात्मवादस्यातिवादत्वं ब्रुवन्भूमानमुपदिदेश । अतो भूम्नः प्राणादूर्ध्वमुपदेश इति गम्यते । किं च "तरति शोकमात्मवि"दित्यात्मप्रकरणाद्भूमा परमात्मा । न च प्रकरणासिद्धिः, आत्मोपदेशार्थं नामाद्युपदेशेन "नामब्रह्मेत्युपास्वे"त्यादे "स्तरति शोकमात्मवि"दिति प्रश्नोत्तरत्वसिद्धेः । अतो भूमा परमात्मा । नामादिप्राणान्तमतीत्य सत्यशब्दवाच्य आत्मोत्कृष्ट इति यो वदति स एषोऽतिवादीति श्रुत्यर्थः ॥

## धर्मोपपत्तेश्च ॥ १ । ३ । ९ ॥

किं च "यत्र नान्यत्पश्यती"त्यादिनोक्तानां सर्वव्यवहाराभावादिधर्माणां परमात्मन्येवोपपत्तेश्च परमात्मैव भूमा, "यत्र त्वस्य सर्वात्मैवाभूत्तत्केन कं पश्ये"दित्यादि श्रुत्यन्तरे सर्वव्यवहाराभावस्य परमात्मधर्मत्वेनावगतत्वात् । "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुख"मिति दुःखसहितसुखनिराकरणेन भूम्नः सुखत्वं दर्शितम् । एवं "यो वै भूमा तदमृत"मिति श्रूयमाणममृतत्वं ब्रह्मधर्मः, "अतोऽन्यदार्त"मिति श्रुतेः । आर्तमार्तिमद्विनाशीति यावत् । एवं स्वमहिम्नि प्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मकत्वं चैते धर्मा ब्रह्मण्येवोपपद्यन्ते । तस्मात्प्राणो नोपास्यः, किं तु भूमा परमात्मा ज्ञेय इति सिद्धम् ॥

## अक्षरमम्बरान्तधृतेः ॥ १ । ३ । १० ॥

पूर्वं सत्यशब्दस्य ब्रह्मणि रूढत्वाद्भूमा ब्रह्मेत्युक्तम् । तद्वदत्राप्यक्षरशब्दस्य वर्णेषु रूढत्वाद्वर्ण एवाक्षरमस्त्विति

दृष्टान्तसङ्गतिः । ओङ्काररूपोपास्तिर्ब्रह्मज्ञानमित्युभयत्र फलम् । बृहदारण्यके श्रूयते "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च सहोवाचैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्व"त्यादि । अस्यार्थः । "यदूर्ध्वं दिवो यदधस्तात्पृथिव्या ये चोभे द्यावापृथिव्यौ यदन्तरिक्षं यद्भूतं यद्भवद्भविष्यच्च तत्सर्वं कस्मिन्नोतं प्रोतं चे"ति गार्ग्या प्रश्ने कृते, याज्ञवल्क्येन "आकाशे तत्सर्वमोतं प्रोतं चे"ति निरस्ते गार्गी पुनरपृच्छदाकाशोऽव्याकृताख्यः कस्मिन्नोतप्रोतत्वेन तिष्ठतीति । याज्ञवल्क्य आह, हे गार्गि त्वया यत्पृष्टमाकाशस्याधिकरणं तदेतदक्षरमस्थूलादिविशेषणकं ब्रह्मविदो वदन्तीति । तत्र संशयः किमक्षरशब्देन वर्ण उच्यते, उत ब्रह्मेति । अक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वाद्वर्ण एवाक्षरशब्दवाच्य इति प्राप्ते ब्रूमः । अक्षरं ब्रह्मैव । कुतः । अम्बरान्तधृतेः । पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणादित्यर्थः । विषयवाक्यार्थकथनसमयेऽम्बरान्तधारणं प्रतिपादितम् ॥

नन्वम्बरान्तधृतिः प्रधानेऽपि सम्भवतीत्यत आह

**सा च प्रशासनात्** ॥ १ । ३ । ११ ॥

सा च धृतिः परमेश्वरस्यैव कर्म नान्यस्याचेतनस्य । कुतः । प्रशासनात् । "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठते" इत्यादिना प्रशासनश्रवणादित्यर्थः । प्रशासनं नामाज्ञा । सा च चेतनस्यैव, नाचेतनस्य प्रधानस्येति । तस्मादक्षरं ब्रह्म ॥

**अन्यभावव्यावृत्तेश्च** ॥ १ । ३ । १२ ॥

इतश्च परमात्मैवाक्षरशब्दवाच्यस्तस्यैवेश्वरस्य प्रशासनं कर्म । कुतः । अन्यभावव्यावृत्तेः । अन्यस्य प्रधाना-

देर्भावो धर्मोऽन्यभावस्तद्व्यावृत्तेस्तद्विपरीतधर्मश्रवणादित्यर्थः । तथा, "एतदक्षरं गार्ग्यदृष्टं द्रष्ट्रश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञात्रि"ति द्रष्टृत्वादयो नाचेतने सम्भवन्ति तस्माद्द्रष्टृत्वादिसमानाधिकरणप्रशासनवान्परमात्मैवाक्षरं, नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रिति द्रष्ट्राद्यन्तरनिषेधाच्च न जीवोऽप्यक्षरमिति । तस्मादक्षरं ब्रह्म ज्ञेयमिति सिद्धम् ॥

## ईक्षतिकर्मव्यपदेशात्सः ॥ १ । ३ । १३ ॥

पूर्वमोंकारस्य पूर्वपक्षत्वेन बुद्धौ सान्निध्यात्तस्मिन्नोंकारे ध्यातव्यमिह निरूप्यत इति बुद्धिसान्निध्यसङ्गतिः । यद्वा पूर्वमक्षरशब्दस्य वर्णे रूढस्यापि जगद्धृतिलक्षणलिङ्गेन ब्रह्मणि न क्षरतीति व्युत्पत्त्याऽचलत्वादनादित्वाद्व्यापित्वाद्वा योगवृत्तिराश्रिता । तद्वदिहापि देशपरिच्छिन्नफल श्रुतिलिङ्गेन परशब्दस्यापेक्षकपरत्वविशिष्टे हिरण्यगर्भे वृत्तिरस्त्विति दृष्टान्तसङ्गतिः । कार्यब्रह्मण उपास्तिः पूर्वपक्षे फलं, सिद्धान्ते परब्रह्मोपास्तिरिति भेदः । आथर्वणे श्रूयते, "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेती"ति प्रकृत्य, "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीते"त्यादि । अस्यार्थः । पिप्पलादो नामाचार्यः सत्यकामेन पृष्टो व्याचष्टे । हे सत्यकाम परं निर्विशेषमपरं च कार्यं ब्रह्म यदेतदेव योऽयमोङ्कारः । स हि प्रतिमेव विष्णोस्तस्य प्रतीकः । तस्मात्प्रणवं ब्रह्मात्मना विद्वानेतेनोङ्कारध्यानेनायतनेन प्राप्तिसाधनेन परापरयोरेकतरमन्वेति । यथाध्यानमेकमात्रे द्विमात्रे वा हिरण्यगर्भोपास्तिं कुर्यादिति दर्शयित्वा ब्रवीति यः पुनरोमित्येतदक्षरम् । त्रिमात्रेणेति

तृतीया द्वितीयात्वेन नेया, ब्रह्मोङ्काराभेदोपक्रमात् । तथाविश्रमक्षरं सूर्यान्तस्थं परं ध्यायीतेति । स उपासकः सूर्यं प्राप्तः सामभिर्ब्रह्मलोकं प्रतिनीयत इति । अत्र संशयः, किमपरं ब्रह्म ध्यातव्यमुपदिश्यते, किं वा परं ब्रह्मेति । अपरमिति प्राप्ते ब्रूमः । स ध्यातव्यः परमात्मैव । कुतः । ईक्षतिकर्मव्यपदेशाद्वाक्यशेषे ध्यातव्यस्येक्षतिकर्मत्वेन व्यपदेशादित्यर्थः । "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति । स ध्याता । जीवघनशब्देन ब्रह्मलोक उच्यते, सकलजीवाभिमानिहिरण्यगर्भाधारत्वात् । तथा च ब्रह्मलोकाल्लोकान्तरापेक्षया परात्परं पुरुषं परमात्मानमीक्षते साक्षात्करोतीत्यर्थः । ईक्षतिपदार्थस्य दर्शनस्य लोके यथार्थविषयकत्वाद्यथार्थस्वरूपपरमात्मैवेक्षतिकर्मेति तत्समानविषयकध्यानस्यापि परमात्मैव विषयो, ध्यानेक्षणयोरेकविषयकत्वनियमात् । "यथा पादोदरस्त्वचा निर्मुच्यत एवं ह वै स पाप्मना विनिर्मुच्यत" इति पापविनिर्मोकफलवचनं परमात्मानं ध्येयं सूचयति । पादोदरः सर्पः । तस्मात्क्रममुक्त्यर्थमोंकारे ध्यातव्यः परमात्मेति सिद्धम् ॥

## दहर उत्तरेभ्यः ॥ १ । ३ । १४ ॥

पूर्वं परमपुरुषशब्दस्य ब्रह्मणि रूढत्वाद्ब्रह्मोपास्यमित्युक्तं भवति । तद्वदिहाप्याकाशशब्दस्य भूताकाशे रूढत्वात्तस्यैवोपास्यत्वमस्त्विति दृष्टान्तसङ्गतिः । पूर्वपक्ष आकाशाद्युपास्तिः फलं, सिद्धान्ते परोपास्तिद्वारा प्रमितिरिति । छान्दोग्ये भूमविद्यानन्तरं श्रूयते, "अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य"मि-

त्यादि । अस्यार्थः । विद्यान्तरारम्भणार्थोऽथशब्दः । यदिदमिति प्रसिद्धं हृदयं परामृष्टम् । अस्मिन्निति प्रत्यक्षत्वोक्तिः । ब्रह्मपुरं शरीरम् । तस्मिन्दहरं सूक्ष्मं हृत्पुण्डरीकं, तदाकारत्वात् । हृदयस्य वेश्मत्वं सम्पादयति "दहर"-इति । दहरः सूक्ष्मः । अस्मिन्हृदयेऽन्तराकाशः परमात्मा सदा तिष्ठतीत्यर्थः । "तस्मि"न्हृदये । व्यवहितत्वेऽपि योग्यत्वात्तच्छब्देन हृदयपरामर्शः । तदाकाशाख्यं ब्रह्मान्वेष्टव्यं विचार्य विजिज्ञासितव्यं ज्ञेयमिति । अत्र दहरे पुण्डरीके यो दहराकाशः श्रुतः स किं भूताकाश आहो स्वित्परमात्मेति संशये, प्रसिद्धिबलाद्भूताकाश इति प्राप्तम् । यद्वा ब्रह्मपुरशब्देन शरीरमभिदधता तत्स्वामिजीवोपस्थितेर्जीवो दहर इति प्राप्ते ब्रूमः । दहराकाशः परमात्मैव । कस्मात् । उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः । तथा हि जिज्ञास्यत्वेन विहितस्य दहरस्याकाशस्य "तं चेद्ब्रूयु"रित्युपक्रम्य, "किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्य"मित्याक्षेपपूर्वकं समाधानवाक्यम् । "स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरे वा समाहिते" इत्यादिकमाकाशोपमानत्वद्यावापृथिव्यधिष्ठानत्वेन दर्शयति । श्रुत्यर्थस्तु । तमाचार्यं शिष्या ब्रूयुः । किमिति ब्रूयुः । किं तदिति । हृत्पुण्डरीकमेव तावदल्पं, तस्मिन्विद्यमानआकाशोऽल्पतरः, इत्यल्पे पुण्डरीके किमस्ति यच्छ्रुतियुक्तिभ्यामन्वेष्टव्यं यद्वाव साक्षात्कर्तव्यमित्यल्पतारूपेण दोषेण दहरस्य ज्ञेयत्वमाक्षिप्तं शिष्यैः । तत्र समाधानं "स ब्रूया"-दिति । स आचार्यो ब्रूयात् । किमिति, "यावा"निति । "अस्मि"न्निति दहराकाशोक्तिः । अल्पत्वदोषश्चाकाशोपमानेन निराकृतः । तथा च द्यावापृथिव्यधिष्ठानमाकाशो-

पमितं दहराकाशाख्यं ब्रह्मैव । एवमेष "आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प"इति चात्मत्वापहतपाप्मत्वादयो गुणा न भूताकाशे जीवे वा सम्भवन्ति । जीवे वाऽऽत्मत्वसम्भवेऽप्युत्तरगुणानामसम्भवो बोध्यः । विमृत्युर्मरणरहितः । विजिघत्सो विगता जिघत्साऽत्तुमिच्छा यस्य स विजिघत्सः । तथा "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयत"इति कर्मणामन्तवत्फलत्वमुक्त्वा, "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती"ति प्रकृतदहराकाशविज्ञानस्यानन्तफलवत्त्वं वदन्परमात्मत्वमस्य सूचयति । सत्यान्कामांश्चेति चकारेण तेषामप्युपास्यत्वमुक्तम् । तथा च सत्यकामादिगुणकमात्मानमनुविद्यानुभूय ये परलोकं व्रजन्ति तेषां सर्वेषु लोकेषु कामचारः स्वेच्छया सञ्चरणमप्रतिहतमनन्तमैश्वर्यं भवतीत्यर्थः । तस्मादेतेभ्य उत्तरेभ्यो हेतुभ्यो दहराकाशः परमात्मा ॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १ । ३ । १५ ॥

उत्तरेभ्य इत्यस्य प्रपञ्चोऽयम् । किं च, "इमाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती"ति दहरवाक्ये प्रकृतं परमेश्वरं ब्रह्मलोकशब्देनाभिधाय प्रजाशब्दवाच्यानां जीवानां प्रत्यहं तद्विषया गतिरुच्यमाना गन्तव्यस्य दहराकाशस्य ब्रह्मतां गमयति । गतिं ब्रह्मलोकशब्दं चाभिप्रेत्य गतिशब्दाभ्यामित्युक्तं सूत्रकारैः । प्रत्यहं सुषुप्त्यवस्थायां जीवस्य ब्रह्मगमनम् । तथा हि दृष्टं श्रुत्यन्तरे "सत्ता सोम्य तदा सम्पन्नो भवती"त्यादौ । तथा च दहराकाशगमनं ब्रह्मगमनमेवेति दृढीकृतम् "तथा हि दृष्ट"मित्यनेन ।

प्रत्यहं हिरण्यगर्भब्रह्मलोकगमनासम्भवाद्ब्रह्मैव लोकइति कर्मधारयसमास एव ग्राह्य इत्यस्मिन्नर्थेऽहरहर्गमनमेव लिङ्गमित्यनेनोक्तम् । च शब्देन निषादस्थपतिन्यायोऽपि कर्मधारयसमासग्रहणेन सूचितः ॥

**धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १ । ३ । १६ ॥**

धृतेरपि हेतोः परमेश्वर एव दहराकाशः । अनतिक्रान्तप्रकरणं दहराकाशं निर्दिशति, "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाये"ति । विधृतिरिति क्तिन्नन्तत्वाद्विधारक इत्युच्यते । सेतुशब्देन वर्णाश्रमाद्यसङ्करहेतुत्वमुच्यते । न हि सर्वलोकविधारकत्वं ब्रह्मणोऽन्यस्य सम्भवति । अस्य च विधारणलक्षणमहिम्नोऽस्मिन्परमात्मन्यन्यत्रापि श्रुत्यन्तर उपलब्धेः परमात्मलिङ्गत्वमेव । "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठते"इति । तथा, "एष सर्वेश्वर एष लोकाधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानामसम्भेदाये"ति ॥

**प्रसिद्धेश्च ॥ १ । ३ । १७ ॥**

दहराकाशशब्दोऽपि परमात्मन्येव प्रसिद्धो, न जीवे "आकाशो ह वै नाम नामरूपयोर्निर्वहिता", "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त"इत्यादिदर्शनात् । यद्यप्याकाशशब्दस्य भूताकाशेऽपि प्रसिद्धिरस्ति, तथाऽपि "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इति तस्योपमानत्वेन ग्रहणान्नोपमेयदहराकाशत्वं सम्भवतीति दहराकाशः परमेश्वर एव ॥

**इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १ । ३ । १८॥**

ननु "य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचे"ति सम्प्रसादशब्देनेतरस्य जीवस्याप्यस्मिन्प्रकरणे परामर्शात्स जीवो दहराकाशोऽस्त्विति चेन्नासम्भवात् । जीव आकाशोपमेयत्वापहतपाप्मत्वादीनामसम्भवादित्यर्थः । श्रुत्यर्थस्तु । "य एष" इति सर्वनामरूपाभ्यां विद्वानुक्तः । तमेव सुप्तं सर्वकालुष्यनिर्मुक्तं वक्ति "सम्प्रसाद" इति । सम्प्रसादशब्देन सुषुप्त्यवस्थावाचकेनावस्थावानित्युच्यते । अस्मादभिमानद्वयविषयाच्छरीरात्स्थूलसूक्ष्मशरीरद्वयात्समुत्थाय विविक्तमात्मानं ज्ञात्वा । विवेकज्ञानं चात्र श्रवणमननिदिध्यासनानि । तत्फलमाहा "भिनिष्पद्यत" इति । अभिनिष्पत्तिः साक्षात्कारः । अस्य फलमाह "पर" मिति । उपसम्पद्य निष्पद्यत इत्येतन्मुखं व्यादाय स्वपितीतिवद्द्रष्टव्यम् । ज्योतिः शब्दस्य सूर्यादिपरत्वभ्रमं वारय "त्येष" इति । गुरुरिति शेषः ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १ । ३ । १९ ॥

नन्वपहतपाप्मत्वादीनामसम्भवान्न जीवो दहराकाश इत्यसङ्गतं, श्रुतिबलेन जीवस्याप्यपहतपाप्मत्वादिसम्भवात् । तथा हि दहरविद्याया उपरि प्रजापतिविद्याया 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचे"ति जाग्रदवस्थापन्नं द्रष्टारं जीवमुपक्रम्य, "एतं त्वेव ते भूयोऽनुव्याख्यास्यामी"ति जीवमेव परामृश्य, "य एष स्वप्ने महीयमानश्चरत्येष आत्मेति", "तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मे"त्यवस्थात्रयविशिष्टं जीवं प्रतिपाद्य, तस्यैव जीवस्यापहतपाप्मत्वादि दर्शयति । "एतदमृतमभयमेतद्ब्रह्मेति", "नाह खल्वयमेवं

सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानी"ति सुषुप्त्यवस्थायामिन्द्रेणोक्तं दोषमुपलभ्य पुनः प्रजापति 'रेतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मा' दित्युपक्रम्य शरीरनिन्दापूर्वकं "मेव सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष"इति जीवमेव शरीरात्समुत्थितं पुरुषं दर्शयति । तस्मादपहतपाप्मत्वादीनां श्रुतिबलाज्जीवे सम्भवाज्जीवो दहराकाश इ"त्युत्तराच्चे"दिति सूत्रावयवार्थः। उत्तरा"द्य एषोऽक्षिणी"त्यादि वाक्यात् । श्रुत्यर्थस्तु । इन्द्रविरोचनौ खलु सुरासुरराजानावात्मानं विविदिषन्तौ समित्पाणी प्रजापतिं जग्मतुः । आगत्य द्वात्रिंशद्वर्षाणि ब्रह्मचर्यमूषतुः । अथैनौ प्रजापतिरुवाच किं कामाविह स्थो युवामिति । तावूचतु"र्य आत्माऽपहतपाप्मा तमावां विविदिषाव"इति । ततः प्रजापतिरुवाच । प्रथमं "य एषोऽक्षिणी"ति । जाग्रदवस्थायामक्षिस्थानः सन्यो दृश्यते शास्त्रतः स आत्माऽपहतपाप्मेत्युवाच । य एवापहतपाप्मत्वादिगुण एतदमृतमभयमेतद्ब्रह्मेति । एतच्छ्रुत्वा तावप्रक्षीणकल्मषतयाऽक्षिनिष्ठच्छायापुरुषमात्मत्वेन गृहीत्वा पुनः प्रजापतिं पप्रच्छतुरथ योऽयं भगवोऽक्ष्यादर्शोपलादौ च दृश्यते कतम एतेष्वसावथ वा सर्वेष्वेक एवेति। तमेतं प्रश्नं श्रुत्वा प्रजापतिरेतौ भ्रान्ताविति ज्ञात्वा यदि वयं युवां भ्रान्तौ स्थ इति ब्रूमस्तदा दौर्मनस्येन तत्त्वं न गृह्णीयातामित्यनयोराशयमनुरुध्य प्रत्युवाच, उदशराव आत्मानमीक्षेथां तत्र यद्दृश्यते तन्मां प्रतिब्रूतमिति। तौ दृष्ट्वा सन्तुष्टहृदयौ नाब्रूताम् । अथ प्रजापतिरेतौ विपरीतग्राहिणौ मा भूतामित्याशयवान्पप्रच्छ किमत्राप-

श्यतमिति । तौ होचतुर्नखलोमादिमन्तं प्रतिबिम्बपुरुषमुदशरावेऽपश्यावे ति उत्पत्तिनाशवत्त्वाद्यथा शरीरमात्मा न भवत्येवं छायापुरुषोऽपि नात्मेत्येवं तौ जानीयातामित्याशयवान्प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वा पुनरुदशरावे पश्यतं तमात्मानमिति। साध्वलङ्कृतौ सुवसनौ छिन्ननखलोमानौ भूत्वा तथैव चक्रतुः । पुनः प्रजापतिना पृष्टौ तमेवच्छायात्मानमूचतुः । तदुपश्रुत्य प्रजापतिर्बताहो अद्यापि भ्रमो न शान्तोऽनयोरिति मत्वा, आत्मतत्त्वं कथयामि तावता कालेन कल्मषक्षयेऽस्मद्वाक्यसन्दर्भपर्यालोचनयाऽऽत्मतत्त्वं प्रतिपत्स्येते स्वयमेवेत्युवाच "य आत्माऽपहतपाप्मा, एतदमृतमभयमेतद्ब्रह्म"ति । तयोर्मध्ये विरोचनो देहानुसारित्वाच्छायाया देह एवात्मतत्त्वमिति मत्वा स्वगृहमागत्य तथैवासुरानुपदिदेश । इन्द्रस्तु स्वगृहमागच्छन्मार्ग एवच्छायात्मनोऽनित्यत्वादिदोषं चिन्तयित्वा पुनः समित्पाणिः सन्प्रजापतिसमीपमागत्य तेन पृष्टः सन्मार्गे चिन्तितमुवाच । प्रजापतिस्तु हे इन्द्र त्वं कल्मषक्षयाय पुनर्द्वात्रिंशद्वर्षाणि ब्रह्मचर्यं चर, अथ प्रक्षीणकल्मषाय तेऽहमेनमात्मानं भूयोऽनुव्याख्यास्यामीत्यवोचत् । स च तथा चरितब्रह्मचर्यः प्रजापतिमुपससाद । उपसन्नायेन्द्राय प्रजापतिर्व्याचष्टे योऽक्षिणि पुरुषो दर्शितः प्रथमे पर्याये सोऽयमेव स्वप्ने वासनामयैर्वनितादिभिर्विषयैर्महीयमानः सेव्यमानोऽनेकविधान्भोगान्भुञ्जानो विहरतीति यावत् । इदं श्रुत्वा देवेन्द्रः शोकभयादिविविधव्याध्यनुभवात्स्वप्ने किञ्चिदस्तीत्युवाच । एवमुक्तवति मघवति प्रजापतिः पुनर्द्वात्रिंशद्वर्षाणि ब्रह्मचर्यं चराद्याप्यक्षीणकल्मषोऽसीत्युवाच । चरित्वाऽऽगतायेन्द्राय प्रजापतिर्व्याचष्टे योऽयमाद्य द्वितीयपर्याययोरक्षिणि-

मनुष्यलोकप्राप्तिमभिधाय, द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिमभिधाय, त्रिमात्रमुपासीनस्य प्राप्यतयाऽभिधीयमानो ब्रह्मलोकोऽन्तरिक्षात्परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञायते, तद्गतेन चेक्ष्यमाणस्तल्लोकाधिपतिश्चतुर्मुख एव । "एतस्माज्जीवघनात्परात्पर"मिति च देहेन्द्रियादिभ्य पराद्देहेन्द्रियादिभि सह घनीभूताज्जीव[1]व्यष्टिपुरुषाद्ब्रह्मलोकवासिन समष्टिपुरुषस्य चतुर्मुखस्य परत्वेनो[2]पपद्यते । अतोऽत्र निर्दिश्यमान पर पुरुष समष्टिपुरुषश्चतुर्मुख एव । एव चतुर्मुखत्वे निश्चिते ऽजरत्वादयो यथाकथञ्चिन्नेतव्या इति प्राप्ते प्रचक्ष्महे-

'ईक्षतिकर्म व्यपदेशात्सः'

ईक्षतिकर्म स-परमात्मा । कुत । व्यपदेशात्, व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन । तथा हि, ईक्षतिकर्मविषयतयोदाहृते श्लोके "तमोङ्कारेणैवायतनेना[3]न्वेति विद्वान् यत्तच्छान्तमजरममृतमभय पर चे'ति, पर शान्तमजरमभयममृतमिति हि परमात्मन एवैतद्रूपम्, "एतदमृतमेतदभय[4]मेतद् ब्रह्म"त्येवमादिश्रुतिभ्यः । "एतस्माज्जीवघनात्परात्पर"मिति च परमात्मन एव व्यपदेशो, न† चतुर्मुखस्य, तस्याऽपि जीवघनशब्दगृहीतत्वात् । यस्य हि कर्मनिमित्त देहित्वम्, स जीवघन इत्युच्यते† । चतुर्मुखस्याऽपि तच्छ्रूयते 'यो ब्रह्माण विदधाति पूर्व"मित्यादौ । यत्पुनरुक्तम्-अन्तरिक्षलोकस्योपरि निर्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोक इति प्रतीयते, अतस्तत्रस्थश्चतुर्मुख इति, तदयुक्तम्, 'यत्तच्छान्तमजरममृतमभय"मित्यादिनेक्षतिकर्मणा परमात्मत्वे निश्चिते सतीक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति । किञ्च, "यथा पादोदरस्त्वचा विनिर्मुच्यत एव ह वै[5] स पाप्मना विनि-

[1] जीवस्येति मु पु ।

[2] परत्वे नेति पदद्वय मु पु ।

[3] °वायनेनेति पाठान्तरम ।

[4] एतद्द्वयम एतदभयमेतदमृतमिति लि पु पाठ. ।

†† एतच्चिह्नान्तर्गतपाठो लि पु त्रुटित । [5] हैव-इति मु० पु ।

मुक्तः स सामभिरुन्नीयते ब्रह्मलोक''मिति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमान न चतुर्मुखस्थानम् । अत एव चोदाहरणश्लोके इममेव ब्रह्म लोकमधिकृत्य[1] श्रूयते " यत्तत्कवयो वेदयन्त" इति, कवय.-सूरय । सूरिभिर्दृश्य च वैष्णव पदमेव, "तद्विष्णोः परम पद सदा पश्यन्ति सूरय" इत्येवमादिभ्य. । न चान्तरिक्षात्परश्चतुर्मुखलोक, मध्ये स्वर्गलोकादीना बहूना सद्भावात । अतः "एतद्वै[2] सत्यकाम पर चापर च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनै[3]कतरमन्वेती' ति प्रतिवचने यदपर कार्य ब्रह्म निर्दिष्टम्, तदैहिका[4]मुष्मिकत्वेन द्विधा विभज्य, क्रमात्त्र प्रणवमुपासीनानामैहिक मनुष्यलोकावाप्तिरूप फलमभिधाय, द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षित फल चाभिधाय, त्रिमात्रेण परब्रह्मवाचिना प्रणवेन पर पुरुष ध्यायता परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्व समञ्जसम् । अत ईक्षतिकर्म परमात्मा ॥

ईक्षतिकर्माधिकरण समाप्तम् ॥ ४ ॥

---

अथ दहराधिकरणम् ५ । **दहर उत्तरेभ्यः ॥ १३ ॥**

इदमामनन्ति च्छन्दोगा.-"अथ यदिदमस्मिन् ब्रह्मपुरे दहर पुण्डरीक वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्य तद्वाव विजिज्ञासितव्य"मिति । तत्र सदेहः-किमसौ हृदयपुण्डरीकमध्यवर्ती दहराकाशो महाभूतविशेष उत प्रत्यगात्मा ऽथ परमात्मेति । कि तावद्युक्तम्, महाभूतविशेष इति । कुतः । आकाशशब्दस्य भूताकाशे प्रसिद्धिप्रकर्षात्, "तस्मिन्यदन्तस्तदन्वेष्टव्य"मित्यन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्च-इत्येव प्राप्ते[5]ऽभिधीयते-

---

१ ब्लोकेन्द्रमेव ब्रह्मलोकमवधीकृत्येति लि पु पाठ प्रामादिक ।

२ एतच्चैवेति लि पु ।

३ अयनेनेति लि पु पाठः ।

४ तथैवैहिकेति लि पु पाठ ।

५ कि तात विशेषे इति कुत आकाशशब्दस्य भूताकाशे ब्रह्मणि च प्रसिद्धत्वेऽपि भूताकाशे प्राप्ते-इति लि पु पाठ प्रामादिक ।

'दहर उत्तरेभ्यः',

दहराकाशः परं ब्रह्म । कुतः । उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः, "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सो ऽपिपासस्सत्यकामस्सत्यसङ्कल्प" इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणा गुणा दहराकाशं परं ब्रह्मेति ज्ञापयन्ति । "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती" त्यादिना "यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयत" इत्यनेन दहराकाशवेदिनः सत्यसङ्कल्पत्वप्राप्तिश्चोच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति । यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश'-इत्युपमानोपमेयभाव[1]श्च दहराकाशस्य भूताकाशत्वे नोपपद्यते । हृदयावच्छेदनिबन्धन उपमानोपमेयभाव इति चेत्, तथा सति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते । ननु च दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न सम्भवति, 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षा'दित्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात् । नैवम्, दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्वप्राप्ताल्पत्वनिवृत्तिपरत्वादस्य वाक्यस्य, यथा ऽधिकजवेऽपि सवितरि 'इषुवद् गच्छति सविते'ति वचनं गतिमान्द्यनिवृत्तिपरम् । अथ स्यात् "एष आत्माऽपहतपाप्मे"त्यादिना दहराकाशो न निर्दिश्यते, 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्य"मिति दहराकाशान्तर्वर्तिनस्ततो ऽन्यस्यान्वेष्टव्यत्वेन प्रकृतत्वादिह "एष आत्मा ऽपहतपाप्मे"ति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात् । स्यादेतदेवम्, यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभङ्क्ष्यत्,[2] व्यभाङ्क्षीत्तु सा । तथा हि, "अथ यदस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश[3]स्तस्मिन् यदन्तस्तदन्वेष्टव्य"-

१ भाव इति नास्ति लि॰ पु॰ ऽत्र ।
२ व्यभाङ्क्षीदिति मु पु॰ पाठ । व्यभात्स्यत–इति लि पु पाठ॰ ।
३ अन्तर आकाश इति व्यस्त पाठो मु पु प्राक् चात्र चास्ति न तु युक्तः ।

मिति ब्रह्मपुरशब्देनोपास्यतया सन्निहितपरब्रह्मण: पुरत्वेनो[1]पासकश रीर निर्दिश्य तन्मध्यवर्ति च तदवयवभूत पुण्डरीकाकारमल्पपरिमाण हृदय परस्य ब्रह्मणो वेश्मतयाऽभिधाय सर्वज्ञ सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपासकानुग्रहाय तस्मिन्वेश्मनि सन्निहित सूक्ष्मतया ध्येय दहराकाशशब्देन निर्दिश्य तदन्तर्वर्ति चापहतपाप्मत्वादि स्वभावतो- निरस्तनिखिलहेयत्व सत्यकामत्वादिस्वाभाविकानवधिकातिशयकल्याण- गुणजात च ध्येय तदन्वेष्टव्यमित्युपदिश्यते । अत्र तदन्वेष्टव्यमिति तच्छब्देन दहराकाश तदन्तर्वर्ति[2] गुणजात च परामृश्य तदुभय- मन्वेष्टव्यमित्युपदिश्यते। "यदिदमस्मिन् ब्रह्मपुरे दहर पुण्डरीक वेश्मे' त्यनूद्य तस्मिन् दहरपुण्डरीकवेश्मनि यो दहराकाशो यच्च तदन्तर्वर्ति गुणजात तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थ. । दहराकाशशब्दनि- र्दिष्टस्य परब्रह्मत्व 'तस्मिन्[3]यदन्त'रिति निर्दिष्टस्य च तद्गुणत्व तच्छ- ब्देनोभय परामृश्योभयस्याप्यन्वेष्टव्यतया विधान च कथमवगम्यत इति चेत्, तदवहितमना: शृणु, 'यावान्वा अय[4]माकाशस्तावानेषोऽन्त- र्हृदय आकाश" इति दहराकाशस्यातिमहत्तामभिधाय,—

उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते।

उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ ॥

विद्युन्नक्षत्राणी"ति प्रकृतमेव दहराकाश'मस्मि'न्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय, 'यच्चास्येहा[5]स्ति यच्च नास्ति सर्व तदस्मिन्समाहित"मिति पुनरप्य'स्मि'न्निति तमेव दहराकाश परामृश्य तस्मिन्नस्योपासकस्येह लोके यद् भोग्यजातमस्ति, यच्च मनोरथमात्र गोचर इह[6] नास्ति, सर्व तद् भोग्यजातमस्मिन् दहराकाशे समाहित-

१ परत्वेनेति लि पु ।
२ वर्तिन –इति मु पु पाठ ।
३ तदस्मिंचिति मु पु पाठ ।
४ यावान्तावान् अयमिति लि पु प्रमाद ।
५ यच्चेत्यस्येहेति लि पु॰ पाठ प्रामादिक. ।
६ गोचरमिहेति पाठान्तर न युक्तम् ।

मिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय, तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वे ऽपि[1] देहस्य जराप्रध्वंसादौ सत्यऽपि परमकारणतया ऽतिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा, तत एवै'तत्सत्यं ब्रह्म-पुर'मिति तमेव दहराकाशं सत्यकारणतया[2]सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्य, "अस्मिन्कामास्समाहिता" इति दहराका-श'मस्मि'न्निति निर्दिश्य काम्यभूताश्च गुणान् 'कामा' इति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा, तदेव दहराकाशस्य काम्यभूतकल्याणगुण-विशिष्टत्वं[3] तस्यात्मत्वं च "एष आत्मा ऽपहतपाप्मे"त्यादिना "सत्यस-ङ्कल्प" इत्यन्तेन स्फुटीकृत्य,' यथा ह्येवेह प्रजा अन्वाविशन्ती"त्यारभ्य तेषां सर्वेषु लोकेष्वऽकामचारो[4]भवती"त्यन्तेन तदिदं गुणाष्टकं तद्विशिष्टं दहराकाशशब्दनिर्दिष्टमात्मानं चाऽविदुषां[4]मेत[5]द्व्यतिरिक्तभोग्यसिद्धये च कर्म कुर्वतामन्तवत्फलावाप्तिमसत्यसङ्कल्पत्वं चाभिधाय, "अथ य इहा-त्मानमनुविद्य व्रजन्त्ये[6]तांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती"त्यादिना दहराकाशशब्दनिर्दिष्टमात्मानं तदन्तर्वर्तिनश्च काम्य-भूतानऽपहतपाप्मत्वादिकान् गुणान् विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिः सत्यसङ्कल्पता चोच्यते । अतो दहराकाशः परं ब्रह्म, तदन्तर्वर्ति चापहतपाप्मत्वादि काम्यगुण-जातम्,-तदुभय'मन्वेष्टव्यं' 'विजिज्ञासितव्य'मिति चोच्यत इति निश्चीयते । तदेतद् वाक्यकारोऽपि स्पष्टयति-"तस्मिन्यदन्तरिति कामव्यप-देश" इत्यादिना । अत एतेभ्यो हेतुभ्यो दहराकाशः परमेव ब्रह्म ।

अतश्च दहराकाशः परं ब्रह्म-

---

१ अपि-इति लि पु नास्ति ।

२ सत्यकारणतयेति लि पु नास्ति ।

३ °त्वं चेति लि पु पाठ ।

४ लि पुस्तकेऽत्र 'लोकेषु कामचार' स्तयाग्रे च विदुषा'मिति प्रामादिकम् ।

५ 'मेव तदिति मु पु पाठः ।

६ प्रव्रजन्तीति मु पु पाठ ।

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १४ ॥

"तद्यथा हिरण्यनिधि निहितमक्षेत्रज्ञा[1] उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' इत्ये'त'मिति प्रकृतं दहराकाशं निर्दिश्य तत्राहरहस्सर्वेषां क्षेत्रज्ञानां गमनं, गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोकशब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः । कथमनयोरस्य परब्रह्मत्व[2]साधकत्वमित्यत आह "तथा हि दृष्ट"मिति । परस्मिन् ब्रह्मणि सर्वेषां क्षेत्रज्ञानामहरहः सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम्— "एवमेव खलु सोम्येमाः सर्वाः प्रजास्सति सम्पद्य न विदुः सति सम्पद्यामह"[3] इति "सत आगम्य न विदुः सत आगच्छामह" इति च[4] । तथा, ब्रह्मलोकशब्दश्च परस्मिन् ब्रह्मणि दृष्टः "एष ब्रह्मलोकः सम्राडिति होवाचे"ति । मा भूदन्यत्र ब्रह्मणि गमनदर्शनम् एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकाले ऽवस्थानं श्रूयमाणमस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्, तथा, ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्या[5]ऽस्मिन् दहराकाशे प्रयुज्यमानोऽस्य ब्रह्मत्वे योगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह "लिङ्गं चे"ति[6] । निषादस्थपतिन्यायाच्च षष्ठीसमासात्समानाधिकरणसमासो न्याय्यः[7]। अथ वा, 'अहरहर्गच्छन्त्य' इति न सुषुप्तिविषयं गमनमुच्यते, अपि त्वन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छन्त्यः सर्वस्मिन् काले वर्तमानाः तमज्ञानत्व[8]स्ते न विन्दन्ति[9] न लभन्ते, यथा,

१ निहितमेव क्षेत्रज्ञा इति लि पु पाठः प्रामादिकः ।
२ त्व—इति नास्ति लि॰ पु ।
३ सम्पत्स्यामह इति लि पु पाठो न युक्तः ।
४ चेति मु पु नास्ति ।
५ श्रुत्येति लि पु पाठः ।
६ लिङ्गं चेति—इति प्रतीकग्रहणं नास्ति लि पु ।
७ न्याय इति लि पु ।
८ अज्ञानन्त्य इति मु पु लि पु च पाठो न तु युक्तः ।
९ विदन्तीति मु पु पाठः ।

हिरण्यनिधिं निहितं[1] तत्स्थानमजानानास्तदुपरि सर्वदा वर्तमाना अपि न लभन्ते, तद्वदित्यर्थः । सेयमेवमन्तरात्मत्वेन स्थितस्य दहराकाशस्योपरि तन्नियमिताना सर्वासां प्रजानामजानतीनां[2] सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति । तथा ह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिः स्वस्मिन् वर्तमानाभिः प्रजाभिरवेदनं दृष्टम्, यथाऽऽन्तर्यामिब्राह्मणे "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति," "अदृष्टो द्रष्टाऽश्रुतः श्रोते"ति च । मा भूदन्यत्र दर्शनम्, स्वयमेव त्विय निधिदृष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतयाऽहरहस्सर्वदा सर्वासां प्रजानामजानतीनां[2] गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् ।

इतश्च दहराकाशः परं ब्रह्म–

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥

"अथ य आत्मे"ति प्रकृतं दहराकाशं निर्दिश्य "स सेतुर्विधृतिरेषां लोकानामसम्भेदाये" त्यस्मिन् जगद्विधरणं श्रूयमाणं दहराकाशस्य परब्रह्मतां गमयति । जगद्विधरणं हि परस्य ब्रह्मणो महिमा "एष सर्वेश्वर एष सर्वभूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानाममसम्भेदाये"ति "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिभ्यः[3] । स चायं तस्य परस्य ब्रह्मणो धृत्याख्यो महिमाऽस्मिन् दहराकाश उपलभ्यते, अतो दहराकाशः परं ब्रह्म ।

## प्रसिद्धेश्च ॥ १६ ॥

आकाशशब्दश्च प्रसिद्धः परस्मिन् ब्रह्मणि "को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" "सर्वाणि ह वा इमानि

---

१ तथा हिरण्यनिधिनिहितमिति लि पु पाठो न युक्तः ।

२ अजानन्तीनामिति लि पु पुनः पुनः पाठः ।

३ 'तस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिभ्योऽ'–एतावल्लिखितपुस्तकेऽत्र स्थाने भ्रमादधिकं लिखितमस्ति ।

भूतान्याकाशादेव समुत्पद्यन्त" इत्यादिषु । अपहतपाप्मत्वादिगुणसनाथा प्रसिद्धि[1]र्भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्रायः ।

एवं तावद्दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम् । अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते—

## इतरपरामर्शात् स इति चेत्, ना, ऽसम्भवात् ॥ १७ ॥

यदुक्तं वाक्यशेषवशाद्दहराकाशः परं ब्रह्मेति, तदयुक्तम्, वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात् "अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच एतदमृतमभय[2]मेतद् ब्रह्मे"ति । यद्यपि दहरोऽस्मिन्नन्तर आकाश इति हृदयपुण्डरीकमध्यवर्तितयोपदिष्टस्याकाशस्योपमानोपमेयभावाद्यसम्भवाद्भूताकाशत्वं न सम्भवति, तथाऽपि वाक्यशेषवशात् प्रत्यगात्मत्वं युक्तमाश्रयितुम् । आकाशशब्दोऽपि प्रकाशादियोगाज्जीव एव वर्तिष्यत इति चेत्, तत्रोत्तरम् 'नासम्भवा'दिति । नायं जीवः, न ह्यपहतपाप्मत्वादयो गुणा जीवे सम्भवन्ति ।

## उत्तराच्चेदाऽऽविर्भूतस्वरूपस्तु ॥ १८ ॥

उत्तरात् प्रजापतिवाक्याज्जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयत इति चेत् । एतदुक्तं भवति—प्रजापतिवाक्यं जीवपरमेव । तथा हि, "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाती"ति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्यान्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजापतिर्जागरितस्वप्नसुषुप्तवस्य जीवं त्मान सशरीरं क्रमेण शुश्रूषुयोग्यतापरीचिक्षिषयो[3]पदिश्य तत्र तत्र भोग्यमपश्यते परि-

---

१ गुणसमानाधिकरणप्रसिद्धिरिति लि पु पाठ ।

२ एतदभयमिति लि पु नास्ति ।

३ परिचिक्षिषयेति मु पु लि पु च पाठो न तु न्याय्य ।

शुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते "मघवन्मर्त्यं वा इदं शरीर-मात्तं मृत्युना तदस्या[1]मृतस्या[2]शरीरस्यात्मनोऽधिष्ठान"मिति शरीरा स्याधिष्ठानतामात्मनश्चाधिष्ठातृतामशरीरस्य च तस्यामृतत्त्वस्वरूपत-चोक्त्वा "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति कर्मारब्धशरीरयोगिनः[3] तदनु-गुणसुखदुःखभागित्वरूपाऽनर्थं तद्विमोक्षे च तदभावमभिधाय 'एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि-निष्पद्यत'इति जीवात्मनः स्वरूपमेव शरीरवियुक्तमुपदिदेश "स उत्तमः पुरुषः स तत्र पर्येति जक्षत्[4] क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञाति भिर्वा नोपजनं स्मरन्निदं शरीर"मिति प्राप्यस्य परस्य ज्योतिषः पुरुषो-त्तमत्त्वं[5] निवृत्ततिरोधानस्य परं ज्योतिरुपसपन्नस्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्तिं प्रियाप्रियाविनियुक्तकर्मनिमित्तशरीरात्मपुरुषार्थाननुस न्धानं[6] चाभिधाय "स यथा प्रयोग्य आचरणे युक्त[7] एवमेवायमस्मिञ्[8] शरीरे प्राणो युक्त"इति यथोक्तस्वरूपस्यैव ससारदशायां कर्मतन्त्रं शरीर-योगं युग्यशकटयोगदृष्टान्तेनाभिधाय "अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्या-हाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रमथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षु"रिति चक्षुरादीनां कर-णत्वं रूपादीनां ज्ञेयत्वमस्य च ज्ञातृत्वं प्रदर्श्य तत एव शरीरेन्द्रियेभ्यो

---

१ शरीरमात्तं मृत्युं अन्यतदस्या—इति लि पु प्रामादिकः पाठः ।
२ अमृतत्वस्येति मु पु पाठः ।
३ योगिन इति पु द्वयेऽपि पाठः ।
४ जक्षदिति क्वचिदुपनिषत्पुस्तकेऽपि पाठो दृश्यते स चेत्प्रामाणिकः आर्ष-त्वात्साधु ।
५ निवृत्तत्वमिति लि पुस्तकेऽत्राधिकमस्ति न तु तद्युक्तम् ।
६ प्रियाप्रियविनियुक्त त्मपुरुषार्थानुसन्धानेति लि पु पाठः स तु न युक्तः ।
७ प्रयुक्त इति लि० पु० पाठः ।
८ एवमस्मिन्निति म० पु० पाठः ।

ऽस्य व्यतिरेकमुपपाद्य, "स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति तस्यैव विधूतकर्मनिमित्त शरीरेन्द्रियस्य 'मनः'[1]शब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा, "तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आप्ताः सर्वे च कामाः" इत्येवंविधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय, "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाचे"त्येवंविधमात्मानं विदुषः सर्वलोकसर्वकामावाप्तिलक्षितं ब्रह्मानुभवफलमभिधायोपसंहृतम्। अतस्तत्रापहतपाप्मत्वादिगुणको ज्ञातव्यतया प्रक्रान्तो जीव एवेत्यवगतम्। यतो[2] जीवस्यापहतपाप्मत्वादयः सम्भवन्ति, अतो दहरवाक्यशेषे श्रूयमाणस्य जीवस्यापहतपाप्मत्वादिगुणसम्भवात्स एव दहराकाश इति निश्चीयत इति चेत्; न। तत्राह—'आविर्भूतस्वरूपस्त्वि'ति, पूर्वमनृततिरोहितापहतपाप्मत्वादिगुणकस्वस्वरूपः[3] पश्चाद्विमुक्तकर्मबन्धः शरीरात्समुत्थितः परं ज्योतिरुपसम्पन्न आविर्भूतस्वरूपः सन्नपहतपाप्मत्वादिगुणविशिष्टस्तत्र प्रजापतिवाक्ये ऽभिधीयते। दहरवाक्ये त्वतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते। आविर्भूतस्वरूपस्यापि जीवस्यासम्भावनीयास्सेतुत्वसर्वलोकविधरणत्वादयस्तस्य शब्दनिर्वचनावगतचेतनाचेतनयोर्नियन्तृत्वं दहराकाशस्य परब्रह्मतां साधयन्ति। सेतुत्वसर्वलोकविधरणत्वादय आविर्भूतस्वरूपस्यापि न सम्भवन्तीति "जगद्व्यापारवर्ज"मित्यत्रोपपादयिष्यामः।

यद्येवम्, दहरवाक्ये 'अथ य एष सम्प्रसाद" इत्यादिना जीवप्रस्तावः किमर्थ इति चेत्, तत्राह—

**अन्यार्थश्च परामर्शः ॥ १९ ॥**

दहराकाशस्यैवापहतपाप्मत्वजगद्विधरणत्वादिवन्मुक्तस्य तदुप-

१ 'न्द्रियमनः इति लि॰ पु
२ अत इति मु पु लि पु च पाठ।
३ 'गुणकः स्वस्वरूप इति मु पु पाठ। 'त्वादिकस्वस्वरूप इति लि पु।

सम्पत्त्याऽपहतपाप्मत्वादिकल्याणगुणविशिष्टस्वाभाविकरूपप्राप्तिकथनेन तद्धेतुस्वरूपं[1] परमपुरुषासाधारणं गुणमुद्दिष्टं प्रजापतिवाक्योक्तस्य जीवस्यात्र परामर्शः। प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तम्, ब्रह्म प्रेप्सोर्हि जीवात्मनः स्वस्वरूपं च ज्ञातव्यमेव, स्वयमपि कल्याणगुण एव सन्नऽनवधिकातिशयासंख्येयकल्याणगुणगणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात्स्वस्वरूपयाथात्म्यविज्ञानस्य। "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" "स तत्र पर्येति जक्षन् क्रीड"न्नित्यादिकं प्रजापतिवाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव।

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २० ॥

दहरोऽस्मिन्नित्यल्पपरिमाणश्रुतिरारग्रोपमितस्य जीवस्यैवोपपद्यते न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्, तत्र यदुत्तरं वक्तव्यम्, तत् पूर्वमेवोक्तं "निचाय्यत्वादेव"मित्यनेन। अतो दहराकाशोऽनाघ्राताविद्याद्यशेषदोषगन्धस्वाभाविकनिरतिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव। प्रजापतिवाक्यनिर्दिष्टस्तु "घ्नन्ति त्वेवैनं विच्छादयन्ती"त्येवमादिभिरवगतकर्मनिमित्तदेहपरिग्रहः पश्चात्परं ज्योतिरुपसम्पद्याविर्भूतापहतपाप्मत्वादिगुणकस्वस्वरूप इति न दहराकाशः।

इतश्चैतदेवम्—

## अनुकृतेस्तस्य च ॥ २१ ॥

तस्य दहराकाशस्य परस्य ब्रह्मणोऽनुकारादयमपहतपाप्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा, न दहराकाशः। तदनुकारः तत्साम्यम्। तथा हि[2] प्रत्यगात्मनो विमुक्तस्य परब्रह्मानुकारः श्रूयते—

"यदा[3] पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम्।

1 तद्धेतुस्वरूपमिति लि पु।
2 हीति नास्ति लि पु।
3 यथेत लि पु।

तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैती"ति ।

अतोऽनुकर्ता प्रजापतिवाक्ये निर्दिष्टः,[1] अनुकार्यं ब्रह्म दहराकाशः ।

## अपि स्मर्यते ॥ २२ ॥

संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारस्स्मर्यते—

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चे"ति ।

केचित् 'अनुकृतेस्तस्य च" "अपि स्मर्यत"इति सूत्रद्वयमधिकरणान्तरं

"तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाती"—

त्यस्याश्श्रुतेः परब्रह्मपरत्वनिर्णयाय प्रवृत्तं वदन्ति, तत्त्व "ऽदृश्यत्वादिगुणको धर्मोक्तेः" "द्युभ्वाद्यायतनं स्वशब्दा"दित्यधिकरणद्वयेन तस्य प्रकरणस्य परब्रह्मविषयत्वप्रतिपादनात् "ज्योतिश्चरणाभिधाना"दित्यादिषु परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तम्, सूत्राक्षरवैरूप्यं च[2] ॥

दहराधिकरणं समाप्तम् ॥ ५ ॥

---

अथ प्रमिताधिकरणम् ६ । **शब्दादेव प्रमितः ॥ २३ ॥**

कठवल्लीषु श्रूयते—

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥

---

१ वाक्यनिर्दिष्ट इति समस्तपाठो मु पु ।
२ वैरूप्याच्चेति लि पु पाठ ।

एतद्वै तत् ।

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः[1] ॥

ईशानो भूतभव्यस्य स एवाद्य स उ श्वः[2] ॥

एतद्वै तत्" ।

"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा

सदा जनानां हृदये सन्निविष्टः ।

तं स्वाच्छरीरात्प्रवृहे-

न्मुञ्जादिवेषीकां धैर्येण ॥

तं विद्याच्छुक्रममृत"मिति ।

तत्र सन्दिह्यते–किमयमङ्गुष्ठमात्रप्रमितः प्रत्यगात्मोत परमात्मेति । किं युक्तम् । प्रत्यगात्मेति । कुतः । जीवस्यान्यत्राङ्गुष्ठमात्रत्वश्रुतेः

"प्राणाधिपः सञ्चरति स्वकर्मभिः ॥

अङ्गुष्ठमात्रो रवितुल्यरूपः

सङ्कल्पाहङ्कार[3]समन्वितो यः" इति ।

न चान्यत्रोपासनार्थतया ऽपि परमात्मनोऽङ्गुष्ठमात्रत्वं श्रूयते । एवं निश्चिते जीवत्वं ईशानत्वं शरीरेन्द्रियभोग्यभोगोपकरणापेक्षयाऽपि[4] भविष्यति–इति प्राप्ते ब्रूमः–

'शब्दादेव प्रमितः'.

अङ्गुष्ठमात्रं प्रमितः[5] परमात्मा । कुतः । 'ईशानो भूतभव्यस्ये'ति शब्दादेव । न च भूतभव्यस्य सर्वस्येशितृत्वं कर्मपरवशस्य जीवस्योपपद्यते ।

---

१ रिवाधूमकमिति लि पु पाठ ।

२ स एवाद्य स ईश्वर इति लि पु पाठ कृत्रिम ।

३ सकल्पादहमिति लि पु पाठो न श्रुत्यनुसारी ।

४ अपि-इति नास्ति लि पु ।

५ अङ्गुष्ठप्रमित इति मु पु पाठः ।

कथं तर्हि परमात्मनो[1]ऽङ्गुष्ठमात्रत्वमित्यत्राह–

**हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥**

परमात्मन उपासनार्थमुपासकहृदये वर्तमानत्वादुपासकहृदयस्याङ्गुष्ठप्रमाणत्वात्,तदपेक्षयेदम ऽङ्गुष्ठप्रमितत्वमुपपद्यते । जीवस्याप्यङ्गुष्ठप्रमितत्वं हृदयान्तर्वर्तित्वात्तदपेक्षमेव, तस्याराग्रमात्रत्वश्रुतेः । मनुष्याणामेवोपासकत्वसम्भावनया शास्त्रस्य मनुष्याधिकारत्वात्,मनुष्यहृदयस्य च तत्तदङ्गुष्ठप्रमितत्व त्खरतुरगभुजगादीनामनङ्गुष्ठ[2]प्रमितत्वेऽपि न कश्चिद्दोषः । स्थितं तावदुत्तरत्र समापयिष्यते ॥

अथ देवताऽधिकरणम ७ ।

**तदुपर्यपि बादरायणः सम्भवात् ॥ २५ ॥**

परस्य ब्रह्मणो ऽङ्गुष्ठ[3]प्रमितत्वापपत्तये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम्, तत्प्रसङ्गेनेदानीं[4] ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्ति ? नास्तीति विचार्यते। किन्तावद्युक्तम्। नास्ति देवादीनामधिकार इति । कुतः। सामर्थ्याभावात् । न ह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति । न च देवादीनां सशरीरत्वे प्रमाणमुपलभामहे । यद्यपि परिनिष्पन्नेऽपि वस्तुनि व्युत्पत्तिसम्भावनया[5] वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति, तथाऽपि देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किञ्चिदपि वाक्यमुपलभ्यते । मन्त्रार्थवादास्तु कर्मविधिशेषतयाऽन्यपरत्वान्न देवादिविग्रहसाधने प्रभवन्ति । कर्मविधयश्च स्वापेक्षितोद्देश्यकारकत्वातिरेकि देवतागतं किमपि न साधयन्ति । अत एव तासामर्थित्वमपि न सम्भवति । अतस्सामर्थ्यार्थित्वयोरभावाद्देवादीनामनधिकार इत्येव प्राप्ते प्रचक्ष्महे–

'तदुपर्यपि बादरायणः सम्भवात्',

---

१ कथं तर्हि तस्य परमात्मन इति लि पु ।
२ तुरङ्गशभर (शरभ) भुजङ्गादीनामङ्गुष्ठेति लि पु ।
३ मात्र–इत्यधिकं लि पु ।
४ तत्प्रमाणं मनुष्याणामिति लि पु पाठः सर्वथैवाऽसङ्गतः ।
५ व्युत्पत्त्यसम्भावनयेति लि॰ पु ।

'तदुपर्यपि', तत्-ब्रह्मोपासनम्, उपरि—देवादिष्वपि सम्भवतीति भगवान्बादरायणो मन्यते, तेषामर्थित्वसामर्थ्ययोस्सम्भवात्। अर्थित्वं ताव-दाध्यात्मिकादिदुर्विषहदुःखाभितापात्परस्मिन् ब्रह्मणि च निरस्तनिखि-लदोषगन्धे ऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणे निरतिशयभोग्यत्वा-दि[1]ज्ञानाच्च सम्भवति, सामर्थ्यमपि पटुतर[2]देहेन्द्रियादिमत्तया सम्भवति। देहेन्द्रियादिमत्त्वं च ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषूपासन-प्रकरणेषु च श्रूयते। तथाहि, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्[3] तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यारभ्य सर्वमचेतनं[4]तेजो-ऽबन्नप्रमुखावस्थाविशेषवद् व्याकृत्य[5] "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति सङ्कल्प्य ब्रह्मादिस्थावरान्तं चतुर्विधं भूतजातं तत्तत्कर्मोचितं[6]शरीरं तदुचितनामभाक् चायमकरो[7]दित्युक्तम्। एवं सर्वत्र सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधा सृष्टिराम्ना-यते। देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्रभृतिचतुर्दशलोकस्थफ-लभोगयोग्यदेहेन्द्रियादियोगायत्तः, आत्मना स्वतो देवादित्वाभावात्। तथा, "तद्धोभये देवासुरा[8] अनुबुबुधिरे ते होचुः" "इन्द्रो ह वै देवा-नामभिप्रवव्राज विरोचनोऽसुराणान्तौ हासंविदानावेव समित्पाणी प्रजा-पतिसकाशमाजग्मतुः तौ ह द्वात्रिंशतं वर्षाणि[9] ब्रह्मचर्य्यमूषतुः तौ ह प्रजापतिरुवाचे"त्यादिना विस्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रती-यते। कर्म्मविधिशेषभूतमन्त्रार्थवादेष्वपि "वज्रहस्तः पुरन्दरः" "तेनेन्द्रो

---

१ अनवधिकातिशयकल्याणगुणे निरतिशयकल्याणगुणे निरतिशयभोग्यत्वा-दीति लि पु पाठ।

२ यदुत्तर—इति लि पु।

३ एकमेवाद्वितीयम्—इति मु पु नास्ति।

४ तत—इति अत्राधिकं लि पु।

५ व्यावृत्येति लि पु प्रामादिकम्।

६ भूत—इति अत्राधिकं मु॰ पु।

७ भाक्त चाकरोदिति लि पु।

८ देवा असुरा इति मु पु पाठो न युक्तः।

९ द्वात्रिंशद्वर्षाणीति मु पु पाठः। तौ ह वा त्रिंशतवर्षाणीति लि॰ पु।

वज्रमुद्यच्छ"दित्यादिभि: प्रतीयमान विग्रहादिमत्त्व प्रमाणान्तराविरुद्ध तत्प्रमेयमेव । न चानुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तरा विवक्षा शक्यते वक्तुम्, स्तुत्याद्युपयोगात्,तेन विना स्तुत्याद्यनुपपत्तेश्च । गुणकथनेन हि स्तुतित्वम्, गुणानामसद्भावे स्तुतित्वमपि हीयते । न चा ऽसति गुणे कथिते तेन[1] प्ररोचना जायते । अत: कर्म्म प्ररोचयन्तो गुणसद्भाव बोधयन्त्येवार्थवादा: । मन्त्राश्च कर्म्मसु विनियुक्तास्तत्रतत्र किञ्चित्करत्वायानुष्ठेयमर्थं प्रकाशयन्तो देवतादिगत[2]विग्रहादिगुणविशेषमभिदधत एव तत्र किञ्चित्कुर्वन्ति, अन्यथेन्द्रादि[3]स्मृत्यनुपपत्ते: । न ह निर्विशेषा देवता धियमधिरोहति । तत्र प्रमाणान्तराप्राप्तान् गुणान् †स्वयमेव बोधयित्वा तै: कर्म प्ररोचयन्ति, गुणविशिष्टं वा प्रकाशयन्ति, †देवतादिगतविग्रहादिगुणविशेषमभिदधत एव तत्र† प्राप्तांश्चानूद्य तैः प्ररोचनप्रकाशनङ्कुर्व्वन्ति[4] । विरुद्धत्वे तु तद्वाचिभिश्शब्दैरविरुद्धान्[5]गुणाल्लँक्षयित्वा कुर्व्वन्ति । कर्म्मविधेश्च देवताया: प्रमाणान्तरप्राप्त[6]मैश्वर्य्यमपेक्षितमेव, कामिन: कर्त्तव्यतया कर्म्म विधीयमान स्वयं क्षणप्रध्वंसि कालान्तरभाविन:[7] फलस्य स्वर्गादेस्साधकमपेक्षते । मन्त्रार्थवादयोश्च "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन[8]भागधेयेनोपधावति स एवैनम्भूति[9]ङ्गमयति" "यदनेन हविषा ऽऽशास्ते तादृश्यात् तदृध्यात् तदस्मै[10]देवा राधन्तामि"त्यादिषु देवताया: कर्म्मणाऽऽराधिताया: फलदायित्वन्त-

१ नह्य ऽसता गुणेन कथितेनेति मु पु पाठ ।

२ देवताधिगतेति लि पु पाठ ।

३ अन्यार्थेन्द्रादीति लि पु ।

†† एतच्चिह्नान्तर्गत पाठ पुस्तकद्वये ऽप्यस्ति, परन्तु पूर्वगत एव पाठो लेखक प्रमादात्पुनरागत इति प्रतिभाति ।

४ प्राप्तान गुणानन्द्य तै प्ररोचनप्रकाशने कुर्वन्ति–इति लि पु पाठ: ।

५ अविरुद्धादिति लि पु तु प्रमादात ।

६ प्रमाणान्तरप्राप्तमिति लि पु नास्ति न च युक्तम् ।

७ भागिन –इति लि पु ।

८ स्वेनेति नास्ति लि पु , भाव्यन्तु तेन ।

९ भूतमिति मु· पु पाठ ।

१० तस्मै–इति लि पु पाठः ।

तत्र विश्वेदेवानुवादेन द्रव्यविधानं वैश्वदेवीशब्देनैव कर्त्तव्यं, पदश्रुतेः। यथा भावनायां करणसमर्पणं धातुनैव क्रियते पदश्रुतेः न तूपपदेनेत्युक्तं भावार्थाधिकरणे तद्वत्। तत्र च वषट्कर्त्तुः प्रथमभक्ष इतिवदेकप्रसरताविरोधः। अतो यागानुवादेनापि द्रव्यविधानार्थं वैश्वदेव्यामिक्षेत्यत्र यजिकल्पनं तावदवश्यं कर्त्तव्यम्। ततश्च पशुसोमाधिकरणन्यायवैषम्यम्। ऐन्द्रवायवं गृह्णातीत्यत्र देवताविशिष्टग्रहणविधानेन यज्यकल्पनात्। यजिकल्पने च वैश्वदेव्यामिक्षेत्यत्रैव द्रव्यदेवताविशिष्टकर्मविधानं युक्तं, रूपद्वयश्रवणात्। एवं चाग्नेयोऽष्टाकपालः सौम्यश्चरुरित्यादिवाक्यैर्वैश्वदेव्यामिक्षेत्यस्यवाक्यस्य प्रत्ययपाठो रक्षितो भवति। अन्यथा हि तेषु सर्वेषु द्रव्यदेवतासम्बन्धकल्पितयागविधानमत्र च द्रव्यमात्रविधानमिति वैरूप्यं प्रसज्येत।

(१६५) किञ्च वैश्वदेवेन यजेतेत्यत्र वैश्वदेवस्य देवतासमर्पकत्वे यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमित्येतस्यार्थवादस्यात्यन्तमेव निरालम्बनत्वम्। एतदर्थवादाद्धि वैश्वदेवशब्दो विश्वेदेवकर्तृकत्वेन कर्मणि प्रवृत्त इति ज्ञायते। तद्देवतासमर्पकत्वे विरुध्यते। किञ्च वैश्वदेवेन यजेतेत्यस्य यागविधित्वे आमिक्षाया नोत्पत्तिशिष्टत्वम्। तथा च तया न वाजिनं बाधितुं शक्यत इति उभयोरपि आमिक्षावाजिनयोर्यागाङ्गत्वं स्यात्। तथा च विकल्पः

स चाष्टदोष[288] इति । तस्माद् वैश्वदेव्यामिक्षेत्यत्रैव यागविधानम् । इतरस्य त्वनुवादत्वम् । अनुवादत्वे च यथा नानर्थक्यं तथोक्तमित्यास्तां तावत् । तत्सिद्धं वैश्वदेवस्य कर्मनामधेयत्वम् ।

(१६६) तदेवं निरूपितं मत्वर्थलक्षणादिप्रकारचतुष्टयनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वम् ।

(१६७) अनर्थहेतुकर्मणः सकाशात्पुरुषस्य निवृत्तिकरत्वेन निषेधानां पुरुषार्थानुबन्धित्वम्[289] । तथा हि यथा विधयः प्रेरणामभिदधतः स्वप्रवर्त्तकत्वनिर्वाहार्थम् विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्त्तयन्ति, एवं न कलञ्जं भक्षयेदित्यादयो निषेधा अपि निवर्तनामभिदधतः स्वनिवर्त्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेः अनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्त्तयन्ति ।

(१६८) "[291] ननु कथं निषेधानां निवर्त्तनाप्रतिपादकत्वम् । यावता न भक्षयेन्न हन्तव्य इत्येवमादावव्यवधानेन[292] नञर्थस्याभावस्य धात्वर्थेनान्वये

---

२८८ तथा हि प्रथमतः आमिक्षायाः प्राप्तस्य प्रामाण्यस्य बाधस्तदंशस्य च द्वितीये तस्य तद्वाक्यस्य च प्रामाण्यस्वीकार इति चत्वारो दोषाः । एवं वाजिनपक्षेऽपीति भावः ।

२८९ नञया नरकादि दुःखं तद्धेतुत्वात्कर्मणोऽप्यनर्थकत्वम् ।

२९० स्वस्य निवर्तकत्वनिर्वाहार्थमिति विग्रहः ।

२९१ प्राभाकर शङ्कते ।

२९२ यद्यपि धात्वर्थादव्यवहित कलञ्जादि तथापि समासं विना न तदन्वययोग्यतेत्याशय । न च प्रागभावात्मनो वर्जनस्य कथं कर्तव्यतेत्यपि शङ्क्यम् ? योगक्षेमसाधारणकर्तव्यतायास्तत्रापि भावात् ।

धात्वर्थवर्जनकर्त्तव्यतैव सर्वत्र वाक्यार्थः प्रतीयते । ततश्च यथा यजेतेत्यादौ यागकर्त्तव्यतावाक्यार्थः एवं निषेधेषु तत्तद्धात्वर्थवर्जनकर्त्तव्यता वाक्यार्थो न निवर्त्तते इति" चेत्—

(१६९) मैवम् । अव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य तस्य नञर्थेनान्वयायोगात् । न ह्यन्योपसर्जनमन्येनान्वेति । मा भूद्राजपुरुषमानयेत्यत्र राज्ञ आनयनान्वयित्वम् । ततश्चाव्यवधानेऽपि नञर्थस्य न धात्वर्थेनान्वयः । आरुणयस्येवैकहायन्या । नापि कलञ्जादिपदार्थैरन्वयः । तेषामपि कारकोपसर्जनतयोपस्थितत्वेन भिन्नपदस्य नञर्थेनान्वयायोगात्, एकहायन्या इवारुण्येन । अतश्चान्येनान्वयायोगान्नञर्थः प्रत्ययार्थेन सम्बध्यते । तस्य प्राधान्यात् । क्रमभावनयेवारुण्यादीनि । तत्रापि नाख्यातांशवाच्ययाऽर्थभावनया तस्या अपि लिङ्त्वांशवाच्यप्रवर्त्तनोपसर्जनत्वेनोपस्थितत्वात् । अतो [२६३]लिङ्त्वांशेन नञ् सम्बध्यते । तस्य सर्वापेक्षया प्राधान्यात् । नञश्चैष स्वभावो यत्स्वसम्बन्धिप्रतिपक्षबोधकत्वम् । नास्तीत्यत्र ह्यस्तीति तत्त्वशब्देन सम्बध्यमानो नञ् सत्त्वप्रतिपक्षमसत्त्वं गमयति । तदिह लिङर्थस्तावत्प्रवर्त्तना । अतस्तेन सम्बध्यमानो नञ् प्रवर्त्तनाप्रतिपक्षं निवर्तनां गमयति । विधिवाक्यश्रवणे ऽयं मां प्रवर्त्तयतीति प्रव-

२६३ तदर्थेन ।

र्तनाप्रतीतिवन्निषेधवाक्यश्रवणे ऽयं मां निवर्त्तयतीति निवृत्त्यनुकूलव्यापारनिवर्त्तनायाः प्रतीतेः । अतश्च सर्वत्र निषेधेषु निवर्तनैव वाक्यार्थः । एवं च विधिनिषेधयोर्भिन्नार्थत्वं सिद्धं भवति ।

(१७०) हननादिवर्जनकर्त्तव्यतावाक्यार्थपक्षे तु कर्त्तव्यताया एवोभयत्र प्रतिपाद्यत्वात्तयोरेकार्थत्वं स्यात् । तच्च न युक्तम् । यथाहुः

> अन्तरं यादृशं लोके ब्रह्महत्याऽश्वमेधयोः
> दृश्यते तादृगेवेद विधानप्रतिषेधयोरिति ।
>
> तथा
>
> फलबुद्धिप्रमेयाधिकारिबोधकभेदतः
> पञ्चधात्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोरिति

(१७१) [२६४] यन्मते इष्टसाधनत्वं लिङर्थस्तन्मते लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिपक्षमनिष्टसाधनत्वं गमयति । सर्वथापि तु नञः [२६५] प्राधान्यात्प्रत्ययेनान्वयः । यदा तु तदन्वये किंचिद्बाधकं तदाऽगत्या धात्वर्थेनान्वयः ।

(१७२) तच्च बाधकं द्विविधम् । तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च । तेन च बाधकद्वयेन नञ्युक्तेषु वाक्येषु पर्युदासाश्रयणं भवति । तदभावे निषेध एव—

---

२६४ मण्डनमिश्राणां मते ।

२६५ धात्वर्थं प्रति प्रत्ययार्थभावनाया एव प्राधान्यनियमात् ।

पर्युदासः स विज्ञेयो यत्रोत्तरपदेन[२६६] नञ्
प्रतिषेधस्तु विज्ञेयः क्रियया सह यत्र नञिति च-

तयोर्लक्षणम् । तत्र नेक्षेतोद्यन्तमादित्यमित्यादौ पर्युदासाश्रयणम्, तस्य व्रतमित्युपक्रमात् । तथा हि व्रतशब्देन[२६७] कर्त्तव्योऽर्थ उच्यते । अतश्च स्नातकस्य कर्त्तव्यार्थानां वक्तव्यत्वेनोपक्रमात् किं तत्कर्तव्यमित्यपेक्षायामग्रे नेक्षेतोद्यन्तमित्यादौ कर्त्तव्य एवार्थो वक्तव्यः, आकाङ्क्षिताभिधानात् । अर्थान्तरोक्तौ च पूर्ववाक्यस्य[२६८] साकाङ्क्षत्वेनाप्रामाण्यं स्यात् । न हि कर्तव्यार्थस्य वक्तव्यत्वेनोपक्रमेऽग्रे च तदनभिधाने पूर्ववाक्यस्य निराकाङ्क्षत्वं सम्भवति । न च साकाङ्क्षस्य प्रमाण्यम्, गौरश्वः पुरुष इत्यादावपि प्रसङ्गात् । किं च नेक्षेतेत्यस्योपक्रमेण प्रतीयमाना एकवाक्यता च न स्यात् अर्थान्तरोक्तेः । अतश्चास्मिन्वाक्ये कश्चित्कर्त्तव्य एवार्थो वक्तव्यः । तदुक्तौ च न नञः प्रत्ययेन सम्बन्धो घटते । तत्सम्बन्धे कर्त्तव्यार्थोक्तेरनुपपत्तेः । प्रत्ययाच्चावतारितो नञ् धातुना सम्बध्यते । तत्सम्बन्धे च न नञः प्रतिषेधकत्वम् । विधायकसम्बन्धेनैव तस्य प्रतिषेधकत्वात् । प्रतिषेधकत्वस्य विधायकप्रतिपक्ष-

---

२६६ अत्रोत्तरपदत्वं च क्रियार्थक व्यवहिताव्यवहितसाधारणम । तेन नञोऽस्ति तस्याचमनीयादित्यादौ पर्युदासःसिद्धिः । वस्तुतस्त्वभावार्थकपदस्याक्रियार्थकपदार्थे स इति तत्त्वम ।

२६७ सङ्कल्पइत्यर्थः । अत एव अध शायी स्यादित्यादिस्मृतिकाराणामुक्तयः सङ्गता भवन्ति ।

२६८ अपरिपूर्णत्वेन ।

त्वात् । नामधातुयोगे तु न नञः प्रतिषेधकत्वम् तयोरभिधायकत्वात् । यथाऽहुः ।

नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः[२९८]

वदत्योऽब्राह्मणाधर्मावन्यमात्रविरोधिनाविति ।

अतश्च नेक्षेतेत्यत्र नञो धातुयोगान्नञीक्षति-भ्यामीक्षणविरोधीकश्चनार्थः प्रतिपाद्यते ।

(श्लो वा अपोह ३३)

(१७३) ननु तदन्यत्तद्विरुद्धतदभावेषु नञिति सत्यऽपि स्मरणे नञः स्वसंसृष्टाभाव एव शक्तिः लाघवात् न तु तदन्यतद्विरुद्धयोः, तयोरभावघटितत्वेन गौरवात् । अनेकार्थत्वस्य चान्याय्यत्वात् । अतो नञो धातुयोगे धात्वर्थाभावबोधकत्वमेव, न तु तद्विरुद्धार्थबोधकत्वमिति चेत्"–

( १७३ ) सत्यम् । नञो ऽभाव एव शक्तिः । स्मरणं तु प्रतीत्यभिप्रायं न शक्त्यभिप्रायम् । नामधात्वर्थयोगीत्यपि प्रतीत्यभिप्रायम् । तथापि नेक्षेतेत्यत्र प्रत्ययस्य नञाऽसम्बन्धात्तेन तावत्कश्चिदर्थो विधेयः । तत्र न तावद्धात्वर्थो विधातुं शक्यते, नञा तदभावबोधनात् । नापि तदभावो विधातुं शक्यते, अभावस्याविधेयत्वात् । अतश्च नञीक्षतिभ्यां विधानयोग्यः कश्चनेक्षणविरोधी अर्थो लक्षणया प्रतिपाद्यते । स चेक्षणविरोधी लक्ष्यमाणः पदार्थो नेक्षेतेत्य-

---

२९८ अब्राह्मणाधर्मावित्यत्र न क्रमेणान्यमात्र विरोधिमात्र च वदतीति योजना अब्राह्मणशब्दोऽन्यमात्र वदति अधर्मशब्दो विरोधिमात्रमिति भाव ।

नीक्षणसंकल्पः तस्येक्षणविरोधित्वात्। सत्यपि पदार्थान्तरस्येक्षणविरोधित्वे सर्वक्रियाऽविनाभूतत्वेन संकल्पस्यैव लक्षणात्। स एव नेक्षेतेत्यत्र कर्तव्यतया विधीयते। अनीक्षणसंकल्पेन भावयेदिति भाव्याकाङ्क्षायां च एतावता हि एना विमुक्तो भवतीति वाक्यशेषावगतः पापक्षयो भाव्यतया सम्बध्यते। एवं चात्र पापक्षयार्थसंकल्पस्य कर्त्तव्यताया विधानात्तस्य व्रतमित्यनेनैकवाक्यता सिद्धा भवति। तत्सिद्धं नेक्षेतेत्यत्र तस्य व्रतमित्युपक्रमात्पर्युदासाश्रयणमिति।

( १७५ ) नानुयाजेषु ये यजामहं करोतीत्यत्र विकल्पप्रसक्त्या तदाश्रयणम्। तथा हि यद्यत्र प्रधानसम्बन्धलाभान्नञः प्रत्ययसम्बन्धः स्वीक्रियते तथा सत्यनेन वाक्येनानुयाजेषु येयजामहः प्रतिषिध्यते इति वक्तव्यमनुयाजेषु येयजामहं न कुर्यादिति। न च तत्र तस्य प्रतिषेधः प्राप्तिं विना सम्भवति प्राप्तिसापेक्षत्वात्प्रतिषेधस्य। अत एव नान्तरिक्षे न दिवीत्यस्य न प्रतिषेधकत्वमन्तरिक्षे चयनाप्राप्तेः। अत एव न ब्राह्मणो हन्तव्य इत्यस्य नित्यवद्धननिवर्तकत्वमुपपद्यते। सर्वो हि पुरुषः कदाचिद्धननादौ प्रवर्तते कदाचिच्च रागाद्यभावेन निवर्त्तते। तत्र यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात्तदा रागादिविरोधाय हननादावप्रवृत्तं प्रत्येव शास्त्रप्रामाण्योपपत्तौ रागादिना हननादौ प्रवृत्तेन पुंसा न ततो निवर्त्तितव्यम्। प्राप्तिसापेक्षत्वे

तु स्वयमप्रवृत्तं प्रति प्रसक्त्यभावेन निषेधशास्त्राप्रवृत्तेः । अतश्च ब्राह्मणो न हन्तव्य इति रागादिना प्रवृत्तं प्रत्येव भ्रान्तिनिमित्तरागबाधेन निषेधशास्त्रप्रवृत्तेर्युक्ता प्रवृत्तस्य ततो निवृत्तिः । अतश्च ब्राह्मणो न हन्तव्य इत्यस्य निषेधस्य निवृत्तिनियमबोधकत्वम् । व्रीहीनवहन्यादित्यस्यैवावघातनियमबोधकत्वम् । यथा खलु व्रीहीनवहन्यादिति शास्त्रं वैतुष्यार्थमवघाते स्वतः प्रवृत्तं पुरुषं प्रति न प्रवर्तते वैयर्थ्यात्, किं तु विदलनादौ प्रवृत्तं प्रति । एवं न हन्यादिति शास्त्रं हननात्स्वयं निवृत्तं पुरुषं प्रति न प्रवर्त्तते वैयर्थ्यात्, किं तु हनने प्रवृत्तं पुरुषं प्रति कर्त्तव्यत्वेन प्रसक्तस्य निषेधाद्यत्कर्त्तव्यं तन्नेति । अतश्च प्राप्तिसापेक्षत्वात्प्रतिषेधानामनुयाजेषु येयजामहप्रतिषेधेनैतस्य तत्र प्राप्तिर्वक्तव्या । सा न तावद्धननादाविव रागतः सम्भवति । अतो यजतिषु येयजामहं करोतीति शास्त्रात्सा वक्तव्या । शास्त्रप्राप्तस्य च निषेधे विकल्पः स्याच्छास्त्रेण भ्रान्तिनिमित्तरागस्येव शास्त्रान्तरस्यात्यन्तबाधायोगात् । न च[२९९] पदशास्त्रेणाहवनीयशास्त्रस्येव नानुयाजेष्विति विशेषशास्त्रेण यजतिषु येयजामहं करोतीति सामान्यशास्त्रस्य बाधः स्यादिति वाच्यम् । शास्त्रयोर्हि तत्र बाध्यबाधकभावो यत्र परस्य निरपेक्षता । न हि पदशास्त्रस्य स्वार्थविधानार्थमाहवनीयशास्त्रापेक्षा-

---

२९९ पदे जुहोतीति शास्त्रेणत्य . ।

स्ति । निषेधशास्त्रस्य तु प्रसक्त्यर्थं यजतिषु येयजामहं करोतीति विधेरस्त्यपेक्षा । एवं च निषेधशास्त्रस्य विशेषविषयत्वेन प्राबल्यवद्विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेरत्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्पः स्यात् । स च न युक्तः । विकल्पे हि पक्षे शास्त्रस्याप्रामाण्यं भवति । न ह्यनुयाजेषु येयजामहकरणेनानुयाजेष्वित्यस्य प्रामाण्यं सम्भवति । व्रीह्यनुष्ठानसमय इव यवशास्त्रस्य द्विरदृष्टकल्पना च स्यात् । विधेर्हि एवं ज्ञायते यदनुयाजेतरेषु येयजामहकरणे कश्चनोपकारो भवतीति । निषेधाच्च तदकरणादिति ज्ञायते अनृतवदनाकरणादिवद्दर्शपूर्णमासयोः । स चोपकारोऽदृष्टरूप इति द्विरदृष्टकल्पनाप्रसङ्गः । अतश्च विकल्पो न युक्तः । प्रतिषेधाश्रयणे च तदापत्तेर्न तदाश्रयणं, किं तु नञ अनुयाजशब्देन सम्बन्धमाश्रित्य पर्युदास आश्रीयते नञनुयाजशब्दाभ्यामनुयाजव्यतिरिक्तलक्षणात् । अनुयाजव्यतिरिक्तेषु येयजामहं करोतीत्यत्र च वाक्ये येयजामह कर्त्तव्यतया न विधीयते यजतिषु येयजामहं करोतीत्यनेनैव विहितत्वात् । किं तु सामान्यशास्त्रविहितयेयजामहानुवादेन तस्यानुयाजव्यतिरिक्तविषयता विधीयते—यत् यजतिषु येयजामहं करोति तदनुयाजव्यतिरिक्तेष्विति । एव च सामान्यशास्त्रस्य विशेषापेक्षिणा नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तवि-

षयसमर्पणादनुयाजव्यतिरिक्तेषु येयजामहः कर्त्तव्यतया[300] प्राप्तः। अनुयाजेषु तु स न कर्तव्यतया प्राप्तो न वा प्रतिषिद्ध इति न विकल्पः। लक्षणया चानुयाजव्यतिरिक्तविषयसमर्पणान्न नुयाजेष्विति वाक्यस्य नाऽप्रामाण्यमतश्च पर्युदासाश्रयणे न किंचिद्बाधकम्। तत्सिद्धं नानुयाजेष्विति वाक्ये विकल्पभयात्पर्युदासाश्रयणमिति।

(१७६) "ननु पर्युदासाश्रयणे यजतिषु येयजामहं करोतीति शास्त्रेण यागसामान्ये प्राप्तस्य येयजामहस्यनानुयाजेष्वित्यनेनानुयाजव्यतिरिक्ते सङ्कोचनात् पर्युदासस्योपसंहाराभेदः स्यात्। उपसंहारे हि सामान्ये प्राप्तस्य विशेषे सङ्कोचो भवति। यथा पुरोडाशं चतुर्द्धा करोतीति पुरोडाशसामान्ये प्राप्तं चतुर्द्धाकरणमाग्नेयं चतुर्द्धा करोतीत्याग्नेये सङ्कोच्यत" इति चेत्—

(१७७) न। तन्मात्रसङ्कोचार्थत्वादुपसंहारस्य, तदन्यमात्रसङ्कोचार्थत्वात् पर्युदासस्येति केचित्।[301] अन्ये तु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे सङ्कोचनरूपो[302]व्यापारविशेषो विधिः 'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्'—इत्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन धातुना वा नाम्ना वा नञः सम्बन्धः। अतोऽनयोस्तावत्स्वरूपतः स्पष्ट एव भेदः। एवं

---

३०० प्राप्तातात्पर्यं।

३०१ सम्प्रदायमतमाह।

३०२ सङ्कोचन रूपतः नति विग्रहः।

सत्यप्यभेदस्याशङ्कते यदि यत्र पर्युदासो विहितस्तत्रावश्यमुपसंहारः स्यात् । न चैतदस्ति । नेक्षेतोद्यन्तमित्यादौ सत्यपि तस्मिन्नुपसंहाराभावात् । न हि तत्राग्नेयचतुर्द्धाकरणमिव सामान्ये प्राप्तं किंचिद्विशेषे सङ्कोच्यते । पापक्षयोद्देशेनानीक्षणसङ्कल्पमात्रविधानात्[103] । प्रकृतोदाहरणे तु यजिसामान्ये प्राप्तस्य येयजामहस्यानुयाजव्यतिरिक्तेषु सङ्कोचनाद्यदि विधेरुपसंहारविधित्वं भवति नैतावता किंचिद्विरुध्यते । विध्यभावे हि कथं विधिकार्यमुपसंहारः पर्युदासेन क्रियत इति भवति विरोधः । न चात्र विधिर्नास्ति नञोऽनुयाजपदसम्बन्धेन विधेर्विधायकत्वस्याख्यापनात् । अत्र हि पर्युदासोऽनुयाजव्यतिरिक्तविषयसमर्पकः, आग्नेयवत् । उपसंहारकस्तु विधिरेव ।

(१७८) न च—'अत्र तन्मात्रसङ्कोचाभावान्नोपसंहार"इति वाच्यम् । तन्मात्रसङ्कोच इति कोऽर्थः । आग्नेयमात्रे सङ्कोचो वा, सामान्यप्राप्तस्य विशेषमात्रे सङ्कोचो वा । आद्ये ऽनारभ्याधीतसाप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारो न स्यादाग्नेये सङ्कोचाभावात् । द्वितीये चतुर्द्धाकरणस्य पुरोडाशमात्रे प्राप्तस्याग्नेये सङ्कोचवत् अनुयाजानुयाजसाधारण्येन प्राप्तस्याननुयाजेषु सङ्कोचादुपसंहारः

[103] मात्रशब्दाभिप्रायम् विधानमात्रादित्यर्थः । अयमाशयः । फलसाधनत्वेन विहित सत्यपि पापक्षयार्थत्वेन विधीयेत भेदोऽपि तदा सङ्कोच, न चैवमस्ति सङ्कल्पविषयकविधिचतुष्टयस्यैवाभावात् ।

स्यादेव । एतावांस्तु विशेषः । आग्नेयादिवाक्येषु आग्नेयादयो विशेषाः स्वपदोपस्थिताः । प्रकृते तु पर्युदासेन तस्योपस्थितिरिति । उपसंहारन्यायस्त्वविशिष्ट एव ।

(१७९) यच्च तदन्यमात्रसङ्कोचनार्थत्वात्पर्युदास्येति । तत्र नेक्षेतेत्यत्र सत्यपि पर्युदासे सङ्कोचाभावात् । न ह्यसामान्ये प्राप्तं तदन्यमात्रे सङ्कोच्यते सङ्कल्पमात्रविधानादित्युक्तमित्यास्तां तावत् ।

(१८०) तत्सिद्धं नानुयाजेष्वित्यत्र विकल्पप्रसक्त्या पर्युदासाश्रयणमिति ।

(१८१) यत्र तु स आश्रयितुं न शक्यते तत्र तत्प्रसक्तावपि निषेध एवाश्रीयते । यथा नातिरात्रे षोडशिनं गृह्णातीत्यत्र । नह्यतिरात्रे षोडशिनं गृह्णातीति शास्त्रप्राप्तमतिरात्रे षोडशिग्रहणं प्रतिषिध्यत इति विहितप्रतिषिद्धत्वाद्विकल्पप्रसक्तावपि पर्युदासो नाश्रीयतेऽशक्यत्वात् । यद्यत्र नञः षोडशिपदेन सम्बन्धः स्वीक्रियेत तदाऽतिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थः स्यात्तत्र चातिरात्रे षोडशिनं गृह्णातीतिप्रत्यक्षविधिविरोधः । अत एवातिरात्रपदेन न नञः सम्बन्धोऽतिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधिविरोधात् । अतश्चात्र पर्युदासस्यानुपपत्तेर्निषेध एव स्वीक्रियते विकल्पोऽस्वीक्रियते अनन्यगतेः ।

(१८२) अतश्चैतत्सिद्धम्—यत्र तस्य व्रतमित्याद्युपक्रमः विकल्पप्रसक्तिश्च नास्ति तत्र प्रतिषेधः

यथा न कलञ्जं भक्षयेदिति। यत्र वा विकल्पप्रसक्तावपि पर्युदास आश्रयितुं न शक्यते तत्र प्रतिषेधः यथा नातिरात्रे षोडशिनं गृह्णातीति। एतावांस्तु विशेषः। यत्र [३०४]विकल्पापादकः प्रतिषेध. तत्र प्रतिषिध्यमानस्यानर्थहेतुत्वम् उभयोरपि विधिनिषेधयोः क्रत्वर्थत्वात्। यत्र तु न विकल्पः प्रसज्यते प्राप्तिश्च रागतः प्रतिषेधश्च पुरुषार्थः तत्र निषिध्यमानस्य नानर्थहेतुत्वम्। यथा कलञ्जभक्षणस्य। दीक्षितो न ददाति न जुहोतीत्यादिषु दानहोमादीनां शास्त्रप्राप्तावपि पुरुषार्थत्वेन प्राप्तत्वात् क्रत्वर्थत्वेन च प्रतिषेधात्तुल्यार्थत्वाभावेन विकल्पाप्रसक्तावपि न तेषामनर्थहेतुत्वम्. रागप्राप्त्यभावात्। रागतः प्राप्तस्यापि क्रत्वर्थत्वेन प्रतिषेधे तदनुष्ठानात् क्रतौ वैगुण्येनानर्थोत्पत्तिः। यथा स्वस्त्र्युपगमनादिप्रतिषेधो रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे निषिद्ध्यमानस्यानर्थहेतुत्वमिति दिक्।

(१८३) तत्सिद्धं निषेधानां पुरुषार्थानुबन्धित्वम्। एवं सर्वस्यापि वेदस्य पुरुषार्थानुबन्धित्वम्। प्रकृतमनुसरामः।

(१८४) तदेवं यथा विध्यादीनामध्ययनविध्युपात्तानां नानर्थक्यमेवमर्थवादानामपि तदुपात्तत्वेनानर्थक्यानुपपत्तेः स्वार्थप्रतिपादने च प्रयोजनाभावा-

---

३०४ क्रत्वर्थ इतिशेष। उपलक्षणमिदम, पुरुषार्थविकल्पापादकोऽपि यत्र निषेधस्तत्रापि न निषेध्यस्यानर्थजनकत्वम्, निषेधस्यानावश्यकताज्ञापनपरत्वात्।

लक्षणया प्रयोजनवदर्थपर्यवसानं[३०५] वक्तव्यम् ।

(१८५) ते चार्थवादाः द्विविधाः[३०६] विधिशेषा निषेधशेषाश्च । तत्र वायव्यं श्वेतमालभेतेत्यादिविधिशेषाणां वायुर्वै क्षेपिष्ठा देवतेत्यादीनामर्थवादानां विधेयार्थस्तावकतयार्थवत्वम्[३०७] । बर्हिषि रजतं न देयमित्यादिनिषेधशेषाणां सोऽरोदीदित्यादीनामर्थवादानां तु[३०८] निषेध्यनिन्दकतयेति । अतश्च लक्षणया प्राशस्त्यमर्थवादैर्बोध्यते । तच्च प्राशस्त्यज्ञानं शब्दभावनायामितिकर्त्तव्यतात्वेन सम्बध्यते, परमप्रकृतम् । तत्सिद्धं वक्ष्यमाणार्थभावनाभाव्यका लिङादिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्त्तव्यता शाब्दी भावना लिङ्त्वांशेनोच्यत इति ।

## अथ शाब्दीभावना ।

(१८६) ननु केयं "शाब्दी भावना" । उच्यते । पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः । स[३०९] एवविध्यर्थः । लिङादिश्रवणे ऽयं मां प्रवर्तयतीति नियमेन[३१०] प्रतीतेः । यत्तु इष्टसाधनत्वं विध्यर्थस्तन्न । तथा सति इष्टसाधनमिति शब्दस्य विधिशब्दः पर्यायः स्यात् । न च

---

३०५ प्रवर्तकनिवर्तकत्वान्यतरपर्यवसायकत्वम ।

३०६ विधेः शेषा विधिशेषा । तदेकवाक्यतापन्ना इत्यर्थः । एवं निषेधशेषा इत्यत्रापि ।

३०७ यतो वायुः क्षिप्रगामी अतो यजमानाय क्षिप्रफलं दास्यतीत्येवं रूपेणेत्यर्थः

३०८ निषेध्यस्य निषेधविषयस्य रजतस्येत्यर्थः पुरास्य संवत्सरादित्यर्थवादेन तस्य तत्त्वम् ।

३०९ अनन्यलभ्यो व्यापार एव ।

३१० मत्प्रवृत्त्यनुकूलव्यापारवानयमित्यपि बोध्यम् ।

पर्यायत्वं युज्यते। सन्ध्योपासनं ते इष्टसाधनं तस्मात्त्वं कुर्विति सहप्रयोगात्, पर्यायाणां च सह प्रयोगाभावात्[311]। अतश्च व्यापारविशेष एव विध्यर्थः। स च लोके पुरुषनिष्ठोऽभिप्रायविशेषः। वेदे तु [312]पुरुषाभावाच्छब्दनिष्ठ एव प्रेरणापरपर्याय इत्युक्तम्।

(१८७) "ननु लोके शब्दनिष्ठे प्रेरणापरपर्याय-व्यापारे शब्दप्रयोगाभावेन शक्तिग्रहाभावात्कथं तस्य विधिशब्दात्प्रतिपत्तिरिति' चेत्सत्यमेतत्। तथापि[313]बालस्तावत्स्तनदानादौ स्वकृतरोदनादिजनितमातृप्रवृत्तेः स्वाभिप्रायरूपप्रवर्त्तनाज्ञानजन्यत्वावधारणात्सविधिकप्रयोजकवाक्यश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धप्रवृत्तिमुपलभ्य तत्कारणत्वेन तस्य प्रवर्त्तनाज्ञानमनुमिमीते। यद्यपि भोजनादौ स्वप्रवृत्तेः समीहितसाधनताज्ञानपूर्वकत्वावधारणात्प्रयोज्यवृद्धप्रवृत्तेरपि तत्पूर्वकत्वाध्यवसानं युक्तम्। तथाप्यन्यप्रेरितप्रवृत्तौ प्रवर्त्तनाज्ञानजन्यत्वस्योक्तमातृप्रवृत्तौ दर्शनेन प्रयोज्यवृद्धप्रवृत्तेरप्यन्यप्रेरितप्रवृत्तित्वात्तत्कारणत्वेन प्रवर्त्तनाज्ञानस्यैवाध्यवसानम् तच्च प्रवर्त्तनाज्ञानमन्वयव्यतिरेकाभ्यां प्रयोजकवा-

---

३११ पौनरुक्त्यापत्तेः।

३१२ त्रेधा हि पुरुषानुप्रवेशः पदपदार्थज्ञानपूर्वकत्वादवाक्यवाक्यार्थज्ञानपूर्वकत्वाद्वान्यस्येव वा भारतादिवत्पुरुषप्रणीतत्वात। न त्वेतत्त्रयमपि वेदे सम्भवति पदपदार्थज्ञानस्यानादित्वादाकाङ्क्षादिसहकृते पदार्थैरेव वाक्यार्थप्रत्ययजननात् स्वतन्त्रत्वे सत्यस्मरणात्कर्तुरिति हृदयम्।

३१३ अस्यापेतमेनानुमिमीत इत्यनेन सम्बन्धः।

कजन्यमित्यवधारयति । तत्र [३१४]चावापोद्वापाभ्यां प्रवर्त्तनायां विधिशक्तिमवधारयति प्रवृत्त्यनुकूलो व्यापारः प्रवर्त्तना। स च व्यापारः प्रैषादिरूपो विविध इति प्रत्येकं व्यभिचारित्वाद्विधिशब्दवाच्यत्वानुपपत्तेः प्रवर्त्तनासामान्यमेव विधिशब्दवाच्यमिति कल्पयति । एवं च विधिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य प्रवर्त्तनात्त्वेनैव रूपेण प्रतीतिर्न विशेषणतया, तथैव शक्तिग्रहात् । विशेषरूपेण तु प्रतीतिर्लक्षणयैव । एव च वैदिकलिङादिश्रवणे ऽपि प्रवर्त्तनःसामान्यमेव प्रतीयते ।

(१८८) तत्र कोऽसौ व्यापार इत्यपेक्षायां प्रैषादिरूपस्य वक्त्रभिप्रायस्यापौरुषेये वेदे ऽनुपपत्तेः शब्दनिष्ठ एव प्रेरणापरपर्याय. कश्चिद् व्यापार इति कल्प्यते । अतश्च शब्दनिष्ठ एव प्रेरणापरपर्यायो व्यापारः शाब्दी भावना । सैव च प्रवर्त्तनात्वेन रूपेण विध्यर्थ इति । अयमेव चार्थो 'ऽभिधा भावनामाहुरन्यामेव लिङादय' इति (तं वा· ३४४) वार्त्तिकस्याभिधीयते। अनेनेति व्युत्पत्त्या ऽभिधाशब्देन शब्द उच्यते। तद्व्यापारात्मिका भावना लिङादिवाच्येति केचिदाचार्या आहुः ।

(१८९) अन्ये त्वाहुः। सत्यं प्रवर्त्तनासामान्यं विध्यर्थः तथैव शक्तिग्रहात्प्रवृत्त्यनुकूलो व्यापारः प्रवर्त्तना ऽपौरुषेये च वेदे प्रैषादेरसम्भवात्कश्चित्पुरुष-

---

३१४ अन्वयव्यतिरेकाभ्याम् ।

र्थता चेत् कुतः सापेक्षता ? यदि लौकिकवचसां प्रमाणान्तराऽधिगतगोचरत्वाद्भूतार्थानां सापेक्षत्वं दृष्टम् औषधपानादिषु, विधयो ऽपि लौकिकास्तथेति विधिमत्तदप्यपेक्षेत । अथाऽपौरुषेयत्वान्नाऽपेक्षते ततो ऽपौरुषेयत्वमितरत्राप्यपार्थम् । अथ प्रमाणान्तरसंभवाद्भूतार्थस्य साऽपेक्षता, न विधिमतः। विध्यर्थे तदसंभवाल्लौकिकस्यापि तदनपेक्षताप्रसङ्गः ।

रुषेये तु ज्ञातु कर्तुरभावान्न ज्ञानपूर्वक इति नाऽनुवादः । सापेक्षतेनेत्यनुषज्यते । पौरुषेयं हि वचः प्रमाणान्तरेणार्थं प्रतीत्य निर्मीयमाणं प्रमाणान्तरापेक्षं स्यान्न त्वेवमपौरुषेयमित्यर्थः । द्वितीयपक्षमाश्रित्याह-भूतार्थता चेत्किकृता सापेक्षता ? भूतार्थत्वसापेक्षत्वयोर्न प्रतिबन्धोऽस्ति कश्चिदित्यर्थः ।

शङ्कते-यदि लौकिकवचसां प्रमाणान्तराऽधिगतगोचरत्वाद्भूतार्थानां सापेक्षत्वं दृष्टमिति वैदिकान्यपि भूतार्थानि सापेक्षाणि । तत्रोत्तरम्-औषधपानादिषु विधयो लौकिकास्तया साऽपेक्षा इति विधिमद्वैदिकमपेक्षेत । अथ विधिमद्वैदिकमपौरुषेयत्वान्नाऽपेक्षते ततो ऽपौरुषेयत्वमितरत्रापि वैदिकभूतार्थे ऽप्यपार्थमिति । अथ प्रमाणान्तरसंभवाद्भूतार्थस्य वैदिकस्य सापेक्षता न विधिमत । कुतः ? विध्यर्थे तदसंभवात् । प्रमाणान्तरासंभवात् । उत्तर लौकिकस्याप्यौषधादिविधेस्तदनपेक्षत्वप्रसङ्गः । यदि मन्येत शब्दानामौत्सर्गिकी नियोगार्थता तदर्थस्वार्थता वा । तन्न । तदर्थस्वार्थानि द्रव्यगुणकर्मवचनानि न स्वार्थं केवलमेव नियोगेन घटयितुमीशत इति विनियोगमन्तराश्रयन्ते । सो ऽयमजहत्क्रियाकारकसंसर्ग एषामर्थस्य नियोगसंबन्ध इति वैदिकी स्थितिः । उत्सर्गस्याऽनपोदितस्य[1] तावदवस्थानात् अतो पौरुषेये नियोगविनियोगयोरबुद्धिपूर्वकत्वादनपेक्षत्वं शब्दस्य ।

१ अनपेक्षितस्य १ पु पा ।

**पुरुषबुद्धिप्रभवत्वाद्विनियोगस्य तत्सापेक्षतया तत्र सापेक्षत्वम् अपौरुषेये वचसि। सोपि न केवलं बुद्ध्यन्तरनिरपेक्षः, मानान्तरविषयो ऽपि। तद्ध्यपौरुषेयवचननिमित्ताऽनपेक्ष इति यतो ऽसावनपेक्षत्वकारणं न मानान्तराऽसम्भवः। पौरुषेयता च सापेक्षत्वे हेतुः। नियोगनिष्ठेपि लौकिके वचसि सापेक्षत्वान्न प्रमाणान्तरसंभवः। तथा च**

लोकस्तु प्रमाणेनोपलभ्याऽर्थमन्यथोपलभ्य[1] वा समारोप्य वचनानि रचयति। यथा 'ज्वरितः पथ्यमश्नीया' 'द्रुमोऽनमाणो नैरात्म्यं[2] भावये'दिति। न च नियोगः प्रमाणान्तरविषये समारोपविषयो वा, ऽन्यथाऽनुपलब्धेः। तद्विषयस्तु विनियोग प्रमाणान्तरगोचरः समारोपगोचरो वा सम्भवति। यथोपलम्भेन च विवक्षा, यथाविवक्षितं वचनरचनेत्यौत्सर्गिकीं नियोगपरतामपहाय लक्षणया विनियोगपरतामवलम्बते, पौरुषेयं च वस्तुन सापेक्षमिति चेदयति—पुरुषबुद्धिप्रभवत्वाद्विनियोगस्य सापेक्षतया तत्र सापेक्षत्वम्। अपौरुषेये तु सो ऽपि विनियोगो ऽपि न केवलं नियोगो बुद्ध्यन्तरनिरपेक्षः। पुरुषबुद्धिप्रभवत्वं चाऽऽप्तवाक्ये विनियोगस्य ज्ञेयतया ऽनाप्तवाक्ये चाऽऽरोपिततया ऽवगन्तव्यम्। परिहरति—मानान्तरविषयो ऽपि भूतरूपो ऽर्थो नियोग इवापौरुषेयवचननिमित्तानपेक्ष। यतो पौरुषेयता ऽनपेक्षत्वकारणं न मानान्तरासम्भव.। पौरुषेयता च सापेक्षत्वे हेतुः। अथैवाऽन्वयव्यतिरेकौ दर्शयति—नियोगनिष्ठे ऽपि लोकवचसि सापेक्षत्वात्। अयमर्थः। यदि न लौकिक वचन नियोगनिष्ठं भवेत् ततो वैदिकमपि न स्यात्, लोकावगतसम्बन्धस्य शब्दस्य वेदे ऽपि बोधकत्वात्। अगृहीतसम्बन्धस्य तु बोधकत्वे प्रथमश्राविणो ऽप्यर्थप्रत्ययः प्रसज्येत। तस्माद्यद्यपि परेषां राद्धान्ते न नियोगनिष्ठता पौरुषेयाणां वचसामपि तु विनियोगप्रधानता तथाप्यापाद्य नियोगनिष्ठत्वमेतदुक्तमिति मन्तव्यम्।

१ अर्थमुपलभ्य २ पु पा। १ नैरर्थ्यम० २ पु पा०।

**सापेक्षत्वे प्रत्यक्षाऽनुमानयोः परस्परविषयसंभवात्सापेक्षत्वात्प्रमाणत्वहानिः । अतः प्रमाणान्तरोपलब्धिविवक्षापुरःसरप्रवृत्तित्वाद्विधिमदितरत्त्वाद्धा वचनं सापेक्षम्, अतथाभाद्वैदिकमुभयमप्यनपेक्षमिति चतुरस्रम् । तेन प्रमाणत्वार्थमपि न विधिविवक्षा ।**

न प्रमाणान्तरसम्भव. सापेक्षत्वे हेतु । सत्यपि तस्मिन् वैदिकस्य विनियोगस्यानपेक्षत्वात् । अत्रैव प्रसङ्गान्तरमाह—तथा च सापेक्षत्वे प्रत्यक्षानुमानयोः परस्परस्य विषयसम्भवात्सापेक्षत्वात्प्रमाणत्वहानिः । एतदुपसंहरति—अत प्रमाणान्तरोपलब्धिविवक्षापुर सरप्रवृत्तित्वाद्विधिमदितरद्वा पुरुषवचः सापेक्षम् । अतथाभावात् वैदिकमुभयमप्यनपेक्षमिति चतुरस्रम् । प्रकृतमुपसंहरति—तेन प्रमाणत्वार्थमपि न विधिविवक्षा ।

कश्चिदाह सत्यमपौरुषत्वादनपेक्षता, तदेव तु प्रमाणान्तराऽगोचरार्थतया सिध्यति । न खल्वनालिख्य बुद्धावर्थं तत्प्रत्यायनाय वचन रचयन्ति लौकिकाः । न च प्रमाणान्तरागोचरोऽर्थ. शक्यो बुद्धावालिखितुम् । औत्सर्गिकी च नियोगपरता शब्दानां, नेयमसत्यपवादे शक्या निह्नोतुम् । आम्नाये नियोगश्च प्रमाणान्तराऽगोचरः शब्दैकसमधिगम्य इति तदर्थत्वादपौरुषेयताऽऽम्नायस्य । पौरुषत्वे हि मुख्या नियोगार्थता हीयेत । अत एव वाक्यत्वादयोप्यागमबाधितविषया नाम्नायस्य पौरुषेयतां साधयितुमीशते । ततश्चाऽनपेक्षता । न चेयं विधा 'ज्वरितः पथ्यमश्नीया'दित्यादिषु सम्भवति, स्पष्टदृष्टेन पौरुषेयत्वेन मुख्यमपि नियोगार्थत्वमपोह्य लक्षणया विनियोगपरत्वाऽऽपादनात् । यदि पुनराम्नायस्य भूतार्थता भवेत्तदा तस्य प्रमाणान्तरयोग्यतया शक्यवचनत्वेन पौरुषेयता दुर्वारा भवेदिति प्रयत्नेन भूतार्थतामपनीय कार्यपरत्वमाम्नायस्य व्युत्पाद्यतइति ।

नन्वन्यदेवेदं शब्दप्रभवादात्मतत्त्वगोचरं ज्ञानं विधीयते। न हि शाब्दज्ञानपरिवेद्यं ब्रह्मस्वरूपम्। वाक्यलक्षणो हि शब्दः प्रमाणं, पदार्थसंसर्गात्मा च तदर्थः, प्रत्यस्तमिताऽखिलभेदप्रपञ्चं चात्मतत्त्वं, तत्कथमस्य गोचरः? तस्मात्प्रलीनसकलाऽवच्छेदोल्लेखमद्वैततत्त्वाऽवभासात्मकं ज्ञानमन्यदेव शाब्दाद्विधीयते।

तदनुपपन्नम्। सिध्येदयम मनोरथो यदि तथाविधो विधिराम्नायगोचरः स्यात्, न त्वय तद्गोचर सम्भवतीत्युपपादित नियोगग्रन्थ्याम्। अपि चाऽयमौपनिषदो ऽपि पुरुषो न प्रमाणान्तरगोचर इति कथमुपनिषदामपि पौरुषेयता दुर्वारा? तथाविधस्यान्यस्य सिद्धरूपस्य प्रमाणान्तरगोचरत्वमुपलब्धमित्यस्यापि सिद्धतयतदर्थत्व[1]मिति चेत्। एव तर्हि क्रियात्मनः कार्यस्य मानान्तरगोचरतेति कार्यतया नियोगस्यापि तदर्थत्वमिति तदर्थस्यापि वेदस्य पौरुषेयता दुर्वारा भवेत्। स्वरूपेण वा तस्य प्रमाणान्तराऽगोचरत्वे औपनिषदस्याऽऽत्मनो ऽपि तदिति सर्वं समानमन्यत्राभिनिवेशात्। तदास्तां तावत्।

एव तावन्न श्रुतमयी प्रतिपत्तिर्विधातव्येत्युक्तम्। ननु मा नामेयं विधायि, साक्षात्कारवती तु विधायिष्यते इति चोदयति—नन्वन्यदेवेद शब्दप्रभवाद्विज्ञानादात्मतत्त्वगोचर ज्ञान विधीयते। कस्मात्पुनरात्मतत्त्वगोचरत्व, न शाब्दस्येत्यत आह— न हि शाब्दज्ञानपरिवेद्य ब्रह्मस्वरूप, वाक्यलक्षणो हि शब्दः प्रमाण, पदमात्रस्याऽप्रमाणत्वात्। तथापि किं? मित्याह—पदार्थसंसर्गात्मा च तदर्थः, संसर्गश्च संसृज्यमानाऽनेकार्थतन्त्रत्वादेको ऽपि नानात्वदूषितः। न चाऽऽत्मतत्त्वमेवंभूतमित्याह—प्रत्यस्तमिताऽखिलभेदप्रपञ्च चात्मतत्त्व, तत्कथमस्य गोचरः? उपसंहरति—तस्मात्प्रलीनस-

1 कर्तव्य मू पु।

वार्तमेतत् । न खलु फलांशो विधिगोचरः । निष्प्रपञ्चात्मतत्त्वाऽवभासश्च फलमेव न ततोऽन्यदभीप्स्यते । मोक्ष इति चेत् । ततोऽव्यतिरेकात् । सप्रपञ्चात्मतत्त्वावऽभासो हि संसारः । निष्प्रपञ्चात्मावऽभासो हि मोक्षः स्वात्मनि स्थितिः । अन्यथा कार्य्यत्वादमोक्षात् । बन्धहेतुश्च कर्म्मादिप्रपञ्चोऽविद्या, तदुच्छेदश्च विद्यैव । यदि च न कल्पनावच्छेदोल्लेखमद्वैततत्त्वावभासनात्मकं ज्ञानमन्यदेव शाब्दाद्विधीयते ।

एतद् दूषयति—वार्तमेतत् । न खलु फलांशो विधिगोचरो, यथाह महर्षिः । 'तस्य लिप्साऽर्थलक्षणा निष्प्रपञ्चात्मतत्त्वावभासश्च फलमेव' । निष्प्रपञ्चेति विगलितनिखिलदुःखत्वमाह । प्रपञ्चो हि दुःखं, तत्त्वग्रहणेनाऽऽनन्दात्मतां सूचयति । बहुलमानन्दश्रुतेः फलत्वमेव दर्शयति । न ततोऽन्यदभीप्स्यते विगलितदुःखत्वादानन्दात्मत्वाच्च ।

चोदयति । मोक्ष इति चेत् । श्रूयते हि 'न स पुनरावर्त्तते' इति । परिहरति—न । ततो निष्प्रपञ्चाऽऽत्मतत्त्वाऽवभासादव्यतिरेकात् । अव्यतिरेकमेव दर्शयति—सप्रपञ्चात्माऽवभासो हि संसारः । निष्प्रपञ्चात्माऽवभासो मोक्षः । संसारविरुद्धस्वभावो मोक्ष इति तत्स्वभावकथनाय संसारोऽपि दर्शितः । न चाऽसौ प्रवृत्तिविषयोऽपि, सिद्धत्वादित्याह—स्वात्मनि स्थितिः । अनेन पराऽभिमता मोक्षावस्था व्युदस्ता वेदितव्या । तद्व्युदासहेतवश्च ब्रह्मसिद्धौ प्रपञ्चिताः । यदि तु न स्वात्मनि स्थितिः, अपि तु पराऽभिमतो मोक्षस्तत्राह—अन्यथा कार्यत्वादमोक्षात् । अथाऽविद्योच्छेदः कस्मान्न भवतीत्यत आह—बन्धहेतुश्च कर्मादिरूपः प्रपञ्चोऽविद्या, नाऽन्या । ततः किं ? तदुच्छेदकश्च विद्यैव । निष्प्रपञ्चात्मतत्त्वावभा-

**कथं चिदपि शाब्दज्ञानविषयो ब्रह्म कथं तज्ज्ञानविधिः शक्यप्रतिपत्तिः ? विषयतश्च ज्ञाननिरूपणं, सिद्धश्च तन्निरूपयति, तत्सिद्धिश्च प्रमाणान्तराऽभावात स्यात्। तस्यापि चेदविषयः तदसिद्धेर्ज्ञानविशेषाऽप्रतिपत्तेर्विध्यप्रतिपत्तिः। अथ कथं चिद्विषयः, न तर्हि शाब्दज्ञानाऽनपेक्षता। प्रतिपत्ति[1]कर्त्तव्यतापरत्वाच्च वचनस्येदृक्ता नाऽऽगमार्थः स्यादित्युक्तम्। नाप्यार्थो ऽर्थः। अध्यारोपेणापि प्रतिपत्तेः संभवात्। अतो न नियोगाऽनुप्रवेशेन**

स आत्मतत्त्वमेव स, स एव च मोक्ष इति न प्रवृत्तिविषय.। अत्रैव दूषणान्तरमाह—यदि च न कथं चिदपि शब्दज्ञानविषयो ब्रह्म, कथं तज्ज्ञानविधिः शक्यप्रतिपत्तिः ? किमिति न शक्यप्रतिपत्ति ? रित्यत आह—विषयतश्च ज्ञाननिरूपणम्। चो हेत्वर्थे। निरूप्यतां विषयेण, को दोष ? इत्यत आह—सिद्धश्च विषयो ज्ञानं निरूपयति। सो ऽपि सिध्यतु, का क्षति ? रित्यत आह—तत्सिद्धिश्च प्रमाणान्तराऽभावा च्छब्दादभ्युपेतव्या। तस्यापि चेदविषयः तदसिद्धेर्विषयाऽसिद्धेर्ज्ञानविशेषाऽप्रतिपत्तेर्विध्यप्रतिपत्तिः।

शङ्कते। अथ कथ चित्तद्विषयः। यद्यपि तत्स्वरूपं न शब्दगोचरस्तथापि भेदप्रपञ्चविलयद्वारेण निरूपणाद्विषयभाव इत्यर्थः। परिहरति—न तर्हि शाब्दज्ञानाऽपरिच्छेद्यता। प्रथमपक्षोक्तं दूषणम् चापि योजयति—प्रतिपत्तिकर्त्तव्यतापरत्वाच्च वचनस्य, ईदृशं प्रतिपत्तव्यमितीदृक्ता नाऽऽगमार्थः स्यादित्युक्तं, यत्परः शब्दः स शब्दार्थः। प्रतिपत्तिकर्त्तव्यतापरश्चेन्न प्रत्येतव्यत्वपर इत्यर्थः। स्यादेतत्। कर्त्तव्यताया प्रतिपत्तिगोचरत्वात्प्रतिपत्तेश्च प्रतिपाद्यविषयत्वात्कर्त्तव्यतेव प्रतिपत्ति तद्विषयं[2] चाऽऽक्षेप्स्यति, ततश्च प्रत्येतव्यतत्त्वनिश्चय इत्यत आह—नाप्यार्थो ऽर्थः। कुतः ? अध्यारोपेणापि प्रति-

१ प्रमितयर्थ मू पु०। २ कर्तव्यतेव प्रतिपत्तिस्तद्विषयम्० व पु पा।

**वस्तुतत्त्वं प्रकाश्यते। न हि तत्र शब्दस्य प्रामाण्यम्। एवमनपेक्षतया प्रामाण्यसिद्धेः कार्य्याऽन्वयरहितभूतादिकमप्यवगमयितुमलमाम्नाय इत्यसमञ्जसमेतत्। यदि कार्य्यरूप एव वेदार्थः कथं तर्हि मन्त्रार्थवादाः सोपनिषत्काः? यस्माद्भूतादिकमर्थं चोदनैव गमयति। कथम्? कार्य्यमर्थमेवमवगमयन्ती भूतादिकमपि गमयति।**

पत्तिसम्भवात्। सत्यं, प्रत्येतव्यमाक्षिपति प्रतिपत्तिविषया कर्त्तव्यता, न तु तस्य तथात्वमपि, समारोपेणापि प्रत्येतव्योपपत्तेरित्यर्थः। इदं दूषणमुपसंहरति—अतो न नियोगाऽनुप्रवेशेन वस्तु तत्त्व प्रकाश्यते। न हि तत्र वस्तुतत्त्वे शब्दस्य प्रामाण्यम्।

उपसंहरति—एवं भूतार्थत्वेऽप्यनपेक्षतया प्रामाण्यसिद्धेः कार्योऽन्वयरहितः स्वरूपेणाऽपि भूतादिकमर्थमवगमयितुमलमाम्नाय इति। चोदना हीति भाष्यग्रन्थस्य निबन्धनकृतो व्याख्यानमसमञ्जसमित्याह—इत्यसमञ्जसमेतत्। सर्वनामपरामृष्टं निबन्धनकृतो व्याख्यानमाह—यदि कार्यरूप एव वेदार्थः कथं तर्हि मन्त्राऽर्थवादाः सोपनिषत्का भूतार्थाऽभिधायिन इत्याशङ्क्याऽवतारितं चोदना हीति, तस्याऽर्थमाह—यस्माद्भूतादिकमर्थं चोदनैव गमयति। यदि भूतादिरर्थश्चोदनाया न स तर्हि कार्यरूपो वेदार्थः, न चाऽनपेक्षेत्याशयवान्पृच्छति—कथम्? उत्तरं—कार्यमवगमयन्ती भूतादिकमपि गमयति। द्विविधो हि शब्दः कार्याऽभिधायी लिङादिः, भूताद्यभिधायी च लडादिः। तत्र लिङादेस्तावत्कार्याऽभिधायित्वादेव तत्परत्वम्। लडादयस्तु[1] भूतादिकार्यपरतया तदन्वितमेवाऽभिदधति। ततश्च तेषामपि कार्ये तात्पर्यात्कार्यार्थत्वं सिद्धम्। तथा च भूताद्यभिधायिनामपि निरपेक्षत्वम्। यथाह नाऽन्यत्किं चनेन्द्रियमिति। इदं च व्याख्यातम्, न च प्रमाणान्तरगोचरोऽय-

१ लडादयस्तु० १ पु पा।

**कथं चिदपि शाब्दज्ञानविषयो ब्रह्म कथं तज्ज्ञानविधिः शक्यप्रतिपत्तिः ? विषयतश्च ज्ञाननिरूपणं, सिद्धश्च तन्निरूपयति, तत्सिद्धिश्च प्रमाणान्तराऽभावात स्यात्। तस्यापि चेदविषयः तदसिद्धेर्ज्ञानविशेषाऽप्रतिपत्तेर्विध्यप्रतिपत्तिः। अथ कथं चिद्विषयः, न तर्हि शाब्दज्ञानाऽनपेक्षता। प्रतिपत्ति[1]कर्त्तव्यतापरत्वाच्च वचनस्येदृक्ता नाऽऽगमार्थः स्यादित्युक्तम्। नाप्यार्थो ऽर्थः। अध्यारोपेणापि प्रतिपत्तेः संभवात्। अतो न नियोगाऽनुप्रवेशेन**

स आत्मतत्त्वमेव स, स एव च मोक्ष इति न प्रवृत्तिविषयः। अत्रैव दूषणान्तरमाह—यदि च न कथं चिदपि शब्दज्ञानविषयो ब्रह्म, कथं तज्ज्ञानविधिः शक्यप्रतिपत्तिः? किमिति न शक्यप्रतिपत्ति? रित्यत आह—विषयतश्च ज्ञाननिरूपणम्। चो हेत्वर्थे। निरूप्यतां विषयेण, को दोष? इत्यत आह—सिद्धश्च विषयो ज्ञानं निरूपयति। सो ऽपि सिध्यतु, का क्षति? रित्यत आह—तत्सिद्धिश्च प्रमाणान्तराऽभावाच्छब्दादभ्युपेतव्या। तस्यापि चेदविषयः तदसिद्धेर्विषयाऽसिद्धेर्ज्ञानविशेषाऽप्रतिपत्तेर्विध्यप्रतिपत्तिः।

शङ्कते। अथ कथं चित्तद्विषयः। यद्यपि तत्स्वरूपं न शब्दगोचरस्तथापि भेदप्रपञ्चविलयद्वारेण निरूपणाद्विषयभाव इत्यर्थः। परिहरति—न तर्हि शाब्दज्ञानाऽपरिच्छेद्यता। प्रथमपक्षोक्तं दूषणमत्रापि योजयति—प्रतिपत्तिकर्त्तव्यतापरत्वाच्च वचनस्य, ईदृश प्रतिपत्तव्यमितीदृक्ता नाऽऽगमार्थं स्यादित्युक्तं, यत्परः शब्दः स शब्दार्थे। प्रतिपत्तिकर्त्तव्यतापरश्चेन्न प्रत्येतव्यत्वपर इत्यर्थः। स्यादेतत्। कर्त्तव्यतायाः प्रतिपत्तिगोचरत्वात्प्रतिपत्तेश्च प्रतिपाद्यविषयत्वात्कर्त्तव्यतेव प्रतिपत्तिं तद्विषयं[2] चाऽऽक्षेप्स्यति, ततश्च प्रत्येतव्यतत्त्वनिश्चय इत्यत आह—नाप्यार्थो ऽर्थः। कुतः? अध्यारोपेणापि प्रति-

१ प्रमित्यर्थं मू पु०। २ कर्त्तव्यतेव प्रतिपत्तिस्तद्विषयम्० ब पु पा।

**वस्तुतत्त्वं प्रकाश्यते । न हि तत्र शब्दस्य प्रामाण्यम् । एवमनपेक्षतया प्रामाण्यसिद्धेः कार्य्याऽन्वयरहितभूतादिकमप्यवगमयितुमलमाम्नाय इत्यसमञ्जसमेतत् । यदि कार्य्यरूप एव वेदार्थः कथं तर्हि मन्त्राऽर्थवादाः सोपनिषत्काः? यस्माद्भूतादिकमर्थं चोदनैव गमयति । कथम्? कार्य्यमर्थमेवमवगमयन्ती भूतादिकमपि गमयति ।**

पत्तिसम्भवात् । सत्यं, प्रत्येतव्यमाचिपति प्रतिपत्तिविषया कर्त्तव्यता, न तु तस्य तथात्वमपि, समारोपेणापि प्रत्येतव्योपपत्तेरित्यर्थः । इदं दूषणमुपसंहरति—अतो न नियोगाऽनुप्रवेशेन वस्तु तत्त्वं प्रकाश्यते । न हि तत्र वस्तुतत्त्वे शब्दस्य प्रामाण्यम् ।

उपसंहरति—एवं भूतार्थत्वे ऽप्यनपेक्षतया प्रामाण्यसिद्धेः कार्याऽन्वयरहितः स्वरूपेणाऽपि भूतादिकमर्थमवगमयितुमलमाम्नाय इति । चोदना हीति भाष्यग्रन्थस्य निबन्धनकृतो व्याख्यानमसमञ्जसमित्याह—इत्यसमञ्जसमेतत् । सर्वनामपरामृष्टं निबन्धनकृतो व्याख्यानमाह—यदि कार्यरूप एव वेदार्थः कथं तर्हि मन्त्राऽर्थवादाः सोपनिषत्का भूतार्थाऽभिधायिन इत्याशङ्क्याऽवतारितं चोदना हीति, तस्याऽर्थमाह—यस्माद्भूतादिकमर्थं चोदनैव गमयति । यदि भूतादिरर्थश्चोदनाया न स तर्हि कार्यरूपो वेदार्थः, न चाऽनपेक्षेत्याशयवान्पृच्छति—कथम्? उत्तर—कार्यमवगमयन्ती भूतादिकमपि गमयति । द्विविधो हि शब्दः कार्याऽभिधायी लिङादिः, भूताद्यभिधायी च लडादिः । तत्र लिङादेस्तावत्कार्याऽभिधायित्वादेव तत्परत्वम् । लडादयस्तु[1] भूतादिकार्यपरतया तदन्वितमेवाऽभिदधति । ततश्च तेषामपि कार्ये तात्पर्यात्कार्यार्थत्वं सिद्धम् । तथा च भूताद्यभिधायिनामपि निरपेक्षत्वम् । यथाह नाऽन्यत्किञ्चनेन्द्रियमिति । इदं च व्याख्यातम्, न च प्रमाणान्तरगोचरोऽय-

१ लडादयस्तु १ पु पा ।

**अन्ये तु शाब्दज्ञानविधानसंतानविधानमिच्छन्ति। तस्य संहृतनिखिलभेदोल्लेखविशुद्धविशदज्ञानफलत्वात्।**

मित्यादिना। एतदुक्तं भवति। न कार्यसम्बन्धिना रूपेण प्रमाणान्तरेणाऽवगम्यतइति। तदिदमसमञ्जसम्। भूतार्थपरत्वे ऽप्यनपेक्षत्वेन प्रामाण्योपपत्तेः। स्यादेतत्। वृद्धव्यवहाराऽऽगम्य शब्दाऽर्थसम्बन्धः। स च प्रवृत्त्यात्मकः। प्रवृत्तिश्च कार्याऽवगमपूर्विका प्रेक्षावताम्, अतः कार्ये एव सर्वे साक्षात्तदन्वितस्वार्थतया वा लब्धव्युत्पत्तयः शब्दा इति कार्यरूप एव वेदार्थ इति ब्रूमो न पुनः प्रामाण्यायेति। तदप्युक्तम् अन्यथापि व्युत्पत्तेरुपपत्तेः। तथा हि। इन्द्रमित्रः प्रतिपन्नदेवदत्तानन्दनिबन्धनपुत्रजन्मा देवदत्तगृहादेव वार्त्ताहरेण सह देवदत्ताऽभ्याशमागतः पटवासोपायनाऽर्पणपुरःसरं दिष्ट्या देवदत्त वर्धसे, ते पुत्रो जात इति वार्त्ताहरव्याहारसमनन्तरमुन्मीलत्पुलककपोलमुत्फुल्ललोचनयुगलमतिस्मेरं मुखमहोत्पलमवलोक्य देवदत्तमुत्पन्नप्रमोदमनुमिमीते, तत्प्रमोदजन्यहेतुश्च पुत्रजन्मविज्ञानम्, अन्यस्य तदानीमनुपलब्धेः। वचनोच्चारणानन्तरं च तद्भावाद्वचनस्य तत्र हेतुतामवगच्छति। न चाऽसमर्थस्याऽसाविति सामर्थ्यमवैति। एवंविधविषये हर्षजनकं हेत्वन्तरं शङ्कमाना जननीजारशङ्कया ऽऽत्मनो ऽपि ब्राह्मण्यं प्रति सन्दिहाना नाऽधिकारभाजो ब्राह्मणोचितासु क्रियास्विति कृतं मीमांसाऽभ्यासपरिश्रमेण तेषाम्। अपि चाऽव्युत्पन्नकाष्ठशब्दार्थो ऽव्युत्पन्नविभक्त्यर्थश्च वर्त्तमानाऽपदेशेऽपि देवदत्तः स्थाल्यामोदनं काष्ठैः पचतीति पचत्यर्थे करणं पश्यति, तस्य काष्ठप्रातिपदिकार्थतां च प्रतिपद्यतइति सिद्धं विवादाध्यासितं वचनं कार्याऽसङ्गताऽर्थगोचरं तत्र प्रमाजननात् यद्यत्र प्रमाजननं तत्तद्गोचरं यथारूपादिगतं चक्षुरादीति।

सम्प्रति चिन्तामयीं प्रतिपत्तिं निराचिकीर्षुस्तामुपन्यस्यति– अन्ये तु शाब्दज्ञानविधानसन्तानविधानमिच्छन्ति। न च तत्फलरूपं येन न विधीयते, अपि तु फलस्याऽऽत्मतत्त्वसाक्षात्कारस्य साधनम्, अतो

**अत्रापि[1] नात्मरूपाऽवगतिः । ज्ञानप्रकर्षश्चाऽभ्यासनिबन्धनः प्रथितइति न चोदनार्थता । तस्माद् दृष्टार्थेषु कर्म्मसु विशेषविधयः । उपनिषदात्मतत्त्वं त्वनपेक्षविध्यन्तराद्वाक्यात्प्रतीयते । अलं वा गुरुभिर्विवादेन ।**

विधातव्यमित्याह—तस्य सकृतनिखिलभेदोल्लेखविशुद्धविशदज्ञानफलत्वात् । संशयादिदोषरहितो विशुद्धिः । साक्षात्कारो विशदता । तच तावत्पूर्वोक्तं दोषमासञ्जयति—अत्रापि नाऽऽत्मरूपाऽवगति, प्रतिपत्तिविधिपरत्वाद्वेदान्तानामिति । भावनाऽऽधेयविशदाभत्वं च विज्ञानानामन्वयव्यतिरेकसिद्धमिति प्राप्तत्वान्न शाब्दज्ञानसमानज्ञानसन्तानो भावनापरनामा विधेय इत्याह[2]—ज्ञानप्रकर्षश्चाऽभ्यासनिबन्धनः प्रथित इति न चोदनार्थता युक्ता ।

ननु 'तस्माच्छान्तो दान्तः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्ये'दित्यादिवाक्यान्यात्मदर्शनं शान्ततादिगुणोपेतं विदधत्येव, न चाऽविधीयमाने आत्मदर्शनाश्रयिणो गुणा विधातुं शक्यन्ते इति शान्ततादिगुणविधानायाऽऽत्मदर्शनमपि विधातव्यमित्यत आह—तस्माद् दृष्टार्थेष्विव कर्मसु विशेषविधय, उपनिषदात्मतत्त्वं त्वनपेक्षितविध्यन्तराद्वाक्यात्प्रतीयते । इदमत्राकूतम् । गुणविधयो हि भावार्थसिद्धिमपेक्षते न पुनस्तद्विधानमपि तेन, यथैव रागतः प्राप्ते द्रव्याऽर्जने ब्राह्मणादीनां प्रतिग्रहादयो नियम्यन्ते तथेहापि नित्यानन्दमयमात्मतत्त्वं विगलितनिखिलदुःखाऽनुषङ्गं साक्षात्चिकीर्षोरन्वयव्यतिरेकाऽवगतध्यानसाधनस्याऽऽत्मध्याने प्रवृत्तस्य शान्तत्वादिर्विधिरिति । ततस्तिसृणामपि प्रतिपत्तीनां विधानाऽनर्हत्वादात्मतत्त्वप्रतिपादनपरत्वं हि वेदान्तानामुपपादितम् । सर्वं चैतद् ब्रह्मसिद्धौ कृतश्रमाणामनायाससमधिगमनीयमिति नेहाऽस्माभिरुपपादितम् ।

---

[1] तथापि मू पु ।

[2] शाब्दं ज्ञानं विधेयमित्याह—२ पु पा

भवतु वा प्रतिपत्तिकर्त्तव्यता[1] नियोगद्वारेणात्मतत्त्वावगतिर्लौकवचांसि भूयांसि भूताऽन्वाख्यानानीत्युक्तम् ।

ननु वैयर्थ्यमत्रोक्तम् । प्रतिपत्तिविधावपि तुल्यमेतत् । भूतार्थप्रतिपत्तेरनतिरेकात् । अथाऽविपरीतात्मप्रतिपत्तिरेव । सा भूताऽऽख्यानपर्य्यवसाने पि तुल्या । अस्तु तर्हि प्रवृत्तिनिवृत्तिपर्य्यवसायित्वमेव सर्ववचसां भूतोप्यर्थः कथ्यते । तेनाऽन्यत्र प्रवृत्तिं कर्तुं तत्रैव वा, अन्यथार्थाभावात् । न । कुतूहलनिवृत्तेरप्यर्थत्वात् । तथा

इदानीमभ्युपेत्याह—अन वा गुरुभिर्विवादेन । अनुत्तरार्हतासाम्यादौपचारिकं गौरवम् । भवतु प्रतिपत्तिकर्त्तव्यता नियोगद्वारेणात्मतत्त्वावगते,र्लौकवचांसि तु भूयांसि भूताऽन्वाख्यानानीत्युक्तम् । तथाप्यप्रवर्त्तकवचनजन्मन्यपि प्रख्यायां साम्यादिति हेतुः सिद्धो भवतीत्यर्थः । ननु नाऽप्रवर्त्तकं वचो, यतो वैयर्थ्यमत्रोक्तम् । परिहरति—प्रतिपत्तिविधावपि तुल्यमेतत् । कुतः ? भूतार्थ[2] प्रतिपत्तेरनतिरेकात् । यदि भूतो ऽर्थः प्रयोजनाऽभावान्नाऽऽख्यातव्यस्तर्हि प्रतीतिरपि तद्विषया न विधातव्या । न ह्येतस्याः प्रत्येतव्यव्याप्तेरन्यत् फलमस्तीत्यर्थः । अथाऽविपरीताऽऽत्मप्रतिपत्तिरेवार्थः प्रतिपत्तिविधेः । प्रतिपत्तिविधिपक्षे तावदयमर्थो न भवतीत्युक्तम् । अभ्युपगम्य परिहारान्तरमाह—सा प्रतिपत्तिर्भूताख्यानपर्यवसाने ऽपि तुल्या ।

पुनश्चोदयति- अस्तु तर्हि प्रवृत्तिनिवृत्तिपर्यवसायित्वमेव सर्ववचसां भूतो ऽप्यर्थः कथ्यते । तेनाऽन्यत्र प्रवृत्तिं कर्तुं तत्रैव वा, ऽन्यथा ऽर्थाभावात् । इदमचाऽऽकूतम् । सर्वो हि शब्द परार्थमुच्चार्यते प्रेक्षावद्भिः, परश्च तमेवाऽर्थं प्रतिपद्यते यस्तेन प्रतित्सितः, यस्तस्य हेय उपादेयो वा, उपेक्षणीयप्रत्यायने प्रेक्षावत्त्वव्याघातात् ।

१ आत्मविषयार्थ्ति मू॰ पु ।
२ तुल्यमतत । म । भूताथ २ पु पा ।

**शिशुशकुन्तादीनां यथा विप्रकृष्टः शब्दो निमित्तम् भावनाऽनुगमात् प्रतिभायाः, तथा तादृशमेवोपायज्ञानं प्रवृत्तिनिवृत्तिमुखेन किं नेष्यते? जातिविशेषादयश्च शब्दभावनाया इवोपायज्ञानभावनायाः प्रबोधकाः।**

**ननु प्रतिभालम्बनस्य स्वरूपतो ऽनिष्पत्तेः शब्दज्ञानाकारेणैव निरूपणा। न च प्रत्युत्पन्नः शब्दो ऽस्ति। तदस्याश्रयणीया भावना। नैतत्सारम्। अनिष्पत्तिर्हि अ-**

यज्ञानमिति, तत्राह—शिशुशकुन्तादीनां यथा विप्रकृष्ट शब्दो निमित्तं भावनानुगमात्प्रतिभायाः, तथा तादृशमेवोपायज्ञान प्रवृत्तिनिवृत्तिनिबन्धनं भावनाऽनुगममुखेन कि नेष्यते? कि विप्रकृष्टशब्देन? उपायज्ञानस्यैव प्रवृत्तिहेतुतया अन्यत्र स्वाऽनुभवसिद्धत्वात्। यथा चैतत्तथोपरिष्टाद्वक्ष्यते। यदि मन्येत उपायज्ञानाऽऽहिता चेद्भावना प्रवृत्तिहेतु' अथा ऽनुभूतचरशकुन्तजन्मनो मनुष्यस्यापि किमिति न तया प्रवृत्ति? रित्यत आह—जातिविशेषादयश्च शब्दभावनाया इवोपायज्ञानभावनायाः प्रबोधका। अथ शब्दभावनापि किमिति न तथा? जातिविशेषादृष्टादिति चेत्। उपायज्ञानभावनायामपि तुल्यमेतदित्यर्थः।

अत्र चोदयति—ननु प्रतिभालम्बनस्य समीहितोपायस्य क्रियाविशेषस्य स्वरूपतो ऽनिष्पत्तेर्नोऽसाववलम्बनम्। न च निरालम्बनं ज्ञानमित्युक्त भवतैव, अत शब्दज्ञानाकारेणैव निरूपणा। न च प्रत्युत्पन्नशिशुशकुन्तादीनां शब्दो ऽस्ति। तदवश्याऽऽश्रयणीया ऽपूर्वं शब्दभावना। परिहरति—नैतत्सारम्। विकल्पाऽनुपपत्ते.। तत्र तावद्विकल्पयति—अनिष्पत्तिर्ह्यवर्तमानत्वाद्वा ऽनेकार्थसमाहारादेकात्मभावाद्वा प्रतिभालम्बनस्योच्यते। वर्तमानविषयं खलूपायज्ञान न प्रवर्तयति प्रवृत्तविषयत्वात्। अतो ऽनागतविषयमेषितव्यम्। तथा

शिशुशकुन्तादीनां यथा विप्रकृष्टः शब्दो निमित्तम् भावनाऽनुगमात् प्रतिभायाः, तथा तादृशमेवोपायज्ञानं प्रवृत्तिनिवृत्तिमुखेन किं नेष्यते? जातिविशेषादयश्च शब्दभावनाया इवोपायज्ञानभावनायाः प्रबोधकाः।

ननु प्रतिभालम्बनस्य स्वरूपतो ऽनिष्पत्तेः शब्दज्ञानाकारेणैव निरूपणा। न च प्रत्युत्पन्नः शब्दो ऽस्ति। तदस्याश्रयणीया भावना। नैतत्सारम्। अनिष्पत्तिर्हि अ-

यज्ञानमिति, तत्राह—शिशुशकुन्तादीनां यथा विप्रकृष्ट शब्दो निमित्त भावनानुगमात्प्रतिभायाः, तथा तादृशमेवोपायज्ञान प्रवृत्तिनिवृत्तिनिबन्धनं भावनाऽनुगममुखेन कि नेष्यते? कि विप्रकृष्टशब्देन? उपायज्ञानस्यैव प्रवृत्तिहेतुतया अन्यच स्वाऽनुभवसिद्धत्वात्। यथा चैतत्तथोपरिष्टाद्वक्ष्यते। यदि मन्येत उपायज्ञानाऽऽहिता चेद्भावना प्रवृत्तिहेतुः अथा ऽनुभूतचरशकुन्तजन्मनो मनुष्यस्यापि किमिति न तया प्रवृत्ति? रित्यत आह—जातिविशेषादयश्च शब्दभावनाया इवोपायज्ञानभावनायाः प्रबोधका। अथ शब्दभावनापि किमिति न तथा? जातिविशेषादृष्टादिति चेत्। उपायज्ञानभावनायामपि तुल्यमेतदित्यर्थः।

अत्र चोदयति—ननु प्रतिभालम्बनस्य समीहितोपायस्य क्रियाविशेषस्य स्वरूपतो ऽनिष्पत्तेर्नाऽसाववलम्बनम्। न च निरालम्बनं ज्ञानमित्युक्तं भवतेव, अत शब्दज्ञानाकारेणैव निरूपणा। न च प्रत्युत्पन्नशिशुशकुन्तादीना शब्दो ऽस्ति। तदवश्याऽऽश्रयणीया ऽपूर्वे शब्दभावना। परिहरति—नैतत्सारम्। विकल्पाऽनुपपत्ते.। तत्र तावद्विकल्पयति—अनिष्पत्तिर्ह्यवर्तमानत्वाद्वा ऽनेकार्थसमाहारादेकात्मभावाद्वा प्रतिभालम्बनस्योच्यते। वर्तमानविषयं खलूपायज्ञान न प्रवर्तयति प्रवृत्तविषयत्वात्। अतो ऽनागतविषयमेषितव्यम्। तथा

**वर्तमानत्वाद्वा ऽनेकार्थसमाहारा,देकात्मभावाद्वा प्रति भालम्बनस्योच्यते । शब्दे ऽप्यसौ तुल्या । सो ऽपि ह्यप्रतीतो वर्णसमाहारात्मको नैकः समस्ति । भेददर्शना-ऽभावात्, अभेददर्शनाच्चेत्युक्तम् ।**

चाऽसत्त्वनिष्पत्तिः प्रतिभालम्बनस्य । अथ वा प्रतिभाविषयस्य पदार्थसंसर्गात्मकत्वात्तस्य चैकस्याऽनुपपत्तेः परस्परव्यवच्छिन्नक्रियाकारकाऽनेकार्थसमाहारमात्रत्वात् । न चाऽनेकात्मकमेकं भवितुमर्हति, अनेकेषामप्येकत्वप्रसङ्गात् । तथा च न संसर्गः । नानात्वे च संसर्गिण एव । तथा च न संसर्ग इत्यन्ताभावो निष्पत्तिरित्यर्थः । तदेतदुभयं परपक्षे तुल्यमित्याह—शब्दे ऽप्यसौ तुल्या । सो ऽपि ह्यप्रतीतो वर्णसमाहारात्मको नैकः समस्ति ।

ननु वर्णव्यतिरिक्तः स्फोटात्मा शब्दः परैरभिमतः, स चैक इति स युक्तः प्रतिभालम्बनमिति शङ्कां निराचिकीर्षुः स्फोटनिराकरणपराणि सिद्धवद्भाष्याक्षराणि पठति—भेददर्शनाऽभावादभेददर्शनाच्चेत्युक्तं भाष्यकृता । वर्णेभ्यो भिद्यते इति भेदः स्फोट उच्यते । तद्दर्शनाऽभावात् । भेददर्शनाऽभावात् । न जातु गौरिति चतुर्थ्यामपि बुद्धौ क्रमभेदवदनुभवक्रमतो ऽप्रश्लिष्टवर्णचयाऽवगाहिन्यामन्यो वर्णेभ्यः कश्चिदाभासते । यद्युच्येत जरा राजेति तत्त्वे ऽपि वर्णानामर्थधीभेदादन्यो वर्णेभ्यो वाचकः, स च स्फोट इति, तत्राह—अभेददर्शनाच्च । भिद्यन्त इति भेदाः, न भेदा अभेदा वर्णास्तेषां दर्शनात् । एतदुक्तं भवति, न तु जरा राजेति पञ्चम्योरपि बुद्ध्योर्वर्णाऽतिरिक्तौ परस्परविभिन्नवाचकौ चकास्तः, किं तु त एव वर्णाः क्रमभेदवदनुभवाहितसंस्कारभेदा भासन्ते, ते च स्फोटधीभेदमाधास्यन्ति । अवश्याभ्युपेतव्यत्वादनवयवपदवादिनामपि संस्कारभेदस्येति दिङ्मात्रमत्र सूचितमाचार्यमतमनुवर्तमानैः ।

**नन्वेवंजातीयकेष्वेवाऽभेदवस्तुबुद्धेरेकशब्दात्मकमुपागमन्। न ह्यवस्तुषु संसर्गसमूहात्यन्ताऽसदादिषु संसर्गिषु वा नानात्मस्वेकवस्तुप्रतिभासः संभवति। विनैकस्य**

पुनः प्रकारान्तरेण परः प्रत्यवतिष्ठते—नन्वेवजातीयकमेवाभेदवस्तुबुद्धेरेकशब्दात्मकमुपागमन् धीराः। तथा हि। क्रियाकारकगुणगुणिप्रयोजनप्रयोजनिप्रभृतिषु संसर्गिषु समूहिषु वा धिशपाऽशोककिंशुकादिषु संसर्गः समूहश्चैको वस्तुभूतश्चकास्ति, यद्वाऽसन्ति वा शशविषाणाऽऽनानचक्रादयो वस्तुभूताः। सेवविधेष्वेकबुद्धिर्वस्तुबुद्धिश्चैकमनवयवशब्दात्मानमेवाऽवलम्बते।

अथ संसर्गादय एव तद्वन्तो वा एकबुद्धेर्वस्तुबुद्धेश्च कस्मान्नाऽऽलम्बनमित्यत आह—न ह्यवस्तुषु संसर्गसमूहाऽत्यन्ताऽसंसर्गिषु वा नानात्मस्वेकवस्तुप्रतिभासः संभवति। संसर्गादयो हि न परमार्थसन्तः संभवन्ति। तथा हि प्रसङ्गसाधनम्। यदनेकवृत्ति तन्नाना तद्यथा भिन्नभाजनगतानि तालफलानि। अनेकवृत्तिश्च पराभ्युपगतः संसर्गादिरिति स्वभावहेतुः। नानात्वाऽभावाच्चाऽनेकवृत्तित्वाभाव इत्यतिप्रसङ्गविपर्ययो व्यापकाऽनुपलब्धिः। न चैकत्वाऽनेकवृत्तित्वयोरविरोधात्संदिग्धो व्यतिरेक इति वाच्यम्। अविरोधाऽसिद्धेः। तथा हि। एकस्य सत्त्व विरोध्यभावेन व्याप्तं तद्विरुद्धश्चेह विरोध्ये व्यापकविरोधोपलब्ध्या भाविकमेकत्व निवर्तयति। तथा चैकत्वाऽभावात्संसर्गिण एव न संसर्गः। तथा हि। एकस्मिन्संसर्गिणि परिच्छिद्यमाने तदभावो व्यवच्छिद्यते। तदभाववन्तश्चाऽन्ये संसर्गिण इति ते ऽपि व्यवच्छिद्यन्ते। अन्यथा ऽसौ संसर्गाऽपरिच्छेद्यो न स्यात्। तथा तत्संसर्गिसम्बन्ध च स्वभावे संसर्गस्य परिच्छिद्यमाने तत्संसर्गिस्वभावाऽभावो व्यवच्छेत्तव्यः। तदभाववन्तश्च संसर्ग्यन्तरसम्बन्धस्वभावा इति ते ऽपि व्यवच्छेत्तव्याः। तदव्यवच्छेदे स एव तत्स्वभावः स

शब्दात्मनः प्रत्यासात् परिणामाद्विवर्त्ताद्वेति । न । अन्यथा-ऽन्यथा ऽतत्स्वभावश्चेति विरुद्धमापद्येत । सो ऽयं तद्देशत्वा ऽतद्देशत्वलक्षणविरुद्धधर्माध्यास । तदाह देशकालाऽवस्थाविशेषनियतैकसंसर्गव्यवच्छिन्नस्वभावान्तरविरहादनेकवृत्तेरेकस्य तद्देशादिविशेषवत्ता ऽन्येन योग इति । अथैकस्मिन्नेव संसर्गिणि गृह्यमाणे तद्गतः संसर्गोऽपि गृह्येत, तेनैव स्वभावेन संसर्ग्यन्तरेष्वप्यस्तीति तान्यपि ग्रहीतव्यानि । न च तानि गृह्यन्ते, इति संसर्गो ऽपि न गृह्येतेति सो ऽयं ग्रहणा-ऽग्रहणलक्षणो विरोधः । तथा नानासंसर्गिषु वर्त्तमानः संसर्गो भागशो वर्तते, कार्त्स्न्येन वा? न तावद्भागशो, निर्भागत्वात् । सभागत्वे वा ऽनवस्थापातात् । नापि कार्त्स्न्येन, संसर्ग्यन्तरे तदभावप्रसङ्गात् । न च प्रकारान्तरमस्ति, तयोरन्यतरनिषेधस्याऽन्यतरविधिनान्तरीयकत्वात् । तस्मान्न संसर्गसमूहौ परमार्थसन्तौ । एतेना-ऽवयविसामान्यादयः प्रत्युक्ता वेदितव्याः । शशविषाणादेश्चाऽसत्त्वप्रसिद्धतरमेवेत्यभिप्रायः ।

न चैव संसर्गादिबाधकप्रकारः पदे निरवयवे समस्तीत्याह—विनैकस्य शब्दात्मन प्रत्यासात्परिणामाद्विवर्त्ताद्वा । प्रत्यासो ऽध्यासः । यथा वस्तुनः स्वच्छधवले लाक्षारसावसेकतिरस्कृतधवलिम्नि स्थवीयसि स्फटिकमणौ तनीयस्तया लाक्षालक्षणद्रव्याग्रहणाल्लाक्षागुणाऽऽरोपेणाऽरुणः स्फटिकमणिरिति मतिरध्यासः । तथा नानापदार्थेषु तिरस्कृतभेदेषु तस्य स्फोटात्मनस्तात्त्विकमेकत्वमारोप्यैको वाक्यार्थः संसर्गात्मेति । समूहिषु च किंशुकादिषु च तिरस्कृतभेदेषु वनमिति वा समूह इति वा पदस्य तात्त्विकमेकत्वमारोप्यैकत्वबुद्धिः । एवं शशविषाणादिष्वसद्भूतेषु शशविषाणमित्यादिपदगतसत्त्वाऽध्यारोपेण प्रतीतिरिति प्रत्यासार्थः । परिणामो ऽपि यथैकं सुवर्णतत्त्वं कटकमुकुटकर्णिकाङ्गुलीयादिभेदेन विपरिणमते तथा

**सिद्धेः। संसर्गस्तावद्वाक्यार्थलक्षणः कारकोपसर्जनक्रियाप्रधानो ऽतुल्यप्रधानसंसर्गी।**

शब्दतत्त्वमपि नानापदार्थरूपेणेति। एतस्मिंश्च दर्शने भेदानां कथंचित्पदतत्त्वाद्भिन्नानां पारमार्थिकत्वम्। एवं स्फुरणमात्रेण चास्य पक्षस्योपन्यासः। विवर्तस्तु यथा मुखमेकमनेकेषु मणिकृपाणदर्पणादिषु सद्भूतेषु विवर्तमानं तच्छायापत्तौ विभिन्नवर्णपरिमाणदेशं चकास्ति, न तु तत्र तत्त्वतो भिन्नवर्णपरिमाणदेशानि मुखानि सन्ति, एवमनाद्यविद्यावासनोपधानवशात्पदतत्त्वमेकमनेकपदार्थात्मना प्रथते, न तु पदार्थास्ततो विभिद्यमानात्मानः परमार्थेन सन्तीति। एते प्रत्यासपरिणामविवर्त्ता मतभेदेन मन्तव्या इति।

परिहरति—न। अन्यथासिद्धेः। तामेवाह—संसर्गस्तावद्वाक्यार्थलक्षणः कारकोपसर्जनक्रियाप्रधानो ऽतुल्यप्रधानसंसर्गी। अत्रेदमाकूतम्। यत्तावदिदमुक्तम् अनेकवृत्तित्वान्नानात्वमिति, तदनेकवृत्तित्वस्यैकवृत्तित्वेनापि सह संभवात्सन्दिग्धव्यतिरेकतया नानात्वेन प्रतिबन्धासिद्धेरयुक्तम्। न चैकस्य नानावर्तिन्स्तद्देशत्वाऽतद्देशत्वलक्षणो विरोधः संभवति। सह संभवात्। युक्तमेतत्। यद्वस्तुनि परिच्छिद्यमाने तदभावो व्यवच्छिद्यतइति स्वाऽभावव्यवच्छेदरूपत्वेन भावानां तदव्यवच्छेदे परिच्छेदाऽनुपपत्तेः, भावपरिच्छेदात्मकत्वात् तदभावव्यवच्छेदस्य। अथ संसर्गान्तरं कस्माद्व्यवच्छिद्यते? तदभाववत्त्वादिति चेत्। तदेव कुतः? प्रत्यक्षेण तादात्म्येनाऽप्रतिभासनात्। अन्यथैकसंसर्गिवत्संसर्ग्यन्तरमपि प्रथेत। यथाह तत्परिच्छिन्नत्ति ततो ऽन्यद् व्यवच्छिन्नत्ति। त एव तर्हि परस्पराऽभावात्मानो न ये प्रत्यक्षेण कदाचिदपि परस्परसंकीर्णाः प्रत्यवभासन्ते। संसर्गः पुनरयं नानापि संसर्गिष्वभिन्नः प्रत्यक्षेण न विरोधमधिरोहति।

भाम्यन्ते यथा सर्वे नृपा अक्लेशेनैव सकललोकालोकिता भवेयुरिति शिष्टाचारः । तदेव भामणमत्रोत्प्रेक्ष्यते । यथा दारुमयी पुत्तलिका शनैर्नर्त्यते तथैव मञ्चा अपीति भाव ॥ तथा च नृपाणां चित्तवृत्तिरपि उत्कण्ठया नृत्यतीति । यथैव इव तथैव मञ्चा अपीत्यर्थ ॥ अत्र रूपकोत्प्रेक्षयोरङ्गाङ्गिभाव सङ्कर, मालिनी वृत्तम ॥ ३८ ॥

सीताया करग्रहे या वासना उत्कण्ठा सैव या वसन्तलक्ष्मीः मधुमाससमृद्धि तया विलसन्ति यानि पुलकान्येव मुकुलानि पुष्पाणि तेषां यज्जालं पटलं तेन मण्डित शोभित निजबाहुरूपचूतवृक्षं विलोकयन मुहुर्मुहुर्गौरवेणावलोकयन तिष्ठति ॥

निजयश एव य परिमल सुगन्ध तेन प्रमोदिता हर्षिताः, ये चारणा यशोगायका एव चञ्चरीका भ्रमरा तेषां य चयः समूह तस्य कोलाहलेन यशोगानेन मुखरितः शब्दायमान दिशां चक्रवालम मण्डल येन स एवम्भूत दम.पाल नृप कुन्तलस्य तन्नाम्नो देशस्य अलङ्कारो भूषणं मल्लिकापीड इति नाम्ना ख्यात । नूपुरकोक्तरूपकप्रतिपालनायैव यश परिमलेति रूपकोपन्यास ॥

दूरम अपसारितं कटक य श्यामतश्च प्रकटित धनुर्गुणकर्षणजनित य किण मांसग्रन्थि स एव या कृष्णा लेखा सैव मण्डनं ययोस्ते तथाभूते भुजदण्डे ॥

(पृ॰ १२) कुबेरदिक उदीचीदिगेव या अङ्गना स्त्री तस्या यो ललाटतट । परिसरभूरिति यावत । तस्मिन् विलासलम्पट तद्विच्छित्तिसचतुर काश्मीरस्य तन्नाम्नो देशस्य तिलको भूषणम ॥ पक्षे उत्तरदिग्रूपाङ्गनायाः ललाटे काश्मीरस्य कस्तूरिकाया तिलक ॥

निजप्रताप एव यो दिनकर तस्य य उद्गमः उदय तस्य तद्धेतुभूत । कारणीभूत इति यावत् । य. पूर्वगिरि॰ तस्य शिखरस्य सहचर समानशीलोऽचलयम ॥

निजप्रतापस्य या प्रभा कान्ति तस्य पटलेन समूहेन पिञ्जरित पिशङ्गीकृत मलयाचलस्य नितम्बतट येन एवम्भूत काञ्च्याः तन्नाम्नो देशस्य मण्डन भूषणम ॥

हर्षेण उल्लसत उद्गच्छत यत पुलक तेन विसंष्ठुलम् अस्थिरीकृत यत कपोलस्थल तस्मिन चलित यत कुण्डल तत्सदृश यत् चापवेशन धारणं (आकर्णाकृष्टहरधनुशिञ्जिनीरूपेण) तस्य पदे शेन तन्मिषेण प्रकटितो हरशरासनमेव य कर्णपूर. तस्मिन् मनोरथ येन स तथाभूत. । कर्णान्ताकृष्टशिञ्जिनीक धनु. कर्णपूरीकरिष्यामीति तस्य मनोरथ इति भाव ।

असम. अद्वितीयो यो रण एव महार्णव. समुद्रः तस्मिन्नेकः अद्वितीय एव मकर. तत्सदृश अकुतोभयसञ्चरणशील इति यावत ।

अमल स्वच्छो यो मलयजरस. चन्दनद्रव । तेन धवलितो यो भुजदण्डः तेन विडम्बिता अनुकृता भुजङ्गराजस्य सर्पस्य श्री. शोभा

येन स तथाभूतः । मारारिपो शिवस्य शरासनं धनुः शिरीषकुसुमस्य अतिशयेन सुकुमारम् अतिकोमलं लघु कलयन् । विजयाऽव्यतिरेकेणेति भावः ।

विमलया स्वच्छया मुक्तावल्या विराजमानः शोभमानो वक्षःस्तटः उरस्थलं यस्य स एवम्भूतः । पुनः तुङ्गः उत्तुङ्गः भुज एव तरङ्गो यस्य सः ॥ (अत्र सर्वत्र मञ्जीरकोलौ नाम्नानुगुणान्येव विशेषणानीति ध्येयम्) ॥

(पृ० १३) **अलमनेनेति** । कृतं राज्ञां वर्णनेनेत्यर्थः । प्रकृतं जनकानुज्ञातं स्वाधिकारम् जनकप्रतिज्ञाख्यापनरूपमिति यावत् ॥

जनकप्रतिज्ञामेव ख्यापयति—**आकर्णान्तमिति** । त्रिपुरमथनः शिवः तस्य उद्दण्डकोदण्डे विपुले धनुषि नद्धा बद्धा मौर्वी ज्या यः कोऽपि इह अत्र आकर्णान्तं कर्षति तस्य परिसरभुवं प्रान्तभूमिम् । समीपमिति यावत् । आयान्ती राजपुत्री जानकी । कूजन्ती या काञ्ची जघनरशना तया मुखरं शब्दायमानं जघनं यस्याः सा एवम्भूता सती । श्रोत्रनेत्रयोरुत्सवाय हर्षाय भवित्री । काञ्चीशब्देन श्रोत्रस्य रूपलावण्यादिभिर्नेत्रस्योत्सव इति ज्ञेयम् । मन्दाक्रान्ता वृत्तम् ॥ ३० ॥

अमी नरेन्द्रा इत्यागामिना सम्बन्धः ॥ **कामारीति** । कामारेः शिवस्य यत् कार्मुकं धनुः । तस्य कर्षणे यत् कौतूहलं तस्य ऊर्मिकल्लोलः । तेन रोमाञ्चिता अथ च द्विगुणपीवरा उत्साहेन मांसलीभूता बाहुदण्डाः येषां ते तथाभूताः । पुनः सीतायाः यः करग्रहः तस्मिन् मिलत् यत् कुतुकं हर्षः तेन अतिमात्रं निर्भरं यथा स्यात्तथा विस्तीर्यमाणानि उत्साहेन प्रफुल्लानि हृदयानि येषां ते तथाभूताः परितः समन्तात् नरेन्द्राः सन्ति इति त्वया पश्यतामिति सम्बन्धः । वसन्ततिलकं वृत्तम् ॥ ३१ ॥

समसमये एकस्मिन्नेव काले यत्सञ्चरणं धनुरानमनाय उत्थानं तेन मिलन्ति यानि कपोलतलानि तेषां यः सङ्घट्टः घर्षणं तेन मसृणं कोमलं यथा स्यात्तथा रणन्ति रणरणायमानानि मणिकुण्डलानि यस्य तत् तेन तथाभूतेन राजमण्डलेन ॥

एतेषां राज्ञाम् अन्योन्यसंघट्टमानानि यानि केयूराणि तेभ्यः समुच्छलन्तो ये कनककणाः तन्मिषेण । केयूरेभ्यो ये कणास्ते नृपप्रतापाग्निविस्फुलिङ्गा एवेति भावः ॥

राज्ञां धनुरुद्यमनायासनिष्फलं दृष्ट्वा आह—**पश्येति** । सुभटैः वीरैः नृपतिभिः भक्तिरेव स्फुटभावं गमिता प्रकटिता । धनुषीति शेषः । न तु शक्तिः वीर्यं स्फुटभावं गमितेत्येवं सर्वत्राभिसन्धिः । धनुर्गौरवबहुमानेन अञ्जलिः भक्तिसूचको विरचितः न तु मुष्टिः धनुषीति सर्वत्रानुषज्यते । मौलिरेव स्वशिर एव नमितः लज्जातिरेकात् न तु चापः ॥ स्वागता वृत्तम् । तल्लक्षणं च—"स्वागतेति रनभाद्गुरुयुग्मम्" इति ॥ ३२ ॥

(पृ॰ १४) आरम्भरमणीयो निष्फलावसान इति भावः । सरम्भः प्रोत्साहः ॥

उर्वीतलस्य निर्वीरत्वं विभाव्य मञ्जीरकस्य विषाद ।
आद्वीपादिति । द्वीपान्तात आ परतोऽपि द्वीपान्तात् अमी सर्व नृप तय समागता । कोऽपि नावशिष्यत इति भाव । इयं कन्या जानकी च कलधौत कनक ( "कलधौत रौप्यहेम्नो" इत्यमर. ) तद्वत सलावण्या अथ च कोमला मृदुला मधुरा इति यावत । रुचि कान्ति र्यस्याः सा तथाभूता चम्पकवर्णा लावण्यवती च । सर्वथा कमनीयेति भाव । कीर्तिः शैवधनुरुद्यमनयशश्च लाभास्पदम् सर्वथाऽभिलषणीया ॥ सत्यप्येवं इदमग्रवर्ति धनु केनापि नाकृष्ट, नापि टात्कृत किञ्चिदप्याकर्षणेन शब्दायित, नापि नमितम् । किं बहुना । स्थानादपि न चालितमिति अहो इति खेदे । किमधुना । उर्वीतलं जगन्मण्डल निर्वीरम् जातमिति शेष ॥ शार्दूलविक्रीडित वृत्तम् ॥३३॥

अलीकवैतालिक' दुर्वैतालिक । केवलैकजीर्णधनुरानमनविषये निर्वीर भूमण्डल किम् । अतोऽपि अधिकतरवार्यकर्माण सन्त्य स्मादृशा तत्किमत्रैव निर्वीर भूमण्डल व्यपदिशसीति भाव ॥

महीतले चलतो राटो रथस्य चक्रेषु यो रव शब्द तद्वत कर्कश दु श्रव ॥ भावि राक्षसागमनस्य अशुभत्वाद्राहुसाम्यम् ॥

प्रच्छन्नरूपो रावणोऽयमिति सकलदेशदर्शिनोऽपि मञ्जीरकस्य अपरिचयो युक्त एवेति न कश्चिद्विरोध ॥

पुरुष. प्रच्छन्नरूपो रावण । आटोपेन गौरवेण सहितं साटोपम् । वैतालिकेष्वपसदो नीच । तत्सम्बुद्धौ । कतिपयासु स्वल्पसख्या कासु ग्रामटिकासु क्षुद्रग्रामेषु पर्यटनेन दुर्विदग्ध अपटु तत्सम्बुद्धौ । सवरणीय गोपनीय स्वनाम दशकण्ठ इति । निर्वाहयामि दशेति हठादुक्तमन्यथा सफलयामि । दश दिश एव या विलासिन्य तासा कर्णपूरीकृत. कीर्तिरूपो निजयशोरूप एव पल्लवो यस्य स त त्रिभुवने वीरइति नामधेय यस्य स त त्रिभुवनैकवीरम् । यथा कूपस्थो मण्डूक सागरमजानन कुतश्चित्तस्य नामोपश्रुत्य तमविख्यात मन्यते तथा त्वमपि अशेषदिग्विख्यात मामविख्यातमपदिशसीति भाव ॥ कर्णान्ते निवेशनीया सुश्राव्या गुणा यस्य तत्तथाभूत कन्यैव रत्नम् । कर्णान्तपर्यन्त निवेशनीय कर्षणेन आनमयितव्य गुण यस्य तत्तथाभूत कार्मुक धनुश्च ॥

(पृ॰ १५) चरम पश्चात । धनुरानमनानन्तरमिति यावत् ॥ राशिनक्षत्रपाठकाना ज्योतिर्विदामित्यर्थ. । मेषादिराशिगणनाया धनुषः प्रागेव कन्या पठ्यत इति भाव. ॥

वाचाटता वाचालता बहुवचनचातुरीमिति यावत् । ( "वाचाटो बहुगर्ह्यवाक् इत्यमर" ) । अनयैव वाचाटतयैव । निवारयामि उपशमयामि । नक्षत्रविद्यायां ज्योतिःशास्त्रे कुशलो निपुण , अथ

न्न नकारच्छेदेन क्षत्रविद्याया वीरवृत्तौ न कुशल इति भावः । उत्तरेण वाचेन रावणं प्रकोपयति ।

तत्कथमिति । आकर्णान्तमित्यादिश्लोकसूचिता जनकप्रतिज्ञा श्रुत्वा च धनुरानमनमकृत्वैव यत्कन्यामालोकयितुमिच्छसि तद्भवतो वीरत्वस्यपाटवं सूचयतीत्यर्थः । ममापाति हेलयोत्तोलितकैलासस्येति भावः । मम चापारोपणसंशयः तदैव सम्भवेत यदा परागयपि असम्भाव्यानि जगति भवेयुरिति भावं प्रकटयन्नाह–विनेत्यादिना ॥ अम्भोवाह मेघं विनैव बहुलरुचिभिर्लिप्तानि उद्यच्छिनकरकिरणकीर्णान् अम्बरतलात आकाशात हेमद्युतेः स्वर्णकान्तेर्या विलसति श्रेणी तद्वत रम्या मनोहरा तडिल्लेखा विद्युल्लता विलसति । यदिदमसम्भाव्यमानं भवेत तदैव मे चापारोपणसंशयो भवेदित्यभिसन्धिः । अपरञ्च यदि स्वर्गङ्गा मन्दाकिनी विनैव नभसि आकाशे रभसेन उन्मुद्रा चलायमाना या शफर्यः क्षुद्रमत्स्यविशेषा तासां परीवर्तः वृतस्ततः सञ्चरणं साकं नवनालोत्पलवनं यदि स्फुरति तदैव संशयः स्यादिति पूर्ववदभिसन्धिः ॥ शिखरिणी वृत्तम ॥ विशेषोऽत्रालङ्कारः "विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः" इति लक्षणात् ॥ ३४ ॥

स्वकीयचापारोपणसंशयसमर्थकदर्शनीयं दृष्टं विभाव्य विषादो रावणस्य ॥

विलोक्येति । सौधशिखरस्थां जानकीमिति शेषः । विनेत्यादिना कृता प्रतिज्ञा व्याहन्तुमुद्यतः एवोक्तासम्भाव्याम्बरतलपरिणामः । निर्मेघेऽम्बरतले जानकीशरीररूपतडिल्लेखाविलसनात्, स्वर्गङ्गारहितसौधशिखररूपाकाशे नेत्रसचाररूपशफरीभ्रमणसहितनेत्ररूपनीलोत्पलस्फुरणाच्चेति भावः ॥ तथैवेति यथा गतश्लोके प्रतिज्ञातं तथैवेति भावः ॥ मत्प्रतिज्ञातासम्भाव्यदृष्टदर्शनान्मन्ये यदनेन विधिर्मत्कर्तृकधनुरानमनसंशयं पुष्णातीति रावणोक्तेर्भावः ॥

विधेरपि स्वायत्तता वक्ति मयीति । क्षीरोदन्वति क्षीरसागरे निभृतं प्रसुप्तो यो मुरजित् विष्णुः तस्य नाभिनलिनी निजक्रीडासरसि कमलिनी कर्तुमनसि मयि सति ( कर्तुं मनो यस्य स तस्मिन्, तुंकाममनसोरपीति मकारलोपः ) अथ विधिः ब्रह्मा पदभ्रंशाशङ्का स्वाश्रयकमलनाशात स्वस्थानभ्रंशं मत्तः शङ्कमानो मधुरालापचतुरैः मधुरभाषणशीलैः स्ववक्त्रैरनुनयपरोऽभूत । स्तुतिभिर्मामनुनीतवान् ॥ सकललोकपितामहोऽपि मामनुनीतवानित्यपिना द्योत्यते । शिखरिणी वृत्तम ॥ ३५ ॥

(पृ १६) निरूप्य । जानकीरूपमिति शेषः ॥ सादृश्येन नायिकाङ्गस्य तडिल्लेखया सह तरलनयनयुगलस्य च मीनक्षोभितनलिनीवनेन सहेति यावत ॥ वञ्चन तन्निर्वाह चाह–तडिल्लेखेति । इयं दृष्टस्वरूपा तडिल्लेखा विद्युल्लता न, किन्तु सौधशिखरे प्रासादचन्द्रशालाया

वसन्त्याः कस्याश्चिन्नायिकायाः कनकवद्रुचिरा मनोज्ञा अङ्गलतिकेत्यवधारयामि । मीने तरल क्षोभितमथ च उन्मज्जत शोभमानं कुवलयवनमिद न, किन्तु तस्या एव नायिकाया नयनयोर्य आलोकः अवलोकनं तस्य ललित लीलायितमेव स्फुरति विकसति । शिखरिणी वृत्तम ॥ ३६ ॥

सीतास्वरूप वर्णयन्नाह–राजीवेति । हे राजीव कमल कुरङ्ग मृग गज त्व मुधा व्यर्थमेव जीवसि । अस्या कामिन्या वदननयनगमनादिभिः परिभूतः सचिंति भावः । हे सुधाकर चन्द्र त्वमस्याः नायिकायाः पदनखस्यापि न सम. तुल्य कुतः पुनस्तस्याः मुखस्य तुल्य इति शेषः । मृगदृश. कुरङ्गशावाक्ष्या दृशो नेत्रस्य अये कुरङ्गः सारङ्गोऽपि कतम, न कोऽपि । न साम्य भजते इति भाव । एवम्भूते सति हे खञ्जन ! त्वमपि किं जनरञ्जनाय लोकचित्ताह्लादनाय प्रभवसि, न कदाऽपीति काक्वा व्यज्यते ॥ प्रतीपो ऽयालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ३७ ॥

सरभसं सोत्साहम । जानक्याः ऊरू वर्णयन्नाह कदलीति । चमूरुदृश. कुरङ्गाक्ष्या । "चमूरुप्रियकावपि, समूरुश्चेति हरिणाः" इत्यमर । ऊरुयुग भुवनत्रितयेऽपि तुला समता न बिभर्ति सहते । अत्युत्कृष्टत्वादिति भाव. । प्रख्यातोरुसादृश्यान्युपमानानि निरस्यति कदलीत्यादिभिः । कदली रम्भाखण्ड कदली । के शिरसि दलानि पर्णानि यस्यास्सा तथाभूता । यद्वा 'केन' वायुना 'दल्यते' विशीर्यते इति । ततश्च न नायिकोरुसदृशी ॥ करभ. करिशावकः करभ । करेण शुण्डादण्डेन भातीत्येवम्भूत । यद्वा करभ आ मणिबन्धात्कनिष्ठामूलपर्यन्तो हस्तभाग स करभ करे भाति । अतो नैवैतयोरुसादृश्यम । करिराजकरः गजराजशुण्डादण्डः करिराजकर । करिराजेन कीर्यते प्रक्षिप्यते यः स तथाभूत । अतो नैवास्योरुसाम्यम ॥ सर्वाणि ख्यातानि उपमानानि नैवोरुयुगलेन साम्य भजन्त इति भाव' । व्यतिरेको ऽत्रालङ्कारः । तोटकं वृत्तम । तल्लक्षण च–'वद तोटकमब्धिसकारयुतम" इति ॥ यद्वा कदलीकरभकरिराजकराः ऊरुसादृश्य न भजन्त इत्येवार्थः । द्विरुक्तयस्तु सरभसोक्त्या सङ्गच्छन्ते ॥ ३८ ॥

कस्याश्चिदपि अन्तःपुरपरिचारिण्या इति । भर्तृदारिकेति भर्तृदारिका जानकी । अन्यश्च कोऽप्यधुनाऽज्ञातनामादिक नीलोत्पलस्य दामवत् श्यामल' । रुचिरश्यामवर्ण इति यावत । पुन' कुसुमशर काम तत्सदृशं रूप स्वरूपं यस्य स मदनसमानमनोज्ञस्वरूपः । कुण्डलीकृतः कर्णान्ताकर्षणेन निजकर्णकुण्डलवत् वक्रीकृतो हर चापो येन सः । एवम्भूत चक्रवर्तिनः कस्यापि राज्ञ. कुमार. आलिखित इति पूर्वेण सम्बन्ध. ॥

(पृ. १७) मुग्ध अतत्त्वज्ञः अबलाजन नारीजनः । राज्ञि जनके कठोरप्रतिज्ञे चापारोपणेनैव कन्यां प्रदास्यामीति दृढप्रतिज्ञे सति किशोर अल्पं वयो यस्य स तम बालकमिति यावत् जामातरम आशंसति वाञ्छति । द्वितीयया धर्मचारिण्या मैत्रेय्येति भावः । उद्भिन्नः उद्गतः अङ्कुरित इति यावत । मनोरथाङ्कुरोद्गमस्य हेतुमाह—**देवीति** । कालत्रयदर्शित्व सिद्धिषु परिगणितं योगशास्त्रसाम्प्रदायिके । जरठानि कर्कशानि अङ्गानि यस्य स तथाभूत ॥

कोऽयमिति भयकारणमित्यर्थ । **अपसारयामीति** । अस्मात्स्थलादनायासेनैव दूरीकरोमीत्यर्थः । रावण प्रत्युक्ति । **अये इति** । **दीयतां दृष्टिरिति** । सौधशिखरावलोकनाद्धिरमेत्यर्थः ।

न केवलमवलोकयामि अपि तूनमयामि च । धनुरिति रावणस्य भाव ।

शिर शेखरभ्रंश अपशकुनमिति विभाव्य रावणस्य विषाद । **विलोकयतीति** । शेखरमिति शेष ॥ **अये इति** अये केशात विस्रस्तो य शेखर तदवलोकनेन अलम मुधैव अवलोकयसि शिरःपतितं शेखरमित्यर्थ. । समयो याति, तत् तस्मात्कारणात् तूर्णं शीघ्र हरकार्मुक शैव धनु गृहाण ।

अये लङ्केशेत्यत्र लङ्केशपद सम्बोधनमपि । अत एव चाग्रिमस्वगतोक्ती रावणस्य सङ्गच्छते । विदितोऽस्मि रावणत्वेनेति भाव ॥ घुणान्तरन्यायगतम आकस्मिकमित्यर्थः । ससंरम्भ सक्रोधमित्यर्थ ॥

**सावहेलेति** । अवहेलया अनतियत्नेन सहित यथा स्यात तथा अत एव कमनीय सुन्दर यथा स्यात तथा उदस्य उत्तोल्य । कार्मुकमित्यागामिना सम्बन्ध । मौर्वी धनुर्ज्या च (चकारोऽत्र भिन्नक्रमो नेय) (पक्षे मेखला) क्रीडयैव हेलयैव विनिबध्य स्वस्थाने नियोज्य हरकार्मुकमेतत कृष्टमेव न कोऽप्यत्र सन्देह इति भाव. । अथ सुदृश शोभनाक्ष्या जानक्या इति यावत दृश्यं दर्शनीयम रमणीयमिति यावत । हृदय च कृष्टमेव वशीकृतमेव मत्पराक्रमावलोकनेन प्रीतैव अस्मासु जानकीत्यवेहीति भाव ॥ अतिशयोक्तिरलङ्कार. । कार्मुककर्षणरूप कारणस्य जानकीहृदयाकर्षणरूपकार्यस्य चेत्यनयोरेककालिकत्वेन वर्णनात ॥ स्वागता वृत्तम । तल्लक्षणञ्च स्वागतेति रनभाद्गुरुयुग्ममिति ॥ ४० ॥

(पृ १८) **न चलत्यपीति** । का कथोन्नमनादिकस्येत्यपिना व्यज्यते ॥ धनुरितीति । धनुरुन्नमय्य सीतापहरणमिति । अतिदीर्घकालापेक्षः कुटिलो मार्ग कार्यसाधनस्य तत् तस्मात्कारणात् सरलेन अनतिकालापेक्षेण सुसाध्येन करवालस्य धारया भीषयित्वा घातयित्वा च जनकजनान् सीता नयामीति भाव ॥ अत्र मार्गयोर्द्वयोर्वक्रत्वसरलत्वयोर्धनुर्यष्टेर्वक्रता करवालस्य चावक्रता कारणमन्तर्गर्भितमिति ध्येयम् ॥

राजमण्डल वर्णयन्नाह-रोषेणेति । रोषेण रावणावज्ञाजन्मना क्रोधेन अरुणीकृत यत् त्रिलोचन नयन तस्य कान्त्या प्रभया भिन्नः सम्मिलितो यो भ्रूभङ्ग । तेन भीम यथा स्यात् तथा घटितो यो भ्रुकुटी विटङ्क भ्रुकुट्युन्नतप्रदेशो यस्य तत् तथाभूतम् । पुन उत्खाता कोशान्निस्सारिता अथ च लोला चाल्यमाना या करवाललता खड्गः तया कराल भीम यो दोर्दण्ड बाहुदण्ड तेन चण्ड प्रचण्ड, लोक भयङ्करमिति यावत, चरित यस्य तत तथाभूतम । नरवीराणा चक्र समूह न विलोकयसीति पूर्वेण सम्बन्ध । हठात्सीतानयने सर्वे एवैते वीरा त्वा निवारयिष्यन्तीति विचिन्त्य प्रवर्तितव्यमित्याशय । वसन्ततिलक वृत्तम ॥ ४१ ॥

नृपान् विभीषयन्निव स्वकरवाल वर्णयति निर्भिन्नेति । निर्भिन्ना ये वैरिकरिणा मच्छत्रुहस्तिना कुम्भा तेभ्यः यास्तथ्य ताभ्यो विमुक्तानि पर्यस्तानि यानि मुक्ताफलानि तेषा प्रकरेण समूहेन तारकिता तारकापूर्णेव कृता अम्बरस्याकाशस्य श्री शोभा येन स एव भूतो यो रण क लरात्रिरिव सर्वलोकक्षयकरत्वात्प्रलयरात्रिरिव भाति स एष कृपाकृपण दयाशून्य क्रूर इति यावत । मम कृपाण इति रे नृपा यूय पश्यत इति पूर्वेण सम्बन्ध । वसन्ततिलक वृत्तम ॥ ४२ ॥

आकाश इति । यथाह भरत – 'पात्रस्याल्पतया यत्र पात्र नैव प्रवेश्यते ॥ नेपथ्य इत्युक्त्वाकाशे लक्ष्य बद्ध्वेति चोच्यते । किं ब्रवीष्येवमित्यादि विना पात्र ब्रवीति यत् ॥ श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम" इति ॥

आकाशभाषित प्रत्याह-एक इति । एक एवाह बहुभिरुपस्थिते सुभटे वीरै सह सङ्ग्रामडम्बर युद्ध कथ करोमि इति विषाद विस्मय त्यज । नात्र कश्चिद्विस्मयावकाश इति भाव ॥ यत यूय मा सुलभ बहुभि सुजेय मन्यसे तेन मया सह समरे युद्धे समरेखयैव तुल्यभावेन चेत चित्त निधेहि । सर्वे मिलित्वा मया सह युद्ध कुर्वन्त्विति भाव ॥ वसन्ततिलक वृत्तम ॥ ४३ ॥

निजमूर्तिप्रकटनेच्छया स्वभुजानाहूयन्नाह मन्दाकिनीति । मन्दाकिन्या स्वर्गङ्गाया यानि कनकपद्मानि स्वर्णकमलानि तेषा बिसाङ्कुराणाम, अथ च उग्रा उन्मत्ता ये दिग्गजा तेषा लसन्तो ये दशना तेषामङ्कुराणा च उन्मूलने लीलोत्खातनव्यापारादिभि, ये भुजै शैशवम अनीयत ते तथाभूता मे निजा स्वकीया भुजा प्रकटा भवन्तु ॥ वसन्ततिलक वृत्तम ॥ ४४ ॥

(पृ १९) सकलवीरेति । सकलाना वीराणा यानि वृन्दानि समूहा तैर्वन्दनीया माननीया अवध्येति यावत वन्दिजाति । दूताना वन्दिना च सदैवावध्यत्वात् ॥ ततश्च सकलभुवने समस्ते जगन्मण्डले एको अद्वितीयो धीर, कथ विपरीत नीतिविरुद्धम् अशिष्टमिति यावत् ।

तद्यथा स्यात्तथा वर्तिष्यते व्यवहरिष्यति ॥ नैवेति प्रश्नकाक्वा व्यज्यते ॥

यदि मा न धर्षयितुमर्हति तदा किञ्चित्प्रत्यामोति नूपुरको-क्तेरर्थः ॥

**अस्थान इति** । अनुचितस्थाने नृपसमरोद्योगसमये इति भाव ॥ नूपुरकस्य हास्योक्ति स्वशिरश्छेदाशंसात्वेन सङ्ख्या अमङ्गल मन्यते रावण ॥ **स्थान इति** । कस्मिंश्चित स्थानविशेषे शिवा र्चनसमय इति भाव । **भवन इति** । स्वशिरश्छेदनप्रसादितहरस्त काशलव्यवस्थेति भाव ।

(पृ २०) पुरातननिजशिरश्छेदनद्वारा स्वपौरुष स्मारयति–**विद्याधरेति** । विद्याधराणा या प्रणयिन्य विद्याधर्य तासा यानि करप ल्लवाग्राणि तै र्लीलया विमुक्तानि यानि कुसुमानि तेषा प्रकरै समूहै अवकीर्णो परिपूर्णो । श्रिया युक्त चन्द्रचूड तस्य शिवस्य चरणे । तथा रणे समरे च काम यदृच्छया छिन्नोऽपि मम मस्तकगणो मङ्गलायै वेति ॥ यथा शिवपादयोरर्पितानि शिरासि शिवप्रसादसाधकानि तथा समरमूर्ध्नि छिन्नानि मम वीरस्य शिरासि नि श्रेयससाधनानीति भाव ॥ रणे चेत्यनन भावि रामकरिष्यमाण स्वशिरश्छेदन स्वनि श्रे यससाधनमिति सूचितम । हरप्रसादनाय रावणकृतनिजशिरश्छे दकथा पुराणेष्वनुसन्धेया ॥ वसन्ततिलक वृत्तम ॥ ४५ ॥

**ईदृश इति** । व र इत्यर्थ । निजरूपगोपनपूर्वकचौरवृत्तिव र्णनेन भाविजानकीहरण सूचितम ।

रूपगोपनकारण वर्णयन्नाह – **ये चन्द्रेति** । ये मम भुजा चन्द्र चूडाचलस्य कैलासस्य चालने यत् सकमद्वितीय चातुर्य पाटव तस्य चिन्तामणय आश्रयभूता सन्ति तैरेव भूयिष्ठतरै सारवत्तमै भुजै-श्चापाधिरोपाय क्षुद्रधनुरानमनाय प्रवृत्तो यदि भवेय तर्हि कथ न लज्जे । अत एव त्यक्तनिजरूप एत्र अत्रागत आसमिति भाव । इन्द्रवज्रा वृत्तम ॥ ४६ ॥

**कथयेति** । येन बलादेव तामानीय गमिष्यामीति भाव ॥

**यस्या इति** । वत्से । यस्या तव कुलगुरु योगिराजो याज्ञ वल्क्य, तात च एष राजर्षिर्जनक जननी च धरित्री सकललोक धात्री । एवम्भूता परिरक्षिता त्वमद्य दुर्विधे वैशसेन क्रौर्येण क्रूर विधिवशात निशाचरस्य रावणस्य कराङ्कगता भवित्री । अचिरा देव रावण त्वा बलात नेष्यतीति भ व ॥ अनेन दण्डकारण्यात् रावण कृत भावि जानकीहरण सूचितम । वसन्ततिलक वृत्तम ॥

**पुरत इति** । अग्रे भूत्वा अमु निवारयेदित्यर्थ ।

सहस्रबाहुपदोपन्यासेन सहस्रबाहोर्बाणस्य प्रवेश सूचित । उक्त च सङ्गीतरत्नाकरे–"असूचितस्य पात्रस्य प्रवेशो नैव युज्य

त" इति । कार्तवीर्यादित्यत्र ऋते योगे पञ्चमी । (पृ० २१) बाहु सहस्राम्येन बाणमेव कार्तवीर्यं मन्यते नूपुरक । जीवितोऽस्मीति सहस्रबाहुरस्याग्रे भूत्वा एन निवारयिष्यतीति भाव ॥

जामदग्न्यकृतकार्तवीर्यवधकथा पुराणेष्वनुसन्धेया ॥ अनर्थान्तरम बाणस्यापि राक्षसत्वात् । विषस्येति । विषरूपस्य रावणस्य अपरो विषरूपो बाणो निवारको भविष्यतीति भाव ॥ यथा लोके एकविषस्य उपद्रवशान्त्यै अपरविषस्य प्रयोग क्रियते, तथाऽत्रापि रावणजन्यविघ्नस्य बाणेनोपशमन भविष्यतीत्याशय ॥ कैलासाधिकसारमित्यादिश्लोकानुसरणवृत्तान्त स्वाभिलाषरूपेणाह-कैलासेति । कैलासशैलशिखरादपि भूरिः भूयिष्ठ सारो यस्य तत ततोऽप्यधिकसारमित्यर्थ । एवम्भूत निस्सीमोऽपरिच्छेद्य. भारो गुरुत्व यस्य तत् इन्दुमौले शिवस्य धनु पुष्पसदृश, हेलयैवे ति यावत, करपल्लवेन आलम्ब्य उन्नमय्य भुजा एव द्रुमा. तेषा स्फीत वन सफलीकरोमि । यथा वृक्षा पल्लवाग्रे पुष्प धृत्वा फलवन्तो भवन्ति तथैव मे भुजद्रुमा करपल्लवाग्रधृतहरकार्मुकरूपपुष्पा फलिनो भविष्यन्तीति भाव ॥ वसन्ततिलक वृत्तम । उपमारूपकयोरत्र सङ्कर ॥ ४८ ॥

नारोपणीयमिति । न केवल नारोपितमेव अपि तु कदाऽप्यारोपणीयमपि नेत्यर्थ ॥ चन्द्रहासो रावणधृत खड्गविशेष ॥ वीरडम्बरमिति । विरोऽहमिति डम्बर वीर्यदर्प इति यावत् ॥ अलीकपण्डित मिथ्यापाण्डित्याभिमानी ॥

निजवीर्यं वर्णयन्नाह रावण. उद्दण्डचण्डिमेति । उद्दण्ड. य चण्डिमा क्रौर्यं तेन लसन् यो भुजदण्डखण्ड तेन हेलयैव अनायासेनैव चलाचल. चञ्चलायमान हरस्य अचल पर्वत कैलास तेन चार्वी कीर्ति यस्य स तस्यैवम्भूतस्य मम । तुलित साम्य नीतो बालमृणालस्य काण्ड अभिनवबिसाङ्कुर येन तत तथाभूत यत कोदण्ड धनु तस्य कर्षणे यत कदर्थना क्लेश तया कीदृश यश कीर्ति स्यात् । बहुसार कैलासमुद्धृत्य पुन क्षुद्रधनुराकर्षणेनालमिति भावः । वसन्ततिलक वृत्तम ॥ ४० ॥

चलाचलेत्येतत पद चरिचलिपतिवदीना वा द्वित्वमच्याक्चाभ्या सस्येति वक्तव्यमिति वार्तिकेन साधु भवति ।

(पृ० २२) बहुमुखतेति । मुखबाहुल्येन मुखर वाचाल एव भवति । बाहुबाहुल्येनैव तु वीर ॥ अतो दशमुखत्वेन त्व वाचाल एव अस्तु बाहुसहस्रत्वेन वीर इति हृदयम ॥ पलालेति । पलालस्य निष्फलवृक्षशुष्ककाण्डस्य भारः समूहः तद्वत निस्सारेण, बलवीर्यरहितेनेति यावत ॥ आत्मानं वीरम्मन्यते इति वीरम्मन्य. वृथावीर्यदर्पित. ॥

समरेति । समरकलासु संग्रामविद्यासु कुण्ठ. मुग्ध., अपटुरिति तत्सम्बुद्धौ । अत्रैवेत्यस्य भुजसहस्रे इत्यनेन अग्रिमेण सम्बन्ध. " सभु

भविक्रमं वर्णयति-**पितुरिति** । पितु बले पादाम्भोजे चरणकमले या प्रणति भक्ति तया रभसेन हठात उत्सिक्त प्रोत्साहित हृदय यस्य स एवम्भूतोऽह पाताल प्रयात सन् पितर द्रष्टुमिति भाव सकलं समस्तं चितिवलय भूमण्डलं बाहूना सहस्रे आसज्य बद्धा फणिपतेः जगदाधारस्य शेषस्य फणफलकमालां फणा एव फलका पट्टा तेषां माला पंक्ति ता कति कति वारान् अनेकवारम्, बहुधेति यावत, जगद्भारोद्वेलामकरवम जगतो भारात भूमण्डलवहनभारात उद्वेलामु क्तवा, स्वच्छन्दामिति यावत् । भूमण्डल निजबाहुषु विधृत्य शेषस्य फणाभार नीतवानहमित्यर्थ ॥ त्वमेकधैव कैलासमात्रमुच्चमय्य गर्वि तोऽसि अह तु कैलासाद्यनेकगिरिनद्याद्याधारभूत भूमण्डलमेव समस्त बहुधा विधृतवान् इति किमावयो. साम्यमिति हृदयम् ॥ शिखरि णा वृत्तम ॥ ५० ॥

**बलितनयेति** । बलित सम्यगाचरणेन प्रतिपालितो नयो नीतिर्येन स तत्सम्बुद्धौ हे बलितनय त्व चलिता नयः नीति नीति शास्त्रोक्ता पद्धति. यस्य स तथाभूतो ऽसीति विरोध । तत्परिहारे तु बाणस्य बलिपुत्रत्वात बलितनयेति पदस्य हे बलिपुत्रेत्यर्थो ज्ञेयः ॥ **त्वमेवेति** । नान्यः कोऽपीत्येवकारार्थः ॥ स्वभुजवीर्य वर्णयन्नाह **दोष्णामिति** । कि मम दोष्णा बाहूना वीरलक्ष्मीप्रासादविभ्रमवर्ती वीरलक्ष्म्या य प्रासाद निवासस्थान तस्य यो विभ्रमो विलासः तद्वती वीर्यलक्ष्मीनिवासस्थानापन्नामिति यावत्, एवम्भूतामथ च गरिष्ठा गुर्वी पदवीं चरित्र न विदितवानसि। ये बाहव करपल्लवा नाये ऽङ्का त एव पर्यङ्क तस्मिन् शायी तस्मिन् चन्द्रशेखरगिरौ कैलासे कलशप्रतिष्ठा प्रासादशिखरभूषणसमता दधु न्यासितवन्त. ॥ राव णस्य बाहव वीरलक्ष्म्या प्रासाद । अत तत्करपल्लवोद्धृत कैलासः तत्प्रासाद शिखरभूषणमिवाभोदिति भाव ॥ वसन्ततिलक वृत्तम ॥५१॥

**तदिदमिति** । धनुरारोपणेनैव ज्ञास्यते क आवयोर्वीरतर इति । तरतमयोर्भावस्तारतम्यमिति भाव । (पृ॰ २३) **किमिदमिति**। दर्पा त्सिक्तराक्षसद्वयेन अवश्य धनुरारोपणीय भविष्यति तलश्च जानकी निशाचरकराङ्कगता भविष्यतीति भीतस्य मञ्जीरकस्योक्ति ॥ नरवीरेषु य एको ऽद्वितीय (राममाहिपति) तस्मै समर्पणीया या सीता तस्याः परिणये य मनोरथोऽभिलाष तेन विफल वृथा यथा स्यात तथा चेतः पदवी चित्तसरणिरायास्यते खिद्यते । मनोरथपदगतरथपदानुसारेणैव पदवीपदविन्यास इति ध्येयम ॥

भवतु नरवीरसमर्पणीया सीता, न मे तेन काऽपि क्षतिरित्या शयेनाह बाण **त्रिपुरेति** । मम धी. चित्त त्रिपुरमथनस्य शिवस्य यश्चाप तस्यारोपणाय उत्कण्ठिता न तु जनकपुत्र्या सीताया पाणिपद्मग्रहाय । अपि तु बहूना बाहूना यो व्यूह. समूह. तस्य

निर्व्यूढा सम्यक् प्रसारिता या माला श्रेणी तस्याः या बलपरिणतिः शक्तिनैपुण्य तया यो हेलाताण्डव क्रीडानृत्य तस्य आडम्बराय अट्टहासाय धीः उत्कण्ठितेत्यनुषङ्गः । ममात्रागमने सीतापरिणयो न प्रयोजन किं तु कैलासाधिकसारधनुरारोपणेन निजबाहुपरम्परायाः सार्थकत्वप्रदर्शनमेवेति भाव ॥ मालिनीवृत्तम ॥ ५२ ॥

स्वमनोरथ समर्थयन्नाह रावण **उन्मीलितेनेति** । हराचलस्य कैलासस्य उन्मीलितेन चालितेन शिखरेण प्रागेव मम भुजबलस्य परीक्षा कृता । अधुना एषा उपस्थिता विदेहतनयाया जानक्या कुचकुम्भकेलिषु यत कौतूहल तस्मात, तत्कारणादिति यावत, गिरिशस्य शिवस्य कार्मुककर्मणि धनुरानमने दीक्षा परीक्षणमित्यर्थ ॥ धनुरारोपण न मच्छक्तिपरीक्षायै अपि तु सीतापरिणयायैवेति बाणोद्देश्याद्विपरीत एव ममोद्देश्यमिति भावः ॥ वसन्ततिलक वृत्तम ॥ ५३ ॥

नरवीरेत्यादिमञ्जीरकोक्ति प्रतिपेदानिव नेपथ्य आह जनकः **असुरेति** । राक्षसाद्यन्यतमसध्ये य कोऽपि एतत हरचाप नमयति स मद्दुहितु सीताया करग्रह करोतु तस्मै अह स्वदुहितर समर्पयामीति भाव ॥ पुष्पिताग्रा वृत्तम ॥ ५४ ॥

**रेरे भुजाइनि** । रेरे मम भुजाः चन्द्रकलाकिरीटिनः शिवस्य कोदण्डस्य धनुष कर्षणेन आनमनेन यद्यश तेन त्रिलोकी जगत्त्रय श्वेता कुरुध्वम । पुन विदेहपुत्र्या जानक्या वक्षोजे स्तने यच्चन्दन रज तेन परिधूसरत्व अङ्गीकुरुध्वम ॥ हरचापारोपण कृत्वा निजयशश्चन्द्रिकया जगतीतल श्वेतीकृत्य सीता परिणीय तदालिङ्गनेन धूसरत्व स्वीकुरुध्वमित्यर्थ ॥ परिवृत्तिरत्रालङ्कार वसन्ततिलक वृत्तम् ॥ ५५ ॥

**दुर्विगाहमिति** । दुस्साध्यम अशक्यारोपणमिति यावत ॥ (पृ॰ २४) नूतनागतत्वेनैव मान्योऽसि नान्यथेत्यर्थ ॥ **अलमिति** । धनुरारोप्य सीता नयिष्यति बाण इति मा मस्था इति भाव । कुण्ठीकृतो विफलायास कृतो दशकण्ठो येन तत तथाभूते हरकार्मुके अय बाण कतर न कोऽपीति भाव ॥ नानेन धनुरारोपयितु शक्यमिति तत्त्वम ॥ **अन्योऽपीति** । अथ वा यदि अन्य कोऽपि धीरो वीरो नृप इम चाप विकृष्य आरोप्य सीताकरग्रहविधि विदधीत विधिवत सीतापाणिग्रह कुर्वीत । तर्हि एना जनकेन्द्रपुत्री सीता लङ्का नयामि । बलादिति शेष । गिरा वचसा अनुनयामि प्रसादयामि द्राक झटिति वशे चानयामि स्वायत्ता करोमि ॥ भावि जानकीहरणमनेन सूचितम । वसन्ततिलक वृत्तम ॥ ५६ ॥

**बाणस्येति** । बाणस्य बाहुशिखरे परिपीड्यमानम आकृष्यमाणमपि इदम इन्दुमौले शिवस्य धनुर्न चलति । स्थानादिति शेषः । किमिव ? कामातुरस्य पुरुषस्य वचसा सविधानैः चाटूक्तिभिः अभ्य-

र्थितम्। अकरणीयकरणायेति शेषः। [illegible] अविचलनीय सतां मन इव। [illegible] सूचितः। कदाऽपि सन्या सीतया [illegible] तीति मयैव ते मनोरथ इति हृदयम्। वसन्ततिलका [illegible]॥

**कथमिति।** सतां मनसो [illegible] ताहरणानुनयादीनां निष्फलत्वसूचक [illegible]। प्रत्यूहस्य विघ्नस्य पिशुना सूचिका॥ पूर्वकथा [illegible]

**अपि नामेति। हैहयराजेनेति।** कार्तवीर्येण [illegible] पुराणेषु प्रसिद्धम्। **अनेकरुचिरेति।** अनेकैर्विविधैः [illegible] शौर्ये चापैर्धनुर्भिः (पक्षे इन्द्रचापैः) युक्तता निजबाहव एव घनाका मेघा तैः निर्मुक्तानां नाराचानां धारासारैः समदापि शान्तिं नयामः॥

(पृ २५) **रे बाणेति।** रे बाण त्वं पञ्च बाणशतानि युज्य नाहं तेभ्यो बिभेमि यतः मम करतले करवालवल्ली अस्ति। येन अहं त्वद्बाणस मूहं खण्डयिष्यामि। रे पञ्चबाण मकरध्वज त्वमपि स्वबाणान् विवृणु प्रकटीकुरु। प्रहरेति यावत्। यत इयं तच्छासनोपायभूता युवतीनां लोके मण्डले ललामा ललिता मनोज्ञेति यावत् वल्ली लता। एवम्भूता जानकी एति आगच्छति अतो नाहं बिभेमि तव पञ्चबाणेभ्य इति भावः। वसन्ततिलका वृत्तम्॥ ५८॥

**मन्दोदरीति।** मन्दोदर्याः यः कुटिलः कुन्तलितः अथ च कोमलः स्निग्धः केशभारः तस्मिन् पिनद्धं यन्मन्दाराणां सुरतरुपुष्पाणां दाम मालिका तस्य मकरन्दरसं पिबन्तः। अथ च वीणानिनादवत् वीणाध्वनिवत् मधुरं ध्वनिमुद्गिरन्तः मधुकरा भ्रमरा अपि (का कथा देवमनुष्याणामित्यपिव्यङ्ग्यम्) मद्विक्रमं कीर्तयन्ति वर्णयन्ति। वसन्ततिलका वृत्तम्॥ ५९॥

**सुरतरुकुसुमेति।** सुरतरोः मन्दारस्य यत् कुसुमदाम पुष्पमाला तेन कमनीयो यः कामिनीजनः तस्य उपभोगे यत् सौभाग्यं तत् विडम्बयति स्वायत्तमेव अलीकं वर्णयतीत्यर्थः॥

स्वकरणीयं सूचयन्नाह बाणः। **अमीति।** तुलितः हरशैलस्य कैलासस्यैकं प्रधानं शिखरं यैस्ते तथाभाविनः अमी मे दोर्दण्डाः। अहङ्कृत्या गर्वेण सहितं यथा स्यात्तथा करतले न्यस्तः कुलिशो येन स तं तुरासाहमिन्द्रं पराभूय विजित्य। कैलासतुलनया इन्द्रपराजयेन च रावणकृतं सकलं सम्पाद्येति भावः। स्वैरं यथेष्टं त्रिदशवनं नन्दनमुन्मूल्य मम क्रीडोद्यानं सुरतरुभिः मनोज्ञं रमणीयं विदधतु॥ बाणागमननिमित्तमेतत् कविचातुर्योपन्यस्तं रावणकृतनिजसुरतरुसौभाग्यवर्णनोत्सिक्तहृदयबाणकृतस्वमनोरथवर्णनम्॥ शिखरिणी वृत्तम्॥ ६०॥

यदिक्रूरमिति । आगन्तुकमारीचाक्रन्दसूचकमेतत्। वत्से जानकीति । बाणे मते स्वच्छन्दो रावणो बलादेव सीतां नयिष्यतीति सञ्जीरकस्य भयम् ॥ यदि दैववैदग्ध्येन अधुना केनचिद्रावणानुचरस्य आक्रन्दः श्रुतो भवेत् तदा रक्षिता भविष्यसीति हृदयम्। दिष्ट्येति । सौभाग्येनेत्यर्थः ॥ इममिति । बाणरावणवृत्तान्तमित्यर्थः ॥

अङ्कलक्षणं दशरूपके– "प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः, अङ्को नानाप्रकारार्थसंविधानरसाश्रयः" इति। भारते च "प्रस्तुतार्थोपसंहारो यत्राङ्कः सोऽभिधीयते" इति । पुनः "बीजार्थयुक्तियुक्तं च कृत्वा कार्यं यथारसम् । निष्क्रमं तु ततः कुर्यात् सर्वेषां रङ्गवर्ति नाम" इति ॥

इति श्रौतस्मार्ताचारपरायणमैथिलप्रवरोपाध्यायोपनामकश्रीतीर्थनाथशर्मतनूजजगन्नाथकृतायां प्रसन्नराघवव्याख्यायां भावबोधिन्यां प्रथमाङ्कव्याख्या ॥



# प्रसन्नराघवटीकायाम्

## भावबोधिन्याम्

### द्वितीयाङ्कव्याख्या

(पृ० २७) अनेकेति। अनेकशुकशावकानामनुगमेन समागमेन निकामं सातिशयं हरित या लता (स्वभावहरिल्लतायाः शुकशावकसमागमेनातिहरितत्वम्) सैव यद्वितानम् तेन मनोरमो य आरामः तेन रमणीयः सन्निवेशो यस्य स तथाभूतः।

कीटवदिति। यथा कीटाः अनवरतं महीं पर्यटन्ति तथैव पर्यटनेनेत्यर्थः।

निरीहाणामिति। त्यक्तसर्वसङ्गानां काममाररहितानामित्यर्थः।

भवादृशामिति। ब्रह्मविद्याविनोदिनां भिक्षूणामित्यर्थः।

राजाऽपीति। ब्रह्मविद्यायाः ब्रह्मण एव समुपलभ्यमानत्वात् राजन्यसम्भावनीयतेत्यभिनव काक्वा व्यज्यते।

देवस्येति। अभ्यस्तत्वाद्दशकण्ठेत्युच्चारणाय दशेति अनिच्छसाप्युच्चारितम्॥ तद्गोपनाय च शितिकण्ठेत्यादि पूरणम्॥

अपलापेनेति। स्वपरिचयनिगूहनेनेत्यर्थः।

विश्रब्धमिति। यतोऽह राक्षस त्वमपि स्वपरिचयं निःशङ्कं मा कथय। यतस्त्वमपि राक्षसवत्प्रतिभासि इति भावः॥

(पृ २८) सकलेति। लङ्केश्वरस्य प्रधानमन्त्रिणेत्यर्थः। माल्यवतेति पदेन सहानुप्रासस्य प्रतिपालनाय माल्यपदोपन्यसनम्॥

मुनिरितीति। मुनिः माननीयो न चास्य वचनमतिक्रमितव्यमिति मनसि कृत्वेत्यर्थः॥ निजनयनेति। सर्वेष्वङ्गेषु नेत्रयोरतीव प्रियत्वं सुप्रसिद्धम्। तस्येति। सम्बन्धसामान्ये षष्ठी।

तदिदमिति। इदं ताटङ्कयुगम् वीरसूकर्णनिवेशोचितम्। वीरं सूते या सा वीरसूः तस्याः कर्णयोर्निवेशाय उचितम्। इत्येव रूपं वृत्तम् रत्नानां ताटङ्कखचितानामन्तः अन्तर्वर्तिनी स्फुरन्ती द्योतमाना असौ वर्णमाला वर्णस्य रत्नादिरागस्य पक्षे अक्षरस्य, माला पङ्क्तिरिव शंसति ज्ञापयति। अक्षरविन्यासो यथा किमपि वृत्तं गमयति तथा ताटङ्कस्थरत्नज्योतिर्माला लोकोत्तरचमत्कारवत्त्वेन बोधयति यदिदमलौकिकरत्नमयताटङ्कयुगं वीरजननीधारणयोग्यमिति परिस्फुटार्थः॥ १॥

**अनुमतं चेति** । स्वीकृतमित्यर्थः । **लङ्केश्वरेति** । रावण एवैको वीर इति हृदयम । प्रत्यर्पितं माल्यमिति शेषः ॥

**कथमिति** । केन प्रकारेण इद सकलं विश्वामित्रादिवृत्तान्त श्रुत तेनेत्यर्थः ॥

(पृ॰ २९) **वार्ता चेति**। कौतुकवती कुतूहलिनी वार्ता, अथ च विमला स्वच्छा, विशुद्धेति यावत, विद्या, पुनः कुरङ्गनाभे मृगमदस्य वस्तूरिकायाः लोकोत्तर लोकेषूत्तरः श्रेष्ठ (तथा चामर "उपर्युदीच्य श्रेष्ठेष्वप्युत्तर" इति) यद्वा लोकादुत्तर सामान्यतो लभ्य इत्यर्थः, एवम्भूत परिमल सौरभ सर्वमेतत्त्रयमपि दुर्निवार निवारयितुम शक्य यथा स्यात्तथा लोके जगति स्वयमिव प्रसरति ॥ उपमानमाह— **तैलस्येति** । वारिणि जले सर्वत्र प्रवर्तकाभावेऽपि यथा तैलबिन्दु प्रसरति तथा वार्तादयोऽपि जगति स्वयमेव प्रसरन्तीति भाव ॥ अत्र दीपकोपमयोरङ्गाङ्गिभावः सङ्कर । वसन्ततिलक वृत्तम ॥ २ ॥

**बहुतरेति** । बहुतरान प्रणिधीन चारान प्रणियाति प्रापयति य सः । बहवस्तस्य चाराः अतश्चास्य शत्रुवृत्तान्तोऽपि श्रुतिपथमायाति का कथा पुनः सर्वजनीनवृत्तान्तस्येति भाव ॥ **कथमिति** । ताटका प्रति प्रहितो मिथिलाया कुत आगतोऽसावित्यर्थः ।

**सताटङ्कमिति** । आहृत कौतुकेन या कौशिकदत्तताटङ्कयुगल ताटकयेति प्रश्नार्थः ।

**सताटकमिति** । ताटकया सहित रहित वा तद्वनमित्येव ताव त्प्रष्टव्यमित्यर्थः ॥

**केन पुनरिति** । यथा प्रतीहारी जनान राजपुर प्रवेशयति, कस्तथा ताटकाया यमराजपुरीप्रवेशक इत्यर्थः ॥ प्रतीहारवदाचरित प्रतीहारायितम ॥

**ताटकामनुगत इति** । रामबाणेन हत इत्यर्थः ।

**शिशुक्रीडोचितेनेति** । शिशुक्रीडावद्रामनाराचेन पीडितः । लीलयैव रामेण हतो दूर गत इति भावः ॥

**जीवन्मुक्त इवेति** । नाराचेन तथा हतो यथा जीवन्नपि शरीरवैकल्यान्मृत एवास्तीति भाव । **शिशिवेति** । रामपराक्रमद्योतनाय इद पदम ।

(पृ ३०) **कथितमिति** । मारीचस्य आक्रन्दमेव श्रुत्वा सर्व वृत्तान्तजात ज्ञातवान रावण इत्यर्थः ॥

**सीताभिलाषेति** । शीतलस्य न अग्नेरुज्ज्वनासम्भव इति भावः । अधुना सीताप्राप्त्यभिलाषेण तथा व्यग्रोत्कण्ठितो रावणो यथा किमप्यन्यदस्य हृदय नैव आयाति इति हृदयम ।

स्वप्ने चात्मादर्शितः स एष सुषुप्त्यवस्थायां प्रकाशत इत्याह 'तद्यत्रैतत्सुप्त''इति। तदेतदिति सम्बन्धः। यत्र यस्यां सुषुप्त्यवस्थायामेतत्स्वप्नं यथा न स्यात्तथा सुप्तस्तस्यामवस्थायामुपसंहृतकरणग्रामः समस्तकरणव्यापारकृतकालुष्यहीनः सम्प्रसन्नः स्वप्नमज्ञानमात्रतया विलापयन्मुक्ताद्यावृत्तः स्वप्नप्रयुक्त तैजसत्वं विहाय प्राज्ञो भूत्वा ज्ञान क्रियां विना स्वरूपचैतन्येनाज्ञानसाक्षीसाद्यस्य देहादेः स्वसत्तास्फूर्तिप्रदत्वादात्मेत्यर्थः। इदं श्रुत्वा पुनरिन्द्रो न किञ्चित्तत्र जायत इत्याह "नाहे"ति। अहेति निपातः खेदार्थे। खिद्यमानो हीन्द्र उवाच, अयं सुप्तः पुरुषोऽयमस्म्यहमित्येवं नात्मानमस्यामवस्थायां जानातीमानि भूतानि नो एव जानाति विनाशमेव प्राप्तो भवति नाहमत्र भोग्यं पश्यामीत्येवं दोषं दृष्ट्वा पुनः प्रजापतिमुपससाद। उपसन्नं पुनरुवाच, बताद्यापि ते कल्मषक्षयो नाभवत्तदर्थं पुनः पञ्चवर्षाणि ब्रह्मचर्यं चरेति। तदेवमेकोत्तरशतं ब्रह्मचर्यं चरते सहस्राक्षाय ब्रह्मचर्यसम्पन्नाय मृदितकल्मषाय प्रजापतिर्व्याचष्टे योऽयमाद्यद्वितीयतृतीयपर्यायेष्वक्षिणि स्वप्ने सुषुप्तौ चानुस्यूतोऽपहतपाप्मत्वादिगुणो दर्शितस्तमेव भूयोऽनुव्याख्यास्यामि नैतस्मादन्यमित्युपक्रम्य तुरीये-'मघवन्मर्त्यं वा इदं शरीर''मित्यादिना शरीरं निन्दित्वा तस्मादुत्थितं जीवमेवोत्तमं पुरुषं दर्शयति प्रजापति "य एष सम्प्रसादोऽस्मा''दित्यादिना। तस्मादपहतपाप्मत्वादीनां जीवे सम्भवाज्जीव एव दहराकाश इति प्राप्ते ब्रूमः। आविर्भूत स्वरूपस्तु। तुशब्देन पूर्वपक्षव्यावृत्तिः। उत्तरात्प्रजापतिवाक्यादपि न जीवशङ्का युक्तेत्यर्थः, यत आविर्भूतस्वरूपोऽत्र जीवो विवक्षितो न तु जीवत्वेन रूपेणेति। 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत''इत्युपसं-

हारदर्शनाथदपहतपाप्मत्वादिभिः प्रतिपाद्यं परं ब्रह्म तदेव जीवस्य पारमार्थिकं स्वरूपं, न तु जीवत्वम् । तथा चाविर्भूतस्वरूपस्य जीवस्य ब्रह्मत्वेनापहतपाप्मत्वादिकमुपपद्यते, न तु जीवत्वेन रूपेण । "नासम्भवा"दिति पूर्वसूत्रस्थहेतुर्नासिद्धइति भावः ॥

ननु दहराकाशस्येश्वरत्वे "ऽथ य एष सम्प्रसाद' इत्यादिना जीवपरामर्शो व्यर्थः स्यादित्यत उत्तरं पठति ।

**अन्यार्थश्च परामर्शः ॥ १ । ३ । २० ॥**

अन्यार्थोऽयं जीवपरामर्शो न जीवप्रतिपादनाय । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इत्युपसम्पत्तव्यपरात्मपर एवायं जीवपरामर्शः । जीवोपसम्पत्तव्यत्वेन हि परमात्मोपदिश्यते । स चोपदेशो जीवपरामर्श विना न सम्भवतीति तदर्थं जीवपरामर्शो न जीवप्रतिपादनार्थमिति ॥

**अल्पश्रुतेरिति चेत्तदुक्तम् ॥ १ । ३ । २१ ॥**

ननु 'दहरोऽस्मिन्नन्तराकाश" इत्याकाशस्याल्पत्वश्रवणान्न परमात्मत्वं किं त्वाराग्रमात्रजीवत्वं युक्तमिति चेत्तत्र समाधानमुक्त "मर्भकौकस्त्वात्तद्व्यपदेशाच्चे"त्यत्र । उपासनार्थमौपाधिकमल्पत्वं परमेश्वरेऽप्यविरुद्धमित्यर्थः । तस्माद्दहराकाशः परमात्मैवोपास्य इति सिद्धम् ॥

**अनुकृतेस्तस्य च ॥ १ । ३ । २२ ॥**

पूर्वं "परं ज्योतिरुपसम्पद्ये"ति वाक्यार्थविचारप्रसङ्गात्, "तच्छुभ्रं ज्योतिषां ज्योति"रिति वाक्योक्तपरंज्योतिष्ट्वसाधकं "न तत्रे"ति वाक्यं विचार्यत इति प्रासङ्गसङ्गतिरस्याधिकरणस्य । यद्वा पूर्वत्रात्मश्रुत्याद्यनुरोधादाकाशशब्दस्य रूढित्यागेनेश्वरे वृत्तिरुक्ता । तथे-

हापि "तत्रे"ति सतिसप्तम्या 'तत्र' शब्दवाच्यस्य तेजोऽ-
न्तराभिभावकत्वप्रतीत्यनुरोधात् "न भाती"त्यस्य वर्तमा-
नार्थत्यागेन यस्मिन्सति सूर्यादिकं न भास्यति स तेजो-
धातुरूपास्यत्वेनोच्यत इति पूर्वपक्षोत्थानाद्दृष्टान्तसङ्ग-
तिः । पूर्वपक्षे ऽलौकिकतेजउपास्तिः फलं, सिद्धान्ते निर्वि-
शेषब्रह्मप्रमितिरिति भेदः । मुण्डकोपनिषदि श्रूयते "न
तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति
कुतोऽयमग्निस्तमेव भान्तमनुभाति सर्वं तस्य भासासर्व-
मिदं विभाती"ति । सिद्धान्ते तत्रेति विषय सप्तमी । तथा
च तत्र तस्मिन्ब्रह्मणि विषये सूर्यादयो न भासकत्वेन
भासन्ते, यथा घटादौ विषय आलोकादिकं भासकत्वेन
भासते तद्वत् । अल्पतेजसो वह्नेः फल्गुत्वमभिप्रेत्य कैमु-
तिकन्यायमाह "कुत इति । इतश्च सूर्यादेर्न ब्रह्मणि
भासकत्वमित्याह "तमेवे ति । यथा सूर्यादिप्रकाश्यो
घटादिर्न सूर्यादिप्रकाशक एवं ब्रह्मप्रकाश्यः सूर्यादिर्न
ब्रह्मप्रकाशक इत्यर्थः । ननु यथा गुरौ गच्छति शिष्यस्या-
नुगमनं स्वनिष्ठगमनकृतमेवं सूर्यादेः स्वनिष्ठभानकृतम-
नुभानं किं नेत्यत आह "तस्ये"ति । यथाऽयःपिण्डस्य
दाहक्रिया वह्निनिष्ठैव तथा सूर्यादेर्भानं ब्रह्मनिष्ठमेव, न
पृथग्भानमित्यर्थः । अत्र संशयः, सूर्यादि जगद्भासकतया
प्रतीयमानं तेजोविशेषो वा ब्रह्मवेति । तेजस एव प्रकाशक-
त्वप्रसिद्धेः प्रबलेन तेजसा दुर्बलस्याभिभवदर्शनाच्च तेजो-
विशेष एवेति प्राप्ते ब्रूमः । अत्र तथा प्रतीयमानं ब्रह्मैव ।
कुतः । अनुकृतेः । अनुकरणं य "त्तमेव भान्तमनुभाति
सर्व"मित्यनुभानं तदनुकृतिशब्देनोच्यते । न हि तेज-
स्तेजोऽन्तरे भासमाने भासते । तस्मात्स्वप्रकाशतया
भासमानं चैतन्यमनु सर्वं सूर्यादि भासत इति युक्तम् ।

सूत्रे "तस्य चे"त्यनेनोदाहृतवाक्ये चतुर्थचरणोऽभिप्रेतः । "तस्य भासा सर्वमिदं विभाती"ति सर्वभासकत्वं तेजोऽन्तरस्याप्रसिद्धं विरुद्धं च, भासमानस्य तेजसस्तेजोऽन्तराभिभावकत्वेन भासकत्वाभावात् । ब्रह्मणस्तूपपन्नं "तदेव ज्योतिषां ज्योति"रित्यादौ प्रसिद्धं च । "न तत्रे"ति तच्छब्देन च "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलं तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदु"रिति प्रकृतब्रह्मग्रहणमेव युक्तमिति । श्रुत्यर्थस्तु । हिरण्मये ज्योतिर्मय आनन्दमय इत्यर्थः । तस्मिन्नन्नमयाद्यपेक्षया परे कोशे "ब्रह्मपुच्छं प्रतिष्ठे"ति यत्प्रतिष्ठाभूतं ब्रह्म तत्प्रतिष्ठितं तच्च विरजमागन्तुकमलशून्यं निष्कलं निरवयवं शुभ्रं नैसर्गिकदोषशून्यं ज्योतिषां सूर्यादीनां ज्योतिरवभासकं तच्च विदुषामनुभवसिद्धमिति ॥

**अपि च स्मर्यते ॥ १ । ३ । २३ ॥**

अपि च ब्रह्मणः सूर्याद्यप्रकाश्यत्वं तत्प्रकाशकत्वं च भगवद्गीतासु स्मर्यते ।

"न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥"

इति । तस्मादनन्यप्रकाश्यः सर्वजगद्भासकः परमात्मा ज्ञेय इति सिद्धम् ॥

**शब्दादेव प्रमितः ॥ १ । १ । २४ ॥**

पूर्वत्रानुमानादिना लिङ्गेन तत्रेति विषयसप्तमीं कृत्वा न भातीत्यादौ णिजध्याहारेण न भासयतीत्यर्थो वर्णितो भवति, भासकत्वेन न भान्ति सूर्यादय इत्यर्थकथनात् । तथेहाप्यङ्गुष्ठमात्र इति परिमाणलिङ्गाज्जीवमा-

दायेशानोऽसोति स्मारयेदिति विध्यध्याहारेणोपास्तिपरमङ्गुष्ठवाक्यमस्त्विति दृष्टान्तसङ्गतिः। पूर्वपक्षेऽङ्गुष्ठमात्रजीवोपास्तिः फलम्, सिद्धान्तेऽभेदप्रमितिः फलम्। कठवल्लीषु पठ्यते, "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठती"ति, तथा "ऽङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमक ईशानो भूतभव्यस्य स एवाद्य स उश्व एतद्वैतत्" इति। अस्यार्थः। स्वाभाविकं परिच्छेदं वारयति "पुरुष" इति। पूर्णत्वेन सर्वत्रोपलभ्यमान इत्यर्थः। तर्हि कथमङ्गुष्ठमात्रत्वमित्याशङ्क्याभिव्यक्तिस्थानद्वारा तदाह "मध्य" इति। आत्मनि देहमध्ये हृदयसद्मनीत्यर्थः। जीवभावमापन्नस्य ब्रह्मण इदमङ्गुष्ठमात्रत्वसमर्थनमिति बोध्य "मीशानो भूतभव्यस्ये"त्यादिना त्वंपदवाच्याङ्गुष्ठमात्रजीवानुवादेनाभेदबोधनादिति। तस्यैव परमात्मत्ववादिवाक्यान्तरमुदाहृतं "तथे"ति। "अधूमक"मिति लिङ्गव्यत्ययेन ज्योतिः परत्वात्। यथाऽधूमकं ज्योतिरकलुषितमेकरूपं प्रकाशमात्रं दृष्टं, तथाऽयमपि वस्तुतः कूटस्थस्वप्रकाशधातुरित्यर्थः। शोधितत्वमर्थस्य तदर्थतामाह "ईशान" इति। भूतभव्यग्रहणं भवतोऽपि प्रदर्शनार्थम्। अद्वितीयत्वमाह "स एवे"ति। अद्य वर्तमानकाले स एवास्ति, श्वो भविष्यत्काले स एव भविता, अतीतकाले स एवासीत्। यन्नचिकेतसा पृष्टं "मन्यत्र धर्मा"दित्यादिना तदेवाद्वितीयं वस्त्विति। अत्र संशयः किमिदमङ्गुष्ठवाक्यं जीवपरमुत ब्रह्मपरमिति। तत्राङ्गुष्ठपरिमाणस्य ब्रह्मण्यसम्भवाज्जीवपरमिदं वाक्यमिति प्राप्ते ब्रूमः। प्रत्यगभिन्नः परमात्मा वाक्यप्रतिपाद्यः प्रमितः। कस्मात्। शब्दादेव। "ईशानो भूतभव्यस्ये"त्यत्रत्येशानशब्दात्। न हि जीव ईशानशब्द आञ्जसः। न चाङ्गुष्ठपरिमाणलिङ्गाज्जीवः प्रतिपाद्य इति युक्तं, लिङ्गश्रुत्योर्वि-

रोधे श्रुतेः प्रबलत्वात् । एतत्सूचनार्थमेवकारः । ननु वाक्यस्य परमात्मपरत्वे कथमङ्गुष्ठमात्रत्वस्योपपत्तिरिति चेत्, काऽत्र कथन्ता. त्वंपदवाच्याङ्गुष्ठमात्रजीवानुवादेन ब्रह्माभेदपरे वाक्येऽनुपपत्त्यभावादिति ॥

ननु जीवस्य वस्तुतः सर्वगतस्य कथमङ्गुष्ठमात्रत्वमित्यत आह ।

**हृद्यपेक्षया तु मनुष्याधिकारत्वात्** ॥ १ । ३ । २५ ॥

तुशब्दः शङ्कानिरासार्थः । वस्तुतः सर्वगतस्यापि जीवभावमापन्नस्य परमात्मनोऽङ्गुष्ठपरिमाणहृदयावच्छिन्नतयाऽङ्गुष्ठमात्रत्वमुपपद्यत इत्यर्थः । ननु गजपुत्तिकादिशरीरेषु हृत्पुण्डरीकस्यानियतपरिमाणत्वात्कथं जीवस्याङ्गुष्ठमात्रत्वनियमस्तत्राह "मनुष्याधिकारत्वा"दिति । शास्त्रस्येति शेषः । षष्ठे फलार्थे कर्मणि तिर्यगादेरपि स्वर्गकामस्याधिकारः स्वर्गकामश्रुतेरविशेषादित्याशङ्क्याङ्गश्रुत्यर्थवत्त्वाय समर्थविषयतया तिर्यगादेः सामर्थ्याभावेन स्वर्गकामपदं सङ्कोच्य मनुष्याधिकारत्वे स्थिते चातुर्वर्ण्यमधिकरोति शास्त्रमिति प्राप्य "वसन्ते ब्राह्मणोऽग्निनाऽऽदधीत ग्रीष्मे राजन्यः शरदि वैश्य" इति त्रयाणामेवाग्निसम्बन्धश्रवणात्तेषामेवाधिकार इति राद्धान्तितम् । तथा च मनुष्याणां हृदयस्याङ्गुष्ठमात्रत्वात्तदपेक्षयाऽङ्गुष्ठमात्रत्वमित्यविरोध इति तात्पर्यम् । एवमङ्गुष्ठमात्रजीवानुवादेन विरुद्धांशं परित्यज्याभेदो बोध्यतेऽनेन वाक्येन । इममर्थमुत्तरग्रन्थसन्दर्भेण स्पष्टीकरिष्यति, "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टस्तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृत"मिति । अस्यार्थः । योऽन्तरात्मा पुरुषत्वात्पूर्णोऽयं जनानां हृदये सन्निविष्टः । अतोऽङ्गुष्ठमात्र इति

त्वंपदवाच्यानुवादः । तस्यान्वयव्यतिरेकाभ्यां तदनुसारि श्रुत्या च शोध्यत्वमाह "तं स्वा"दिति । शरीरं स्थूलं सूक्ष्मं च तस्मात्स्वाभिमानविषयात्प्रवृहेत्पृथक्कुर्याद्धैर्येण समाधिनेति यावत् । तं विविक्तमात्मानं विशुद्धममृतं ब्रह्मैव जानीयादित्याह "त"मिति । तदेवं काठकवाक्य प्रत्यग्ब्रह्मणि ज्ञातव्ये समन्वितमिति सिद्धम् ॥

**तदुपर्यपि बादरायणः सम्भवात् ॥ १ । ३ । २६ ॥**

पूर्वं मनुष्याधिकारं शास्त्रमित्युक्तम् । तर्हि क्रममुक्त्यर्थाभिरुपासनाभिर्मनुष्याणां देवत्वं प्राप्तानामधिकारो न स्यादित्याक्षिप्य समाधीयत इत्याक्षेपसङ्गत्याऽस्यारम्भः प्रसङ्गसङ्गत्या वा । अत्र चाधिकारनिरूपणद्वारा मन्त्रार्थवादादीनां मानान्तरप्राप्तिविरोधयोरसतोर्देवताविग्रहादौ समन्वयोक्तेरध्यायसङ्गतिः। एवं मन्त्रादीनां स्वार्थे प्रामाण्ये न्यायसाम्यादुपासनाऽधिकार्यादिसमर्पकाणां स्वार्थे प्रामाण्यात्तत्त्वमस्यादिवाक्यानां ब्रह्मात्मैक्ये पर्यवसानमिति श्रुतिशास्त्रपादसङ्गतयः । पूर्वपक्षे मन्त्राद्यप्रामाण्यादुपगमनादिवाक्यानामपि स्वार्थे तदयोगात्तत्त्वमस्यादेरपि नैक्यनिष्ठतेति फलं, सिद्धान्ते तत्सर्वसम्भवादैक्यनिष्ठतेति फलम् । यद्वा देवानामनधिकारात्क्रममुक्तिसाधनेषूपासनेषु देवादिभोगद्वारा मोक्षकाममनुष्यप्रवृत्तिर्नास्तीति पूर्वपक्षे फलं, सिद्धान्ते तादृशप्रवृत्तिरस्तीति । बृहदारण्यके श्रूयते "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणा"मिति । देवादीनां मध्ये यो यो ब्रह्म प्रत्यक्त्वेन साक्षादकरोत्स एव ब्रह्मात्मनाऽतिष्ठदित्यर्थः अत्र किं देवादीनां ब्रह्मविद्यायामधिकारोऽस्त्युत नास्तीति विशये शास्त्रस्य मनुष्याधिकारत्वान्नास्तीति प्राप्तेऽभिधीयते । तदुपर्यपि बादरायणः सम्भवादिति ।

तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तेषामपि ब्रह्मविद्यायामधिकारोऽस्तीति बादरायण आचार्या मन्यते स्म । कस्मात् । सम्भवादर्थित्वसामर्थ्याद्यधिकारकारणसम्भवादित्यर्थः । देवादीनां सदा भोगशालित्वेऽपि भोग्यवस्तुष्वनित्यत्वदोषदर्शनाद्वैराग्यादिकं निरतिशयानन्दमोक्षार्थित्वं च सम्भवतीति भावः ॥

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ १ । ३ । २७ ॥**

ननु देवादीनां विग्रहवत्त्वं विना ब्रह्मविद्यायामनधिकारात्तदङ्गीकरणीयम् । तथा सति कर्मण्यपि शरीरित्वयर्त्विगादिवत्सन्निधानेनैवोपकारकत्वं स्यात् । तच्च न सम्भवत्येकस्य शरीरस्यानेकत्र युगपत्सन्निधानासम्भवात् । तस्माद्विग्रहवत्त्वाङ्गीकारे कर्मणि देवताया उपकारकत्वविरोधः प्रसज्येतेति चेन्नैष दोषः । कस्मात् । अनेकप्रतिपत्तेर्दर्शनात् । एकस्य देवस्यानेकेषां शरीराणां युगपत्प्राप्तेः श्रुतौ दर्शनादित्यर्थः । तथा हि बृहदारण्यके शाकल्यब्राह्मणं, "अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्ये" त्युपक्रम्य, "स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रे" त्युक्त्वा, 'कतमे त" इति पृष्टायां "महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा" इति त्रिसहस्रषडधिकत्रिशतदेवानां त्रयस्त्रिंशद्देवेष्वन्तर्भावमुक्त्वा, त्रयस्त्रिंशतोऽपि षट्सु, षण्णां त्रिषु, त्रयाणां द्वयोः, द्वयोरेकस्मिन्वाय्वात्मके देवेऽन्तर्भावं ब्रुवदेकस्य वायोरनेकरूपतां दर्शयति । अस्यार्थः । एनं याज्ञवल्क्यं विदग्धः शाकल्यो वैश्वदेवनामकस्य शस्त्रस्य निविदि शस्यमाना देवाः कतीति पप्रच्छ । तत्र याज्ञवल्क्यस्योत्तरं

"निविदि त्र्यश्चे"त्यादि । शस्यमानदेवनिष्ठसंख्यावाचकं मन्त्रपदं निविदित्युच्यते । एवं षडधिकत्रिशताधिकत्रिसहस्रसंख्यानिर्णयानन्तरं "कतमेत" इति संख्येयस्वरूपप्रश्ने ऽष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिरिन्द्रश्चेति त्रयस्त्रिंशद्देवेषु सर्वेषामन्तर्भावो दर्शितः । "महिमान एवैषा" मित्यादिनैषां त्रयस्त्रिंशद्देवानां महिमानो विस्तारा एव वस्तुतस्त्रयस्त्रिंशद्देवा इत्यर्थः । तेऽपि त्रयस्त्रिंशद्देवाः षण्णामग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानः । तेऽपि षड्देवास्त्रयाणां लोकाणां महिमानः । ते त्रयो देवा द्वयोरन्नप्राणयोस्तौ चैकस्य प्राणशब्दवाच्यस्य वायोर्महिमानाविति । यद्वाऽनेकप्रतिपत्तेर्दर्शनादनेकत्र कर्मण्येकस्य प्रतिपत्तिरङ्गभावस्तस्य लोके दर्शनादित्यर्थः । यथा बहुभिर्नमस्कुर्वाणैर्युगपदेव ब्राह्मणो नमस्क्रियमाणो दृश्यते, एवमेकां विग्रहवतीं देवतामुद्दिश्य युगपत्सर्वे हवींषि त्यजन्तीति न कश्चित्कर्मणि देवताया उपकारकत्वे विरोधः ॥

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ १ । ३ । २८ ॥**

ननु माऽस्तु कर्मणि विरोधः । तथाऽपि शब्दे वेदवाक्ये विरोधः स्यादेव, अनित्यविग्रहवद्देवताया नित्यवेदार्थत्वाङ्गीकारे शब्दस्यार्थेन नित्यसम्बन्धाभावेन नित्यानित्यसंयोगविरोधादिति चेत्, नायमप्यस्ति विरोधः । कुतः । अतः प्रभवात् । देवादिनिष्ठनित्याकृतिवाचकाच्छब्दराशेरेव देवादिप्रपञ्चस्य प्रभवादुत्पन्नत्वश्रवणादित्यर्थः । तथा हि स्मृतिः ॥

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥

नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥"

इति । श्रुतिरपि "एत इति हवै प्रजापतिर्देवान-सृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरः पवित्र-मिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौ-भग इत्यन्याः प्रजा इति तथा स मनसा वाचं मिथुनं समभवदि"ति । अस्यार्थः । एतेऽसृग्रमिन्दवस्तिरः पवित्र-माशवो विश्वान्यभिसौभग इत्येतन्मन्त्रस्थपदैर्देवादीन्स्मृ-त्वा ससर्ज ब्रह्मा । तत्रैतच्छब्द इन्द्रियाधिष्ठानदेवस्मार-कः । असृग्रशब्दोऽसृक्शब्दवाच्यरुधिरप्रधानदेहरमणमनु-ष्यस्मारकः । इन्दुमण्डलमध्यवर्तिपितृस्मारक इन्दुशब्दः । पवित्रं सोमं स्वमध्ये तिरस्कुर्वतां धारयतां ग्रहाणां तिरः पवित्रशब्दः स्मारकः । ऋचोऽश्नुवतां स्तोत्राणां गानरूपा-णामाशवशब्दः स्मारकः । विश्वदेवशंसिशस्त्राणां विश्व-शब्दः स्मारकः । अभिसौभग इति शब्दो निरतिशयसौ-भाग्यवाचकः प्रजानां स्मारक इति । स प्रजापतिर्मनसा सह वाचं मिथुनभावं समभवत्समभावयत्तत्प्रकाशितां सृष्टिं मनसाऽऽलोचितवानिति यावत् । सूत्रस्थप्रत्यक्षानु-मानशब्देन सृष्टेर्वेदप्रभवत्वप्रतिपादकश्रुतिस्मृती गृह्येते । तथा च श्रुतिस्मृतिभ्यां वेदशब्दप्रभवत्वं सृष्टेरित्यर्थः । आकृत्यालिङ्गितविग्रहानङ्गीकारे कस्य सृष्टिः स्यादिति भावः । तस्माद्यथा गवादिशब्दानां नित्याकृतिवाचकत्व-मेवं वैदिकशब्दानां नित्याकृतिवाचकत्वमिति न शब्देऽपि विरोध इति ॥

**अत एव च नित्यत्वम् ॥ १ । ३ । २९ ॥**

अस्मृतकर्तृकत्वादिना सिद्धमेव वेदस्य नित्यत्वम-नित्यार्थसंयोगेनानुपपन्नमित्याशङ्क्य, वेदादेवाकृतिविशे-

षावच्छिन्नदेवादिसृष्टिरिति प्रतिपादनान्नित्याकृतेरेव शब्दार्थत्वान्नानुपपन्नमित्यभिप्रायेण परिहरति । अत एव नित्याकृतेः शब्दार्थत्वादेव वेदस्य नित्यत्वं नानुपपन्नमित्यर्थः । एतत्सूत्रसूचितः प्रयोगश्च "वेदोऽवान्तरप्रलयावस्थायी जगद्धेतुत्वादीश्वरव"दिति । अवान्तरप्रलयावस्थायित्वमेव हि नित्यत्वं नाम । अनुमानसिद्धार्थे श्रुतिरपि "यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन्नृषिषु प्रविष्टा"मिति । यज्ञेन पुण्यकर्मणा वाचो वेदस्य पदवीयं ग्रहणयोग्यतामापन्नाप्तवन्तः । अतस्तामृषिषु विद्यमानां वाचं याज्ञिका अन्वविन्दन्नुपलब्धिमन्तो बभूवुरित्यर्थः । पूर्व स्थितामेव वाचं सर्वे ज्ञातवन्त इति तात्पर्यम् ॥

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ १ । ३ । ३० ॥**

नन्वाकृतिपदार्थकत्वे पि प्रलये सर्वाकृतिकव्यक्तिनाशे पुनस्तदाकृतिकव्यक्त्युत्पत्तौ मानाभावान्नित्यानित्यसंयोगविरोधस्तदवस्थ इति चेदुच्यते। सृष्टिप्रलयावृतावपि न शब्दे विरोधः । कस्मात् । समाननामरूपत्वात् । न हि प्रलये जगतो निरन्वयनाशोऽस्ति येनोत्पद्यमानं जगद्विलक्षणं स्यात् । किं तु संस्कारात्मनाऽविद्यायां तिष्ठत्येव जगदनुभवइव भावनाख्यसंस्कारात्मना । न चार्थसंस्कारे मानाभावो मृदि मण्डूकसंस्कारदर्शनान्नित्यप्रलयाख्यसुषुप्तौ सविषयेन्द्रियाद्यर्थसंस्कारसद्भावाच्च प्रबोधे पूर्वसजातीयव्यवहारात् । न च प्रतिदिनं सृष्टिप्रलययोः सद्भावे मानाभावः, "यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रबुध्यते तदाऽग्नेर्व-

लतः सर्वा दिशो विस्फुलिङ्गाः विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः” इत्यादिश्रुतेर्मानत्वात् । अस्यार्थः । अथ शब्दस्तदाऽर्थको यदेत्युपक्रमात् । प्राणशब्दः परमात्मपरः । अस्मिन्प्राणे जीव एवैकधा भवति तदात्मना तिष्ठतीत्यर्थः । तदैकीभावावस्थायामेनं प्रकृतं प्राणं परमात्मानमन्तर्बहिरिन्द्रियाणि सर्वाणि सविषयाण्यपियन्ति परमात्मनि लीनानि भवन्तीत्यर्थः प्रबोधे तस्मादेव परमात्मनो जगतो जन्मावभास इति । अविलम्बितोत्पत्तौ दृष्टान्त “स्तदे”ति । यथा संस्कारबलात्पूर्वमण्डूकादिसमाननामरूपत्वमुत्तरकार्यस्यैवं पूर्वकल्पप्रपञ्चसमाननामरूपत्वादुत्तरप्रपञ्चस्य पूर्वाकृतिकव्यक्त्युत्पत्तेर्न शब्दे कश्चिद्विरोधः । समाननामरूपत्वं च श्रुतौ दर्शनात्स्मृतेश्चाभ्युपगन्तव्यम् । “सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयद्दिवं च पृथिवीं चान्तरिक्षमथो सुव”रिति । तथा नक्षत्रेष्टौ, “अग्निर्वा अकामयतान्नादो देवानां स्यामिति स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवप”दिति । भाविवृत्तिमाश्रित्य यजमानोऽग्निरित्युच्यते । एवं कामयित्वा किं कृतवांस्तदाह “स”इति । कृत्तिकाभ्यः कृत्तिकाख्यनक्षत्रदेवतायै । बहुवचनं नक्षत्रबाहुल्यादिति बोध्यम् । अष्टकपालमष्टसु कपालेषु पचनीयं निरवपदुक्तपुरोडाशहविष्कामेष्टिं कृतवानित्यर्थः । तथा च योऽग्निर्यस्मा अग्नये निरवपत्तयोः समाननामरूपत्वं दर्शयतीति सिद्धम् । स्मृतिरपि ।

> “यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
> दृश्यन्ते तानि तान्येव तथाभावा युगादिषु ॥”

इत्यादिका द्रष्टव्या ॥

उक्तं देवादीनामधिकारमाक्षिपति ।

मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ १ । ३ । ३१ ॥

देवादीनां ब्रह्मविद्यायामनधिकारं जैमिनिराचार्यो मन्यते । कस्मात् । मध्वादिष्वसम्भवात् । एवं हि मधुविद्या श्रूयते । असौ वा आदित्यो देवमधु । देवानांमोदनान्मध्विव मधु । तस्य मधुनो द्युलोक एव तिरश्चीनवंशः । अन्तरिक्ष आदित्याख्यमधुनोऽवस्थानात्तदेव मध्वाधारोऽपूपः । रोहितं शुक्लं कृष्णं परं कृष्णं गोप्यं चेति पञ्चरोहितादीन्यमृतानि प्रागाद्यूर्ध्वान्तं पञ्चदिगवस्थिताभिरादित्यरश्मिनाडीभिर्मधुच्छिद्रभूताभीरोहिताद्याख्याभिस्तत्तद्वेदोक्तकर्मकुसुमेभ्यस्तत्तद्वैदिकमन्त्रमधुकरैरादित्यमण्डलमानीतानि । पञ्चमममृतं गोप्याख्यं प्रणवकुसुमादुपासनाभ्रमरैरूर्ध्वदिग्गतसूर्यरश्मिरूपगोप्याख्यमधुच्छिद्रद्वाराऽऽदित्यमण्डलमानीतम् । रोहितादिकममृतं मकरन्दस्थानभूतं वह्नौ हुतसोमाज्यपयःपुरोडाशादिरूपं द्रष्टव्यम् । तानि च रोहितादीन्यमृतानि यशस्तेजोवीर्यसकलेन्द्रियान्नरूपेण निष्पन्नान्यादित्यमधुसम्बद्धानि प्रागादिदिक्षु क्रमेण विद्यमानानां वसुरुद्रादित्यमरुत्साध्यरूपाणां देवानामुपजीव्यानीत्येवं चिन्तयतां फलं वस्वाद्याप्तिरुच्यते । वस्वादीनां समानानां मध्य एको भूत्वा यशआद्यमृतं प्रत्यक्षानुमानादिभिः करणैरुपलभ्य तृप्यतीति । न ह्येवंभूतमधुविद्यायां सूर्यवस्वादीनां देवानामधिकारः सम्भवति, एकस्योपास्योपासकप्राप्यप्रापकयोर्भावयोर्विरोधात् । सूत्रस्थादिशब्देन यासु विद्या "स्वादित्यो ब्रह्म" त्येवमादिरूपासु देवानामुपास्यत्वं ता विद्या गृह्यन्ते । तथा, "इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाजः," "इमावेव विश्वामित्रजमदग्नी अयमेव विश्वा-

मित्रोऽयं जमदग्निः," "इमावेव वसिष्ठकश्यपा वयमेव वसिष्ठोऽयं कश्यपो वागेवात्रि' रित्याद्यास्त्वषय उपास्याः । तेषु न तेषामेवर्षीणामधिकारः सम्भवति । श्रुत्यर्थस्तु । इमौ दक्षिणवामकर्णौ क्रमेण गौतमभरद्वाजावित्युपास्यौ । द्वितीयेजावित्यनेन दक्षिणवामाक्षिद्वयोक्तिः । तृतीयेमावित्यनेन दक्षिणवामनासिकाद्वयोक्तिः । एवं सप्तसु शीर्षण्येन्द्रियेषु सप्तर्ष्युपासितरित्यर्थः । न च मध्वादिविद्यासु देवादीनामनधिकारेऽपि ब्रह्मविद्यायामधिकारः किं न स्यादिति वाच्यं, विद्यात्वाविशेषेण ब्रह्मविद्यायामप्यनधिकारात् । तथा चायं प्रयोगः, ब्रह्मविद्या न देवादीनामधिकरोति विद्यात्वान्मध्वादिविद्यावदिति ॥

अपि च ।

## ज्योतिषि भावाच्च ॥ १ । ३ । ३२ ॥

भ्रमणवत्तया परिदृश्यमानज्योतिर्मण्डल एव सूर्यचन्द्रादिदेवताशब्दानां लोके प्रयोगसद्भावान्मण्डलस्य मृत्पिण्डादिवदचेतनत्वेन विग्रहाभावादग्निवाय्वादीनामपि तत्तुल्यत्वेन सामर्थ्यादेश्चेतनधर्मस्याभावान्न देवादीनामधिकारः । न च मन्त्रार्थवादेभ्यो देवादीनां विग्रहवत्त्वसिद्धेः सर्वं सुस्थितमिति वाच्यम्, तेषामन्यपरत्वेन स्वार्थप्रामाण्याभावात् । तस्माद्देवादीनां ब्रह्मविद्यायामधिकाराभावं जैमिनिर्मन्यत इति शङ्कासूत्रयोरभिप्रायः ॥

सिद्धान्तयति ।

## भावं तु बादरायणोऽस्ति हि ॥ १ । ३ । ३३ ॥

तुशब्दः शङ्कानिरासार्थः । बादरायण आचार्यो ब्रह्मविद्यायां देवादीनामधिकारस्य भावं मन्यते । यद्यपि देवतामिश्रोपसनास्वनधिकारस्तथाऽपि निर्गुणब्रह्मविद्या-

यां देवादीनामप्यधिकारोऽस्ति हि । पूर्वमुक्तस्य विद्यात्वादित्यनुमानस्य, ज्योतिष्टोमादि न ब्राह्मणकर्तव्यं कर्मत्वाद्राजसूयवदित्याभाससाम्यं द्रष्टव्यम् । यच्चा ज्योतिषि भावाच्चेत्यस्योत्तर"मस्ति हि" । यद्यपि देवताशब्दा ज्योतिरादौ प्रयुज्यन्ते तथाऽपि तदभिमानिदेवतापरा एव सम्भवन्ति । अस्ति ह्यैश्वर्ययोगाज्ज्योतिरादिरूपेणावस्थातुं विग्रहं गृहीत्वा व्यवहर्तुं च सामर्थ्यम् । तथा हि श्रूयते "मेधातिथिं मेष" इति । मेधातिथिं काण्वायनं मेषो भूत्वेन्द्रो जहारेत्यर्थः । तथा स्मर्यते चादित्यः पुरुषो भूत्वा कुन्तीमुपजगामेति । नन्वर्थवादादीनां स्वार्थे प्रामाण्याभावात्कथं तेभ्यो विग्रहवत्त्वसिद्धिरिति चेन्न । तथाऽप्यस्ति हीत्येवोत्तरम् । मानान्तरविरोधसंवादयोरभावे तेभ्य एव विग्रहसिद्धिरस्ति । तथा ह्यर्थवादादिभिः स्तुत्यादिकं लक्षयता वाच्यार्थोऽङ्गीकृत्य एव । न हि वाच्यार्थाभावे लक्षणा युक्ता । किं च "व्रात्यो व्रात्यस्तोमेन यजेते"त्यादौ व्रात्यस्वरूपाकाङ्क्षायां सावित्रीपतितो व्रात्यो यस्य पिता पितामहो वा सोमं न पिबेत्स व्रात्य इति व्रात्यस्वरूपं विध्यपेक्षितं सद्विधिप्रमाणकमित्युच्यते । यथा वा स्वर्गरूपं विध्यपेक्षितं सद्विधिप्रमाणकं, तथा निस्स्वरूपदेवतोद्देशेन द्रव्यत्यागायोगाद्विध्यपेक्षितं देवतादिस्वरूपं विग्रहवत्त्वं विधिप्रमाणकमेव । एवं मन्त्रार्थवादप्रत्यक्षमूलेतिहासपुराणादिभिरपि विग्रहवत्त्वसिद्धिः । न च प्रत्यक्षमूलत्वं पुराणादीनामसिद्धमिति वाच्यं, तत्कर्तॄणां योगमाहात्म्याद्देवादिभिः सह प्रत्यक्षव्यवहारसम्भवात् । तथा च श्रुतिर्योगमाहात्म्यमाह "पृथिव्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं

शरीरम्'' इति । पादतलमारभ्या जानोर्जानु- भेराग्रीवं ग्रीवायाश्चाकेशप्ररोहं केशप्ररोहाच्च क्रमेण पृथिव्यादिधारणया पृथिव्यादिपञ्चात्मके मुदाये समुत्थिते प्रतिपत्तिद्वारा वशीकृते योगगुणे चाणि- मादौ प्रवृत्ते योगाभिव्यक्तं तेजोमयं देहं प्राप्तस्य योगिनो न रोगादिप्राप्तिरित्यर्थः । तस्मात्समूलेतिहासपुराणादि- भ्यो विग्रहवत्त्वसिद्धावर्थित्वादिसम्भवाद्देवादीनां ब्रह्म- विद्यायामधिकारोऽस्तीति क्रममुक्त्युपासनासु मुमुक्षुप्र- वृत्तिरविकलेति सिद्धम् ॥

**शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ १ । ३ । ३४ ॥**

पूर्वं यथा तद्योयो देवानामिति देवशब्दश्रुत्या मनुष्याधिकारनियमापवादेन देवानामधिकार उक्तः, तथा मुमुक्षौ जानश्रुतौ शूद्रशब्दश्रुत्या लिङ्गेन द्विजात्य- धिकारनियममपोद्य शूद्रस्याप्यधिकारोऽस्त्विति दृष्टान्त- सङ्गत्येदमारभ्यते । शूद्रशब्दस्य सिद्धान्ते क्षत्रियसमन्व- योक्तेरध्यायान्तर्भावोऽस्य युक्तः । शूद्रशब्द एव वेदा- न्तानां स्वार्थे समन्वयसिद्धेः श्रुत्यादिसङ्गतयः । पूर्वप- जातिशूद्रस्यापि ब्रह्मविद्यायां त्रैवर्णिकाद्विशेषः फलं, सिद्धान्ते ततो विशेष इति विवेकः । एवं किलात्र छा- न्दोग्ये चतुर्थाध्याय उपाख्यायते । जानश्रुतिः पौत्रायणः प्रियातिथिर्बह्वन्नदाता बहुसद्गुणो बभूव । तस्य राज्ञो गुण- गणगरिमसन्तोषिताः सन्तो देवर्षयो हंसरूपमास्थाय- निदाघसमये प्रासादोपरिशयानस्यास्य राज्ञ उपरि माला- माबध्याजग्मुः । तेषामग्रेसरं हंसं संबोध्य पृष्ठत आगच्छ- न्नेको हंसः साद्भुतमभ्युवाच, भो भो भल्लाक्ष भल्लाक्षास्य राज्ञो जानश्रुतेर्द्युलोकं व्याप्य विद्यमानं तेजो न पश्यसि

किं, तत्तेजस्त्वां धक्ष्यति, अतस्तदतिलङ्घ्यं न गच्छेति । भल्लाक्षेत्युपहासो भद्राक्षेत्यर्थः । इदमुपश्रुत्याग्रगामी हंसः प्रत्युवाच "कं वर एनमेतत्सन्तं सयुग्वानमिव रैक्‌मात्थे"ति । अयमर्थः । वरेति सोपहाससंबोधनमवरेत्यर्थः । यद्वा वरो वराको जानश्रुतिः । 'कं' पदमाक्षेपार्थकं कथमित्यर्थः । रैक्को नाम कश्चन ब्रह्मिष्ठः । योजयति देशान्तरं गमयति स्वारूढमिति युग्वा गन्त्री शकटी । तया सह वर्तत इति सयुग्वानमित्यर्थः । तथा चैनं वराकं जानश्रुतिं प्राणिमात्रं सन्तं मूढमरे सयुग्वानं भगवन्तमसह्यतेजसं रैक्कमिव कथमेतद्वचनं ब्रवीषि । इदं श्रुत्वाऽयं राजा ब्रह्मविद्यार्थं रैक्कसमीपं गत्वा कृतार्थो भविष्यतीति दयालूनां हंसानामभिप्रायः । अथैष राजा हंसप्रयुक्तमनादरवाक्यं श्रुत्वा स्वस्यात्यन्तनिष्कर्षमुत्कृष्टतां च रैक्कस्य ज्ञात्वा दुःखितमनाः कथमपि निशामतिवाहयांबभूव । ततो निशावसानसूचकं बन्दिवृन्दसमारब्धस्तुतिसहस्रसंवलितमङ्गलतूर्यनिर्घोषमाकर्ण्य तल्पतलस्थ एव राजा झटिति यन्तारमाहूयादिदेश, विविक्तदेशेषु पर्वतगुहादिषु तेषु तेषु रैक्काह्वयं सयुग्वानमन्विष्य यत्नतोऽस्मभ्यमाचक्ष्वेति । स यन्ता तथैव क्वचिदतिविविक्तदेशे शकटस्याधस्तात्सन्तं पामानं कण्डूयमानं दृष्ट्वाऽयमेव रैक्क इति निश्चित्यातिकुशलो रैक्कस्य तैस्तैरिङ्गितैर्गार्हस्थ्येच्छां धनेच्छां चोन्नीय राज्ञे निवेदयामास । स राजा तन्निशम्य गवां षट्शतानि हारं रथं चाश्वयुक्तमादाय सत्वरं रैक्कमुपससाद । उपसद्य चोवाच, हे रैक्केदं सर्वं गवादि गृहीत्वाऽनुशाधि मां भगवन्निति । अथैवमुक्तवन्तं ससम्भ्रमं सस्पृहं प्रोवाच रैक्कः, "अह हारेत्वा शूद्र तवैव सह गोभिरस्त्वि"ति । अहेति निपातः । साटोपाह्वानमाह । हारेण

युक्तो रथो हारेत्वा गोभिः सहितस्तत्रैवास्तु किमेतावन्मात्रेण मम निर्वाहानुपयोगिनेति भावः । एवं स्थिते चिन्ता, किं शूद्रस्य ब्रह्मविद्यायामधिकारोऽस्ति न वेति । अस्तीति तावत्प्राप्तम् । कस्मात् । अर्थित्वादिसम्भवात्, वेदाध्ययनसाध्याहवनीयाद्यभावेनाग्निसाध्यकर्मानधिकारेऽपि देवादिवद्विद्यायामधिकारसम्भवात्संवर्गविद्यायां मुमुक्षौ जानश्रुतौ शिष्ये रैक्केण गुरुणा शूद्रशब्दप्रयोगाच्चेति । अत्र ब्रूमः । न शूद्रस्य ब्रह्मविद्यायामधिकारः, उपनयनाभावेन वेदाध्ययनाभावात् । न हि वेदवाक्यविचारसाध्यब्रह्मविद्यायामनधीतवेदस्याधिकारः सम्भवति, शास्त्रीयसामर्थ्याभावात् । न चैवं सति देवानामप्यनधिकार इति साम्प्रतं, तेषां स्वयंप्रभातवेदत्वात् । न च शूद्रस्यापि लिखितपाठादिना वेदप्राप्तिरिति युक्तं, गुरूपसदनपूर्वकाध्ययनसंस्कृतवेदस्यैव ब्रह्मविद्याद्युपकारकत्वात् । न च शूद्रशब्दश्रवणलिङ्गेन तस्याधिकारो, न्यायाभावेन लिङ्गस्यासाधकत्वात् । तर्हि वैदिकशूद्रशब्दोऽनर्थकः स्यादित्याशङ्क्य तं व्याख्यातुमिदं सूत्रं "शुगस्य" त्यादि । अस्य जानश्रुतेः क्षत्रियस्य तदनादरश्रवणात्तस्य हंसस्यानादरश्रवणाद्या शुगुत्पन्ना सा शूद्रशब्देन सूच्यते हि रैक्केण । स्वस्य सर्वज्ञत्वज्ञापनार्थं रैक्कः शूद्रशब्दं प्रयुक्तवानिति भावः । शूद्रशब्दं योगेन क्षत्रिये वर्तयति "तदाद्रवणा"दिति । तस्याः शुचो जानश्रुतिं प्राप्तत्वादित्यर्थः । यद्वा तस्य जानश्रुतेः शुचं प्राप्तत्वादिति । अथवा तं रैक्कं प्रति जानश्रुतिः शुचा दुद्रावेति शूद्रो जानश्रुतिरुच्यते । अतो न शूद्रस्याधिकारः ॥

ननु मुख्य एव शूद्रो जानश्रुतिरस्तु, किं जघन्येन योगेनेत्यत आह ।

**क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ १ । ३ । ३५ ॥**

जानश्रुतिर्न मुख्यशूद्रः । कुतः । क्षत्रियत्वगतेः क्षत्रियत्वावधृतेरित्यर्थः । साऽपि कुतः । उत्तरत्र संवर्गविद्यावाक्यशेषे चैत्ररथेन प्रसिद्धक्षत्रियेणाभिप्रतारिनामकेन सह समभिव्याहारात्मकलिङ्गादित्यर्थः । सजातीयानामेव हि प्रायेण सहचारो भवतीति भावः । एवं ह्यभिप्रतारी संकीर्त्यते, "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं सूदेन परिविष्यमाणौ ब्रह्मचारी बिभिक्ष" इति । संवर्गविद्याविध्यनन्तरमर्थवादारम्भार्थोऽथशब्दः । शुनकस्यापत्यं शौनकं कपिगोत्रं कापेयं पुरोहितमभिप्रतारिणं च नाम्ना राजानं कक्षसेनस्यापत्यं काक्षसेनिं तौ भोक्तुमुपविष्टौ सूदेन पाचकेन परिविष्यमाणौ सेव्यमानौ भिक्षितवानित्यर्थः । अस्य चाभिप्रतारिणश्चैत्ररथत्वं कापेयेन चित्ररथपुरोहितेन योगादवगन्तव्यम् । चित्ररथपुरोहितत्वं च कापेयानां श्रुतौ प्रसिद्धं, "एतेन वै चित्ररथं कापेया अयाजय"न्निति । एतेन द्विरात्रेण । समानान्वयानां हि प्रायेण समानान्वया एव याजका भवन्ति । ननु चित्ररथपुरोहितकापेययोगादभिप्रतारिणश्चैत्ररथत्वं भवतु । तथाऽपि कथं क्षत्रियत्वमिति चेन्न, "तस्माच्चैत्ररथिर्नामैकः क्षत्रियपतिरजायते"ति श्रुतेः । तस्माच्चित्ररथादित्यर्थः । एवमभिप्रतारिणः क्षत्रियत्वे सिद्धे, तत्समभिव्याहारात्मकलिङ्गाज्जानश्रुतेः क्षत्रियत्वमिति सिद्धम् ॥

**संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ १ । ३ । ३६ ॥**

आद्यसूत्रे वेदाध्ययनाङ्गोपनयनाभावान्न जातिशूद्रस्याधिकार इत्युक्तम् । इदानीं तु ब्रह्मविद्याङ्गोपनयना-

भावान्न तस्याधिकार इत्युच्यत इति भेदः । इतश्च न जातिशूद्रस्याधिकारः । कस्मात् । विद्याप्रदेशेषूपनयनसंस्कारपरामर्शात् । "तं होपनिन्ये," "अधीहि भगव इति होपससाद," 'ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्ना इति । अयमर्थः । तं विद्याऽर्थिनमाचार्यः किलोपनिन्य उपनीतवाननुपनीताय विद्यादानायोगादिति तात्पर्यम् । सनत्कुमारं प्रति नारदोऽ"धीहि भगव" इतीमं मन्त्रमुच्चार्य गुरूपसदनं कृतवानित्याह "धीही"ति । भरद्वाजादयः षडृषयः परं ब्रह्म पर वेनोपगतवन्त इति ब्रह्मपरास्तज्ज्ञाननिष्ठाश्च ब्रह्मनिष्ठाः परं परमार्थरूपं ब्रह्म विचारयन्तो निर्णयार्थमेष पिप्पलादस्तज्जिज्ञासितं सर्वं वक्ष्यतीति निश्चित्य रिक्तहस्तानां गुरूपसदनायोगात्समित्पाणयः सन्तस्तमुपसन्नाः किलेत्याह "ब्रह्मे"ति । ननु "तान्हानुपनीयैवे"त्यनुपनीतानामपि वैश्वानरविद्यायामधिकारश्रुतेरनियतमुपनयनमिति चेन्न, निषेधस्य प्राप्तिपूर्वकत्वात्प्राप्तोपनयनानां प्राचीनशालादीनां द्विजातीनामेवाधिकारात् । निषेधस्तु विद्योपदेष्टुरश्वपते राज्ञो न्यूनवर्णत्वादूद्रष्टव्यः । तान्प्राचीनशालादीनृषीननुपनीयैवाश्वपती राजोवाचेति श्रुत्यर्थः । ननु शूद्रस्याप्युपनयनं कल्प्यतामित्याह "तदभावाभिलापाचे"ति । "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति," "शूद्रश्चतुर्थो वर्ण एकजाति"रित्यादिनोपनयनादिसंस्काराभावाभिलापादित्यर्थः । पातकं भक्ष्याभक्ष्यविभागाभावकृतम् । एकजातिरुपनयनरहितः । इति स्मृत्यर्थः ।

किञ्च ।

**तदभावनिर्धारणे च प्रवृत्तेः ॥ १ । ३ । ३७ ॥**

जाबालो हि मृतपितृको गुरूपसदनं कर्तुकामो गोत्रमजानानो मातरं पप्रच्छ "किं गोत्रोऽहमस्मी"ति । सा चाप्यहं न जानामीत्युवाच । ततः स जाबालो गौतममुपससाद । उपसद्य चोवाच, हे भगवन् ब्रह्मचर्यं चरितुं त्वय्यीच्छामि मामनुगृह्णातु भवा"निति । ततो गौतमेन किं गोत्रोऽसीति पृष्टः सत्यकामो जाबाल आह, नाहं गोत्रं वेद नापि मन्मातेति । ततः स गौतमस्तदीयेन सत्यवचनेन जाबालस्य शूद्रत्वाभावं निश्चित्य प्रववृते "नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा" इति । एतत्सत्यवचनं विविच्य निःसन्दिग्धं वक्तुमब्राह्मणो नार्हत्यतस्त्वं न सत्यादगाः सत्यवचनान्नातिगतोऽस्यतस्त्वामुपनेष्ये तदर्थं समिधमाहरेत्यर्थः । ततश्च सूत्रस्यायमर्थः । तस्य शूद्रत्वस्याभावनिर्धारणे सत्येव विद्योपदेशप्रवृत्तिदर्शनादिति । तस्मान्न शूद्रस्याधिकारः ॥

**श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ १ । ३ । ३८ ॥**

इतश्च न जातिशूद्रस्याधिकारः । कुतः । स्मृतितः, वेदश्रवणस्य तदध्ययनस्य तत्प्रयोजनयोरर्थज्ञानानुष्ठानरूपयोरर्थयोः प्रतिषेधादित्यर्थः । एवं स्मरन्ति, "अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरण"मिति श्रवणस्य निषेधः । त्रपुजतुभ्यां सुतप्ताभ्यां सीसलाक्षाभ्यामस्य शूद्रस्य द्रुताभ्यां श्रोत्रद्वयपूरणं वेदश्रवणप्रायश्चित्तमित्यर्थः । "पद्यु ह वा एतत् श्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्य"मित्यध्ययननिषेधः । न ह्यश्रुतस्याध्ययनं सम्भवति । पद्युपादयुक्तं सञ्चारसमर्थमिति यावत् । तादृशं श्मशानं यच्छूद्र इत्यन्वयः । "न शूद्रायमतिं दद्या"दिति तदर्थज्ञाननिषेधः । "द्विजातीनामध्ययनमिज्यादा-

न"मिति तदर्थानुष्ठाननिषेधः । दानशब्देनात्र नित्यदानमुच्यते । नैमित्तिकदाने शूद्रस्याप्यधिकार इति द्रष्टव्यम् । विदुरधर्मव्याधप्रभृतीनां तु पूर्वजन्मकृतश्रवणादिना गर्भस्थवामदेववज्ज्ञानोत्पत्तिर्मन्तव्या । तस्मान्न कथमपि ब्रह्मविद्यायां शूद्रस्य वेदपूर्वकोऽधिकार इति सिद्धम् ॥

**कम्पनात् ॥ १ । ३ । ३९ ॥**

समाप्तः प्रासङ्गिकोऽधिकारविचारः । इदानीं प्रकृतं वाक्यार्थविचारं प्रवर्तयिष्यामः । "शब्दादेव प्रमित" इत्यत्र ब्रह्मवाक्ये जीवानुवादो ब्रह्मैक्यज्ञानायेत्युक्तम् । न तथेह "यदिद"मित्यादिवाक्ये प्राणानुवादो युक्तः, प्राणस्य स्वरूपेणापि कल्पितस्य ब्रह्मैक्यायोगादिति प्रत्युदाहरणसङ्गत्याऽस्यारम्भः । प्रासङ्गिकत्वान्नाव्यवहितेन सङ्गत्यपेक्षा । पूर्वपक्षे प्राणोपास्तिः फलं, सिद्धान्ते निर्विशेषब्रह्मज्ञानमिति भेदः । काठकवाक्यं पठ्यते "यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती"ति । अस्यार्थः । यत्किञ्चेदमवशिष्टं जगत्सर्वं प्राणे निमित्ते सत्येजति चेष्टते । "एजृ कम्पने"इति धातोः कम्पनार्थकत्वात्कम्पनं चेष्टैवेति चेष्टत इत्युक्तम् । तच्च जगत्तस्मादेव निस्सृतमुत्पन्नम् । तच्च प्राणाख्यं जगत्कारणं महदनवच्छिन्नम् । बिभेत्यस्मात्सर्वं वाय्वादीति भयं, "भीषाऽस्माद्वातः पवत"इत्यादिश्रुत्यन्तरात् । तदेव भयहेतुत्वं निरूपयति "वज्र"मिति । उद्यतं वज्रमिवेत्यर्थः । प्राणाख्यब्रह्मज्ञानस्य मोक्षहेतुत्वमाह "य" इति । अत्र संशयः, किं प्राणशब्देन मुख्यप्राणवायुं गृहीत्वा वज्रशब्देन चाशनिहेतुं वायुं लक्षयित्वोभयविषयकमेकमुपासनं विधेयं, उत निर्विशेषं ब्रह्मानेन

वाक्येन प्रतिपाद्यमिति । तत्र तावदुपास्तिपरमिति युक्तं, प्राणशब्दस्य तत्र प्रसिद्धेः । वायौ हि पर्जन्यभावेन विवर्तमाने विद्युन्मेघवृष्ट्यशनयो जायन्त इत्यशनिहेतुवायुलक्षकत्वं वज्रशब्दस्यापि युक्तम् । न च मोक्षफलश्रवणविरोधः, "एतस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरपमृत्युं जयति य एवं वेदे"ति वायुवेदनस्यापि मोक्षहेतुत्वश्रवणात् । इत्येवं प्राप्ते ब्रूमः । "शब्दादेव प्रमित"इति व्यवहितमपि मण्डूकप्लुत्याऽनुवर्तते । अस्मिन्वाक्ये प्राणादिशब्दात्परमात्मैव प्रमितः । कुतः । कम्पनात् । सर्वशब्दवाच्यस्य सवायुकस्य जगतः कम्पनाज्जीवनादिचेष्टाहेतुत्वादित्यर्थः । ब्रह्मण्यपि प्राणशब्दप्रयोगो बहुलं वेदे दृष्टः "प्राणस्य प्राण"मित्यादौ । वज्रशब्दोऽपि भयहेतुत्वसाम्यादुपपद्यत इत्युक्तं वाक्यार्थकथनसमये । कम्पनहेतुत्वं ब्रह्मणः श्रुत्यन्तरे प्रसिद्धं "न प्राणेन नापानेन मर्त्यो जीवति कश्चन—इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रिता" विति । इतरेणात्मना । एतौ प्राणापानौ । किञ्च कम्पनवाक्यात्पूर्वमुत्तरत्र च ब्रह्मोक्तेरिहापि ब्रह्मग्रहणं न्याय्यम् । "तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिँल्लोकाः श्रितास्सर्वे तदु नात्येति कश्चने"ति पूर्ववाक्ये ब्रह्मोक्तम् । शुक्रं ज्योतिष्मदमृतं कूटस्थम् । उक्तं सर्वाधिष्ठानत्वं व्यतिरेकमुखेनाह "तदु न"ति । किञ्चन जडं तद्ब्रह्म नात्येत्यतिक्रमेण न वर्तत इत्यर्थः । तथोत्तरत्रापि "भयादस्याग्निस्तपति भयात्तपति सूर्यो भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम"इति । अस्येश्वरस्य भयादग्न्यादयः स्वव्यापारे नियमेनानुवर्तन्ते राजाज्ञया भृत्यादिवदिति । उक्ताग्न्याद्यपेक्षया मृत्योः पञ्चमत्वम् । यदुक्तं वायुवेदनस्य मोक्षहेतुत्वं श्रुतमिति तन्न, विशेषसामान्यात्मकस्य व्यष्टिसम-

ष्टिवाग्योर्ज्ञानादपमृत्युनिवृत्तिमात्रश्रवणात् । तस्मादनेन वाक्येन निर्विशेषं ब्रह्म ज्ञेयमिति सिद्धम् ॥

## ज्योतिर्दर्शनात् ॥ १ । ३ । ४० ॥

पूर्वं सर्वशब्दश्रुतिसङ्कोचानुपपत्त्या प्रकरणात्प्राणशब्दं ब्रह्मेत्युक्तम् । न तथेह सम्प्रसादवाक्ये प्रकरणानुग्राहकं किञ्चिदस्ति येन प्रकरणाज्ज्योतिश्शब्दं ब्रह्म स्यादिति प्रत्युदाहरणसङ्गत्याऽस्यारम्भः । पूर्वपक्ष आदित्योपास्त्या क्रममुक्तिः, सिद्धान्ते ब्रह्मज्ञानान्मुक्तिरिति फलभेदः । छान्दोग्ये प्रजापतिविद्यायां श्रूयते "य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष"इति । एतदर्थो दहराधिकरणेऽनुसंधेयः । तत्र संशयः, किं ज्योतिश्शब्देन प्रसिद्धसूर्यादितेजोऽभिधीयते, उत ब्रह्मेति । तत्र सूर्यादीति युक्तं प्रसिद्धत्वात्, "अथ या एता हृदयस्य नाड्य" इत्यादिनाडीखण्डे, "अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमत"इति मुमुक्षोरादित्यप्राप्त्यभिधानादत्रापि ज्योतिरुपसम्पद्येति श्रवणाच्च । अयमर्थः । विशेषज्ञानोपरमानन्तर्यमथशब्दार्थः । यत्र प्रारब्धकर्मावसानकाले । एतदुत्क्रमणं यथा तथेति क्रियाविशेषणम् । अस्मादभिमानविषयाद्देहादुत्क्रमणं यदाकरोत्यथ तदैतैरेवादित्यस्य रश्मिभिरालम्बनैरारूढः सन्नाक्रमत उपरि गच्छति तत आदित्यं गच्छतीति । एवं प्राप्तेऽभिधीयते । ज्योतिरत्र ब्रह्मैव । कुतः । दर्शनात् । "य आत्माऽपहतपाप्मे"त्युपक्रमालोचनया ब्रह्मण एव प्रतिपाद्यतयाऽनुवृत्तिदर्शनादित्यर्थः । यदुक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति तन्न, अस्य निर्गुणब्रह्मप्रकरणत्वात् । न हि निर्गुणब्रह्मविदो गत्यु-

त्क्रान्ती स्तः, "अत्र ब्रह्म समश्नुत" इति श्रुतेः। तस्मात्परं ज्योतिर्ब्रह्मेहोपसम्पत्तव्यत्वेन निर्दिश्यत इति सिद्धम् ॥

**आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १ । ३ । ४१॥**

पूर्वमुपक्रमवशादर्थान्तरे प्रसिद्धोऽपि ज्योतिश्शब्दः स्वार्थात्प्रच्यावितः । तथाऽऽकाशोपक्रमवशाद्ब्रह्मादिशब्दोऽपि स्वार्थात्प्रच्याव्यतामिति दृष्टान्तसङ्गत्येदमारभ्यते । पूर्वपक्षे भूताकाशाभिन्नसर्वाधिष्ठानभूताकाशात्मकब्रह्मण उपास्त्या क्रममुक्तिः, सिद्धान्ते सर्वाधिष्ठानब्रह्मधिया साक्षान्मुक्तिरिति फलभेदः । छान्दोग्येऽन्ते श्रूयते "आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मे"ति । ते नामरूपे यस्माद्ब्रह्मणो भिन्ने तदित्यर्थः । यद्वा नामरूपे यस्य ब्रह्मणोऽन्तरा मध्ये वर्तेते तदित्यर्थः । तत्र किमाकाशशब्देन भूताकाश उच्यत उत परमात्मेति विशये, रूढ्या भूताकाश इति प्राप्ते ब्रूमः। परमात्मैवाकाशशब्दवाच्यः । कस्मात् । अर्थान्तरत्वादिव्यपदेशात् । "ते यदन्तरे"त्याकाशस्य नामरूपाभ्यामर्थान्तरत्वेन व्यपदेशात् । न हि नाममध्यन्तः पातितस्याकाशस्य भूतस्य स्वस्मादर्थान्तरत्वं युक्तम् । आदिशब्देन "तद्ब्रह्मे"त्यादिना ब्रह्मत्वादिव्यपदेशो द्रष्टव्यः। तस्मादाकाशः परमात्मा ज्ञेय इति सिद्धम् ।

**सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १ । ३ । ४२ ॥**

"व्यपदेशा"दित्यनुवर्तते । पूर्वं नामरूपाभ्यां भेदेन व्यपदेशादाकाशो ब्रह्मेत्युक्तम् । तदयुक्तं "प्राज्ञेनात्मना सम्परिष्वक्त" इत्यत्राभिन्ने जीवे भेदोपचारादित्याक्षिप्य, प्राज्ञशब्दस्य ब्रह्मपरतया स भेद औपचारिक इति समाधानात्सङ्गतिः। पूर्वपक्षे जीवानुवादेन कर्मशेषक्रतुः स्तुतिः

फलं, सिद्धान्ते जीवानुवादेन प्रत्यग्ब्रह्मैक्यधीरिति विवेकः । बृहदारण्यके षष्ठप्रपाठके "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इत्युपक्रम्य सुषुप्त्याद्यवस्थामध्य उपन्यस्य "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपति"रित्युपसंहारो दृश्यते । अस्यायमर्थः । देहादीनामन्यतमो वा तदतिरिक्तो वाऽऽत्मेति जनकस्य प्रश्ने याज्ञवल्क्यस्योत्तरं "योऽयमिति" । विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः । प्राणेषु हृदीति व्यतिरेकार्थे सप्तम्यौ । प्राणबुद्धिव्यतिरिक्त इत्यर्थः । बुद्धवृत्तेर्विविनक्ति, "अन्त"रिति । अज्ञानाद्भिन्न इति ज्योतिरिति । पुरुषः पूर्णः । योऽयमेवंभूतः स आत्मेत्यर्थः । स्वाधीनं सर्वं नियन्तुं शक्तिरस्यास्तीति वक्तुं "सर्वस्येशान" इत्युक्तम् । स्वाधीनं स्वनियम्यं च सर्वमधिष्ठाय पालयतीति वक्तुं "सर्वस्याधिपति"रित्युक्तमिति । अत्र संशयः, किमयं वाक्यसन्दर्भो जीवानुवादकः उत जीवानुवादेनासंसारिस्वरूपप्रतिपादनपर इति । तत्रावस्थाद्युपन्यासात्परमात्मवाचकशब्दाभावाज्जीवानुवादक इति प्राप्ते ब्रूमः । विज्ञानमयसुषुप्त्यवस्थावज्जीवानुवादेन ब्रह्माभेदप्रतिपादनपरोऽयं वाक्यसन्दर्भो न जीवानुवादकः । कस्मात् । सुषुप्त्युत्क्रान्त्योरवस्थयोः शारीराद्भेदेनेश्वरस्य प्राज्ञशब्देन व्यपदेशात् । तथा हि सुप्तौ तावद्व्यपदेशो दृश्यते "तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर"मिति । उत्क्रान्तावपि, "अयं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्ज-

न्याती''ति श्रुतिः शारीराद्भेदेन परमात्मानं प्राज्ञशब्देन व्यपदिशति । अन्वारूढोऽधिष्ठितः । उत्सर्जन्वेदनातः शब्दं कुर्वन्निति यावत् । ननु भेदव्यपदेशमात्रेणाभेदप्रतिपादनपरोऽयं सन्दर्भ इति कथं गम्यत इति चेदुच्यते । "ध्यायतीव लेलायतीवे''त्यादिग्रन्थप्रवृत्तिदर्शनात् । बुद्धौ ध्यायन्त्यां स्वपरमात्मा ध्यायतीव चलन्त्यां चलतीव वस्तुतो न ध्यायति न चलतीत्यर्थः । एव "मत ऊर्ध्वं विमोक्षायैव ब्रूही''ति पदे पदे प्रश्नः, "अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष''इति पदे पदे प्रतिवचनं च वाक्यसन्दर्भस्याभेदपरत्वे फलयति । अस्यार्थः । अतः कामादिविवेकानन्तरं मोक्षसाधनीभूतसाक्षात्कारायैव ब्रूहीति जनकप्रश्नार्थः । तेन जाग्रद्भोगादिनाऽनन्वागतो ऽस्पृष्टो भवत्यसङ्गत्वादिति ॥

## पत्यादिशब्देभ्यः ॥ १ । ३ । ४३ ॥

इतश्च जीवस्यासंसारित्वप्रतिपादनपरमिदं वाक्यजातं, यतोऽस्मिन्वाक्ये पत्यादयः शब्दा असंसारित्वप्रतिपादनपराः संसारित्वप्रतिषेधपराश्च दृश्यन्ते । "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपति''रित्यसंसारित्वप्रतिपादनपराः । "स न साधुना कर्मणा भूयान्नो एवासाधुना कनीया''नित्याद्याः संसारित्वप्रतिषेधका इति । तस्मादसंसारिपरमात्मस्वरूपप्रतिपादनपरोऽयं वाक्यसन्दर्भ इति सिद्धम् ॥

इति प्रथमाध्यायस्य तृतीयः पादः ॥

---

एवं तावत्प्रथमे पादे जिज्ञास्यत्वेन प्रतिज्ञाते ब्रह्मणि जगज्जन्मादिकारणे सर्वज्ञे समन्वयं वेदान्तानां प्रसाध्य

ब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिमाशङ्क्याशब्दत्वेन निराकृत "मोक्षतेर्नाशब्द"मित्यत्र । तदनन्तरं स्पष्टब्रह्मलिङ्गानि वाक्यानि सर्वाणि समन्वितानीत्यप्युक्तम् । द्वितीय-तृतीयपादयोरस्पष्टब्रह्मलिङ्गानि प्रायश उपास्यगानि ज्ञेय-गानि च समन्वितानीत्युक्तम् । इदानीं तु प्रधानस्याश-ब्दत्वमसिद्धं, क्वचिच्छाखासु तत्परशब्दानामपि दर्शना-दित्याशङ्क्य तेषामन्यपरत्वप्रतिपादनार्थमयं पाद आर-भ्यते ।

**आनुमानिकमप्येकेषामिति चेन्न शरीररू-पकविन्यस्तगृहीतेर्दर्शयति च ॥ १ । ४ । १ ॥**

पूर्वस्मिन्सूत्रसन्दर्भे ब्रह्मैव जगत्कारणं वेदान्तप्रति-पाद्यं न प्रधानादीत्युक्तमयुक्तं, ब्रह्मवत्प्रधानस्यापि जग-त्कारणत्वेन वेदान्तबोध्यत्वात्, न च कारणद्वयवैयर्थ्यं कल्पभेदेन व्यवस्थानादिति ब्रह्माङ्गीकारेणाक्षेप इत्याक्षे-पसङ्गतिः पूर्वग्रन्थेनास्याधिकरणस्य सूत्रकारैरेवा "प्येक" शब्दौ प्रयुञ्जानैः सूचिता । अव्यवहिताधिकरणेन तु प्रसि-द्धजीवोक्तिभङ्गेनाप्रसिद्धब्रह्मोक्तिवदप्रसिद्धप्रधानोक्तिप-रमेव काठकवाक्यमस्त्विति दृष्टान्तसङ्गतिः । प्रधानस्या-शब्दत्वप्रतिपादनेन ब्रह्मणि वेदान्तानां समन्वयदार्ढ्या-दिस्त श्रुत्यध्यायसङ्गतिः । अविरोधनयपर्यन्तं पदविचार-त्वात्सर्वेषां नयानामापादं पादसङ्गतिः । पूर्वपक्षे ब्रह्म-ण्येव वेदान्तानां समन्वय इति नियमाभावः फलं, सि-द्धान्ते तु तादृशनियम इति विवेकः । काठकवाक्यं पठ्यते, "आत्मानं रथिनं विद्धि शरीरं रथमेव तु बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयान्याहुर्विषयां-स्तेषु गोचरानात्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद''मिति । अनियतेन्द्रियादेः पुंसः संसारित्वं नियतेन्द्रियस्याध्वनः पारं विष्णोः परमं पदमिति श्रावयित्वा किं तदध्वनः पारं विष्णोः पदमित्याकांक्षायां तेभ्य एवेन्द्रियादिभ्यः परत्वेन परमात्मानं विष्णोः पदं दर्शयति, ''इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनो मनसश्च परा बुद्धिर्बुद्धेरा मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति''रिति । अस्यार्थः । आत्मनो भोक्तृत्वेन प्राधान्याद्रथित्वं रथस्वामित्वम् । स्थूलं शरीरं भोगायतनत्वेन गुणतया रथसमम् । विवेकाविवेकवृत्तिभ्यां बुद्धिरेव शरीरद्वारा भोक्तारं सुखे दुःखे वोपनयतीति सारथिः । मनसाऽश्वरशनास्थानीयेन विवेकिना विषयेभ्य इन्द्रियाणि निगृह्यन्ते, तेनाविवेकिना विषयेषु प्रवर्त्यन्ते, तेन युक्तं मनसः प्रग्रहत्वम् । इन्द्रियाणि संयतानि मुक्तिद्वारं प्रापयन्त्यसंयतान्यनर्थं संसारमिति हयत्वं तेषाम् । यथाऽश्वो मार्गमालक्ष्य चलत्येवमिन्द्रियहयाः स्वार्थमुपलभ्य चलन्तीति । शरीरादिषु मध्ये शब्दादीनां विषयाणां मार्गत्वम् । ननु मार्गे रथिनो रथाद्यपेक्षा न भोगे चिद्रूपतया स्वभावेनैव तद्भोगादित्यत आह 'त्मे'' ति । आत्मा भोक्तेत्याहुरिति सम्बन्धः । तस्यासङ्गस्यार्थेन्द्रियासन्निकर्षे भोगायोगादिन्द्रियमनोयोगो यथाभवतीति क्रियाविशेषणेन भोक्तृत्वमाहे ''न्द्रिये''ति । भावे निष्ठा । यद्वाऽऽत्मा देहस्तद्युक्तमात्मानं भोक्तेत्याहुरिति योजना । यद्यप्यन्तरङ्गत्वादिन्द्रियाणामर्थापेक्षया परत्वं तथाऽपीन्द्रियाणां ग्रहत्वमर्थानां शब्दादीनामतिग्रहत्वं श्रुतौ निर्दिष्टमित्यर्थानामेव परत्वम् । गृह्णन्ति वशीकुर्वन्ति पुरुषपशुमिति ग्रहा इन्द्रियाणि । तेषां ग्राहकत्वं विषया-

धीनमित्यतिग्रहा विषयाः । तेनातिग्रहतयाऽर्थानां प्राधान्यमित्याह "न्द्रियेभ्य"इति । सर्वेन्द्रियार्थव्यवहारस्य मनोमूलत्वान्मनसोऽर्थेभ्यः परत्वम् । निश्चयात्मकबुद्धिद्वारा विषया भोक्तुरुपकुर्वन्तीति संशयात्मकमनसो बुद्धेः प्राधान्यम् । पूर्वं यो रथित्वेनोक्त आत्मा स भोक्ता बुद्धेः परः । भोगोपकरणत्वात्तस्याः स्वामित्वाच्चात्मनो महत्त्वम् । यदि महत्त्वस्यात्मविशेषणत्व "आत्मनः परमव्यक्त"मिति स्यात्तस्य विशेष्यत्वादिति ब्रूषे, तदा महच्छब्देन हिरण्यगर्भबुद्धिरुच्यते । तस्या व्यष्टिबुद्धिव्यापनादात्मत्वं च । एवं भूतहिरण्यगर्भबुद्धिं स्मृतिर्दर्शयति "मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः । प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यत"इति । अयमर्थः । सर्वे प्रथमान्ता हिरण्यगर्भबुद्धिपराः । तस्या मनस्त्वे सन्देहरूपत्वं स्यादित्यत आह "मनि"रिति । महत्त्वमुपपादयति "ब्रह्मे"ति । भोग्यजाताधारत्वमाह "पू"रिति । निश्चयात्मत्वमाह "बुद्धि"रिति । चितिशक्तिमती ख्यातिः । ईश्वरो नियामकः । प्रज्ञा लौकिकप्रकृष्टज्ञानम् । संविज्ज्ञानफलम् । उपासकस्य तत्प्राप्तिश्चितिः । चित्प्रधाना स्मृतिर्ज्ञातसर्वार्थानुसन्धानशक्तिमती । विद्वत्प्रसिद्धिमुक्तबुद्धावनुकूलयति 'परी"ति । श्रुतिरपि "यो ब्रह्माणं विदधाति पूर्वं"मित्यादिका हिरण्यगर्भबुद्धौ वेदाविर्भावमीश्वरानुग्रहाद्दर्शयन्ती तस्या उक्तरूपत्वमाह । एतादृशी बुद्धिः सर्वासां बुद्धीनां परोत्कृष्टा । अस्मिन्पक्षे पुरुषग्रहणेनैव तदभिन्नो रथी भोक्ता गृहीतो द्रष्टव्यः । "आत्मानं रथिनं विद्धी"त्यादिवाक्यनिर्दिष्टाः सर्वे गृहीताः । अवशिष्टं रथत्वेन कल्पितं शरीरमव्यक्ताख्याविद्याकार्यं लक्षणयाऽव्यक्तशब्देन निर्दिशति "महतः परमव्यक्त"मिति । एवं

वस्तुगत्याऽर्थः प्रदर्शितः । तत्र संशयः, किमव्यक्तशब्देन प्रधानमुच्यते, उत पूर्वप्रकृतं शरीरमिति । तत्र सांख्यस्मृतौ महदव्यक्तपुरुषशब्दानां तत्त्वत्रये प्रसिद्धत्वादव्यक्तं प्रधानमेवेत्याह 'आनुमानिकमप्येकेषामिति चे'दिति । अनुमानगम्यं प्रधानमप्येकेषां शाखिनां प्रत्यक्षमव्यक्तशब्देन पठ्यत इत्यशब्दत्वमसिद्धमिति चेदिति सूत्रावयवार्थः । परिहरति "ने"ति । कुतः "शरीरे"ति । शरीरस्य पूर्ववाक्ये रथरूपेण विन्यस्तस्य कल्पितस्याव्यक्तशब्देन गृहीतेर्ग्रहणादित्यर्थः । रूपकात्मना रथात्मना विन्यस्तं रूपकविन्यस्तं शरीरं च तद्रूपकविन्यस्तं च तत्तथोक्तं तस्य गृहीतेरिति विग्रहः । कथं शरीरपरोऽव्यक्तशब्दस्तत्राह "दर्शयति चे"ति । पूर्वापरवाक्यसन्दर्भः पर्यालोच्यमान औचित्येन प्रकृतं परिशिष्टं च शरीरमेवाव्यक्तशब्दबोध्यं दर्शयतीत्यर्थः ॥

नतु स्थूलशरीरस्य व्यक्तशब्दार्हस्य कथमव्यक्तशब्दार्हत्वमित्यत उत्तरं पठ्यते ॥

## सूक्ष्मं तु तदर्हत्वात् ॥ १ । ४ । २ ॥

दर्शयतीत्यनुषङ्गः । तुशब्दः शङ्कानिरासार्थः । स्थूलशरीरारम्भकभूतानां सूक्ष्मं कारणमव्यक्तशब्देन दर्शयति । कुतः । तदर्हत्वादव्यक्तशब्दार्हत्वादित्यर्थः "गोभिः श्रीणीत मत्सर"मित्यादिवत्प्रकृतिवाचकशब्देन विकारो लक्ष्यत इति भावः । गोभिर्गोविकारैः पयोभिर्मत्सरं सोमं श्रीणीत मिश्रं कुर्यादित्यर्थः ॥

ननु भूतसूक्ष्मात्मकाव्यक्ताङ्गीकार आगतः प्रधानकारणवादः, सांख्यैस्तस्यैव प्रधानत्वेनाङ्गीकारादित्यत आह ।

## तदधीनत्वादर्थवत् ॥ १ । ४ । ३ ॥

इतः प्रधानकारणवादो न मयाङ्गीकृतः । कुतः । तदधीनत्वादीश्वराधीनत्वाङ्गीकारात् । स्वतन्त्रं चेतनानधिष्ठितमव्यक्तं जगत्कारणमिति सांख्यमतम् । सिद्धान्ते त्वीश्वराधिष्ठितं मायाविद्याकाशादिशब्दवाच्यं जगत्कारणमिति महद्वैलक्षण्यम् । नन्वीश्वरादेव जगदुत्पत्तावव्यक्तवैयर्थ्यमित्याशङ्क्याह, "अर्थव"दिति । प्रयोजनवदित्यर्थः । "देवात्मशक्तिं स्वगुणैर्निगूढाम्", "मायां तु प्रकृतिं विद्या"दिति श्रुतिसिद्धमीश्वरस्य सहकारिभूतमव्यक्तमवश्यमङ्गीकर्तव्यम् । न हि शक्तिरहित ईश्वरः कार्यलेशं वा कर्तुं समर्थोऽसङ्गत्वादिति तात्पर्यम् । नन्वेवमपि कथं शरीरस्य महतः परत्वं, कथं वाऽव्यक्तकार्यत्वस्येन्द्रियादीनामविशेषे स्थूलशरीरस्यैवाव्यक्तपदार्हत्वमिति चेदुच्यते । महच्छब्दवाच्यभोक्त्रपेक्षया हिरण्यगर्भबुद्ध्यपेक्षया वाऽव्यक्ताख्याविद्यायास्तावत्परत्वं सर्वसिद्धं, तदधीनत्वाद्भोक्त्रादेः । तथा च तन्निष्ठपरत्वं तद्विकारे देह उपचर्यते । इन्द्रियादीनां तत्कार्यत्वाविशेषेऽपि स्वस्वशब्दैरेवोपात्तत्वात्परिशेषात्प्रकृताकांक्ष्यव्यक्तशब्देन स्थूलदेहग्रहणं न्याय्यमिति । आचार्यदेशीयैः सूत्रद्वयमिदमन्यथा व्याख्यातम् । शरीरं द्विविधं, स्थूलं सूक्ष्मं च । द्वयमपि पूर्ववाक्ये रथत्वेन गृहीतम् । उत्तरस्मिन्वाक्ये सूक्ष्ममेवाव्यक्तशब्देन गृहीतं तदर्हत्वात् । तच्चार्थवत्तदधीनत्वाद्बन्धमोक्षव्यवहारस्येति सर्वथाऽपि प्रधानस्य नात्रावकाशः ॥

अपि च ।

## ज्ञेयत्वावचनाच्च ॥ १ । ४ । ४ ॥

दिदृश्यते तत्र लाघवात्सामानाधिकरण्येन कार्यकारणभावस्यैव युक्तत्व अन्यधर्मेणान्यपरिणामे ऽतिप्रसङ्गात् अदृष्टकल्पनापत्तेश्च तस्य च वायुरधिष्ठात्री देवता सूर्यश्चक्षुर्वातः प्राण इत्यादि श्रुतेः" तस्मात्तेषामेव परिणामभेदा प्राणाः ज्ञानादिहेतुपरिणामस्तु करणानीति भेदः देवतयाऽभेदात्तु सूर्यश्चक्षुरिति वायुः प्राण इति व्यवहारः । यत्त्वत्र भाष्ये प्राणादिजीवनशब्दाभ्यां प्राणादिनामकवायुक्रियाविशेषहेतुः प्रयत्नभेद एवोक्तः स च करणनिष्ठ इति भाष्यार्थ इति तन्न तस्य क्रियापञ्चतयी मुखनासिकागतिः प्राण इत्यादिभाष्ये प्राणादीनां गत्यादिवचनेन विरोधाद् अत एव लिङ्गशरीरमध्ये प्राणा न गण्यन्ते करणे प्रवेशात् तस्य करणसामान्यस्य क्रियोपलक्षितपरिणामभेदः पञ्चविध तत्र प्राणो मुखनासिकागतिराहृदयं समनुरूपं नाडीषु रसानां नयनात्समानो हृदयान्नाभिपर्यन्तवृत्तिः मूत्रपुरीषगर्भाणामयनयनहेतुरपानो नाभेः पादतलपर्यन्तवृत्तिः । ऊर्ध्वगतिप्रदत्वाद्रसादूर्ध्वनयनाच्चोदानो नासिकाग्राद्ब्रह्मरन्ध्रपर्यन्तवृत्तिः । सर्वदेहव्यापिवृत्तिकोऽचलनादिहेतुर्व्यानः एषां प्राणः प्रधानं प्राणोपदश्नाति पिबति तेनैवान्येषां धारणात् प्राणमुत्क्रामं तमनु सर्वे प्राणा उत्क्रमन्तीति तदुत् क्रमे सर्वेषामुत्क्रमेण श्रवणाच्च अतो मुख्यनाम्ना सर्वेषां व्यवहारात् पञ्चप्राणा इत्यादि व्यवहारोपपत्तिः । तस्योदानस्य शास्त्रोक्तसंयमेन जयाज्जलपङ्ककण्टकादिष्वसङ्गो विकारहेतोः संयोगस्य तैरभावः तथार्चिरादिमार्गगमनाय स्वेच्छया मरणकाले उत्क्रान्तिश्च भवति ।

**समानजयाज्ज्वलनम् ॥ ३९ ॥**

संयमविशेषेण समानजयात्तेजस उपध्मानं कृत्वा संतापवत्स्वशरीरम् ज्वलयति दहतीत्यर्थ ।

**श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥४०॥**

सर्वश्रोत्राणामाकाशं कर्णशष्कुल्यवच्छिन्नम् । प्रतिष्ठा अधिष्ठानं । उपकारापकाराभ्यां श्रोत्रस्योपकारापकारदर्शनात् । इन्द्रियाणां प्रकाशात्मकतया प्रकाशात्मकान्तःकरणोपादानकत्वेन भूतोपादानकत्वाभावात् । तत्तद्भूतसंसृष्टतयोत्पत्तेस्तु परेषां भौतिकत्वव्यवहारः शब्दस्य वायुपरिणामत्वे तस्याप्यधिष्ठानं आकाशोपादानकत्वे तु सम्यगेव शब्दप्रतिष्ठात्वमाकाशस्य एव च श्रोत्रशब्दयोराश्रय आकाशम् । श्रोत्राणामाकाशाश्रयत्वं पञ्चशिखेनाप्युक्तम् । तुल्यदेशश्रवणानामेकश्रुतित्वं सर्वेषां भवतीति । अस्यार्थः कालभेदेन तुल्यदेशानि श्रवणाख्यज्ञानानि येषां पुंसां तेषामेकदेशावच्छिन्नश्रोत्रकत्वं तत्तत्काले भवतीत्यर्थः स चैकदेशस्तत्तद्देशावच्छिन्नमाकाशं एव चायः प्रतियमाहकारिकश्रोत्रमयस्कान्तमणितुल्येन वक्तृवक्त्रस्थेन शब्देनाकृष्टं स्ववृत्तिपरम्परया वक्तृवक्त्रगतं शब्दं गृह्णाति अत एव तत्तद्दिग्देशवर्त्तित्वेन शब्दप्रतीतिर्जीवमात्रस्योपपन्ना: एवं घ्राणरसनत्वक्चक्षूंष्यप्याहङ्कारिकाणि पृथिवीजलवायुतेजोरूपभूताधिष्ठानानि । स्वाश्रयवृत्तिगन्धादिगुणसहकारेणैव तेषां बाह्यपृथिव्यादिगुणगन्धादिग्राहकत्वं तदेतत् श्रोत्रमाकाशस्य लिङ्गं । सूक्ष्मेन्द्रियस्य निराश्रयस्थितेरभावात् । गन्धवत् । कर्णशष्कुली च न तस्याधारो लोकान्तरगतिकाले तदभावात् । नापि शून्यमाधारः अभावानभ्युपगमाद् अभावस्य भावाधारत्वासम्भवाच्च । नापि पृथिव्यादिस्तदाश्रयः आश्रयगतस्वसजातीयगुणसहकारेणैव तेषां स्वग्राह्यगुणग्राहकत्वात् । नापि कर्णशष्कुल्यवच्छिन्नः पुरुषस्तस्याश्रयः विवरपिधानेपि तदवच्छेदेन चैतन्याभिव्यक्त्या पुरुषादेरनावृततया शब्दग्रहणप्रसङ्गात् । तस्मात्पिधानयोग्यं परिशेषादाकाशमेवाश्रयः एवं शब्दाश्रयोप्याका-

श्रमेव । न वायुः द्रव्यान्तरपूरिते वेणवादौ वायुसंयोगेन शब्दप्रसङ्गात् । न च च्छिद्रवायुसंयोगोऽपि शब्दकारणम् ॥ तथासति संयोगाधारतया छिद्रस्य द्रव्यत्वसिद्धौ तस्यैव शब्दाश्रयताया युक्तत्वात् ॥ एवमवकाशरूपानावरणमप्याकाशलिङ्गम् । अन्यथा स्थाल्यादिष्वन्तस्तेजः प्रवेशो न स्यात् । न च पुरुष एवावकाशः आवरणासम्भवात् । न च दिक्कालाववकाशस्तयोर्नभःपरिणामविशेषत्वात् तथा विभ्वप्याकाशं परिच्छिन्नत्वे हि मूर्त्तत्वापत्तौ अन्यत्र पृथिव्यादिस्थले मूर्त्तानामसमानदेशत्वरूपानावरणदर्शनात् अस्य मूर्त्तान्तरैर्घटादिभिः समानदेशत्वदर्शनाद्विभुत्वेनामूर्त्तत्वसिद्धेः किं चानावरणस्याकाशलिङ्गत्वे सिद्धे यत्र यत्रानावरणं तत्र तत्राकाशमिति सर्वगतत्वेन विभुत्वसिद्धिः । न चाकाशस्य विभुत्वे कथं कार्यत्वं कथं वाकाशपरमाणुकथनमिति वाच्यं आकाशस्याप्यन्तःकरणवद्वैशेषिकारणा पृथिव्यादिवच्च कार्यकारणरूपेण द्वैविध्यात् तत्र कारणाकाशं तमोगुणविशेष एव । तदानीमाकाशनाव्यञ्जकशब्दादिविशेषगुणाभावात् । कारणपृथिव्यादिवत् तच्च कारणाकाशं गुणान्तरोपष्टब्धं सदशत आदौ शब्दजननयोग्यार्थरूपेण परिणमते क्षीराब्धिरिवामृतमथनेऽशतोदधिरूपेण ततश्चाणुसङ्घातेनैव महापृथिवीवदेव महाभूताकाशमहङ्कारापेक्षयापरिच्छिन्नं वायोरावरणमुपपद्यते । एवमन्तःकरणोत्पत्तिरपि बोध्या । एवं च क्रियायाः करणसाध्यत्वाच्छब्दग्रहणक्रियया तत्करणं श्रोत्रमनुमीयते । न च चक्षुराद्येव तदस्तु बधिरबधिरयोरितरेन्द्रियसत्त्वेऽपि बधिरस्य शब्दाश्रवणात् तयोःश्रोत्राकाशयोः सम्बन्धसंयमात् दिव्यं तन्मात्रादिसूक्ष्मशब्दग्राहकं श्रोत्रं भवति । इदमुपलक्षणं त्वग्वातयोश्चक्षुस्तेजसो रसनाजलयोर्घ्राणपृथ्व्योः सम्बन्धसंयमाद्दिव्यं त्वगादीत्यपि बोध्यम् ।

**कायाकाशयोः सम्बन्धसंयमात् लघुतूलसमापत्ते-श्चाकाशगमनम् ॥ ४१ ॥**

चो ऽत्र वार्थे । यत्रासनादौ कायस्तत्रशरीरावच्छेदेन चाकाशं तिष्ठति तस्यावकाशदातृत्वादतः कायस्य यस्तेन सम्बन्धः प्राप्तिरूपस्तत्र सम्बन्धे कृतसंयमस्तत्सम्बन्धसाक्षात्कारेण वशीकृत्य लघुषु वा तूलादिष्वापरमाणुभ्यः संयमेन स्वायत्तीकृताकाशसम्बन्ध. प्रथमं लघुर्भवति येन जले पृथिव्यामिव पद्भ्यां सञ्चरति । तत ऊर्णानाभितन्तुमात्रे विहृत्यरव्यादिरश्मिषु विहरति ततो यथेष्टमाकाशगतिरस्य भवति ।

**बहिरकल्पिता वृत्तिर्महा विदेहाततः प्रकाशावरणक्षयः ॥ ४२ ॥**

शरीराद्बहिर्मनसोवृत्तिलाभो बहिर्वस्तूनां सङ्कल्पवशतःरूपः सा विदेहानामधारणेति संज्ञिका. सा यदि शरीरप्रतिष्ठस्य मनसोबहिर्वृत्तिमात्रेण भवति तदा कल्पितेत्युच्यते । यातु त्यक्तशरीरस्यापि मनसोवहिर्वृत्तिः सा खल्व कल्पिता । सा च कल्पितया साध्यते । यया साधितया परशरीराण्याविशन्ति योगिनः सेयमकल्पिता महाविदेहेत्युच्यतेऽनया च प्रकाशात्मनो बुद्धिसत्वस्य यदावरणं क्लेशाः कर्म च विपाकत्रयं च रजस्तमोमूलकम् तस्य समूलस्य क्षयो भवति तेषा क्षये च निरावरण योगिनश्चित्त स्वेच्छया विहरति च जानाति च । इदानीं ग्रहीतृग्रहणग्राह्यसयमसिद्धिमध्ये ग्रहीतृग्रहणयोर्ग्राह्यनिरूप्यत्वादादौ तत्सयमसिद्धिमाह ।

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्वसंयमाद्भूतजयः ॥ ४३ ॥**

स्थूलं च स्वरूपं च सूक्ष्मचान्वयश्चार्थवत्वे च तेषु साक्षात्कारप तत्सयमाद्भूतानां जयोवशवर्तित्वेत्यर्थः पृथिव्यादि पञ्चभूतानां

सामान्यविशेषसमूहरूपाणामेकैकाधिकास्तन्मात्रभिन्नाः शब्दादयो विशेषा वक्ष्यमाणैर्गाकारादिभिर्धर्मैः सह धर्मधर्मिणोर्भेदाभेदाभ्यां स्थूल शब्देन शास्त्रे उक्ता विशेषाश्च षड्जगांधारादयः शीतोष्णादयो नीलपीतादयो मधुराम्लादय सुरभिदुरभिदुर्गन्धादयश्च । एते हि नामरूपादिभिः परस्परस्माद्भिद्यन्त इति विशेषाः आकारादयश्च । आकारो गौरवं रौक्ष्य वरणं स्थैर्यमेव च । वृत्तिर्भेदक्षमाकार्ष्ण्यं काठिन्यं सर्वभोग्यतेति भूमेः । आकारो ऽवयवसंस्थानविशेषः वरणमावरकत्व । वृत्तिः सर्वभूताधारता । भेदो विदारणं क्षमा धारणसामर्थ्यम् । स्नेहः सौक्ष्म्य प्रभाशौक्ल्य मार्दव गौरवं च यत् । शैत्यं रक्षापवित्रत्व सन्धानं चौदकागुणाः २ । रक्षा आवरणादिना रक्षकत्व ऊर्ध्वभाक्पाचकम् दग्धृपावक लघुभास्वरम् । प्रध्वंस्योजस्विवैतेजः पूर्वाभ्यां भिन्नलक्षणम् ३ । तिर्यग्यान पवित्रत्वमाक्षेपो नोदनं बलम् । चलमच्छायतारौक्ष्य वायोर्धर्माः पृथग्विधाः ४ आक्षेपः पातनं छायाशून्यत्वमच्छायता । सर्वतोगतिरव्यूहो विष्टम्भश्चेति ते त्रयः । आकाशा धर्मा व्याख्याता. पूर्वपूर्वविलक्षणा ५ सर्वतो गतिर्व्यापकत्वम् अव्यूहः सर्वपदार्थानां प्रविरलीकरणम् अविष्टम्भो ऽवकाशः एतत्सूत्रोक्तपञ्चरूपेष्वाद्यं रूपं भूतानां । द्वितीय रूपं स्वरूपं तु सामान्यं साधारणलक्षणं यथा भूमे सांसिद्धिककाठिन्यरूपमूर्तिव्यंग्या पृथिवीत्वजातिः । सामान्यविशेषयोरभेदात्तु मूर्तिर्भूमिरिति भाष्ये प्रयुक्त स्नेहव्यंग्यजलत्वजातिर्जलस्य । औष्ण्यव्यंग्यतेजस्त्वजातिस्तेजसः । वहनशीलत्वरूपप्रणामित्वव्यंग्यवायुत्वजातिर्वायो । विभुत्वव्यंग्याकाशत्वजातिराकाशस्य कार्यरूपेणाकाशस्याप्यनेकत्वात् । इद चोक्तशब्दादिविशेषाणां सामान्य ते हि तां ता जातिमितरेभ्यो व्यावर्त्तयन्ति । तत्तज्जात्याश्रयाणां च परस्पर भेद कुर्वन्ति । तदुक्तं एकजातिस-

मन्वितानामेषा तत्तद्रसादि धर्ममात्रेण सजातीयान्तराद्व्यावृत्तिरिति सामान्यविशेषसमुदायो ऽत्रशास्त्रे द्रव्यं अतिरिक्तावयव्युपगमे ऽपि तयोरभेदाभ्युपगमात्। अन्यथा घटो मृत् तन्तव पट इत्यभेदप्रत्ययानुपपत्तिः अवयवानपलापाच्च तदपलापे तदाधारतानुपपत्तेश्च तदतिरिक्तावयव्यनुपलब्धेश्च तत्र सामान्य नाम घटे घटव्यक्तिरूपघटपरमाणुमत्वं रूपक्रियादीनामप्यस्मन्मते द्रव्यत्वात् सर्वत्र तत्तद्व्यक्त्यनुपगमोऽस्त्येव अनुगताकारप्रतीतिजनक इति बोध्यम्। न च समूहमात्रस्य द्रव्यत्वे वनस्याप्येकद्रव्यत्वापत्तिः समुदायस्याद्वाभ्या प्रकाराभ्यां स्थिते तथा हि एकः शब्देनानुपस्थितभेदकावयवेष्वनुगतः यथाशरीर वृक्ष इत्येकद्रव्यरूप. समूहः यूथवनमिति चानेकद्रव्यरूपस्तदनुगतसमूह' यूथादौ विशिष्टस्यातिरिक्तत्वाभिप्रायेणावयवानुगतत्वं बोध्यम्। अपरस्तुशब्दोपस्थितभेदकावयवेष्वनुगतः समूहः यथोभये देवमनुष्या। अत्रोभयशब्दवाच्यस्य समुदायस्योभाववयवौ यस्येति व्युत्पत्त्या तदवयवभेदस्योपादानात्। देवमनुष्या इति शब्देन च बहुवचनेन च तयोरप्यनेकेऽवयवा भेदेनोपात्ताः। अत्र हि समूहस्य देवा एको भागः मनुष्या द्वितीयो भागः ताभ्यामेव च समूहो ऽभिधीयते स द्विविधोपि समुदायो भेदाभेदाभ्या प्रयोक्तृभिर्विवक्षितो भवति। यथा आम्राणा वन ब्राह्मणानां संघ इति षष्ठ्याभेदेन आम्रवनं ब्राह्मणसंघ इति च कर्मधारये ऽभेदेन स द्विविधो पि पुनर्द्विविधः। युतसिद्धावयवः अयुतसिद्धावयवश्च युत सिद्धत्व पृथग्भावेन सिद्धत्व आद्यो वनं संघो यूथ इति तदवयवाना गोवृक्षादीनां सान्तरालत्वात् अन्त्यः शरीर वृक्षः परमाणुरिति परमाणूनां पञ्चचतुरादि तन्मात्रसमूहत्वात् तदवयवानां निरन्तरत्वात् तेष्वयुतासिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः संयोगविशेषावच्छिन्नेष्ववयववि-

शेषेषु अनुगतः सामान्यविशेषसमूहो वयव्याख्यं द्रव्यमिति तदर्थः । अवयवसाधारण लक्षण तु समान्यविशेषसमुदायविशेषत्वमेवेति बोध्यम् । सामान्यविशेषाश्रयो द्रव्यमिति तु न युक्तं तन्मते तत्र समुदायोऽस्ति न वा अन्त्ये नुभवापलापः तदाधारत्वासम्भवश्च आद्ये तु तदेवास्तु द्रव्यं तदतिरिक्तस्य तदाधारस्यानुपलम्भाच्च गावश्च्यो गावसमुदायवत् एतत्स्वरूपमित्युक्त स्वरूपत्व च स्थिरतामात्रेण विशेषाद्यागमापायित्वान्नस्वरूपाणि आद्यपादे तु स्थूलस्वरूपे एकी कृत्य वितर्कानुगतविषय स्थूलमित्युक्त एवमेव विचारानुगतस्य वैविध्यमये द्रष्टव्यं । एषा भूतानां सूक्ष्मं रूपं तु पञ्च तन्मात्रं भूतानसाक्षात्कारणत्वात् तस्य हि भूततन्मात्रस्यैकोवयवकार्ये परमाणुः सो पि घटादिवदेव सावयवः द्व्यचादि तन्मात्रकार्यत्वात् अन्यथा स्थूलत्वानुपपत्तेः इत्येवं परमाणोरपि सूक्ष्मत्वात्तन्मात्राणि सूक्ष्माणीत्युक्तानि एततृतीयं रूपं अन्वयाख्य चतुर्थं रूप तु ख्यातिक्रियास्थितिशीलाः सत्त्वरजस्तमोरूपागुणास्ते हि कार्यरूपो यः स्वीयो भावः स्वात्मकः पदार्थस्तत्रानुगतत्वादन्वयशब्देनोच्य ते कार्यमात्रे सुखदुःखमोहात्मकत्वदर्शनेन तदनुगम उन्नीयते ऋर्थवत्वरूपं पञ्चमं रूप गुणेषु वर्त्तमानं भोगापवर्गजात भोगविवेकख्यातिरूप तत् । न च गुणेषु तद्वर्त्तमानत्वे पि भूतानां कथमर्थवत्वं गुणानां तन्मात्रभूतभौतिकेष्वनुगतत्वात् । यद्यपि भोगापवर्गावन्तःकरणे एव तथापि अनागतावस्थया वासनारूपेण वा प्रलये गुणेष्ववस्थानान्न दोषः तत्वर्त्तमानेषु स्थूलभूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य रूपस्य दर्शन वशीकाररूपो जयश्च भवति तत्र पञ्चभूतस्व रूपाणि जित्वा भूतेषु जयी भवति । एकैकमात्रजये हि योगी भूतजयः तज्जयाद्वत्सानुसारिण्य इव गावोस्य सङ्कल्पानुविधायिन्यो भूतकारणानि भूतप्रकृतयो भवन्ति इति दिक् ।

तेषां सङ्कल्पानुविधायित्वे यत्फलं तदाह ।

**ततो णिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च ॥४४॥**

तत्राणिमा ऽणुत्व सङ्कल्पमात्रेण तत्त्वस्यादेवावयवापचये न देहस्य सौक्ष्म्यं । तद्भूतप्रकृतिवशित्वात् । लघिमा लघुत्व गुरुतरशरीरस्यापीषीकातुलवल्लघुत्वं २ महिमा महत्त्वं यथा त्रिविक्रमादे ३ इन्द्रियैः प्राप्ति यथा भूमिष्ठोप्यङ्गुल्यग्रेण चन्द्रं स्पृशति ४ एताश्चतस्रः स्थूलसंयमसिद्धयः प्राकाम्यं इच्छानभिघातः इच्छाया सत्यामस्य रूप भूतस्य स्वरूपैर्न विहन्यते भूतस्वरूपाणां जितत्वात् यथा जलमिव भूमिमुद्दिश्योन्मज्जति उत्तिष्ठति जले इव भूमौ मज्जति प्रविशति च । एषा स्वरूपसंयमस्य सिद्धिः ५ वशित्वं भूतेषु व्यष्टिषु भौतिकेषु तत्कार्येषु वशीभवति स्वेच्छया परिणामने समर्थो भवति न तु ब्रह्मांडादिषु समष्टिभूतेषु जगद्व्यापारवर्जमिति वेदान्तसूत्रेणादिसर्गसामर्थ्य वर्जनात् । तत्कारणतन्मात्रविजयात् रागादिना तेषामवश्यश्च भवति । सूक्ष्मसंयमसिद्धिफलमिद ६ ईशित्वं एषां भूतानां तन्मात्रद्वारकोत्पत्तिविनाशयोर्व्यूहाख्यसंस्थानविशेषे च सामर्थ्यभूतानां मूलप्रकृतिजयात् । एषान्वयसंयमसिद्धिः यत्र कामावसायित्व सत्यसङ्कल्पता । यथा सङ्कल्पस्तथा भूतप्रकृतीनां गुणतन्मात्राणामवस्थान परिणामः विजितार्थसम्बन्धो हि योगी द्वस्तु यदर्थतया सङ्कल्पयति तत्तदर्थकमेव भवति विषमप्यमृतत्वेन सङ्कल्प्यभोजयन्जीवयति । न चैवं जलमपि तेजः कुर्याद्धर्ममप्यधर्ममित्यव्यवस्थैव स्यात् । शक्तेनापि पदार्थविपर्यासाकरणात् पूर्वपूर्वयोगिना यथा दृष्टेष्वेव सङ्कल्पात् । धाता यथा पूर्वमकल्पयत् इति स्वनियमपालनार्थमन्तर्यामिणा तथैव सिद्धानां प्रेरणात् । अर्थवत्वसंयमसिद्धि-

रेषा ८ इत्यष्टावैश्वर्याणि कायसंपद्धर्माणां तद्धर्मानभिघातः पृथिवी मूर्त्त्यानिरुणद्धि योगिनः शरीरादि क्रियां शिलामप्यनुप्रविशति नापः स्निग्धा. क्लेदयन्ति नाग्निरुष्णो दहति न वायुः प्रणामी वहति अनावरणात्मकेऽप्याकाशे भवत्यावृतकायः सिद्धानामप्यदृश्य इति ॥ एष च संयमातिशये सति सङ्कल्प विनैव भवतीति । प्राकाम्यादेः पृथगुक्तकायसंपदमाह ॥

**रूपलावण्यबलवज्रसंहननानि कायसंपत् ॥ ४५ ॥**

दर्शनीयकान्तिमान् अतिशयबलः वज्रवद्दृढगात्रश्च भवति योगी ।

ग्रहणसंयमसिद्धीराह ।

**ग्रहणस्वरूपास्मितान्वयार्थवत्वसंयमादिन्द्रियजयः ॥ ४६ ॥**

ग्रहण च स्वरूप चास्मिता चान्वयश्चार्थवत्व चेति वस्तु । सामान्यविशेषात्माशब्दादिविषयं तेष्विन्द्रियाणां वृत्तिरलोचन विषयाकारपरिणामश्चिन्तावधारणाभिमानसयमरूपादन्त करणासाधारणवृत्तिचतुष्काद्विलक्षणादर्शनस्पर्शनादिरूपाग्रहणं यद्यप्येषापि स्मृत्यनुरोधादन्त करणस्यैव तथापि चक्षुराद्युपष्टम्भेन भवतीति दर्शनादिश्चक्षुरादीनामुच्यते । न चालोचनशब्दार्थो निर्विकल्पकज्ञानचक्षुरादिमात्रवृत्त्येवास्तु सर्ववृत्तीना चित्तनिष्ठत्वस्य भाष्ये उक्तत्वात् यत्तु बौद्धः इन्द्रियवृत्तिः सामान्यमात्रविषया विशेषस्तु मनोमात्रगोचरः तदुक्त इन्द्रियं सामान्यमात्रेण यत ग्रहणं तदाकार तद्रूपवृत्तिमदिति तन्न । तस्य विशेषस्येन्द्रियेणानालोचितस्य मनस ग्रहणानुपपत्तः । मनसो बहिरस्वातन्त्र्यात् अन्यथा चक्षुराद्यगोचरार्थानामपि मनसा विशेषग्रहणप्रसङ्गात् अन्धबधिरादिमनसापि तद्ग्रहणापत्तेश्च बाह्यविषयसामान्यग्रहणात्य तेनात्मनिष्ठविशेषग्रहणे हेतुत्वेन न दोष इति

चेत् । लाघवेनेन्द्रियाणां विशेषविषयग्रहणाकारत्वकल्पनमेवोचितं इन्द्रियाणां द्वितीयं रूपं स्वरूपं तु प्रकाशात्मनो बुद्धिसत्वस्य कार्यं ये ऽयुतसिद्धा अवयवभेदा सात्विकाहङ्काररूपास्तेष्वनुगतः सामान्यविशेषरूपयोः समूहो द्रव्यमिन्द्रियं । तत्र विशेषरूपं ग्रहणरूपानीलपीताद्याकारावृत्तिरूपाः परिणामाः सामान्यं च चक्षुरादि इन्द्रियाणां सात्विकाहङ्कारकार्यत्वात्प्रकाशात्मकत्वं । तेषामिन्द्रियाणां तृतीयं रूपमस्मितालक्षणो हङ्कारः अभिमानाख्यवृत्तिनिरासायास्मितालक्षण इत्यस्मितावृत्तिक इत्यर्थकम् । यथा च तन्मात्रस्य सामान्यस्य भूतानि विशेषास्तथा हङ्कारस्य सामान्यस्येन्द्रियाणि विशेषास्तत्कार्यत्वात् इन्द्रियेष्वनुगतत्वाच्चाहङ्कार इन्द्रियाणां रूपं भूतानां तन्मात्रवत् चतुर्थरूपं व्यवसायाख्यमहत्तत्वरूपबुद्धिरूपेण परिणताः सत्वरजस्तमोगुणा येषामिन्द्रियाणि साहङ्काराणि कार्यं । पञ्चमरूपं इन्द्रियकृतिगुणेष्वनुगतं पुरुषार्थवत्वं पञ्चस्वेतेष्विन्द्रियरूपेषु यथाक्रमं ग्रहणादक्रमेण संयमः कार्यः तत्र तत्र जयं कृत्वा पञ्चरूपजयात्सर्वरूपैरिन्द्रियसङ्कल्पानुविधायिन्यो भवतीति दिक्

जयस्तद्वीकारस्तेन चेन्द्रियप्रकृतय ॥

**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४७ ॥**

कायस्यानुत्तमो मनोवच्छीघ्रतरो गतिलाभो मनोजवित्वं तत्कर्मेन्द्रियवृत्तिजयाद्भवति स्थूलदेहसम्पर्कराहित्येन विदेहानामिन्द्रियाणां चित्तस्य चाभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभो विकरणभावोव्यापितेति यावत् सर्वासां व्यक्तिभेदेनानन्तानां भूतेन्द्रियप्रकृतीनां सत्वादिगुणानां तद्विकाराणां च स्वेच्छया नुविधानं प्रधानजयः भूतजयरूपपूर्वभूमिकायामेव तज्जये वृत्तेपि उत्तरभूमिकायामेकीकृत्य सर्वजयकथनान्नविरोध. एत एव पूर्वस्थाने प्रकृतिलया इत्युच्यन्ते ।

एता स्तिस्र: सिद्धयो मधुप्रतीकसञ्ज्ञा उच्यन्त एताश्च करणपञ्चकस्य ग्रहणादिपञ्च रूपस्य जयादधिगम्यन्ते । प्रकृतिमहदहङ्काराणामपि इन्द्रियरूपेष्वन्तिमरूपत्वात् तज्जयेन तेषामपि जयो बोध्य ॥

अथ ग्रहीतृसंयमसिद्धिमाह ।

**सत्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्व सर्वज्ञातृत्वं ॥ ४८ ॥**

मात्रशब्देन ख्याते: संयमरूपत्वं लब्धं धर्मधर्म्यभेदात्संय-मवतश्चित्तस्य सर्वभावेषु प्रकृतितत्कार्यरूपेष्वधिष्ठातृत्व स्वेच्छया नयेतृत्व सहैव भवति प्रकृतिपुरुषादि सर्वज्ञातृत्व चेत्यर्थ संय-मोऽत्रापि साक्षात्कारपर्यन्त: । परार्थात्स्वार्थसंयमादिति सूत्रे" पौरुषेय" प्रत्यये सुखाद्यनुभवरूपे परिच्छिन्न एव संयम उक्त: अत्र तु तेन संय-मेन ज्ञाते ऽपरिच्छिन्ने पुरुषे बुद्धिविवेकसंयम उच्यत इति विशेष तथा हि निर्धूतरजस्तमोमलस्य बुद्धिसत्वस्यातिसूक्ष्मवस्तुप्रतिबिम्ब-ग्रहणसामर्थ्यरूपपरमस्वच्छत्वे जाते परमाणुपरममहत्वान्तोऽस्य वशी-कार इत्युक्तपरवशीकारसंज्ञायां वर्त्तमानस्य सत्वपुरुषान्यताख्यातिर्वि मात्ररूपेण प्रतिष्ठस्य सर्वभावाधिष्ठातृत्व करणतद्विषयात्मकार्ये स-भावा प्रकाशजडरूपास्तान्तदात्मकीभूय स्वामिन क्षेत्रज्ञ प्रति उपस्थ पकत्व । सङ्कल्पमात्रेण शेष भोग्य वस्तु अयस्कान्त लेहवत् पुरुषमु-पतिष्ठते इति यावत् । सर्वज्ञातृत्वं च सर्वपुरुषाणा बद्धमुक्तेश्वराण-शान्तोदिताव्यपदेश्यधर्मविशिष्टगुणाना च युगपत् ज्ञातृत्व तच्च प्रकृ-तिपुरुषविवेकाज्जायमानत्वेन विवेकजमित्युच्यते एषा विशोकानामा: सिद्धि. यां प्राप्य योगी सर्वज्ञ. क्षीणक्लेशबन्धत्वाच्छोकशून्यो वशी-विहरति ।

अथास्य संयमस्य मुख्य सिद्धिमाह ।

**तद्वैराग्यादपिदोषबीजक्षये कैवल्यम् ॥ ४९ ॥**

अपि. कैवल्यमित्यनेनान्वेति। तस्या विवेकख्यातौ तज्जायां यथोक्तसिद्धौ च वैराग्यादसम्प्रज्ञातयोगेन दुःखदोषस्य बीजानामखिलवासनाकर्मणा चित्तेन सह लये सति पुरुषस्य कैवल्यं पुनर्गुणासंयोगरूपमपि विभवतीत्यर्थ.। तथा हि यदास्य योगिनः क्लेशकर्मक्षयरूपकर्तव्यसमाप्तौ बुद्धिसत्वस्यायं विवेकप्रत्यय. सत्त्व च हेयपक्षे। पुरुषश्चापरिणामो सत्वादन्य इत्येव विचारेण विरज्यमानस्य यानि क्लेशबीजानि दग्धशालिबीजकल्पानि अप्रसवसमर्थानि तानि मनसा सहास्तङ्गच्छन्ति तेषु प्रलीनेषु पुरुषस्तापत्रय भुक्ते तदापरवैराग्यावस्थाया एषां दु.खबीजगुणाना सत्वादिगुणस्याना कार्यावस्थे मनसि क्लेशकर्मविपाकरूपेणाभिव्यक्तिस्वभावाना चरितार्थाना प्रतिप्रसवे मनसा सह लये सति पुरुषस्यात्यन्तिको गुणवियोगः कैवल्याख्यो भवति तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति दिक्।

कैवल्याख्यसिध्यर्थिनो योगिनो यथोक्त वैराग्यवदेवसाधनान्तरमाह।

**स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्॥५०॥**

स्थानिनः स्वर्गादिलोकाधिकारिणो देवा इन्द्रादयस्तेषां स्वर्गलोके नयनानाययोगिनो निमन्त्रणे सति सङ्गस्मययोरकरणं उपायः तत्करणे पुनरपि संसारप्रगात्। सङ्गः प्रीतिः स्मयश्च देवानां प्रार्थनेनात्मनि कृतार्थताभिमानः। तथा हि चत्वारः खलु योगिनः प्राथमकल्पिको मधुभूमिक. प्रज्ञाज्योतिरतिक्रान्तभावनीयश्च। तत्राभ्यासी प्रवृत्तमात्रज्योतिः प्रवृत्तमात्र न तु निष्पन्नज्योतिर्ज्ञान यस्य सः सवितर्कादिरूपापरप्रत्यक्षवान् प्राथमकल्पिकाख्य आद्य ऋतम्भरप्रज्ञः ऋतसत्यमेवबिभर्तीति परप्रत्यक्ष निर्वितर्कश्च ऋतभराप्र-

ज्ञातद्वान् मधुभूमिको द्वितीयः । भूतेन्द्रियजयी तृतीयः प्रज्ञा ज्योति राख्यः सहि सर्वेषु भावितेषु उत्पादितेषु कृतरक्षाबन्धो यतस्तेभ्य न च्यवते भावनीयेषूत्पादनीयेषु विशोकादिसिध्यादिषु असम्प्रज्ञात तेषु हि हितसाधनत्वात् साधनविषयस्यैव पुरुषयत्नस्य साध्यनिष्पादकत्वात् । चतुर्थो तिक्रान्तभावनीयः तस्य चित्तप्रतिसर्गो ऽसम्प्रज्ञातसमाधिसाध्यः स एवैकोऽर्थे कर्तव्यत्वेन शिष्यते । तत्र प्रथमभूमिकाया देवानामीदृश नुग्रह एव न भवति तृतीयचतुर्थयोस्तु देवा उपेक्षणीया एव भवन्ति । अतो मधुमती भूमिका स्वस्य निष्पन्नेत्यनुभवतो ब्राह्मणस्य स्थानिनो देवाः सत्यशुद्धिमनुपश्यन्तः स्थानैः इह रम्यन्ताङ्कमनीयोयं भागः कमनीयेयङ्कन्यारसायनमिद जरां मृत्युम्बाधते वैहायसमिदं पान अमी कल्पद्रुमाः पुण्यामन्दाकिनीसिद्धामहर्षयश्चेमे इमा उत्तमा अनुकूला अप्सरसः अत्र दिव्ये श्रोत्रचक्षुषीवज्रो यमः कायः स्वगुणैः सर्वमिदमर्जितमायुष्मताप्रतिपद्यतामिदमक्षय्यमजरममरं स्थानं देवानां प्रियमित्येवमुप निमन्त्रयन्ते अजरत्व सदानवत्व उपनिमन्त्यमाणश्च घोरेषु । संसाराङ्गारेषु पापच्यमानेन मया जननमरणान्धकारे विपरिवर्त्तमावेन कथञ्चिदासादितः क्लेशतिमिरविनाशीयोगदीपः तस्य चैतेतृष्णा योनयोविषयवायवः प्रतिपक्षाः स खल्वहं लब्धालोकः कथमनया मृगतृष्णाया वञ्चितः तस्यैव पुनः प्रदीप्तससाराग्नेरात्मानमिन्धनीकुर्यामिति विषयप्रीतिजदोषरूपान् सङ्गदोषान् चिन्तयेत् एवं विचार्य सङ्ग त्यक्त्वा स्वस्ति यः स्वप्नोऽयमेभ्यः कृपणजनप्रार्थनीयेभ्यो वषयेभ्य इत्येवन्निश्चितमतिः समाधि भावयेत् कुर्यात् एव सङ्गन्त्यक्त्वा एवमहन्देवाना प्रार्थनीय इति स्मयमपि न कुर्यात् स्मपादयं सुस्थित मन्यतया मृत्युना न केशगृहीतमात्मानं न भावयिष्यति एव चास्यां तरप्रेक्षोनित्यं प्रलप्र-

तीर्थः प्रमादो कायो मृत्युलब्धविवरउक्लेशानुन भविष्यति ततश्च पुनरनिष्टप्रसङ्गः एवमस्य सङ्गस्मयावकुर्वतो भावितो दृढो भविष्यति भावनीयश्चाभि-मुखो भविष्यति ।

पुनः सर्वज्ञता साधकं संयमान्तरमाह ।

**क्षणतत् क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५१ ॥**

विवेकात्पूर्वसूचो क्तसत्वपुरुषान्यताख्यातिरूपाज्जायमान ज्ञान विवेकज ज्ञान इतरेतरव्यावृत्ततया सर्ववस्तूनामशेषविशेषैः साक्षात्करणं तत्क्षणतत्क्रमयोः संयमादपि भवति । प्रतिक्षण सर्ववस्तुपरिणामात् क्षणेषु तत्क्रमेषु च सक्षात्कृतेषु सर्ववस्तूना परिणामतत्क्रमयोः साक्षात्कारात् सर्ववस्तूनां विवेकेन ज्ञान भवतीति भावः तत्र क्षणोनाम यथा लोष्ठादेर्भिद्यमानस्य परमापकर्षावधिः सत्वादि-गुणविशेषः परमाणुरेवं कालस्यापकर्षावधिभूतोवयवविशेष. पूर्वापरा-शशून्यो यः स क्षणः । यद्वा यावतासमयेन चलितः परमाणु. पूर्वदेशं जह्यात् तावान्कालः विभक्तो वा यावताकालेनोत्तरदेशेन संयुज्येत तावान्वाकालः क्षणः । अवयविद्रव्यस्य देशत्यागो बहुक्षणेनापि कदाचित् अवयवानां क्रमेण संचारादत उक्त परमाणुरिति । देशस्यावयविनः क्रिययाऽनेकक्षणेन जनितदेशत्य गव्यावृत्तये चलित इति । क्रमस्तु तत्प्रवाहाविच्छेद. तेषां क्षणाना य. प्रवाह उत्तरोत्तरभागेनावस्थानं तस्याविरलतेति तदर्थः क्षणाना अव्यवहितानंतर्यरूपतत्क्रमाणां च क्षणिकत्वादेव नास्ति वस्तुभूतः समाहारो मिलनमतो मुहूर्ताहोरा-त्रादयो बुद्धिसमाहारा एव । न च स्थूलकालस्य वस्तुनोऽभावे कथं लोकानां तत्र यथार्थत्वप्रतीतिः तस्यावस्तुनो बुद्धिनिर्माणस्यापि शब्दज्ञानानुपातित्वाद्व्युत्थितदर्शनाना भ्रांतानां वस्तुस्वरूपत्वाभिमा-नात् । न च क्षणोप्येवम्भूतएवास्तु क्षणस्य वस्तुकोटौपतितत्वात् ।

आनन्तर्यरूपक्रमस्य क्षणरूपप्रतियोग्यनुयोगिघटितत्वेन तस्य वस्तु रूपत्वावश्यकत्वात् । आनन्तर्यरूपक्रमस्य क्षणरूपप्रतियोग्यनुयोगिघटितत्वेन तस्य वस्तुरूपत्वावश्यकत्वात् । तस्यैव कालविद्भिः कालत्वेन कथनात् तस्य च क्षणद्वयावस्थायित्वाभावाद्द्रव्यान्तरेभ्यो विभागः । कालनित्यत्वप्रतिपादकश्रुतयस्तु प्रवाहरूपकालपराः स च सत्वादीना शब्दतन्मात्रस्य परिणामविशेषः स एवास्याक्रमस्थिरो न तु पदार्थमात्रमिति बौद्धमताद्विशेषः । क्षणस्यास्थैर्यप्रत्यभिज्ञाद्यभावात् । यत्तु पूर्वदेशविभागाद्यवच्छिन्नः परमाणुक्रियादिरेव क्षण इति तन्न विशिष्टस्यानतिरेके विशेष्यविशेषणतत्सम्बन्धानां त्रयाणामपि स्थिरत्वेन क्षणव्यवहारजननाक्षमत्वात् अतिरेके तु सिद्ध न इष्ट अस्माभिरपि तादृशस्यैव गुणपरिणामस्य क्षणत्वाङ्गीकारात् नित्याखण्डकाले च न प्रमाणमस्ति इदानीमित्याद्यखिलव्यवहाराणाखण्डकालमात्रविषयकत्वात् दिक्काकाश एव पूर्वादिव्यवहारश्च तत्तादुपाध्यवच्छिन्नाकाशेनैव स्थित्याधारत्वेन देशव्यवहारवत् अत एव श्रुतिषु क्वचिद्दिशः श्रोत्र क्वचिदाकाशाच्छ्रोत्रमिति श्रूयते तदविरुद्धमिति दिक्क्रमोऽपि वैकल्पिक एवेति मिश्राः क्षणतत्क्रमयोर्वस्तुसमाहाराभावः कुत इति चेत् । शृणु द्वयोः क्षणयोः सहभावाभावात् द्वयोः सहभुवोः क्रमस्यासम्भवाच्च । तथा हि पूर्वस्मादुत्तरस्य भाविनो यदानन्तर्यमव्यवधान क्षणान्तरस्य क्रमः तस्माद्वर्तमान एक एव क्षणस्तिष्ठति न पूर्वोत्तरक्षणास्तत्सहभावेन तिष्ठन्तीत्यतो नास्ति मिलनमिति तत्समाहाराभावः अतो मुहूर्तादिविकल्प एव ये पुनर्भूतभाविवर्त्तमानाः क्षणास्ते सर्वेऽपि सर्ववस्तुपरिणामा एकदैववार्धक्याद्यदर्शनात् क्षत्वेनपरिणामहेतुत्वादित्युत्तरपादे क्षणप्रतियोगीत्यादिसूत्रे व्याख्येया अतः एकैकेन क्षणेन सर्वोलोकः परिणाममनुभवति यतोऽ-

तस्तत्वगोपारूढाः सर्वे पदार्था इति तयोः क्षणतत्क्रमयोः संयमात्तयोः साक्षात्कारादखिलपरिणामतत्क्रमसाक्षात्कारद्वारा सर्ववस्तूनामन्योन्यव्यावृत्ततया स्वरूपधारणं भवति। विवेकजं ज्ञानं भवति तस्य विवेकजज्ञानस्य सर्वविषयकस्य शिष्यव्युत्पत्तये एकमुदाहरणमाह ।

**जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५२ ॥**

जातिलक्षणदेशैर्भेदावधारणासम्भवे विवेकजज्ञानादेव साक्षात्कारो भवतीत्यर्थः तत्र तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यताहेतुर्यथा गोगवययोः तुल्यदेशजातितुल्यत्वे लक्षणमन्यताहेतुर्यथा कालाक्षीयं गौरियं स्वस्तिमती गौरिति लक्षणमभिव्यक्तो धर्मभेदः एवं द्वयोरामलकयोर्जातिलक्षणसारूप्ये देशभेदोऽन्यत्वकरः इदं पूर्वमिदमुत्तरमिति यत्रजात्यादिभिरन्यतानुमानं न सम्भवति तादृशं देशस्थामलकं विषयान्तरव्यग्रस्य ज्ञातुर्विवेकं करिष्यतो योगिन उत्तरदेशे स्थाप्यते तदा द्वयोरामलकयोरेकदेशत्वे सति पूर्वदेशोपलक्षितमिदमिदं चोत्तरदेशोपलक्षितं वेति विवेकानुपपत्तिः तयोर्जात्यादिचिकसाम्यात् योगिनोऽसन्दिग्धेन तत्वज्ञानेन भवितव्यमत उक्तं सूत्रकारेण ततो विवेकज्ञानात्प्रतिपत्तिरिति कथमेतदिति चेत् शृणु आमलकस्य क्षणेन सहवर्त्तते यः पूर्वोदेशः स आमलकान्तारस्वक्षणेन सहमानादुत्तरदेशाद्भिन्नः अत. स्वदेशक्षणप्राप्त्याते आमलके भिन्ने तत् क्षणविशिष्टस्यैकदेशसम्बन्धासम्भवात् अतो भिन्नयोः पूर्वोत्तरदेशसम्बन्धक्षणयोः साक्षात्कारस्तयोरामलमयोरन्यत्वहेतुर्यथोक्तविवेकग्रहे कारणं य आमलकपूर्वपूर्वापरदेशाभ्यां पौर्वापर्यपरिणामक्षण आसीत् । तयोर्देशान्तरकृतपौर्वापर्यपरिणामक्षणविशिष्टत्वमनुभवन्संयमान्ते भिन्ने प्रत्येति ॥ एवं द्विचिह्णमाचण ज्येष्ठकनिष्ठयोर्ज्येष्ठकनि-

स्यादेतत् । अमूल्यदानक्रयी खल्वयं संसर्गो नास्ति, यतो न विज्ञानेष्वाकारमर्पयति, प्रत्यक्षतां तु स्वीकर्तुमिच्छतीति । तदयुक्तम् । निराकारविज्ञानवेद्यत्वव्यवस्थापनेन नीलादीनामप्यमूल्यदानक्रयित्वेनाऽसत्त्वप्रसङ्गात् । न च संसर्गिणं संसर्गं ज्ञातुमुत्सहते । न चायं संसर्गिभ्यो न भिद्यते । विरुद्धधर्मास्पदत्वात् । न खल्वयं संसर्गिषु परस्पर व्यावर्त्तमानेष्वनुवर्त्तमानो ऽनुवर्त्तमानेषु च निवर्त्तमानस्तदात्मा भवितुमर्हति, त्रैलोक्यस्यैक्यप्रसङ्गात् । तेनास्तु तद्देशत्वतदभावयोर्विरोधो, न पुनस्तद्देशत्वाऽतद्देशत्वयोर्भवितुमर्हति । न हि नञ प्रयोगमात्राद्विरोधाऽवगतिः । मा भूत्पुत्रो ऽपुत्र इति नानात्वमेकस्यापि पुत्रस्येति ।

स्यादेतत् । येनैव स्वभावेनैकस्मिन्संसर्गिणि संसर्गो वर्त्तते किं तेनैव संसर्ग्यन्तरे ऽपि, किं वा स्वभावान्तरेणेति । न तावत्स्वभावान्तरेण । स्वभावेनोपादेयभेदे भावभेदप्रसङ्गात् । तेनैव चेत्संसर्गिणामत्यन्ताभेदप्रसङ्ग इति । तत्र वक्तव्यम् । अथ रूपं येन स्वभावेनोपादेयं रूपान्तरं जनयति किं तेनैव स्वाऽऽलम्बनं विज्ञानं स्वभावान्तरेण वेति तुल्यमेवैतत् । यद्युच्येत, स्वभावो वा सामर्थ्यं वा न रूपादतिरिच्यते, तदेव तु स्वप्रत्ययाऽधीनजन्मभेदमुभयजननमेकं प्रत्यक्षेणाऽवसीयमानं न भेदमर्हति । न च कारणभेदः कार्याऽभेदमापादयति, अन्यत्वात् । तत्किमिदानीं नानासंसर्गिषु एको न भासते प्रत्यक्षेण संसर्गः स्वभावाः संसर्गिणां, येन ते तदभेदादभिन्ना भवेयुः । प्रतीत्यसमुत्पादमात्रं कार्यकारणभावो न भाविकः कश्चिदुभयाश्रयः, तेनाऽन्यस्य कारणस्याऽभेदे ऽपि न कार्यभेद इति चेत् । ननु संसर्गिभिः संसर्गस्यापि न कश्चिदपरः संसर्ग इति तदभेदे ऽपि न संसर्गिणामभेदो ऽन्यत्वात् असंबन्धः । संसर्गः कथं तेषामेवेति चेत् । अथाऽसंबन्धे किमिति रूपमेव प्रतीत्यरूपविज्ञाने समुत्पद्यते

न पुना रसादिकमपि ? स्वभावभेदादिति चेत् । सो ऽत्रापि तुल्यः । तस्माद्विरोधाऽसिद्धेः सदिग्धव्यतिरेकत्वादनेकवृत्तित्व नानात्वप्रत्यसाधनाङ्गम् । न च ग्रहणाऽग्रहणलक्षणविरोधः संसर्गे सम्भवति । सकलसंसर्गग्रहणाधीननिरूपणस्य तस्याऽग्रहणे ग्रहणादेव तद्ग्रहणे वा ग्रहणादेवेति । वृत्तिविकल्पश्च साकल्यवैकल्यलक्षणो ऽत्रानवकाश एव । नानात्वे कार्यसमवायिनी साकल्यवैकल्ये नाऽभिन्ने तत्त्वे सम्भवः । तस्मात्स्वभावतो वर्तते संसर्गेषु संसर्ग इत्येतावद् वक्तुमीश्महे, न पुनः कार्त्स्न्यभागाभ्यामिति । एतेन समूहो व्याख्यातः, प्रत्याख्याताश्च कतिपये अवयविसामान्यादिनिराकरणहेतवो न सर्वे विस्तरभयात् ।

तदेव प्रत्यक्षसंसर्गः संसर्गद्वयाऽऽधार एको गुणगुणिनोर्जातिजातिमतोः क्रियाकारकयोरवयवाऽवयविनोर्द्रव्ययोरनुभवसिद्धो विना बाधकं न प्रत्याख्यानमर्हति । वाक्यार्थलक्षणस्तु देवदत्तः स्थाल्यामोदनं पचतीत्यादिर्यद्यपि प्रतिसंसर्गद्वयं भिद्यते तथापि कारकाणां क्रियार्थत्वात्तस्याः प्रधानत्वेन वाक्यार्थभूताया एकत्वात्तत्प्रधानः संसर्गो ऽप्येक उक्तः । नानाकारकोपरक्तक्रियार्थत्वे ऽपि च वाक्यस्य पदार्थमात्रस्याऽन्यतः प्राप्तेः प्राप्ताऽप्राप्तविवेकेन संसर्गो वाक्यार्थः । तदिदमुक्तं, कारकोपसर्जनक्रियाप्रधान इति । यत्र तर्हि क्रियाद्वयं प्रतीयते यथा निजभुजवीर्यमास्थाय शूरानादिशूरो जयति, तत्र कथं वाक्यार्थस्यैकत्व ? मित्यत आह, अतुल्यप्रधानसंसर्गो । अतुल्यो ऽत एव प्रधानं संसर्गो यस्य स तथोक्तः । एतदुक्तं भवति । न क्रियेत्येव वाक्यार्थो ऽपि तु प्रधानमिति । जयार्थं च जिगीषोरादिशूरस्य निजभुजवीर्याऽऽश्रयक्रियेत्यप्रधानत्वान्न वाक्यार्थः । विजयक्रियैव तु प्राधान्यात्तथा ।

समूहो ऽपि नान्तरेण तद्भावनिमित्तमेकं समूहि- नाम् । तत्र तदुपाधिरेकप्रकाशः । शशविषाणादयो ऽपि जात्यन्तरपरिदृष्टवस्तुरूपेणोत्प्रेक्ष्यमाणा वस्त्वात्मकाः प्रकाशन्ते । अन्यथैकवाक्यगम्ये नैकवाक्यता स्यात् । न च तत्र शब्दभेदः । रूपाऽभेदात् । अर्थभेदाद्भेद इति चेत् । कथमन्यथा प्रतीतो ऽन्यथा । अर्थभेदाऽनुमानादिति चेत् ।

समूहमुपपादयति—समूहो ऽपि नान्तरेण तद्भावनिमित्तमेकं समूहिनाम् । समानदेशकाला खलु किंशुकादयः समूह इति वा वनमिति वा व्यपदिश्यन्ते, तेन सोऽपि समूहिनां संबन्ध्यनैकेन देशेन कालेन समूहभावनिमित्तेन विना न भवतीति । तत्र समूहिषु तदुपाधिरेकदेशकालोपाधिरेकप्रकाश एकविषयः प्रकाश इत्यर्थः । शशविषाणादयो ऽपि गवादिजात्यन्तरपरिदृष्टविषाणवस्तुरूपेणोत्प्रेक्ष्यमाणाः समारोप्यमाणा वस्त्वात्मकाः प्रकाशन्ते । तेनाऽन्यथाऽपि सिद्धे सर्गादिष्वेकप्रत्ययप्रत्यवभासस्य नैकशब्दात्मप्रत्यासादिकल्पना युक्ता । अपि चाऽन्यथैकस्य शब्दात्मनः प्रत्यासेन भिन्नेष्वभेदकल्पनायामेकवाक्यगम्येनैकवाक्यता स्यात् । यथा श्वेतो धावतीत्येकस्मादेव वाक्यादर्थद्वयमवगम्यते, शुक्लो निर्धावतीति कोलेयक इतो द्रुतं गच्छतीति । तदेतदर्थद्वयमेकवाक्यसमधिगम्यं तत्प्रत्यासादभिन्नमेव भासेतेत्यर्थः ।

नन्वत्राऽपि प्रत्यर्थं शब्दभेद इत्यत आह—न च तत्र शब्दभेदः । कुतः ? रूपाऽभेदात् । न हि निर्धावने गतौ वा वाक्यस्वरूपस्य भेदं प्रतिपाद्यामहे । शङ्कते—अर्थभेदाद्भेद इति चेत् । उत्तरम्—कथमन्यथा एकत्वेन प्रतीतो ऽन्यथा नाना ? पुनः शङ्कते—अर्थभेदानुमानादिति चेत् । यथा ज्ञाता स्थिरा ऽवगम्यमानाऽपि प्रत्य-

प्राक्तर्ह्यर्थभेदाभेदाववगम्येते पश्चाच्छब्दभेदाभेदाविति न शब्दप्रत्यासत्तिनिमित्तोऽर्थेष्वेकताऽवभासः। समूहैकशब्दयोश्चाऽविशेषः। अविदितसमूहशब्दस्य च तत्तदवभासो न दूरतः स्यात्। अभावे शब्द इति च भावशब्दप्रतीते-

क्षेणाऽनुमानेनाऽऽशुतरविनाशिनी निश्चीयते एव प्रत्यक्षाऽवगतैक्यमपि वाक्यमर्थभेदान्नाना निश्चीयतइति । परिहरति–प्राक्तर्ह्यर्थभेदाऽभेदाववगम्येते, पश्चाच्छब्दभेदाऽभेदाविति न शब्दप्रत्यासत्तिनिमित्तोर्थेष्वेकताऽवभासः । अगृहीतभेदः खल्वर्थः शब्दगताभेदाध्यवसायादभिन्नो भासते । न हि जातु शुक्तित्वप्रतिपत्तौ रजतसमारोपो भवति । अर्थभेदश्चेत्प्राक् शब्दभेदाऽभेदाभ्यां गृहीतो नाऽर्थस्य शब्दवर्त्यभेदः शक्यसमारोप इत्यर्थः । दोषान्तरमाह–समूहैकशब्दयोश्चाविशेषः । यदि शब्दैकत्वसमारोपाद्भिन्नानामप्यर्थानामेकता ततो यथैकमाकाशमित्यभिन्नस्यैकत्वमनौपाधिकमवगम्यते तथा समूह इत्यत्रापि नोपाध्यपेक्षमवगम्येत । उपाध्यपेक्षत्वे चैकमाकाशमित्यपि न शुद्धमवगम्येतेत्यविशेषः प्रसज्यते । क्वचित्पाठः समूहैकशब्दयोश्चाऽविशेष इति । तस्यार्थः । यथा बहूनां धवादीनां समूह इत्येकशब्दनिबन्धनमेकत्वमवभासते तथा वृक्षा इत्यत्राप्येकत्वमवभासेत । न चैतदस्ति । किं च यदि शब्दप्रत्यासकृतमेकत्वम् अविदितशब्दविशेषो न रूपत एव एकमर्थमवगच्छेदित्याह–अविदितसमूहशब्दस्य च तदवभासो न दूरतः स्यात्। अपि चाऽभावेऽशब्द इति च भावशब्दप्रतिपत्तेर्विवक्षितार्थहानिः । शब्दाऽध्यासे खल्वभाव इति शब्द एवाध्यस्य प्रतिपत्तव्यः स च भाव इति विवक्षितार्थहानमेवमशब्द इति च शब्द इत्यर्थः । विवर्तपरिणामयोरप्येते दोषाः प्रसञ्जनीयाः ।

विवक्षितार्थहानिः । विवर्त्तपरिणामयोस्तु सर्वस्यैकत्वा-
दवान्तरैकत्वं नैकशब्दालम्बनम् । वस्त्ववस्तुविभागश्च
न स्यात् । अथ तुल्येपि शब्दविवर्ते ऽन्यनिबन्धनो ऽयं वि-
भागः । न, शब्दविवर्तनिबन्धनः । शशविषाणाऽलातचक्रा-

एष त्वधिको ऽपि परिणामविवर्त्तयोर्दोष इत्याह—विवर्त्तपरि-
णामयोस्तु सर्वस्यैकत्वादवान्तरैकत्व नैकशब्दालम्बनम् । ये हि पर-
स्परविभिन्नानां शब्दानामध्यासमाहुस्तेषामवान्तरैकत्व गौरिति वा
ऽश्व इति चोपपद्यतैव । ये पुनरभिन्नस्य शब्दब्रह्मणो विवर्तं वा परि-
णाम वा ऽर्थमाचक्षते तेषां सर्वेच शब्दब्रह्मणो ऽविशेषादवान्तरैकत्व
पदार्थाना वाक्यार्थाना च कुतस्त्यमित्यर्थ । किं च वस्त्ववस्तुविभा-
गश्च न स्यात् । न ह्यस्मिन्दर्शने समस्ति तत्प्रमेय न यच्छब्दब्रह्मण-
परिणामो वा विवर्तो वा । तथाविध च सर्वं सदेवेति नाऽसत्प्रमेयते-
त्यर्थ. । अत्र शङ्कते—अथ तुल्ये ऽपि शब्दविवर्त्ते ऽन्यनिबन्धने
ऽनाद्यविद्यावासनावैचित्र्यनिबन्धनो ऽयं विभागः । उत्तरम्—न,
शब्दविवर्त्तनिबन्धन. । अयमभिसंधिः । अनुभवसिद्धो नाऽसति बा-
धके ऽनाद्यविद्यानिबन्धन' शक्यो वक्तुम् । शब्दब्रह्मण्यपि तथा-
प्रसङ्गात् । तच्च शब्दविवर्तनिबन्धन,स्तस्य तद्रूपतया निषेधात्म-
त्वाऽयोगात् । तस्मात्पारमार्थिक एवेति युक्तम् । यथाह न्यायवादी
'सत्सदिति गृह्यमाणं यथाभूतमविपरीत च तत्त्व' मिति । नन्वस्तु
तात्त्विको विभागो भावाऽभावयोः । अभावानां पुनरनधिगतस्वल-
क्षणभेदानां कुतः परस्परविभाग ? इत्यत आह—शशविषाणाऽलातच-
क्रादिषु वस्त्वाकारनिरूपणा । विभाग इत्यनुषङ्ग. । यद्यपि शशविषा-
णाऽलातचक्राद्यभावाना न स्वरूपेण भेदस्तथाप्यवच्छेदकभावाऽधी-
ननिरूपणत्वाद्भावाना च स्वरूपभेदात्तदुपाधिरभावानामपि परस्पर-

दिषु वस्त्वाकारनिरूपणा । पराक्रान्तमेव च बहुधा स्वयूथ्यैरित्यलमतिप्रसङ्गेन । तस्मादीप्सितस्योपायता कर्तृप्रवृत्तिहेतुः ।

ननु कर्त्तव्यतावगमात्प्रवर्त्तते, सैव तथा ऽस्तु । का पुनरियम् ? कर्त्तव्यतैव । केन प्रमाणेनाऽवगम्यते । नेन्द्रियैरध्यक्षमीक्ष्यते । तत्पुरःसरत्वान्नेतरैः । सत्यम् । न शब्दातिरेकिभिः । ननु शब्दो ऽपि संविदपेक्षयेतरसिद्धिमपेक्षते । ननु नियोगतः । शब्दे ऽपि तत्सम्भवात् । नन्वितविभाग इत्यर्थः । स्फोटस्वरूपनिराकरणप्रयत्नाभावं प्रति कारणमाह—पराक्रान्तमेव चाऽच बहुधा स्वयूथ्यैर्भाष्यकारवार्त्तिककारप्रभृतिभिरित्यलमतिप्रसङ्गेन ।

प्रकृतमुपसंहरति—तस्मादीप्सितस्योपायता कर्तुः प्रवृत्तिहेतु । एवं पूर्वपक्षैकदेशिनि निरस्ते सम्प्रति परमपूर्वपक्षी ब्रूते—ननु कर्त्तव्यताऽवगमात्प्रवर्त्तते, सैव तथा ऽस्तु । दूषयति—का पुनरिय कर्तव्यता ? न निरालम्बनं ज्ञान, न च श्रेय साधनता त्वयेष्यतइति भावः । पूर्वपक्षिण उत्तरम्—कर्त्तव्यतैव । यदाभास विज्ञानं तदालम्बन, कर्तव्यताऽवगमश्च कर्त्तव्यताऽऽभास इति कर्तव्यतैवाऽस्यालम्बनमित्यर्थः । सिद्धान्ती पृच्छति—केन प्रमाणेनाऽवगम्यते ? कर्त्तव्यताऽवगमो हि प्रमाणस्य कार्यमसति कारणे प्रमाणे न भवितुमर्हतीत्यर्थः । स एवैकग्रन्थ्येनाह—नेन्द्रियैरध्यक्षमीक्ष्यते । ननु मा नामेन्द्रियाणि प्रवर्तिषत, कस्मात्पुनर्नानुमानादिगोचरः कर्तव्यते ? त्यत आह—तत्पुरस्सरत्वान्नेतरैः । अनुमानादयो हि प्रत्यक्षपुरस्सरास्तत्कार्यत्वान्नाऽसति प्रत्यक्षे प्रवर्तन्ते इत्यर्थः । पूर्वपक्षी ब्रूते—सत्यं, न शब्दाऽतिरेकिभिर्गम्यते । कर्तव्यताशब्देन तु गम्यतइत्यर्थ । सिद्धान्ती ब्रूते—ननु शब्दोपि संविदपेक्षया सबन्धज्ञानाऽपेक्षया प्रथमश्राविणो ऽप्रतीतेः इतरसिद्धिमितरेण कर्त्तव्यताख्यः सिद्धिमपेक्षते । पूर्वपक्षी त्वाह—ननु नियोगतः प्रमाणान्तरादेव सिद्धिमर्थस्याऽपेक्षते । कुतः ? शब्दतः सिद्धेपि तत्सम्भवात्सबन्धज्ञानसंभवात् । सिद्धान्ती ब्रूते—

रेतराश्रयः स्यात् । न । अनादित्वाच्छब्दभावनायाः । न खलु शब्दः साक्षादेव कर्त्तव्यताप्रतिभासमाविर्भावयति विप्रकृष्टः, अपि तु भावनाऽनुगममुखेन । तत्र विप्रकृष्टशब्दभावनाद्वारसिद्धेः कर्त्तव्यतात्मनि परत्र प्रवृत्तिप्रसवोन्नीतप्रत्यये नाऽसुकरा प्रत्युत्पन्नशब्दसंवित् । उक्तं च ।

साक्षाच्छब्देन जनिता भावनानुगमेन ।
इति कर्त्तव्यता या तां न कश्चिदतिवर्त्तते ॥

नन्वितरेतराश्रयः स्यात् । शब्दतः सिद्धौ सत्यां सबन्धविज्ञानं संबन्धविज्ञाने च सति शब्दतः सिद्धिरिति । पूर्वपक्षिण उत्तरम्—अनादित्वाच्छब्दभावनायाः । यथा हि बीजादङ्कुरोऽङ्कुराद्बीजमिति बीजाङ्कुरजात्योरन्योन्याश्रयत्वेऽपि व्यक्तिभेदाद्व्यवस्था । न हि यस्या बीजव्यक्तेर्याऽङ्कुरव्यक्तिरुपजायते तस्या एवाऽङ्कुरव्यक्तेः सैव बीजव्यक्तिरपि तु तज्जातीयाया अन्यस्याः । इयमस्याश्चान्या जनिष्यते । तेन यत्राऽन्योन्याश्रयं न तत्र जन्यजनकभावः । यत्र च तद्भावो न तत्राऽन्योन्याश्रयत्वमिति । तथेहापि शब्दप्रवृत्तेः कर्त्तव्यतावगमेन भावना प्राग्भवीया । तस्याश्चेह जन्मनि कर्त्तव्यताऽवगमे तत्र विदितसबन्धस्य शब्दस्य प्रवृत्तिस्ततः प्रत्युत्पन्नशब्दतः कर्त्तव्यताऽवगमः, ततो भावनेति । तदिदं शब्दप्रवृत्तिकर्त्तव्यताऽवगतिभावनाचक्रमनिशमावर्त्तते इति नेतरेतराश्रयत्वम् ।

ननु भावनायां किं प्रमाणम्? अत आह-न खलु शब्दः साक्षादेव कर्त्तव्यताप्रतिभासमाविर्भावयति, यतो विप्रकृष्टः, अपि तु भावनामुखेन, एवं च सति शब्दैकसमधिगम्येऽपि कर्त्तव्यतात्मनि नासुकरा संविदित्याह-तत्र विप्रकृष्टभावनाद्वारसिद्धेः कर्त्तव्यतात्मनि स्वज्ञानेन प्रवृत्तिहेतौ परत्र प्रवृत्तिप्रसवोन्नीतप्रत्ययेनाऽसुकरा प्रत्युत्पन्नस्य वर्तमानस्य शब्दस्य संविद् ज्ञानमिति । उक्तं च ।

कर्त्तव्यतावगमादेव प्रवृत्तिः, नेप्सितोपायतायाः। नित्येष्वप्यप्रवृत्तिप्रसङ्गात्। ईप्सितोपायत्वे वा नित्यत्वव्याघातः।

उच्यते —

**पूर्वशब्दैर्व्यवहृतिर्व्युत्पत्तेरनपेक्षणम्।**
**भवेद्विशेषहेतुः को बीजमर्थेन तु श्रुतौ॥**

का पुनरियं शब्दभावना? शब्दविषया शब्दज्ञानबीज, मुत शब्दाऽभिहिता ऽर्थज्ञानबोजम्। यदि शब्दविषया तैरेवाऽनष्टस्मृतिसंस्कारैः प्राग्भवीयैः शब्दैर्व्यभि-

साक्षाच्छब्देन जनिता भावनाऽनुगमेन वा।
इतिकर्त्तव्यता या तां न कश्चिदतिवर्त्तते॥ इति।

कृतव्याख्यानमेतत्। इद च वेदवादिभिरवश्याभ्युपेतव्य न पुनरभिमतसाधनत्वम्, अव्यापकत्वादित्याह—कर्त्तव्यताऽवगमादेव प्रवृत्तिर्नेप्सितोपायतायाः। नित्येष्वप्यप्रवृत्तिप्रसङ्गात्। अथ नित्यमपि समीहितोपायः कस्मान्न भवती? त्याह—ईप्सितोपायत्वे वा नित्यस्याऽनित्यत्वप्रसङ्गः। काम्यतया पुरुषेच्छातन्त्रत्वेनाऽवश्यकर्त्तव्यताऽनुपपत्तेः। तदेतद् दूषयति—उच्यते।

पूर्वशब्दैर्व्यवहृतिर्व्युत्पत्तेरनपेक्षणम्।
भवेद्विशेषहेतुः को बीजमर्थेन तु श्रुतौ॥

भावनाऽनुगमेनेत्युक्त, तच भावनां विकल्पयति—का पुनरिय शब्दभावना? शब्दविषया वाचकत्वविशिष्टविषया शब्दवाचकत्वज्ञानबीज,मुत शब्दाभिहिता ऽर्थज्ञानबीजं, कर्त्तव्यतामात्रज्ञानस्य वा बीज करणम्। भावनाविज्ञानयोः कार्यकारणभूतयोः समानविषयत्वात्। अथ प्रथमं कल्पमधिकृत्याह—यदि शब्दविषया तैरेवाऽनष्टस्मृतिसंस्कारैः प्राग्भवीयैः शब्दैर्व्यभिचारः स्यात्। स्मृतिजनकः संस्कारो न

**चारः स्यात् । व्युत्पत्तिश्च तदा नाऽपेक्ष्येत । शब्दाऽभिहिता चेत्तथापि पूर्वस्यां सत्यां स एव प्रसङ्गः । अथेयमेव । विशेषहेतुर्वक्तव्यो, यत् तुल्येषु प्रत्ययपाटवाऽभ्यासाऽऽदरेषु शब्दार्थसंबन्धविषयेष्वर्थ एव भावनाबीजं न शब्दसंबन्धयोः। प्रायणं दुःखं वाच्छेत्तृ जात्यन्तरव्यवधानं वा शब्द-**

वेगादिरित्यर्थः । स च वाचकतया शब्दः स्मर्येतइति व्युत्पत्तिश्च नापेक्ष्येत । तथा च प्रथमश्राविणो ऽप्यर्थप्रत्ययप्रसङ्गः । तदिदमुक्तं पूर्वशब्दैर्व्यवहृतिर्व्युत्पत्तेरनपेक्षा भवेदिति। कल्पान्तरं शङ्कते—शब्दाऽभिहिता ऽर्थविषया चेद्, भवतु, तथापि वाचकशब्दविषयाप्यस्ति भावनेति तस्या पूर्वस्या सत्यां स एव प्रसङ्गः । अथैवमर्थविषयैवास्ति भावना न पूर्वशब्दविषय । उत्तर—विशेषहेतुर्वक्तव्यो यत्तुल्येषु प्रत्ययपाटवाऽभ्यासाऽऽदरेषु शब्दार्थसबन्धविषयेष्वर्थ एव भावनाबीज तत्प्रत्ययपाटवादयो न तु शब्दसबन्धयोः । त्रीणि कारणानि भावनाया समस्तव्यस्तानि । तथा हि सकृदनुभूतेषु प्रत्ययपाटवाद्भावना भवन्ति । यथा दुर्जनवचनजनिते दुःखे मन्दस्यापि प्रत्ययस्याऽभ्यासो भावयति भावनां, यथा जडस्य शास्त्राऽभ्यासः, तथा सकृन्मन्दमनुभूयमानेपि प्रत्ययादराद्भवति भावना । यथा देवह्रदे महाचैत्यां बुद्बुदवत्कि चिदुत्पन्न कनकनलिनदर्शनादीति व्यस्तानि समस्तानि चोहनीयानि । तदेतत्त्रितयमपि सस्कारकारणं शब्दार्थसम्बन्धेषु तुल्यमिति कथमर्थ एव सस्कारो न तु सम्बन्धशब्दयोरिति । तदिदमुक्तं विशेषहेतुः को बीजमर्थेन तु श्रुतौ । यदि मन्येत अर्थवच्छब्दसम्बन्धयोरप्युत्पन्नैव भावना, सा तु प्रायणेन वा दुःखेन वा गर्भवासजन्मना जातिव्यवस्थानेन वा विनष्टा न स्मृति जनयतीत्यत आह—प्रायणं दुःख वोच्छेतृ जात्यन्तरव्यवधान

संबन्धयोर्भावनाबीजानां नार्थेषु । तेष्वपि च भावनानुगमश्चेत्, जात्यन्तरबधिरास्तज्जन्माऽनुभूतानिव रूपशब्दप्रकारान् जन्मान्तराऽनुभूतानाचक्षीरन् । अथापि पूर्वाऽभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः कासांचिद्भावनानामनुगमो न सर्वासाम् । व्युत्पन्नवद्-

वा शब्दसम्बन्धयोर्भावनाबीजाना नार्थेष्विति । विशेषहेतुर्वक्तव्य इत्यनुषज्यते । भावनारूपाणि बीजानि स्मृतेरित्यर्थः । न जातु कारणानियमे कार्यनियमः सम्भवति, तस्याऽऽकस्मिकत्वप्रसङ्गादिति भावः । यदि तु कश्चिद्वैयात्यादभ्युपैति, शब्दार्थसम्बन्धेषु भावनाऽनुवर्तत इति, तं प्रत्याह—तेष्वपि चाऽविशेषेण भावनाऽनुगमे जात्यन्धबधिरास्तज्जन्माऽनुभूतानिव रूपशब्दप्रकारान् जन्मान्तरानुभूतान् आचक्षीरन् ।

तत्र चोदयति—अथापि पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः कासांचिद्भावनानामनुगमो न सर्वसाम् । अस्यार्थः । निकायविशिष्टाभिरपूर्वाभिः शरीरेन्द्रियबुद्धिवेदनाभिरभिसबन्धो जन्म, तत्कर्ता जातस्तस्याऽभिप्रेतविषयप्रार्थनाया तत्प्राप्तौ सुखाऽनुभवो हर्षो ऽनिष्टविषयसाधनसन्निपाते तज्जिहासोर्हान्यशक्यता भयम् । इष्टविषयवियोगे सति तस्येष्टस्य प्राप्त्यशक्यस्य प्रार्थना शोकः । तदेतेषां हर्षभयशोकानां संप्रतिपत्तिरनुभवः पूर्वाभ्यस्तस्मृत्यनुसम्बन्धाद् भवति । पूर्वस्मिन् जन्मनि अभ्यस्तस्याऽर्थस्य स्मृत्यनुबन्धात् । एकविषयो वा एकाऽऽकारविषयो वा अनेकविज्ञानोत्पादोऽभ्यास,स्तत्कर्मोऽभ्यस्त यथा देवदत्तो ऽनेनाऽभ्यस्त शालयो वाऽभ्यस्ता इति गृहीतनिरोधे तदनुसंधानविषय. प्रत्ययः स्मृतिरनुबध्यते ऽनेनेत्यनुबन्धः स्मृतेरनुबन्धो भावना । तस्मात्पूर्वाऽभ्यस्तस्मृत्यनुबन्धाद्धेतोर्जातस्य कुमारस्याऽसतीन्द्रियविषयसंप्रयोगे हर्षभयशोकसंप्रतिपत्ते. प्राग्भवीयानां कासांचित्तदीयभावनानाम्

व्यवहाराद्बालस्य ।

भवतु, किं तु

**पूर्वसिद्धिव्यपेक्षत्वान्मानं तत्र न किं चन ।**
**सिद्धे सामान्यतो वृत्तिविशिष्टे लिङ्गवाक्ययोः ॥**

**न तावल्लिङ्गादिजं ज्ञानं तत्र प्रमाणम् । संवित्प्रभव**

अनुगमः। आसीच्च पूर्वं शरीरान्तरसम्बन्धः। हर्षादिसप्रतिपत्तिरसिद्धेति चेन्न । स्मितरुदितादिमत्त्वेनैतदनुमानात् । तथा हि । हर्षादिमदात्मवती बाल्यावस्था स्मितरुदितादिमत्त्वाद् यौवनावस्थावत् । एवं बाल्यावस्था स्मृतिमदात्मवती हर्षादिमदात्मवत्त्वात् यौवनावस्थावत् । तथा बाल्यावस्था संस्कारवदात्मवती स्मृतिमदात्मवत्त्वाद् यौवनावस्थावत् । तथा च बाल्यावस्था ऽनुभूतचरानुभववदात्मवती संस्कारवदात्मवत्त्वाद्यौवनावस्थावत् । तथा बाल्यावस्थाऽनुभवकाले शरीरसम्बन्धवदात्मवती अनुभववदात्मवत्त्वाद् यौवनावस्थावत् इति प्रसङ्गात्परलोकसिद्धिरपि सूचिता । तदेवं कासां चिदनुगमो न सर्वासां भावनानाम् । कुतः ? व्युत्पन्नवदव्यवहाराद् बालस्य । कार्यदर्शनोन्नेया हि भावना यावत्कार्यदर्शनं व्यवतिष्ठत इत्यर्थः ।

एवं सिद्धान्तैकदेशिनो दूषणे परिहृते पूर्वपक्षवादिना परमसिद्धान्ती दूषणमाह—भवतु, किं तु

पूर्वसिद्धिव्यपेक्षत्वान्मानं तत्र न किं चन ।
सिद्धे सामान्यतो वृत्तिविशिष्टे लिङ्गवाक्ययोः ॥

तद्व्याचष्टे—न तावल्लिङ्गादिजं तत्र ज्ञानं प्रमाणं न पदप्रत्ययो वा तत्र कर्तव्यतायां प्रमाणमिति । केन हेतुना ? प्रथमश्रुतेभ्यो लिङ्गादिभ्यो ऽनुत्पादात्कर्तव्यता ज्ञानस्य संवित्प्रभवतया

**तथा पूर्वसिद्धिव्यपेक्षत्वेन। नापि भावनाजं, तन्निमित्त-ज्ञानाऽपेक्षत्वेन। नापि लिङ्गवाक्यजे। तयोः सामान्यरूप-प्रसिद्धे र्विशिष्टावगाहित्वेनाऽप्रसिद्धपदार्थवाक्यार्थप्रती-**

मानान्तरत' पूर्वसिद्धिव्यपेक्षत्वेन। नापि भावनाज तन्निमित्तज्ञा नापेक्षत्वेन, यदाकार हि विज्ञान भावनया जनयितव्य तदाकारमेसावनुभव स्वकारणमेवाऽपेक्षते मानान्तरन:, न च तदस्तीत्युक्तम् ननु लिङ्गवाक्ये कर्तव्यतावगाहिनी भविष्यत, तयो प्रमाणान्तराऽनवगतार्थगोचरत्वा, दन्यथा प्रामाण्याऽनुपपत्तेरित्यत आह—नापि लिङ्गवाक्यजे। हेतुमाह—तयोः सामान्यरूपप्रसिद्धे विशिष्टाऽवगाहित्वेन गृहीतसम्बन्ध लिङ्गिन गमयति, सम्बन्धश्च पक्षव्यापकत्वे सति स्वसाध्येन नियम। न चाऽगृहीते दृष्टान्तधर्मिवर्तिनि साध्यधर्मे तेन सह हेतोर्नियम' शक्यसाधनः। न चाऽपूर्ववस्तुसत्तासाधने पक्षधर्मता। तथा हि। कदा चित्सत्ताया साध्यायां भावधर्मो वा हेतुरुच्येताऽभावधर्मो वा, प्रकारान्तरा भावात्। तच बाह्या अप्याहुः।

'नाऽसिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः।
धर्मो विरुद्धो भावस्य तत्सत्ता साध्यते कथम्' ॥ इति।

तस्मादनुमान सामान्यरूपेण यो वह्नि' प्रसिद्ध तेन विशिष्ट वस्तु पर्वतादिकमवगाहते। वह्निभावाऽभावसाधारणेन रूपेण वा यः प्रसिद्ध पर्वतादिः साधनाश्रयस्तमेव वह्निविशिष्टमवगाहते। तदनेन नियमात्पक्षधर्मतारूपसम्बन्धद्वयसवित्तावनुमानप्रवृत्तेर्नाऽन्यथेति सूचितम्। एव वाक्यमपि सामान्यप्रसिद्धक्रिय पदार्थे सामान्यरूपप्रसिद्धेनैव पदार्थान्तरेण कारकरूपेण विशिष्टमवगाहते। तदनयो र्विशिष्टविषयता, न पुनरपरिदृष्टचरवस्तुसद्भावविषयतेत्युक्तं भवति। कुतो वाक्यमेवविध? मित्याह—अप्रसिद्धपदार्थवाक्या-

**त्यनुपपत्त्या सामान्यरूपप्रसिद्धिनिबन्धनप्रमाणाऽपेक्षायां तदभावे प्रामाण्याऽभावः। यथा चेह जन्मनि तथा पूर्वस्मिन्पूर्वतरे ऽपि सा ऽपेक्षितेति प्रमाणाऽभावः। तत्र किं विकल्पमात्रमेवेदमनादिशब्दवासनानिबन्धनं स्यात्तच्च पुरस्तात्प्रत्युक्तम्।**

र्थप्रतीत्यनुपपत्त्या पदार्थस्यैवेतरपदार्थविशिष्टस्यैव वाक्यार्थत्वात्। अगृहीतसम्बन्धस्य चाऽपदार्थत्वात्। अतः सामान्यरूपप्रसिद्धिनिबन्धनस्य च कर्तव्यताया प्रमाणस्याऽभावाल्लिङ्गवाक्ययोर्विशिष्टाया तस्या प्रामाण्याऽभाव ।

नन्वक्त कथं शब्दप्रवृत्तिकर्तव्यताऽनुभवभावनाचक्रमनिशमावर्तनइति, किमेव मानान्तरेणे? त्यत आह—यथा चेह जन्मनि तथा पूर्वस्मिन्पूर्वतरे ऽपि सा ऽपेक्षितेति प्रमाणाऽभावः। अयेदमाकूतम्। प्राग्भवीयभावनाजनितकर्तव्यतावगमाद्बालस्य स्वयं प्रवृत्तौ सिद्धायामनादिता परिहारः स्यात्, सैव त्वसिद्धा। तथा हि। यद्विषयाऽनुभवभाविता या भावना सा तत्रैव स्मृतिमाधत्ते, न त्वर्थान्तरेऽपि, अतिप्रसङ्गात्। न च कर्तव्यतासामान्यमपि विशेषप्रवृत्तिहेतुः। न च यत्क्रियाभेदगोचरा प्रागपि भवे कर्तव्यताऽवगतात्क्रियागोचरैव बालेन स्मृता क्रियान्तरे प्रवृत्तिमुत्पादयितुमर्हति। नापि क्रियान्तरे स्मर्यते। न खलु पाटलिपुत्रउपलब्धस्य प्रासादस्य शिलाह्रदे स्मरन्नभ्रान्तः। अतः स्तनपानादिगोचरकर्तव्यताऽवगतौ भावनाया अन्यत्कारण वक्तव्यं, न च तच्छक्यमिह जन्मनि सर्वेषु जन्मस्विति प्रमाणाऽभावः। अपेक्षितोपायतां स्तनपानादेः प्रत्यभिज्ञासिद्धया तज्जातीयतया बालो ऽप्यनुमिमीते। तच्च विषयस्याप्यसिद्धौ सत्यां विकल्पमात्रमेवेदमनादिशब्दवासनानिबन्धनं स्यात्।

अपि च-

कर्त्तुरिष्टाऽभ्युपाये हि कर्त्तव्यमिति लोकधीः।
विपरीते त्वकर्त्तव्यमिति तद्विषये ततः॥

यः खलु प्रत्ययो यमर्थमन्वेति स तस्य विषयः शुक्ल इव शुक्लप्रत्ययस्य। अपेक्षितोपायतां तद्विपरीततां चाऽनुयातौ कर्त्तव्यमिति प्रमितिप्रत्ययौ लौकिकानाम्। तेन तयोर्गोचराविति गम्यते।

तच्च पुरस्तात्प्रत्युक्तं न निरालम्बनं ज्ञानमिति। तत्पारिशेष्यात्कर्तुरीप्सितोपायतैव प्रवृत्तिहेतुः कर्तव्यताज्ञानस्याऽऽलम्बनम्।

अपि चाऽन्वयव्यतिरेकाभ्यामपि सैवाऽऽलम्बनमित्याह—

कर्तुरिष्टाऽभ्युपाये हि कर्तव्यमिति लोकधीः।
विपरीते न कर्तव्यमिति तद्विषये ततः॥

ननु कृतिव्याप्यतद्विपरीततागोचरौ कर्तव्यत्वाऽकर्तव्यत्वप्रत्ययौ कथं समीहिततद्विपरीतसाधनते गोचरयितुमर्हतः? न च साधनताकर्तव्यतयोस्तादात्म्यं, सिद्धसाध्यत्वेन दहनतुहिनवत्स्वभावविरोधादित्यत आह—यः खलु प्रत्ययो यमर्थमन्वेति स तस्य विषयः शुक्ल इव शुक्लप्रत्ययस्य। अपेक्षितोपायतां तद्विपरीततां चाऽनुयातौ कर्तव्यमकर्तव्यमिति प्रत्ययौ प्रवृत्तिनिवृत्तिहेतू लौकिकानाम्। तेन ते अपेक्षितोपायतातद्विपर्ययते तयोः कर्तव्यमकर्तव्यमिति प्रत्यययोर्गोचराविति गम्यते अन्वयव्यतिरेकाभ्याम्। इदमत्राकूतम्। सत्यं, कृतिसाध्यतामात्र कर्तव्यता। न तु तन्मात्र हेतुः, समीहितस्यापि कर्तव्यतया तद्धेतुत्वप्रसङ्गात्। न खलु फलं कर्तव्यमिति प्रवृत्तिगोचरस्तत्साधनं तु स्यात्। न चाऽन्यस्य कर्तव्यताऽन्यच्च प्रवर्तयति। अतिप्रसङ्गात्। साधनतया नाऽतिप्रसङ्ग इति चेत्,

तर्हि प्राप्ताऽप्राप्तविवेकेन साधनत्वमेव प्रवृत्तिहेतुः, न तु तन्मात्रं, अपि तु कर्तुरिष्टाऽभ्युपाय इत्युपपादयिष्यति स्वयमेवाऽऽचार्यः । तस्मात्कर्तुरिति वचनादाचार्यस्य कर्तव्यतैकार्थसमवायिनी समीहितासाधनता प्रवृत्तिहेतुः कर्तव्यतावच्छेदालम्बनमभिमता । न चाऽनयोर्भिन्नकालयोरैकाधिकरण्ये कश्चिद्विरोध इति उपपादयिष्याम । न च कर्तव्यतामात्रोपयोगिनी समीहितसाधनता प्रमाणान्तरपातिनी न प्रवृत्तिहेतुः । कर्तव्यतैव तद्धेतुः । सा च क्वचित्साधनतया ऽवगम्यते, क्वचिच्छब्देन, तेनाऽसत्यामपि समीहितसाधनतायां नित्येषु कर्तव्यता ऽवगम्यमाना प्रवृत्तिहेतुरिति साम्प्रतम् । तेन कर्तव्यतामात्रं प्रवृत्तिहेतुरित्युक्तम् । अपि च भवतु प्रमाणान्तरपातिनी, तथाप्यस्ति हि किंचित्प्रमाणं यदभावात्प्रमेयं निवर्तते, यथा कृतकत्वं भावानामनित्यत्वे प्रमाणम् । अथ च तदभावादनित्यत्वं निवर्तते, नैव ह्यस्ति संभवः अकृतकश्चाऽनित्यश्च भाव इति । तथेहापि कृतिव्याप्यता कार्यता, कृतिश्च पुरुषप्रयत्नः, स चेच्छाद्वेषजीवनयोनिः स्वयोनिनिवृत्तौ न भवति, धूम इव धूमध्वजनिवृत्तौ । न च हिताऽहितप्राप्तिपरिहाराऽसाधनसाधनेषु नैमित्तिकनिषेधाऽपूर्वेष्विवाऽसंभवः । द्वेषजीवने त्वनाशङ्कनीय एवाऽनुपादेयत्वाद्विधेयविषयत्वाच्च । नन्वेतदनुमानं, तच्चाऽपूर्वकर्तव्यताविधायिनि परिपन्थिनि नित्यतया ऽनपेक्षप्रामाण्ये सति शब्दे बाधितविषयतया नोदेतुमर्हति । अबाधितविषयत्वमपि हि पक्षधर्मतावदनुमानसामग्रीनिविष्टमिति तद्विदः । तत्किं सहस्रसंवत्सरे सत्रे सहस्रहायनजीविन एव सन्त्वधिकारिणः ? सहस्रसंवत्सरनिर्वर्तनीयमेतदाम्नायते सत्रम् । सहस्रसंवत्सरजीविनां पुंसामसंभवात्संवत्सरशब्दो जघन्यप्रवृत्तिर्दिवसेष्विति चेत् । न असंभवस्याऽसिद्धेः । आम्नायत एव हि मानान्तर-

**तस्मात्कर्त्तव्यतापि नाऽन्या कर्तुः समीहितोपायतायाः। यथोक्तं "कर्त्तव्यस्य सुखं फल"मिति। कथं तर्हि नित्येषु नित्यता कर्त्तव्यता वा। यथाशक्ति चाङ्गो-**

निरपेक्षत्सहस्रसंवत्सरसत्रविधायिनः सम्भविष्यन्ति सहस्रायुषः पुरुषाः। स्यादेतत्। विवादाध्यासिताः पुरुषाः न सहस्रायुषः पुरुषत्वाद-स्मदादिवदित्यनुमानादसम्भव इति। नन्वागमबाधितमनुमानं नोदी-यतइत्युक्तम्। सत्यं, प्रवृत्त आगमो ऽनुमानं बाधते, तत्प्रवृत्तिरेव तु स्मारितपदार्थोऽन्वययोग्यताऽवधारणपुरःसरा, तदवधारणसमये च बाधितविषयमनुमानं प्रवृत्तं सत्रकर्तव्यतासहस्रसंवत्सराणामन्वयम योग्यत्वान्निरुध्य संवत्सरशब्दं जघन्यवृत्तिमापादयतीति चेत्। न। इहापि समानत्वात्। न खलूपेक्षणीये नैमित्तिकनिषेधाऽपूर्वे प्रयत्नं प्रति प्राधान्येनाऽन्वयमर्हतः। न चैकशब्दवाच्ययोरन्वयो न योग्य-तामपेक्षतइति युक्तम् शब्दाऽवधारणसमये योग्यताहीनयोरन्व-याऽनवधारणेनैकशब्दवाच्याऽन्वयाऽनुपपत्तेः। कामाधिकारे कामा-ऽनुकूलतया कृत्यन्वयोपपत्तिरिति चेत्। किमायातं नैमित्तिकनिषे-धाऽधिकारयोः? तत्र तच्छब्दप्रत्यभिज्ञानात्कामस्याऽश्रुतेरपूर्वमात्रक-र्तव्यताऽवगतिरिति चेत्। तर्हि कर्तव्यताशरीरनिवेशिना ऽकामेनापि भवितव्यं नियोज्येनेव निमित्तवता निषिध्यमानक्रियाकर्त्रा वा श्रुते-नापि। तथा च न नियोगमात्रकर्तव्यता। नैमित्तिकनिषेधाऽधिकारयो-स्तन्मात्रत्वे च कर्तव्यताहानिर्नियोज्याऽभाव इवेति कर्तुरपेक्षितोपा-यता कर्तव्यता, तद्विपरीतता चाऽकर्तव्यतेति सिद्धम्। तदेतदुपसंह-रति—तस्मात्कर्तव्यतापि नाऽन्या समीहितोपायतायाः। अत्रैव भाष्यग्रन्थं पठति—तदुक्तं कर्तव्यस्य सुखं फलम् इति।

अथ चोदयति—यदि कर्तुः समीहितसाधनतैव कर्तव्यता, कथं तर्हि नित्येषु नित्यता कर्त्तव्यता वा? न ह्येतन्नित्यं समीहितसाधनं भवतीति भावः। क्वचित्पाठः कथं तर्हि नित्येऽप्यनित्यता कर्तव्य-

REPRINT FROM THE PANDIT

॥ श्रीः ॥

# आपदेवकृतो

# मीमांसान्यायप्रकाशः

---

काशीस्थरणवीरपाठशालाध्यापकशाब्दिकमीमा-
सकपाठकाभिधश्रीमदनमोहनशर्मनि-
र्मितया टिप्पण्या सनाथः

उपाध्यायोपनामकेन श्रीगङ्गानाथ-
शर्मणा परिष्कृतः

---

काश्याम् ।

मेडिकल्-हाल्-नामके-यन्त्रे-मुद्रितः ।

प्रवृत्त्यनुकूलो व्यापारविशेषः कल्पनीयः। विधिशब्दाभिधेयप्रवर्त्तनासामान्यस्य विशेषमन्तरेणापर्यवसानात्। तत्र को ऽसौ व्यापार इत्यपेक्षायां धात्वर्थावगतसमीहितसाधनत्वमेवेति कल्प्यते। तस्यापि प्रवृत्त्यनुकूलत्वात्। सर्वो हि समीहितसाधनतां ज्ञात्वा प्रवर्त्तते। अन्यप्रेरितो यदीष्टसाधनतां न जानाति तदा नैव प्रवर्त्तते। स्वतन्त्रप्रेरणावादेऽपि तदाक्षिप्तसमीहितसाधनताज्ञानं स्वीक्रियत एव। अन्यथा विधेः प्रवर्त्तकत्वानुपपत्तेः। अतश्चावश्यकत्वात्समीहितसाधनतैव प्रवर्त्तनात्वेन रूपेण विध्यर्थः। एवं च विधिशब्दस्यान्यनिष्ठव्यापारबोधकत्वं लोकसिद्धं सिद्धं भवति।

(१९०) किं च शब्दे एको व्यापारः स्पन्दाद्यतिरिक्तः[३१५] कल्पनीयः। तस्य च स्वप्रवृत्तौ पराधीनप्रवृत्तौ वाकारणत्वेनाक्लृप्तस्य प्रवर्त्तनात्वेन रूपेण ज्ञातस्य प्रवृत्त्यनुकूलत्वं शब्दस्य च परनिष्ठव्यापारज्ञापकत्वेन क्लृप्तस्य स्वनिष्ठव्यापारबोधकत्वम् विधेश्च प्रवर्त्तकत्वनिर्वाहार्थं धात्वर्थस्य समीहितसाधनत्वमिति कल्पनाद्वरमावश्यकस्यैव समीहितसाधनत्वस्य स्वप्रवृत्तिहेतुत्वेन क्लृप्तस्य प्रवर्त्तनात्वेन रूपेण विध्यर्थकल्पनं लाघवात्, अन्यनिष्ठत्वाच्च।

(१९१) न च "विधेः प्रवर्त्तकत्वनिर्वाहार्थं समीहितसाधनत्वकल्पनात्प्रेरणानभिधाने च विधेः प्रव-

---

३१५ शाब्दभावनारूप।

र्त्तकत्वाभावाद्वा त्वर्थस्य समीहितसाधनत्वकल्पक-
मेव नास्तीति" [316]वाच्यम् । प्रवर्त्तनाभिधानेनैव
तन्मतेऽपि विधेः प्रवर्त्तकत्वाद्विध्यभिहितस्य प्रवर्त्त-
नासामान्यस्य विशेषमन्तरेणापर्यवसानात्समीहित-
साधनत्वाक्षेपकत्वात् । न चेष्टसाधनत्वस्य विध्य-
र्थत्वे सन्ध्योपासनं ते इष्टसाधनं तच्च कुर्विति सह-
प्रयोगानुपपत्तिरिति वाच्यम् । इष्टसाधनत्वस्य
विशेषरूपेण विधिनाऽनभिधानात् । प्रवर्त्तनात्वेन
रूपेणाभिधानात् । सामान्यशब्दस्य च विशेषशब्देन
दृष्टः सहप्रयोगः । पाञ्चालराजा द्रुपद इत्यादौ ।
तस्मात्समीहितसाधनतैव प्रवर्त्तनात्वेन रूपेण वि-
ध्यर्थः । [317]सैव च तेन रूपेण शब्देनैवाभिधीयत
इति शाब्दी भावना ।

(१९२) उक्तवार्तिकस्यापि अयमेवाभिप्रायः । [318]
अभिधीयते सा ऽभिधा समीहितसाधनता सैव प्रव-
र्त्तनात्वेनाभिहिता पुरुषप्रवृत्तिं भावयतीति भावना
तां लिङादय आहुरिति । यथाहुः

पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्त्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्त्तनामिति ।
(तं वा.)

तत्सिद्धं यजेतेत्यत्र लिङ्त्वांशेन शाब्दी भाव-
नोच्यत इति ।

---

३१६ प्रेरणाया अत्र कल्पकत्वात् ।
३१७ इष्टसाधनतैव ।
३१८ भाव प्रत्यय, ।

## अथ आर्थीभावना ।

(१९३) आख्यातांशेनार्थीभावनोच्यते ।

(१९४) "ननु केयमार्थी भावना । कर्तृव्यापार इति चेन्न । यागादेरपि तद्व्यापारत्वेन भावनात्वोपपत्तेः । तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावादिति" [३१८] चेत् ।

(१९५) अत्राहुः । सत्यं न यागो भावना किन्तु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः स भावना । स एव चाख्यातांशेनोच्यते । यजेतेत्याख्यातश्रवणे यागेन यजेतेति प्रतीतेर्जायमानत्वात् । यश्च प्रयत्नपूर्वकं गमनादि करोति तस्मिन्देवदत्तो गमनं करोतीति करोतिप्रयोगदर्शनात्, वातादिना स्पन्दमाने तु नायं करोति किं तु वातादिना ऽस्य स्पन्दो जायत इति प्रयोगात्करोत्यर्थस्तावत्प्रयत्नः । करोतिसामानाधिकरण्यं चाख्याते दृश्यते । यजेत यागेन कुर्यात्, पचति पाकं करोति, गच्छति गमनं करोतीति । अतश्च करोतिसामानाधिकरण्यात्प्रयत्नस्याख्यातवाच्यत्वम् । न च रथो गच्छतीति प्रयोगानुपपत्तिः-रथे यत्नाभावादिति वाच्यम् । वोढ्रश्वगतं प्रयत्नं रथे आरोप्य प्रयोगोपपत्ते. ।

(१९६) यन्मतेप्यन्योत्पादनानुकूलं व्यापारसामान्यं भावना तन्मतेपि रथे गमनातिरिक्तव्यापारानुपल-

---

३१८ न्यायसुधाकारा ।

ब्धे रथो गच्छतीति प्रयोगस्यौपचारिकत्वमेवेति । अतश्च यत्न एवार्थी भावना । यथाहुः ।

प्रयत्नव्यतिरिक्तार्थीभावना तु न शक्यते ।
वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते इति ।

(१९७) अन्ये त्वाहुः । भवितुर्भवनानुकूलो भावकव्यापारस्तावद्भावना । यस्मिन्व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति तादृशो व्यापार इति यावत् । स एव चाख्यातार्थः । कुठारेण छिनत्तीत्याख्यातश्रवणे हि भवत्येतादृशी मतिः कुठारेण तथा व्याप्रियेत यस्मिन्व्यापारे कृते कुठारात् छेदनं भवतीति । एवं यजेत स्वर्गकाम इत्यस्यायमर्थः—यागेन तथा व्याप्रियेत यस्मिन्व्यापारे कृते यागात्स्वर्गो भवतीति । स च व्यापारः [320]क्वचिदुद्यमननिपतनादिः [321]क्वचिच्चाग्न्यन्वाधानादिब्राह्मणतर्पणान्तः । कथंभावाकाङ्क्षायां विशेषरूपेण पश्चादवगम्यते अन्योत्पादनानुकूलत्वेन सामान्यतस्त्वाख्यातादेव । रथो ग्रामं गच्छतीत्यत्रापि आख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते । रथस्तथारूपगमनेन व्याप्रियते यस्मिन्व्यापारे कृते गमनाद्ग्रामप्राप्तिर्भवतीति प्रतीतेः । नत्वत्र गमनमात्रमाख्यातार्थः तस्य धातुनोक्तत्वात् ।

(१९८) तत्रको ऽसौ व्यापार इत्यपेक्षायां पूर्वोत्तरावान्तरदेशविभजनरूप इति पश्चादवग-

---

३२० छिदादौ ।   ३२१ यागादौ

म्यते। पूर्वेण प्रदेशेन विभज्योत्तरेण संयुज्य रथो ग्रामं गच्छतीति प्रयोगात्। उद्यम्य निपात्य-कुठारेण-च्छिनत्तीति-वत्। एवं देवदत्तः प्रयतत इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नः भवतीति प्रयत्नानुकूलो व्यापार एवाख्यातार्थो न तु प्रयत्नः। तस्य धातुनोक्तत्वात्। व्यापारवि-शेषापेक्षायां चेच्छादिः, पश्चादवगम्यते उद्यमन-निपातनवत्। तथा च सर्वत्रानुगतत्वादन्योत्पादना-नुकूलव्यापारसामान्यमेवाख्यातार्थः, न तु प्रयत्नमा-त्रम्। रथो गच्छति देवदत्तः प्रयतत इत्यादिषु तदभावात्। न चात्रौपचारिकत्वं वक्तुं युक्तम् मुख्ये सम्भवति तस्यान्याय्यत्वात्। करोत्यर्थोऽप्यन्योत्पाद-नानुकूलो व्यापारएव न प्रयत्नमात्रम्। करोतेश्चे-तनाचेतनकर्तृकाख्यातसामानाधिकरण्यादिति।

(१९९) तत्सिद्धमन्योत्पादनानुकूलो व्यापार आर्थी भावनेति। सैव च यजेतेत्यत्राख्यातांशेनोच्यते भावये-दिति। तस्याश्च भाव्याकाङ्क्षायां स्वर्गादिर्भाव्यत्वेन सम्बध्यते। करणाकाङ्क्षायां यागादिः करणत्वेन सम्ब-ध्यते। प्रयाजादय इतिकर्तव्यतात्वेन। एवं च यजे-तेत्यादिना स्वर्गाद्युद्देशेन यागादेर्विधानात्सिद्धं यागा-देर्धर्मत्वं प्रयोजनमुद्दिश्य वेदेन विहितत्वादिति।

(२००) सोऽयं धर्मो यदुद्देशेन विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः, श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु

निश्श्रेयसहेतुः[322]। न च तदर्पणबुद्ध्या ऽनुष्ठाने प्रमाणाभावः। यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमिति स्मृतेः (भगवद्गीता)। [323]अस्याश्चाष्टकादिस्मृतिवत्प्रामाण्यादित्यन्यत्र विस्तरः।

---

क्वाऽहं मन्दमतिः क्वेयं प्रक्रिया भट्टसम्मता।
तस्माद्गुरूक्तेर्विलासोयं गोविन्दगुरुपादयोः।
ग्रन्थरूपो मदीयोयं वाग्व्यापारः सुशोभनः।
अनेन प्रीयतां देवो गोविन्दो भक्तवत्सलः॥२॥
इति श्रीमदनन्तदेवसूनुना आपदेवेन कृतं मीमांसान्यायप्रकाशसंज्ञकं मीमांसाप्रकरणम्॥



---

३२२ मोक्षहेतुः। स च भोगायतनभोगसाधनभोग्यानामत्यन्तनिवृत्तौ भवति संसारसम्बन्धविलयस्यैतन्मते मोक्षत्वादिति शास्त्रदीपिकादौ प्रपञ्चितम्।

३२३ चकारो यद्यपीत्यर्थकः। यद्यप्यस्याः पौरुषेयत्वं तथाप्यष्टकादिस्मृतिवत्तन्मूलभूतश्रुत्यनुमानेन निर्णायकत्वम्। एवं चैकदेशानुमत्यानया पङ्क्त्या स्मृतेः प्रामाण्यमुपपादितमिति दिक्।

पुनरपरेण तमेव वर्णयन् वसन्तवायोर्मन्दता परामृशन्नाह-**मलयेति।** मलयशिखरात दक्षिणपर्वतमारभ्य आकैलासम उत्तरपर्वतपर्यन्त भुवनवलय जगतीतल मनेभवस्य कामदेवस्य शासनात आज्ञया जेतु स्वायत्तीकर्तु वाञ्छन इच्छन सन वसन्तसमीरणो वसन्तवायु कैलासाग्रे कैलासशिखरे विहिता निष्पादिता वसतिर्वासो येन स त, कैलासस्थमिति यावत भुजङ्गधर सर्पालङ्कृत हर शिव मनसि विमृशन चिन्तयन भीत शिवमनोभवयो वैर स्मृत्वा स्वस्वाभिनाशक तमथ च स्वभक्षकान सर्पान दृष्ट्वा भयविह्वल सन शनै शनै मन्दमन्द प्रयाति इति शङ्के। शिवभयमेवास्य मन्दत्वे हेतुरित्यह मन्य इति भाव। हरिणी वृत्तम। हेतूत्प्रेक्षा चात्रालङ्कार ॥ ५४ ॥

लक्ष्मणोऽपि वसन्त वर्णयन वसन्तवायुमन्दतामन्यथा सम्भावयन्नाह-**पथिपथीति।** पथिपथि स्रवन्ति गच्छन्ति मधुशीकराणि मकरन्दकणा यस्मात तत् तथाभूत कुसुमनिकर पुष्पसमूह वर्षन्तीभि लता एव या लोलाक्ष्य चञ्चलापाङ्गा स्त्रिय ताभिः हर्षेण सहित यथा स्यात तथा अर्चित इव मधुकरवधूनाम भृङ्गीणा गीतेषु गुञ्जितेषु आसक्त बद्धचित्त कुरङ्गक हरिण स्वोचितवाहनमास्थित आरूढ सन वसन्तसमीरणो वने मन्दमन्द प्रयाति। वायो कुसुममकरन्देन गुरुता मन्थरता तथा च कुरङ्गकस्य गीतासक्ति प्रसिद्धा। अतो वाहनस्य गीतासक्तचित्ततया स्वय च कुसुमरसमन्थरतया गतिव्याघात समुचित एव। पूर्ववदलङ्कारो वृत्तञ्च ॥ ५५ ॥

**सायन्तनेति।** साय भव सायन्तन, सायकालीनमिति यावत एवम्भूत यद्देवतार्चन तत्रोचितानि ॥

**बाढमिति** प्रतिज्ञायाम। "भृशप्रतिज्ञयोर्बाढम" इत्यमर। चण्डिका नमस्कुर्वन्नाह **मात कृपातरङ्गिणीति।** करुणाया कृपाया। "करुणा तु कृपायां स्यात" इति हैम। तरङ्गिणी आश्रयभूता सरित तत्सम्बुद्धै। पुन विकसता (कृपयेति शेष.) नयनयो यदमृत तस्य या ऊर्मयो लहर्य ता एव शीकरा बिन्दवो ("शीकरोऽम्बुकणा स्मृत" इत्यमर) यस्या सा तत्सम्बुद्धै, करुणा मृतमयीति य वत। एवम्भूते। तरुणो नवीनो य सितकिरण चन्द्र स एव चूडामणिः मौलिभूषण यस्य स तस्य चन्द्रशेख स्य रमणी तत्सम्बुद्धै हे गौरि मात त्वा नमस्यामि नमस्करोमि। (नमो वरिवश्चेत्यनेन नमशब्द त्क्यच लटि रूपम)॥ वृत्तमत्र उपगीतिप्रभेद एव ॥ ५ ॥

**मदकलेति।** मदेन कल समधुरास्फुटध्वनि य कलहस' तेन' उत्तसिता भूषिता या सितसरोजराजय श्वेतकमलपङ्क्तय ताभिः राजिता विभूषिता इय सरसी पद्मपूर्ण सर' मे चेत चित्त सरसी करोति रसैकतानता नयतीत्यर्थ.। **कलहंसेति।** कलहसस्य पोतः

शावक । **मदकलकरीति** । मदेन कलो य करी गजः तस्य या कनकशृङ्खला पादबद्धा तस्या यो मणिः तस्य रणितं शब्दमनुकरोति य स । गजगमनसादृश्यात नायिकागमनस्यास्या नूपुरध्वनो गज शृङ्खलाध्वनिसादृश्यम । **राजहंसेति** । राजहंसस्य (गतिसाम्यात) शिञ्जितं हरति जयति यत्तत । **सलीलेति** । सलील सहेल यथा स्यात्तथा चलता चरणेन रणन्तौ शब्दायमानौ मणिनूपुरौ यस्या सा तया तथाभूतया । **तदवलोकयामीति** । राजकुमारो न कस्यापि स्त्री अपि तु स्वयवरविषयभूता सर्वजनावलोकनीयेति भाव

(३२) जानकी वर्णयन्नाह-**केयमिति** । श्याम यदुपल निकषस्तलम् तस्मिन् उल्लेखभूता या हेम्न स्वर्णस्यैका रेखा तद्वत लग्नानि यथास्थान सन्निविष्टानि यानि तै तथाभूतै । लतामध्ये स्थिता जानकी श्यामोपलगतहेमरेखेव भातीति भाव । पुन कनककदल्या य. कन्दली गर्भ तद्द्वारै । पुन हारिद्र हरिद्रासम्बन्धि यदम्बु जलम तस्य सहचर समान कान्तिपूरम् उज्ज्वलकनककान्ति वहद्भि अङ्गै रुपलक्षिता सती कामक्रीडार्थं या भवनवलभी भवनगता चन्द्रशाला सौधोर्ध्ववेश्मेति यावत । (' शुद्धान्ते वलभीचन्द्रशाले सौधे र्ध्ववेश्मनी " इतिरभस ) तस्या दीपिका इव उद्योतिनीव आविरस्ति । सेयं का । अत्र रूपकोपमयो सङ्कर । मन्दाक्रान्ता वृत्तम ॥ ६ ॥

**अतिमात्रमिति** । अतिशयमित्यर्थ । **मन्मथेनेति** । अनेन रामकृतोपवनशोभा सूचिता । **अनवद्याङ्गीति** । न अवद्यानि निन्दनीयानि अङ्गानि यस्या. सा तत्सम्बुद्धौ । अत्र सख्या संस्कृतोक्ति वैदग्ध्य ख्यापयति। यथोक्त भरतेन-'संस्कृतभाषाचारा प्रायो नाट्येषु न स्त्रिय श्लाघ्याः । क्वचिदपि तप प्रभावाद्विदग्धताबोधनाच्च शस्यन्ते " इति ।

सीताया सर्वेषामङ्गानामनवद्यता प्रदर्शयन स्वोक्ति समर्थयते-**बन्धूकेति** । बन्धूकस्य मधुरीपुष्पस्य बन्धु सदृश अस्या अधर । चक्षु नेत्र च सितकेतकस्य आभा इव आभा यस्य तत्तथाभूतम । कपोल. मधूकस्य पुष्पविशेषस्य कलिकावन्मधुरो मनोहर । दन्तानामवली पङ्क्ति विजिता दाडिमबीजाना राजि श्रेणी यया सा तथाभूता । आस्य मुख च विकच प्रफुल्ल यत पङ्कज तस्मै दत्त दास्य नीचभावो येन तत् तथाभूत, न्यग्भावितप्रफुल्लपङ्कजमिति यावत । तदास्यदास्येऽपि गतोऽधिकारिता न शारद पार्वणशर्वरीश्वर इति नैषधचरितोक्तिरत्रानुसन्धेया । अत्रोपमाव्यतिरेकयो· सङ्कर वसन्ततिलकं वृत्तम ॥ ७ ॥

**मुग्धाया इति** । अपरिणतबुद्धे. अनतिक्रान्तशैशवामात्राया इत्यर्थ । **प्रकृतीति** । प्रकृत्या स्वभावेनैव कमनीय सुन्दरो य. पदार्थ तस्य परिशीलनस्य परिचयस्य अथ च गुणग्रहणस्य यदौचित्य तस्मिन चातुरी ।

(३३) सीताया कमनीयपदार्थपरिशीलनौचित्यचातुरी समर्थयमानआह-**पदाभ्यामिति**। पदाभ्यां स्वचरणाभ्याम् उन्निद्रा प्रफुल्ला शोणाम्बुजस्य रक्तकमलस्य रुचिं शोभाम् अधरयति खलयति तिरस्करोतीति यावत। कराभ्यां हस्ताभ्यां नवकिसलयानां नवपल्लवानाम् अरुणतां रक्ततां आदत्ते गृह्णाति। दशनवसनयोरधरयोरग्रेण प्रवालस्य विद्रुमस्य छाया शोभा पिबति गृह्णाति। स्मितस्य ईषद्धसितस्य ज्योत्स्नाभिः कान्तिकलापे हिमरुचे चन्द्रस्य शोभां हसति तिरस्करोति। तद्गुणव्यतिरेकयोरत्र सङ्करः। शिखरिणी वृत्तम्॥ ८॥

**शशधरेति**। शशधरमौले चन्द्रचूडस्य देहार्धधारिणी तत्सम्बुद्धौ। **त्रिभुवनेति**। त्रिभुवनमेव गृहं तस्य सुवासिनी तत्सम्बुद्धौ। जगद्वासिनीत्वाल्लक्ष्म्या एतद्विशेषणं सङ्गच्छते। **समुचितैवेति**। शशधरमौलिदेहार्धधारिणीत्यत्र गौर्याः स्वपतिसाहित्यवर्णनेन स्वकीयसमुचितपतिप्राप्त्यभिलाषा सूचिता जानक्येति हृदयम्। **अलीकेति**। न मे कश्चिदेतादृशो गूढातिशय आसीदिति भावः।

सखी जानक्यर्थं देव्या आशिष याचते-**कान्तमिति**। इन्दुमणीनां चन्द्रकान्तमणीनां यद्धाम तद्वत् कोमला कमनीया तत्सम्बुद्धौ पुनः कोमलेन्दुमुकुटस्य बालचन्द्रशेखरस्य अङ्के शेते या सा तत्सम्बुद्धौ। एवम्भूते हे गौरि। अचिरेण शीघ्रमेव मम इन्दुवत् सुन्दरमुखं यस्याः सा तथाभूता सखी जानकी इन्दुवच्चारु चन्द्रवत्सुन्दरं कान्तं पतिं विन्दतां लभताम्। इदमेव मया भवत्याः सकाशाद्याच्यत इति शेषः। रथोद्धता वृत्तम्।

**परिणयेति**। परिणयस्य विवाहस्य यो मनोरथः तस्य प्रणयी, विवाहाभिलाषिणीति यावत्।

**वयस्सन्धाविति**। शिशुत्वेऽपक्रान्ते उचित एव सख्याः जानकीविवाहाभिलाषः। वयःसन्धिं वर्णयन्नाह-**अपक्रान्त** इति। शैशवे बाल्यावस्थायाम् अपक्रान्ते व्यतीते सति, तरुणिमनि तरुणस्य भावः तरुणिमा तस्मिन् अगन्तुमनसि सति आगन्तुं मनो यस्य स तस्मिन् (तुं काममनसोरपीत्यनेन मकारलोपः) न चागते इति यावत्। पुनः मुग्धत्वे मुग्धावस्थायां प्रयाते सति अथ च चतुरिमणि चातुर्ये आश्लेषरसिके सति तस्याः आलिङ्गनाकाङ्क्षिणि सति। इन्दीवरदृशः कमललोचनायाः यद् वपुः केनापि वयसा न स्पृष्टं बाल्ये गते स्पष्टं तारुण्ये चानागते तत् पञ्चेषोः पञ्चबाणस्य कामदेवस्य परमं मर्म सारभूतं तात्पर्यम् इह जगति जयति सर्वोत्कर्षेण वर्तते। शिखरिणी वृत्तम्॥ १०॥

(३४) **राजहंसेति**। राजहंसस्य कन्यका पूर्ववर्णितराजहंससहचरी तत्सम्बुद्धौ। पक्षे राज्ञां मध्ये यो हंसः श्रेष्ठो जनकः तस्य कन्यका

सीता तत्सम्बुद्धौ । लक्ष्मणो राजहंसी वक्ति । किन्तु तदुक्ति' सीता पक्षेऽपि सङ्गच्छते ।

**करिकलभेति** । करिकलभस्य गजशावकस्य य कण्ठनिर्घोषः शब्द तद्वन्मधुर सुश्राव्य । वात्सल्यात्कलभपदन्यसनम । यद्यपि कल भशब्दस्य करिशावकार्थत्वे करिपदसन्निवेशो व्यर्थ एव तथापि तत्प्रयोग –'विशिष्टवाचकपदाना सति विशेषणसमभिव्याहारे विशेष्य मात्रपरत्वम्''–इति वामनोक्त्या समर्थनीय ।

लतामुपालम्भयन्नाह–**स्तनविजितेति** । अयि लतिके । स्तनाभ्यां विजिता स्तवकाना गुच्छाना श्री शोभा यस्या सा तथाभूता । तथा च अधरेण अधरिता तिरस्कृता प्रबालस्य नवपल्लवस्य ''प्रबालो विद्रुमे वीणादण्डेऽभिनवपल्लवे'' इति हैम नवा लक्ष्मी शोभा यस्या सा तथाभूता सती त्व तरलदृश चलापाङ्गा ता जानकी तिरयन्ती प्रच्छादयन्ती लज्जा नावलम्बसे किम । व्यापको व्याप्य स्वगुणेन प्रच्छादयति त्व पुन. स्वोत्कृष्टा कथ प्रच्छादयसीति भाव । गीतिश्छन्द ॥ ११ ॥

**श्यामच्छवीनामिति** । श्यामा छवि कान्तिर्येषान्ते तेषा तथाभूताना कदलीदलानाम अन्तराले प्रादुर्भवन्ती नयनपथम अधिरोहन्तीय नवनीरदाना नवीनमेघानाम अन्तराले चान्द्री कलाइव कौमुदीव मा चकोरवन्मुदित करोति आह्लादयति । यथा मेघान्तराले दृश्यमाना चान्द्रमसी कला चकोरम् आनन्दयति तथैव इय श्यामकदलीदलानामन्तराले आविर्भवन्ती माम् आह्लादयतीत्यभिसन्धि । इन्द्रवज्रे पेन्द्रवज्रयो सङ्कर उपजातिश्छन्द ॥ १२ ॥

कदलीमुपालम्भयन्नाह–**हे बालहेमेति** । बाला न कठोरा, मृदुलेति यावत अथ च हेम्न सदृशी कान्ती लतिका तत्सम्बुद्धौ । ध्रुव निश्चितमेव तरलायताक्ष्या चलापाङ्गाया ऊर्वो श्रिय शोभा (मृदुलता स्वर्णसदृशत्व च) कलयितु प्राप्तुम त्वम ईहसे वाञ्छसि चेत तर्हि विलासवती हावभावलावण्यशालिनीम एना जानकी चिर बहुकालपर्यन्त विलम्बय । स्वसन्निधाविति शेष । हि यत स्त्रीणा कला परिचिता सत्य स्थिरता प्रयान्ति स्थिरीभवन्ति । यत एव ततो यदि चिरकालमिय तव सन्निधौ तिष्ठेत् तदैव त्वमस्याः ऊरुश्रिय लभेथा. इति भाव । अत्र परिकरोत्प्रेक्षाव्यतिरेकार्थान्तर न्यासा अलङ्कारा । वसन्ततिलक वृत्तम् ॥ १३ ॥

(३५) **शिखण्डीति** । शिखण्डिनो मयूरस्य पिच्छेन बर्हेण मण्डित' भूषित कर्णपूरो यस्य स । **मुग्धत्वेति** । मुग्धत्वेन बालभावेन (कारणेन) विमुक्तो लोचनविकार अपाङ्गभङ्गि येन स । बाल तया वक्रेक्षणाद्यस्य नैव प्रवृत्तमित्यर्थ । केयमस्यामित्यादिना भाविनी तस्या निजभक्तिपात्रता व्यनक्ति। **सुचिरेति** । यथा चिरकालपरि-

चयजनिता भक्ति सुमित्राया तथैवास्यामपीत्यर्थ । इम कुमारमि त्यादिना भाविन तयोर्विवाहमाक्षिपति । सख्यपि जानक्या विवा हमाक्षिपति ।

कस्यचिदिति रामचन्द्र परामशति। **अपरिशीलितास्वपीति।** अपरिचितास्वपीत्यर्थ । **परिसरेति।** परिसरे समीपे वर्तते य स तेन। **नाथवन्तमिति।** सरक्षकमित्यर्थ । **कुसुमित इति।** यतो रामचन्द्रोऽत्रैवास्ति अतो नूनमनयोः सीतारामचन्द्रयोः परस्पराालोकनेन प्रीतिर्जनयिष्यते ततश्च मे समीहित सिध्येदिति भाव.। मनोरथद्रुमश्च सीताविवाहसम्बन्धो ।

**पुनर्व्यावृत्त्येति** । सीताया· गमनेच्छा सङ्कोचशीलजन्या, पुनरावर्तन च रामचन्द्रदर्शनोत्कण्ठाजनितम, सहकारपादपदर्शन तु व्याजमात्रमेवेत्यवधेयम ।

(३६) सीताया· प्रत्यागमन वर्णयन्नाह-**मन्मनइति।** मम मन एव यत्कुमुद तस्यानन्दे आह्लादने शरद शरत्कालीना पार्वणशर्वरी पौर्णमासीरात्रिरिय पुनरप्यभिवर्तते व्यावृत्ता भवतीति। अलङ्कारोऽत्र च परम्परितरूपकम ॥ १४ ॥

पुनर्जानकी वर्णयन्नाह-**वहत्यस्याइति।** अस्या. जानक्या. दृष्टिः विकच प्रफुल्ल यन्नीलोत्पल तस्य तुला तुलना वहति भजते। इद मस्या वदन मुखम् अखण्डस्य पूर्णस्य चन्द्रस्य अभिख्या शोभाम अभिख्या नाम शोभयो· इत्यमर । कलयति भजते। अस्या. कुचौ किञ्चित ईषत मीलतो मुकुलितयो कमलयो· तुलना समता कन्दलयत· प्राप्नुत । चिकुरनिकुरम्बु केशपाश चित्रा विचित्रां तम - शोभा रात्र्युचिता कुरुते। जानक्या शरत्पार्वणशर्वरीरूपत्वसमर्थनप रतयाऽय श्लोको व्याख्येयो भवति। वदनेन्दो पूर्णत्व कुचकमलयोर्मुकुलितत्व मुखचन्द्रस्य पश्चाद्भागे केशतमस्त्वमित्यादिक सर्व शारद पार्वणशर्वरीत्व सूचयति। किन्तु अस्मिन् पक्षे रात्रौ दृष्टिकमलविकचत्ववर्णन कविकुलसम्प्रदायविरुद्धमित्यन्यथैव व्याख्यात.। शिखरिणी वृत्तम् ॥ १५ ॥

**कथमिति।** वासन्तीलतया सह यस्य सहकारपादपस्य सङ्गमोऽभिलषित तस्य रामचन्द्राभिमुख्यवर्णनेन भङ्ग्या भावि वृत्तं सूचितम । **नखेति।** नखशिखाभि विलिखितै· चिह्नितै कोमलदलै नव पल्लवै । **विदग्धेनेति।** कामकलाकलापकोविदेनेत्यर्थ·। **अथवेति।** अथ वा मन्मथ एव चूतलतिका निजचापयष्टि मत्वा ता धृतवान । तदङ्गुलीरेखाश्चैता इति भाव । सर्वमेतद्रामचन्द्रस्पर्शबोधकम् ।

(३७) सीताया सम्भावनामन्वयन् चूतलतिकाया न मन्मथस्य निजचापभ्रान्ति· अपितु जानकीतनावेवेत्यभिप्रायेणाह-**मत्वेति।** हे शशिमुखि पुष्पधन्वा काम· तव तन्वीम् अनतिस्थूला तनुलतां

निज चापमिति मत्वा (त्रैलोक्यमोहनत्वादुभयोः साम्यं तन्मूला च भ्रान्तिः) मध्यदेशे मुष्टिना बभार विधृतवान्। अमुमेवार्थं काव्यलिङ्गेन समर्थयमानश्चाह-**यस्मादिति** । यस्मात् कारणात् अत्र तव मध्यदेशे त्रिभुवनवशीकारमुद्रामनुकुर्वन्ति याः ताः तथाभूताः (रेखायास्त्रित्वेन जगतश्च त्रित्वेन त्रिभुवनवशीकारेत्याद्युक्तिः) तिस्रोऽङ्गुलीसन्धिरेखाः कुसुमायुधकराङ्गुलीसन्धिचिह्नानि त्रिवलिकपटात् उदरदेशवर्तिवलित्रयमिषेण भान्ति शोभन्ते । अत्र प्रथमार्धे भ्रान्तिमानलङ्कारः, उत्तरार्धे त्वपह्नुतिः, मन्दाक्रान्ता वृत्तम् ॥ १६ ॥

वासन्तीलतोपरि भ्रमतो भ्रमरान् वर्णयन्नाह-**वासन्तीति** । इन्दिन्दिरा भ्रमराः सुन्दरं मनोहरं वासन्तीरसबिन्दुं माधवीमकरन्दस्यन्दं चरन्ति पिबन्ति । अथ च चिरमन्दिरं चिरकालवासस्थानमरविन्दं कमलं मन्दमन्दं शनैः शनैः परिहरन्ति त्यजन्ति । सरोजतो वासन्त्या उत्कर्षसूचकमिदम् । वृत्तमत्रार्याप्रभेद एव ॥ १७ ॥

सीताया लतासाम्यं प्रदर्शयन् आह-**निर्मुक्तेति** । निर्मुक्ता शैशवदशा बाल्यावस्थैव शिशिरं तदाख्यं ऋतुर्यया सा । नवीनं नूतनं सम्प्राप्ता यौवनमेव यो वसन्तः तस्य मनोरमा श्रीः शोभा यया सा । पुनः उन्मीलितौ मुकुलितौ स्तनावेव नवस्तबकौ यस्याः सा । एवम्भूता एणीदृशो मृगलोचनायाः तनुलता (तनुर्लतेव) नोऽस्माकं मुदं निकाममतिशयं तनुते कुरुते। अतः किं लतान्तरवर्णनयेति पूर्वेण सम्बन्धः । यथा शिशिरात्यये वसन्तागमे च लता किञ्चिद्विकसितकुसुमा अतीव आह्लादयति तथैव इयमपि त्यक्तशैशवावस्था सम्प्राप्तयौवना ईषदुन्मीलितकुचा नितान्तं मनो रमयतीति परिस्फुटार्थः । रूपकमत्रालङ्कारः । वसन्ततिलकं वृत्तम् ॥ १८ ॥

**इयमसाविति** । अनेन लतोपसरणमुखेन सीतायाः स्वयं रामचन्द्राधिष्ठितोपवनप्रदेशोपसर्पणं परामृशति सखी । अत एव जानक्याः सप्रणयकोपोक्तिः । परिसरं समीपमित्यर्थः ।

सीताया प्रणयकोपावस्थां वर्णयन्नाह-**अमलमृणालेति** । अमलो निर्मलो यो मृणालकाण्डः मृणालनालः तद्वत् कमनीया मनोहरा कपोलस्य रुचिः कान्तिः यस्याः सा तस्यास्तथाभूतायाः तरलं चञ्चलमत एव सलीलं लीलया सहितं यचोलनलिनं तद्वत् प्रतिफुल्ले दृशौ यस्याः सा तस्यास्तथाभूतायाः । पुनः विकसन् प्रफुल्लो योऽशोकस्तद्वत् शोणा रक्ता करस्य कान्तिः बिभर्ति या सा तस्यास्तथाभूतायाः । सुतनोः रमणीयाकृतेः रमण्याः मदेन यौवनावलेपेन लुलितानि चञ्चलानि ललितानि लीलायितानि सुकुमाराङ्गविन्यासाः शृङ्गारभावजानि, सविलाससञ्चरणादीनीति यावत् । मनः हरन्ति मनोरमतया आकर्षयन्ति । स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः इत्यमरः ।

नर्दटक वृत्तम। तल्लक्षण च "यदि भवतो नजौ भजजला गुरुर्नर्दटकम्" इति ॥ १६ ॥

(३८) रामचन्द्र दृष्ट्वा तमेव वर्णयन्त्याह **स्फुरन्तेति** । **स्फुरन्** प्रफुल्ल अथ च पेशल कोमलो य उत्पलपलाश कमलपत्र तस्य पुञ्जवत समूहवत श्यामल । पुन महेशस्य सोमशेखरे मनोहरे मौलौ स्फुरन भासमानो य सोम चन्द्र तद्वत कोमल स्निग्ध कमनीय इति यावत । पुन अनङ्गस्य कामदेवस्य रूपस्य खण्डन. ततोऽप्यधिकतरसौन्दर्यशाली । एवम्भूत शिखण्डमण्डन मयूरपुच्छभूषित मे नयनयो सुखनानन्द ददाति । सोऽय क । पञ्चचामरवृत्तम ॥ २० ॥

**अन्यचित्तेति** । लतातिरिक्तवस्त्वायत्तचित्तेयम् अतो न मद्वचन शृणोतीत्यर्थ । **चित्तगजेति** । चित्तमेव यो गज तस्य बन्धनाय आलान स्तम्भ "आलान बन्धनस्तम्भ" इत्यमर । अस्मिन्नेव आकृष्टचित्तेयमिति भाव । **अयमिति** । रामपर कोधपर चेति चाटूक्ति । हृदयमित्यत्र उपान्वध्याङवस इति द्वितीया ।

**अवगताऽस्मीति** । किमिय मे सखी ज्ञातवती यदह रामचन्द्र परवशाविना सञ्जातेति भाव । **लज्जामिति** । सख्युक्ति रा परानेवावगत्य सीताया लज्जानाटनम । **अन्यतो नयामीति** । अन्यपरामेव निजोक्तिमवधारयामीत्यर्थ । कथमित्यादिना निजोक्त कोपरतया प्रदश्य सीताया लज्जामपसारयति ।

**रूम्भाविताऽसीति** । अनाकर्णितकेनादत्तोत्तरा त्वमिति भाव । (३९) **आकारेति** । आकारस्य (आरामपदगतस्य) प्रकटनेनैव (उच्चारणेनैव) आकारस्य (चित्तगतवस्तुस्वरूपस्य, रामविषयकप्रीतिचेष्टाया इति यावत) गुप्ति गोपन कृतवत्यसि । 'रामे' इत्यस्य स्थाने 'आरामे' इत्युक्त्वा स्वचित्तविश्रामस्थानस्य रामविषयकप्रीते स्वरूपगोपन कृत्वा मा प्रता यसीति भाव । आकारप्रकटनेन आकारगुप्ति मयत्र विरोधाभास । यद्वा यद्यपि त्वम् 'आ' इत्यक्षर रामे योजयसि । तथापि स्पष्टमिद यत्त्व तस्याक्षरस्य गोपन वाञ्छसीति भाव । यद्वा आकारस्य त्वद्वदनविकारस्य रोमञ्चादे प्रकटनेन प्रकटत्वेन आकारस्य (आ इत्यक्षरस्य) गोपनमेव त्वदभिलषितमित्यर्थ कृतवत्यसि ।

सीतामधोमुखी दृष्ट्वाऽऽह-**उत्तरङ्गेति** । हे कुरङ्गलोचने मृगाक्षि कमलगर्वमोचने कमलदर्पदलने कमलादप्यधिकतरकमनीये लोचने उत्तरङ्गय उन्नमय तेन च अम्बरमाकाश कलिन्दनन्दिन्या यमुनाया. वीचीना तरङ्गाणा डम्बरेण समूहेन गभीर गहनमस्तु । तव नयनोन्नमनात त्वत्कटाक्षयोगेन अम्बरमेतादृश भवतु। यमुनावीचिवत्

श्य मो रमणीयश्च ते कटाक्षपात इति भाव । अत्र उपमाव्यतिरेकतद्गुणाना सङ्कर । रथोद्धतावृत्तम ॥ ७१ ॥

**हृदयापलापेनेति** । हृदयस्य हृदयगतविषयस्य, प्रीतेरिति यावत अपलापेन गोपनेन । **अत्रेति** । शिखण्डमण्डने मयूरशिखाभूषिते पुन पुण्डरीकवत कमलवत कमनीये सुन्दरे लोचने यस्य स तस्मिन् । पुन श्याम यत्तामरस कमल तस्य दामवत कोमल स्निग्ध स्तस्मिन । एवम्भूते राम इति नाम यस्य स तस्मिन तथाभूते मनोभवे कामदेवे ते तव मन अस्ति चुम्बितमिति शेष । इति मया विदितमिति पूर्वेण सम्बन्ध । रूपकमत्रालङ्कार । तत्र केचित–रूपके मनोभवस्य प्राधान्यात विशेषणानाञ्चाप्रधानाङ्गभूतरामपरत्वाद्दोष इत्याहु । तदयुक्तम । उपात्तविशेषणाना मनोभवपरत्वासम्भवात् । रथोद्धता वृत्तम ।

**मदनेति** । मदनवधू रति तस्या नूपुरस्य रत्नवद्रमणीय यथा स्यात्तथा किमपि किमपि, अनिर्वचनीयममव्यक्तमिति यावत (किमपिद्विरुक्ति कूजितस्यानिर्वचनीयतामनवरतत्व च द्योतयति) तथा कूजन । पुन माकन्द चूत तस्य मुकुलस्य मञ्जर्या मधुरसेन मकरन्देन मधुर मुख यस्य स एवम्भूतो मधुकरो भ्रमरो भ्रमति । शृङ्गाररसोद्दीपनविभावत्वेन भ्रमरकूजितवर्णनम । अनेन च वर्णनेन भ्रमराभिमुखी सखी कृत्वा रामावलोकनावसर सम्पादयति सीतेति ध्येयम ॥ ७३ ॥

(४०) स्वनयने प्रत्याह–**अयीति** । अयि लोचने प्रियजनस्य वदन मुखमेव अरविन्द कमल तस्य मकरन्द पिबतम । निपुणमवलोकयत प्रियजनमुखमिति भाव । स्वविनय प्रदर्शयन्त्याह–**अयि तरल इति** । हे तरले चञ्चले लोचने क्व युवा मम नेत्रे नातीव कमनीये क्व चायमपूर्वो नितान्तरमणीय पुरुष इति विचारयतम । यतोऽय मतीव रमणीयाकृति । सत्वरमेव अन्यत्र गमिष्यति । अह च गौरीं प्रपूज्य गृह गमिष्यामि । अतो यावदीदृश युवयो सौभाग्य वर्तते तावन्निपुण विलोकयतमेनमिति हृदयम । नयनाञ्चलेनेति । नयनयोरञ्चलेन प्रान्तभागेन कटाक्षेणेति यावत् । सलीलमिति सशृङ्गारभावविलासमित्यर्थ ॥ ७४ ॥

सीतया आलोकन वर्णयन्नाह–**सर्वस्वमिति** । नवयौवनस्य सर्वस्वम् । अस्या परो यौवनस्य सारो न कोऽप्यस्तीति भाव. । पुन भोगस्य भवनम एकमात्राश्रयभूतम । दृशा नेत्राणा भाग्यम महता भाग्योदयेनैव ईदृशमवलोकित नेत्रस्येति भाव । मदविभ्रमस्य यौवनमदलास्यस्य सौभाग्यम । यौवनोचितलास्यादिकमप्यनेनामेव आसाद्य आत्मन सौभाग्योदय मन्यत इति भाव. । जगत ससारस्य सार सर्वोत्कृष्ट तत्त्वम । जन्मन. फलम् अस्या एव आलोकनेन जन्म

सफलतामेतीति भाव॰ । कुसुमायुधस्य साकूत कामदेवस्य आश्रयैक-स्थानम । रामस्य हृदयम रामहृदयव्यापित्वादलोकनच त्कारस्य । रते तस्य परा काष्ठा । शृङ्गारस्य रहस्यम । एवम्भूत उत्पन्नदृशः कमललोचनाया किञ्चित आलोकित कटाक्षपात. अस्तीति शेष । किञ्चिदिति सातिशयानिर्वचनीयत्वमवलोकनस्य द्योतयति । अत्र रतिशृङ्गारपदयोरनौचित्य प्रतिभाति रसभावादीना स्वशब्दवाच्यत्व रसहानिकरमिति काव्यसम्प्रदायविद । तथा च प्रकाशे– 'व्यभिचारिरसस्थायिभावाना शब्दवाच्यता कष्टकल्पनया व्यक्तिरनुभावविभावयो । प्रतिकूलविभावादिग्रहो दीप्ति पुन पुन । अकाण्डे प्रथन च्छेदावङ्गस्याप्यतिविस्तृति । अङ्गिनोऽननुसन्धान प्रकृतीना विपर्यय अनङ्गस्याभिधान च रसे दोषा स्युरीदृशा " इति । किन्तु यदि रति पद कामवधूपर शृङ्गारपदञ्च नेपथ्यविधानपर नीयेत तदाऽदोषता स्यात । शार्दूलविक्रीडित वृत्तम ॥ २७ ॥

**तामेवेति** । **अयिपिबहेत्यादि** । सखी भ्रमरव्याजेन राम वर्णयन्त्याह **दलदमलेति** । दलत विकसित अमल स्वच्छ कोमल च यदुत्पल कमल तस्य पलाशस्य पत्रस्य शङ्कया भ्रमेण आकुल अयम अलिपोत भ्रमर तव लोचनयो परिसर प्रान्त अनुवेलम प्रतिक्षणम अनुसरति । रामचन्द्र क्षण क्षणान्त्वा विलोकयतीत्यान्तरार्थ । वृत्तमार्याप्रभेद एव ॥ २८ ॥

सीता सख्युक्तेर्भ्रमरपरता भङ्ग्या रामपरता च विभाव्याह– **अयीति** । यद्यपि लोचनषट्पदवर्णनमनया कृतम तथाऽपि रामचन्द्रकृतस्वावलोकनपरतया कर्णयो सुख करोतीत्याशय ।

सीतावलोकन वर्णयन्नाह–**अमृतमयेति** । अमृतमयो य पयोधि तस्य क्षीरस्य जलस्य "क्षीर पानीयदुग्धयो " इति हैम कल्लोलवत तरङ्गवत लोलैश्चञ्चलै नेत्रपातै कटाक्षै । इय तरलाक्षी चपलनयना यत्र यस्मिन मुहूर्ते मा स्नपयति प्रक्षालयति, आह्लादयतीति यावत् सोऽय सन्मुहूर्त उत्तम समय सदा भवतु सर्वदा स्थायी अस्तु इत्याशा । सासारिकसुखस्य अचिरस्थायित्व विभाव्य सविषादमाह **कुतोवेति** । कुतो वा एतादृशो भविता । यतो विधातु सृष्टय मधुरेण सुखेन विधुरेण दुखेन च मिश्रा मिश्रिता सन्ति अतो न सदातनोऽय मुहूर्ता भवितेति भाव । क्षणान्तरे सीताया गमनस्य, तथा च रावणकृतजानकीहरणस्य सूचकमेतत । मालिनी वृत्तम ॥ २९ ॥

(४१) **मण्ड्यतामिति** । विभूष्यतामित्यर्थ । **स्नेहमुग्धा इति** । स्नेहपरवशत्वादनभिज्ञा इत्यर्थ । **निसर्गेति** । निसर्गत स्वभावादेव लावण्य शरीरकान्ति अस्या सा ताम एवम्भूता चन्द्रलेखा जानकीरूपाम् । एतदर्थेऽनुसन्धेयौ श्लोकौ । यथा रघौ–"तपस्विवेशक्रियया

ऽपि तावद्य. प्रेक्षणीय' सुतरां बभूव राजेन्द्रनेपथ्यविधानशोभा तस्योदिता ऽसीत्पुनरुक्तदोषा" इति । शाकुन्तले च "किमिव हि मधुराणां मण्डनं नाकृतीनाम्" इति ।

जानकीलावण्यस्य चन्द्रलेखात्वम् तथा च नेपथ्यस्यानावश्यकत्वं प्रदर्शयन्नाह-अयीति । तव मुखलेखा चन्द्रबिम्बे सलेहा तत्सदृशा सदृशा सदृशे रज्यन्त इति भाव । दशना किरणलक्ष्मी ज्योति शोभा अच्छज्योत्स्नाया स्वच्छचन्द्रिकाया सदृशी । कुवलयदलस्य अब्जपत्रस्य या द्रोणी दोना इति हिन्दीभाषायाम नेत्ररूपा तत्सकाशाद वहन्ती अथ च तरला चञ्चला वहलम् अधिक मिष्टा मधुरा दुग्धधारेव तव दृष्टिरित्यनुषङ्ग । यद्येवं तर्हि किन्ते कृत्रिममुखमण्डनादिव्यापारेणेति न विचारयन्ति ते मातर इति हृदयम । मालिनी वृत्तम । 'दुग्धकुल्येव दृष्टि" इत्युत्तररामचरिते ॥२८॥

(४२) अप्याविरस्त्विति । भूयोऽपि पुनरपि मम लोचनयो इय जानकी आविरस्तु । पुनर्मे नेत्रयोरतिथिर्भवत्विति भाव । दिवसे अन्तर्हिता सूर्यकिरणै तिरोहिता नक्तं रात्रौ चन्द्रिकेव चकोरयो । यथा सूर्यकिरणान्तरिता चन्द्रिका चकोरयुगल क्षण खेदयित्वा पुनरपि रात्रौ आविर्भूय तत्सुखयति तथेयमपि क्षणान्तरे आगत्य मा सुखयत्विति सप्रत्याशोक्ति । किञ्चित्कालोत्तरभाविविवाहसूचकमेतत् । पुन सूर्योदये चन्द्रिका म्लायतीति नोपमादोष । यत एतदपि भावि जानकीविप्रयोगसूचकत्वात्तत्रत्यविप्रलम्भशृङ्गारपोषकमेवेति ध्येयम ॥ २६ ॥

आर्येयमिति । आर्ये इयम आविरस्ति । अथ वा आर्या इयमाविरस्तीति छेद । उभयथाऽपि, विशेषतो द्वितीयच्छेदे जानक्यागमनबोधकत्वेन अध्यवसित रामेण । अत एव तस्य सहर्षोक्ति । सन्ध्यागमनं वर्णयन्नाह-मुग्धस्येति । मुग्धस्य सुन्दरस्य । पुन. केल्या हेलयैव विजिता स्मरस्य चापयष्टिर्येन स तस्य एवम्भूतस्य सुधाकरस्य रुचि शोभामतीव अतिशय निपुण यथा स्यात्तथा आतन्वती आदधती अथ च विस्तारयन्ती (सन्ध्या चन्द्रशोभां बिभर्ति अभिसारिका च स्वकान्त्या चन्द्रकान्ति विस्तारयति) । विजितस्मरचापयष्टिचन्द्रकान्तिविजयेन स्मरचापयष्टिरमणीयताधिक्य सूचितमभिसारिकाया । पुन रागेण अस्तमितदिनकरकिरणरक्तिमजन्येन, अथ च नायकप्रीत्या, उद्‌गा उद्गता प्रसन्ना । पुन उदञ्चिता प्रदर्शिता तारकाणामथ च अक्षिकनीनिकाना श्री शोभा यया सा । एवम्भूता सन्ध्या काऽपि पतिवरा इव वृषस्यन्ती अभिसारिकेव स्फुट यथा स्यात्तथा आविरस्ति प्रकटीभवति । अस्य श्लोकस्य पताकास्थानकत्वे-केलिविजित. स्मर अथ च चापयष्टिर्हरधनुर्येन स तस्य सुधाकरस्य चन्द्रसुन्दरस्य रामस्य रुचिरिति पतिंवरा च जानकी

त्यादि व्याख्येयम । पतिवरेत्यत्र पति वृणोति या इति विग्रह "वृङ सम्भक्तौ" धातो सञ्ज्ञायाम भृतृवृजीत्यादिना खच । अत्र श्लेषोपमा । वसन्ततिलक वृत्तम् ॥ ३० ॥

सूर्यास्तमय वर्णयन्नाह कृत्वेति । प्रबुद्धानि विकसितानि कमलानि यत्र एवम्भूता सकला समस्ता त्रिलोकी जगतीतल कृत्वा जगति कमलानि विकासयित्वेति भाव । असौ अरविन्दबन्धु सूर्य अम्भोनिधे समुद्रस्य गर्भम अन्तर विशति प्रविशति हेतूत्प्रेक्षामुपन्य स्यति-अन्तरिति । क्षोराब्धौ प्रसुप्तस्य हरे विष्णो नाभौ यत्सरोज कमल तद्बोधे विकासने कौतूहली उत्सुक इव । लोकत्रयसरोजोदघा टन कृत्वा हरिनाभिकमलमुद्बोधयितुमिव समुद्र प्रविष्ट इति भाव । वसन्ततिलक वृत्तम ॥ ३१ ॥

गगनेति । गगनस्याभोगो विस्तार ईषन्मुकुलितो राग सन्ध्यासमयोचितो यत्र स तथाभूत अस्तीति शेष ॥

लक्ष्मणोक्ति समर्थयमानश्चाह-प्राचीमिति। बन्धकीना पुश्चलीनाम। पुंश्चली धर्षिणी बन्धक्यसती इत्यमर । बान्धवे कार्यसाधकत्वात् सहायभूते घनतिमिरचये निविडान्धकारपटले प्राची दिशमालम्ब माने सति । सन्ध्याया प्रथम प्राचीदिोव अन्धकारेण व्याप्ता भव-तीति ध्येयम । पुन स्वैरिणीना पुश्चलीना वैरिणि प्रकाशकत्वाच्चि-शङ्काभिसरणविघ्नभूते शशिकरनिकरे चन्द्रिकापटले प्रतीची दिश सम्प्राप्ते सति । दिशामन्तराल मध्यभागमूर्ध्वाकाशमिति यावत कर्तृ । अर्धे पूर्वार्धे श्यामोपलमिव कृष्णपाषाणमिव अन्धकारमय त्वात अर्धे पश्चिमार्धे स्फटिकमिव चन्द्रिकोद्योतितत्वात । एवम्भूत सत् कालिन्द्या जह्नुकन्यायाश्च मिलती अमले स्वच्छे ये जले तयोर्यौ स्यन्दौ प्रवाहौ तयो य सन्दोह सघात "सन्दोहविसरव्रजा स्तोमौघनिकरव्रातवारसघातसञ्चया" इत्यमर । तस्य मैत्री सादृश्य विधत्ते भजते । अन्धकारितोज्ज्वलदिग्विभागयो मिलनस्थान गङ्गायमुनयो मिलनस्थानमिवाभातीति भाव । क्वचित्प्रभा चान्द्र मसीत्याद्यारभ्य "पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमु नातरङ्गै" इति रघुवशे । स्रग्धरा वृत्तम ॥ ३३ ॥

चन्द्रोदय वर्णयन्नाह-एतत्कोकेति । एतत दृश्यमान मुग्ध सुन्दर सुधाशो चन्द्रस्य वपु विजयते उत्कर्षेण वर्तत इत्यभिसन्धि । तदेव वपुर्विशेषयन्नाह-कोकेत्यादिना । कोककुटुम्बिनीजनस्य कमलिनीमण्डलस्य मन शल्य सरोजसङ्कोचकत्वादद्दु खमूलम । पुन चकोराङ्गनाना चञ्चूकोटी एव यौ कपाटौ तयो (सूर्यप्रभावात) घटितयो सम्मीलितयो सतो उदघाटिका (चन्द्रोदये चकोराश्च ञ्चूनुद्घाटयन्तीति सुप्रसिद्धम्) कुञ्चिका उदघाटनयन्त्रम । पुन.

दग्धस्य (हरनेत्रवह्निना) स्मरतरो स्मर एव तरुर्वृक्षस्तस्य नवाङ्कुरः (कामोद्दीपकत्वाच्चन्द्रोदयस्य) पुन आर्द्रागसा स्फुटापराधनायका नाम प्रेयस्या दयितया यो मानस्तद्रूपो य उद्दाम' स्वच्छन्दोन्मत्तो गजस्तस्य अङ्कुशो निवारक (उद्दीपनस्वभावत्वेन चन्द्रिकाया मान निवारकत्वात्)। अत्र रूपकोत्प्रेक्षयो. सङ्कर.। शार्दूलविक्रीडित वृत्तम ॥ ३४ ॥

चन्द्रोदय वर्णयन्नाह-**कल्लोलेति**। जगतो मण्डनं भूषणं इन्दुखण्ड केषा जनानाम् अन्तस्तोष हृदयाह्लाद न किसलयति अङ्कुरयति जनयतीति यावत, अपि तु सर्वेषा किसलयत्येवेति प्रश्नकाक्वा व्यज्यते। इदुखण्ड वर्णयन्नाह-**कल्लोलेत्यादिना**। कल्लोलेन तरङ्गवेगेन क्षिप्त पङ्को (श्यामाङ्करूपो) यस्मिन तत्तथा भूतम (त्रिपुरहरस्य शिवस्य शिरसि या स्व स्रवन्ती स्वर्णदी गङ्गा तस्या तदधिकरणक) मृणाल बिसतन्तु । गङ्गातरङ्गोत्क्षिप्तपङ्कस्पृष्ट तत्रत्यमृणालमिव साङ्कचन्द्रबिम्बमिति भाव। पुन कर्पूरस्य य क्षोद' चूर्ण 'क्षोदश्चूर्णं" इत्यमर तस्य जालं समूह (स्वच्छत्वाच्छैत्याच्च साम्यम) कुसुमशरवध्वा रत्या य सीधुभृङ्गार मद्यपानपात्र तस्य नाल (टोटीति प्रसिद्धम)। (मद्यसस्पर्शात कामिजनोन्मादकत्व कामवधूसम्बन्धात्कामोद्दीपकत्व च)। कथम्भूतस्येन्दोरित्यपेक्षाया-माह-**दुग्धेत्यादि**। दुग्धाब्धिबन्धो क्षीरोदजातस्य, पुन गगन मेव यत् कमलिनीपत्र तत्र लुठत' पानीयबिन्दुरिव जलकणिकेव स्थितस्य। अत्र रूपकोत्प्रेक्षयो सङ्कर। स्रग्धरा वृत्तम् ॥ ३५ ॥

**अलमिति**। कामोद्दीपकत्वाद्दर्शनाना रामस्यालमुक्ति **सायन्तनेति**। सायङ्कालीनदेवतापूजनोचितपुष्पोपहारेणेत्यर्थ ॥

**इति श्रौतस्मार्ताचारपरायणमैथिलश्रोत्रियकुलावतसो-पाध्यायोपनामकश्रीतीर्थनाशर्मतनूजगङ्गानाथ विरचितायां प्रसन्नराघवटीकाया भाव-बोधिन्यां द्वितीयाङ्कव्याख्या ॥**



# प्रसन्नराघवटीकायाम्

## भावबोधिन्याम्

### तृतीयाङ्कव्याख्या

(४४) वितस्ति परिमाणविशेषो द्वादशाङ्गुलपरिमित ॥

**मांसस्तवकेनेति** । मासपिण्डेनेत्यर्थ । **मतिशून्येति** मूर्ख इत्यर्थ । उपधानगेन्दुक इति आश्रयभूत इत्यर्थ ।

(४५) **कोपिष्यतीति** । अन्त पुरचारिणा सौभाग्यमन्यथा सम्भाव्येत्यर्थ । **प्राघुणिकस्येति** । अतिथेरित्यर्थ । **परिपालयन्निति** । प्रतीक्षमाण इत्यर्थ ।

**अक्षिमीलनैरिति** । योगोचिताभ्यासैरित्यर्थ । **कर्पटपेटकैरिति** । कर्पटस्य जीर्णवस्त्रस्य पेटकै मञ्जूषाभि । अप्रयोजकैरिति यावत । **क्षपणक इवेति** । यथा क्षपणका नग्नशीलत्वात् कर्पटानि नाददति तथैवेते भाव ।

(४६) **वक्रेति** । मासपिण्डादिभिर्वक्रेति तनुपक्षे । सूक्ष्मतत्त्वदर्शिनीति मतिपक्षे । **तीव्रमिति** । कुटिलमित्यर्थ । **ऋजुमतेरिति** । निष्कपटस्य । ब्राह्मणवेषधारी कश्चिद धूर्तक्षत्रिय कपटेन राज्यमपहर्तुमागत, तमय निष्कपटो राजा न बुध्यते इति भाव ।

**अयमिति** । विश्वामित्र । **अलीकेति** । मिथ्याजनश्रुतौ ।

(४७) **बालिशेति** । मूर्खेत्यर्थ । "मूर्खवैधेयबालिशा" इत्यमर । **शुद्धाशय** इति अशङ्कनीयपवित्रचरित्र इत्यर्थ । **अलीकेति** । विश्वामित्रम्प्रति कपटेनाय राज्यमपहर्तुमागत इति मिथ्यापवादस्य उपन्यासेनेत्यर्थ । सम्बन्धिजन इति भाव्यङ्कवृत्तसूचक्रम ।

(४८) **ताटङ्किनेति** । ताटङ्किना बाल्योचितकर्णभूषणवता, झटिति सत्वरमेव ताडिता निहता ताटका येन स तेन पक्ष्मवत् रमणीये सुन्दरे विलोचने नेत्रे यस्य स तेन, क्रोडाशिखण्डकधरेण काकपक्षधरेण, सलक्ष्मणेन लक्ष्मणसहितेन । एवम्भूतेन रामेण साक सह

अथ कुशिकसूनु विश्वामित्र' इति आगच्छति । वसन्ततिलकं वृत्तम ॥ १५ ॥

**कर्णेति** । कर्णानन्ददायि वृत्तम । सम्भाव्यमानरामकर्तृकहरचापारोपणरूपमित्यर्थ ॥

**प्रवेशक इति** । प्रवेशकलक्षणमुक्त दशरूपके "तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजित । प्रवेशोऽङ्कद्वयस्यान्त शेषार्थस्योपसूचक." इति । अत्र तद्वदिति विष्कम्भकवदिति वृत्तवर्तिष्यमाणकथाप्रदर्शकत्व परामृशति । अत्र प्रवेशके ताटकावधविश्वामित्रागमनरूपवृत्तकथायास्तथा च धनुर्भङ्गविवाहादिरूपवर्तिष्यमाणकथाया वामनककुब्जकरूपनीचपात्राभ्या सूचनमित्यवधेयम् ।

(४९) सूर्योदय वर्णयन्नाह–**एतत्तर्कयेति** । भासा निधि ज्योतिराकर सूर्य एतत अग्रे विद्योतते भाति । उदयप्रयोजनवर्णनव्याजेन त्कायाणया ह–**चक्रवाकेत्यादिना** । चक्रवाकाना तत्पक्षिमिथुनाना हृदयाश्वासाय संयोजकत्वादाह्लादनाय । पुन तारागणाना ग्रासाय तिरोधानाय । पुन स्फुरत यदिन्दुमण्डल तस्य परिहासाय ग्लापनाय । पुन दिक्कान्ताना दिग्रूपनायिकाना कुचकुम्भे कुङ्कुमरसन्यासाय स्वकिरणरागेण रञ्जनायेति यावत । पुन पङ्केरुहाणा कमलाना उल्लासाय विकासनाय । पुन. स्फुटस्य वैरिण शत्रो' विकसितस्य कैरववनस्य कुमुदसमूहस्य त्रासाय सङ्कोचनाय । एतत्कार्यसमूहसम्पादनाय अग्र विद्योतत इति तर्कयेत्यभिसन्धि. । धनुर्यज्ञात्पूर्वक्षणे वर्णनमेतद्भाविवृत्तसूचकम । तद्यथा चक्रवाकोऽत्र जनकपुरवासिगण तारागण क्षुद्रराजगण, स्फुरदिन्दुमण्डलम् प्रकृष्टराजमण्डलम, दिक्कान्ता सीता, पङ्केरुहो जनकदशरथपरिजन, कैरववन राक्षसगण, सूर्यश्च रामचन्द्र एव । रामचन्द्रकुलबीजभूतदिवाकरस्य वर्णन समुचितमेव विशिष्टकार्यारम्भे । उत्प्रेक्षारूपकयोरत्र सङ्कर । शार्दूलविक्रीडित वृत्तम ॥ २ ॥

स्ववशबीज दिवाकर नमस्कुर्वन्नाह–**लालयन्तमिति** । ज्योतिषा पति सूर्य महयामि पूजयामि । किम्भूतमित्याह **लालयन्तमित्यादिना** । अरविन्दवनानि कमलपुञ्जानि लालयन्त विलासयन्तम ( लड विलासे, डलयोरभेद ) । पुन भुवनानि लोकान् अभित. समन्तात चालयन्त स्वभासा भासयन्तम । पुन कोककुलानि चक्रवाकमिथुनानि "कोकश्चक्रश्चक्रवाक" इत्यमर पालयन्त रक्षयन्तम् मिथुनस्य सयोग कारयन्तमिति यावत् । स्वागता वृत्तम् ॥ ३ ॥

सूर्योदयजन्यपद्मविकास वर्णयन्नाह–**यावन्नीरनिधेरिति** । प्रभातसमय प्रभातकाल नीरनिधे. समुद्रात् लोकत्रय्या माणिक्य

लोकत्रयरत्नभूत रविबिम्बम आदित्यमण्डलम अम्बरमाकाशमेव या वणिग्वीथीपथ पण्यभूमि तस्या यावत न्यस्यति पण्यद्रव्यत्वेन स्थापयति तावदस्य पण्यभूतस्य वस्तुन उचित मूल्य कर्तु पद्माक रेण पद्मवत्सरसा अथ च पद्मसख्यापरिमितधनवता । लब्ध प्राप्तो विकास उल्लासो येनैवभूतो यत पङ्कज स एव करस्तस्मिन्, अथ च लब्धविकासपङ्कजवत कमलवत कमनीयो य करो हस्त तस्मिन न्यस्ता लक्ष्मी शोभा, अथ च धन मूल्यद्रव्य पुर अग्रे स्थाप्यते न्यस्यते । सूर्योदयमात्र एव कमलकुलविकासो जात इति भाव । अत्र रूपकोत्प्रेक्षयो सङ्कर । शार्दूलविक्रीडित वृत्तम ॥ ४ ॥

**दत्तमुत्तरमिति** । "रामभद्र जनक तनूजया सम्म वयिष्यति" इति प्रश्नस्येति भाव । लक्ष्मणोक्तौ प्रभातसमयो विश्वामित्र , रवि बिम्ब रामचन्द्र , पद्माकरो जनक लक्ष्मीश्च जानकीत्येव रूपेण "यावत विश्वामित्रो रामचन्द्रमानयति तावदेव अस्मै जनकेन जानकी समर्पितेति" अन्तर्गर्भित भावमुद्दिश्य विश्वामित्रस्योक्ति दत्तमुत्तर मिति । **दैवत.धिष्ठितानीति** । तथ्य न्येवेत्यर्थ । **मुग्धेति** । मुग्धस्य बालकस्य वचनानि ।

**बहुनरेति** । बहवो नरा' मनुष्या , करिणो गजा , तुरङ्गमा' अश्वा एतैस्तरङ्गिता सङ्कुलापि प्रशान्ता अथ च पावनो पाव यित्री । इति कथम । **नन्विहेति** । महायोगियाज्ञवल्क्येन जनके नाधिष्ठितेय राजधानीति युज्यत एव सर्वथाऽस्या पावनत्वमिति भाव ।

(५०) याज्ञवल्क्यमहिमान वर्णयन्नाह-**पादोपजीवनादिति** । भानोसूर्यस्य पादोपजीवनात चरणसेवनात (पक्षे किरणस्पर्शात) प्रबोध ज्ञान (पक्षे विकासम) उपलभ्य यो याज्ञवल्क्य योगीश्वरख्याते योगीश्वर इति नाम्न सदम आश्रयोऽभूत, यथा पदम श्रियो लक्ष्म्याः आश्रयो भवति तथैवेति भाव । अत्र श्लेषोपमा ॥ ७ ॥

नगरसस्करणाय राजपुरुषाणामाज्ञा-**पयोभिरिति** । नगरप था रथ्या राजसरणि अङ्गणभुव प्राङ्गणभूमयश्च । वहला विपुला. विलसन्तश्च कुङ्कुमरसा येषु तै एवम्भूतै पयोभि जलै सिच्य न्ताम । परिमलेन सुगन्धेन मिलन्तो लोलाश्च मधुकरा येषु तै. तथाभूतै कीर्यन्ता प्रक्षिप्यन्ताम । अविरल घन यथा स्यात्तथा लसन्तो मौक्तिकगणा येषु ते तथाभूतै चतुष्कै. मार्गस्थविश्र म मण्डपै पूर्यन्ताम । काभिरेतत सर्व क्रियत मित्यपेक्षायामाह-पौर स्त्रीभि मुदा हर्षेण सिच्यन्तामित्यादि । शिखरिणी वृत्तम ॥ ६ ॥

**रभसेति** । रभसस्य हर्षस्य अतिशय । "रभसो हर्षवेगयो." इति विश्व ॥

जनक वर्णयन्नाह-**अङ्गैरिति** । यत्र यस्मिन जनके प्रभिरङ्गै

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चय ज्योतिषामयनं चैव वेदाङ्गानि षडेवतु' इत्येवमुक्तै अङ्गैरङ्कृता स्वायत्तीकृता त्रयी वेद त्रयम ('स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमर)। दीव्यति शोभन इति सर्वत्र सम्बध्यते। पुन सप्तभिरङ्गै "स्वाम्य मात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतय पौराणां श्रेणयोऽपिच" इत्येवममरे उक्तै। अङ्गीकृता सती राज्यलक्ष्मी. दीव्यति शोभते। पुन अष्टभिरङ्गै यमनियमासनप्राणायामप्रत्याहा रधारणाध्यानसमाधिरूपै अङ्गीकृता योगविद्या च दीव्यति शोभते। अत्र यथासख्यमलकार ।

(५१) य. काञ्चनमिति। यथाकाञ्चनमग्नौ निक्षिप्त सत् भा स्वरतर वर्ण लभते। तथैव यो विश्वामित्र तपोमयेऽग्नौ आत्मान तपसा विशोध्य वर्णोत्कर्ष जात्युत्कृष्टता क्षत्रात् ब्राह्मणत्वमिति यावत ॥ ८ ॥

समीहितेति। समीहिता इष्टा या सम्पद श्रियो लता तासा समद्रुमस्य उत्पत्ते आराम आश्रय । अनेन मत्प्रणामेनैव अस्मत्समीहितसिद्धिर्भविष्यतीति भाव । वसुन्धरेति। वसुन्ध राया सुनासीर इन्द्र तत्सम्बुद्धौ। सुनासीरसाधारणत्वमिति। इन्द्रसाम्योपन्यासो मयि न्यूनतासूचक एवेत्यर्थ । तदीयमपीति। इन्द्रपदादप्युत्कृष्टतरा पदवी प्राप्तोऽहमधुना। तदेव समर्थयमानआह- गाधिनन्दनेति। हे गाधिनन्दन विश्वामित्र नन्दनजन्मा नन्दन वनवर्ती हरिचन्दनशाखी देवतरु । तस्य इन्द्रस्य न तथा सुखहेतु यथा अधुना मम भवच्चरणकमलयुगलप्रणाम सुखहेतुरित्यभिस न्धि । अतोऽहमधुना इन्द्रादपि उत्कृष्टतरत्व प्राप्त इत्यर्थ. । स्वागता वृतम् ॥ ६ ॥

प्रणयेति। प्रणयस्य प्रीते अतिशय आधिक्यम ॥ सहजेति। सहज यत प्रमोदसुख ब्रह्मानन्द । तस्य अम्बुधौ समुद्रे निसर्गा नन्दमनुभवन्नपि त्वम अस्मत्समागमजनितान सुखशीकरान सुख बिन्दून् बहु मन्यसे इति अहो आश्चर्यम। अम्बुधौ निमग्न शीकरान् वाञ्छसीति विरोधाभास ॥ राज्यरागेति। राज्यस्य राग अनुराग वैराग्याभावो, हर्षविरोधीति यावत (पक्षे रञ्ज नद्रव्यन) तेन उपरक्त स्पृष्ट. चेत एव चन्द्रमा येषा ते तेषा तथा भूतानाम। अस्माक कुतस्त्य (कुतो भव) सहजानन्द एव या चन्द्रिका तस्या उदभेद उद्गम ॥ यथा राहूपरक्ते चन्द्रे न चन्द्रिको द्गम तथा राज्यानुरागरक्ते हृदये कुत. आनन्दोद्गम इति भाव ॥ जनक स्तुवन्नाह ज्याघात इति। यूय निमे कुलमेव यत् कुमुद तस्य आनन्दाय आह्लादनाय चन्द्रा. नरेन्द्रा इत्यभिसन्धि., किवि

सांख्यैः प्रकृतिपुरुषविवेकान्मोक्ष इति वदद्भिः प्रकृतिरपि तदर्थं ज्ञेयेत्युक्तम् । न च ज्ञेयत्वेन प्रकृतेऽव्यक्तमुच्यते, अव्यक्तशब्दमात्रश्रवणात् । तस्मादपि नाव्यक्तं प्रधानम् ॥

**वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ १ । ४ । ५ ॥**

अत्राह सांख्यो "ज्ञेयत्वावचना"दित्यसङ्गतम्, अव्यक्तशब्दवाच्यस्यैवोत्तरत्र ज्ञेयत्ववचनात् । "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इति । अशब्दमित्यादिषु प्रत्येकं नित्यमिति सम्बध्यते । नित्यं सर्वदा । निचाय्य ज्ञात्वा । यादृशं शब्दादिहीनं प्रधानं तादृशमेवेदं वाक्यं ज्ञेयत्वेन वदतीति चेन्न । प्राज्ञो हि परमात्मा निचाय्यत्वेन निर्दिष्टो, न प्रधानम् । कस्मात् । प्रकरणात्, "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" इत्यादिनाऽऽत्मन एव प्रकरणात् ॥

**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ १ । ४ । ६ ॥**

किञ्च न प्रधानमव्यक्तशब्दवाच्यं ज्ञेयं वा, यस्मात्त्रयाणामेवाग्निजीवपरमात्मनामेवैवं पूर्वोत्तरवाक्यपर्यालोचनया वक्तव्यत्वेनोपन्यासः । तद्विषय एव प्रश्नो ऽपि दृश्यते कठवल्लीग्रन्थे, नान्यस्य । तत्र "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्य"मित्यग्निविषयः प्रश्नः । "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीय" इति जीवप्रश्नः । "अन्यत्र धर्मादन्यत्राधर्माद-

न्यत्रास्मात्कृताकृतादन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे''ति परमात्मपरः । ''लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वे''त्यग्निविषयमुत्तरम् । 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनं यथा च मरणं प्राप्यात्मा भवति गौतम योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः स्थाणुमन्ये नु संयन्ति यथाकर्म यथाश्रुत''मिति जीवस्योत्तरम् । ''न जायते म्रियते वा विपश्चि''दित्यादि परमात्मनः प्रतिवचनम् । न ह्येवं प्रधानस्य प्रश्नोत्तरे दृश्येते, येनाव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा स्यात् । श्रुत्यर्थस्तु । हे मृत्यो स मदर्थं दत्तवरस्त्वं स्वर्ग्यं स्वर्गहेतुमग्निमध्येषि सदा स्मरसि तेन त्वं तद्विषयां विद्यां वदेत्यर्थः । जीवपरमात्मप्रश्नौ पूर्वं व्याख्यातौ । लोकादिं लोकहेतुं विराड्ढृष्ट्योपास्यत्वात् । लोकादिं तमग्निमुक्तवान्नचिकेतसे । याः स्वरूपेण यादृशीर्यावतीः संख्यातः । यथा वाऽग्निश्चीयते तत्सर्वमुवाचेति सम्बन्धः । हन्तेदानीं गुह्यं गोप्यं चिरन्तनं ब्रह्म प्रवक्ष्यामीत्युपक्रम्य जीवमपि ब्रवीति ''यथे''ति । आत्मा जीवो मरणं प्राप्य यथा भवति तथा वक्ष्यामीति योजना । कथं भवतीत्यत आह ''योनि''मिति । मृतानां पुनर्विचित्रजन्मापत्तौ निमित्तमाह ''यथे''ति । यद्यप्यस्मिन्कठवल्लीग्रन्थे जीवपरमात्मनोः पृथक्प्रश्नौ न स्तः, ''वरान्वृणीष्वे''ति मृत्युना प्रेरितेन नचिकेतसा पितृसौमनस्याग्निविद्याऽऽत्मविद्यात्मकवरत्रयमेव पृष्टमिति ''वराणामेष वरस्तृतीय'' इति लिङ्गान्निश्चितत्वात्, तथाऽपि जीवपरयोः कल्पितभेदापेक्षया त्रयाणामित्युक्तं सूत्रकारैः । वस्तुतस्तु ''येयं प्रेत''इत्यादिना पृष्टस्यैवात्मनोऽ''न्यत्र धर्मा''दित्यादिना धर्मविशेषपुरस्कारेणानुकर्ष

इत्येक एव पन्थाः । भेदस्य कल्पितत्वं वाक्यपर्यालोचनयाऽवगतम् । तथा हि "यदेवेह तदमुत्र यदमुत्र तदन्विह मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"ति जीवप्राज्ञभेददृष्टिमपवदन्ति । इह देहे यच्चैतन्यं तदेवामुत्रादित्यादावसंसारि ब्रह्म । यच्चामुत्र तदेवेह देहेऽनुप्रविष्टमित्यन्योन्यैक्यमित्यर्थः । अभेदं द्रढयितुं भेदं निन्दति "मृत्यो" रिति । यः कश्चिन्मूढ इह ब्रह्मात्मनि नानेव मिथ्याभेदं पश्यति वस्तुतोऽहं भिन्न इति स्मरणान्मरणं पुनः पुनः प्राप्नोति न सुखभागित्यर्थः । तथा जीवप्रश्नानन्तर"मन्यं वरं नचिकेतो वृणीष्वे"त्यारभ्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोऽपि नचिकेता यदा न चचाल तदैनं मुमुक्षुं मत्वा "विद्याऽभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्ते"ति प्रशस्य प्रश्नमपि तदीयं प्रशंसन्यदुवाच "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणमध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"ति, तेनापि जीवप्राज्ञयोरभेद एवेति गम्यते । यद्युभयोर्भेदस्तदा जीवप्रश्नानन्तरं प्रशंसा विफलैव स्यात् । श्रुत्यर्थस्तु । त्वा त्वां बहवोऽपि कामा नालोलुपन्त श्रेयोविच्छेदं न कृतवन्तस्ततो विद्याऽर्थिनं त्वां मन्येऽहमिति । जीवप्रश्नस्य परमात्मवाक्येनोत्तरमाह "तं दुर्दर्श" मिति । न ह्यत्र भेदमिथ्यात्वे विवादो, यतो जीवप्रश्ने परमात्मानं प्रतिपादयति । उभयोर्भेदे तात्विक उन्मत्तप्रलापो भवेदित्येवमादीनि वाक्यानि भेदमिथ्यात्वे बोध्यानि ॥

**महद्वच्च ॥ १ । ४ । ७ ॥**

किञ्च । यथा "बुद्धेरात्मा महान्परः" "वेदाहमेतं पुरुषं महान्त"मित्यादौ वेदे श्रुतो महच्छब्दो बुद्ध्या-

ष्यद्वितीयतत्त्ववाची नाङ्गीक्रियते सांख्यैः, तथा वैदिकाव्यक्तशब्दो नाप्रकृतप्रधानवाची । तस्मात्प्रकृतशरीरपरमेवाव्यक्तपदमित्यशब्दत्वं प्रधानस्येति सिद्धम् ॥

चमसवदविशेषात् ॥ १ । ४ । ८ ॥

पूर्वमव्यक्तशब्दमात्रप्रत्यभिज्ञानेन प्रधानस्यार्थतोऽप्रत्यभिज्ञानादव्यक्तपदावाच्यत्वेऽपि त्रिगुणत्वादिनाऽजामन्त्रेऽर्थतः प्रत्यभिज्ञानादजापदं प्रधानपरमस्त्विति प्रत्युदाहरणसङ्गत्याऽस्यारम्भः । अध्यायपादसङ्गतिफलानि पूर्ववद्बोध्यानि । श्वेताश्वतरोपनिषदि श्रूयते, "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपा अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः"-इति । तत्र संशयः, किमजाशब्देन प्रधानमुच्यते, उत तेजोऽबन्नात्मिका छान्दोग्ये सिद्धाऽवान्तरप्रकृतिरिति । तत्र न जायत इत्यजा । सांख्यसिद्धा प्रकृतिरेवाजा सत्त्वरजस्तमोगुणात्मकत्वाल्लोहितशुक्लकृष्णा च भवति । किं चैकोऽजः पुरुषो जुषमाणः सेवमानः कार्यकारणसंघाताभिमानीति यावत् । स तामनुशेते तामजां भ्रमेणात्मत्वेनावगम्य तत्कार्यबुद्धिनिष्ठसुखदुःखादिकमनुभवत्यहं सुखी दुःखीति । अन्यस्तु विवेकी भुक्तभोगां कृतभोगां विवेकज्ञानाज्जहाति त्यक्त्वा मुच्यत इति । जीवभेदप्रतिपादनादजा प्रधानमिति नाशब्दं प्रधानमिति प्राप्ते ब्रूमः । न प्रधानस्यासाधारण्येनात्र प्रत्यायकमस्ति, न जायत इत्यजेत्यन्यत्रापि योजयितुं शक्यत्वात् । लोहितादिशब्दाश्च रूपविशेषेषु रूढा न रजआदौ । यथाकथंचिन्नयनमन्यत्रापि तुल्यम् । साधारणस्थल इदमेतत्पदवाच्यमिति निर्धारणाभावे दृष्टान्तश्चमसवदिति । यथा "ऽर्वाग्बिल-

श्चमस ऊर्ध्वबुध्न" इत्यस्मिन्मन्त्रे ऽयं चमस इत्यवधारणं न सम्भवति कथंचिदर्वाग्बिलत्वादेरन्यत्राप्यविशेषात्, एवमजामन्त्रेऽप्यजात्वादेरविशेषान्न प्रधाननिर्णय इत्यशब्दं प्रधानमित्यर्थः ॥

न"न्विदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इति वाक्यशेषाच्छिरश्चमस इति निर्णयो भवति । इह त्वजामन्त्रे केयमजा प्रतिपत्तव्येत्याशङ्क्य सजातीयश्रुत्यन्तरात्तेजोऽबन्नलक्षणाऽजा प्रतिपत्तव्येत्यहृदयवाचामिति न्यायेनाह ।

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ १ । ४ । ९ ॥

ज्योतिस्तेज उपक्रम आदौ यस्यास्तेजोऽबन्नलक्षणायाः सा ज्योतिरुपक्रमा । "तु", अवधारणे । सैवेहाजा निर्धारणीया न प्रधानम् । कस्मात् । तथा ह्यधीयत एके । हि यस्मादेके छन्दोगास्तेजोऽबन्नात्मिकाया भौतिककार्यप्रकृतेस्तथा लोहितादिरूपतामधीयत आमनन्ति "यदग्नेर्लोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये"ति । तथा च लोहितादिशब्दसाम्यात्तान्येव तेजोऽबन्नानीह प्रत्यभिज्ञायन्ते । यद्वाऽत्रैव श्वेताश्वतरोपनिषदि पूर्वापरपर्यालोचनायामनिर्वाच्यमायाया जगत्कारणत्वप्रतीतेस्तस्या अजाशब्देन ग्रहणम् । तथा हि "किं कारणं ब्रह्मे"त्युपक्रम्य "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढा"मिति वाक्योपक्रम ईश्वरशक्तेर्मायाख्याया जगद्धेतुत्वं गम्यते । वाक्यशेषेऽपि "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर"मिति "यो

योनिं योनिमधितिष्ठत्येक'' इति च तस्या एवावगतिर्न स्वतन्त्रप्रधानस्येति । श्रुत्यर्थस्तु । ब्रह्मणः शुद्धत्वान्न जगद्धेतुत्वमिति श्रुतिः । ब्रह्मवादिनः प्रति शङ्कते ' किं कारण''-मिति । यज्जगत्कारणं तत्किं ब्रह्म वाऽन्यद्वेत्यर्थः । यद्वा जगदुत्पत्तौ किमुपकरणवद्ब्रह्मेत्यर्थः । ते पृष्टा ब्रह्मवादिनोऽनया रीत्या विमृश्य ध्यानाख्येन योगेनानुगताः परमात्मानमनुप्रविष्टाः सन्तस्तस्यैव देवस्यात्मभूतामैक्येनाध्यस्तां मायाशक्तिं गुणत्रयवर्तीं त्रिगुणात्मकस्य जगतो निर्माणे सहकारिणीमपश्यन्निति योजना । प्रधाने मायाशब्दं वारयति ''मायिन''मिति । अविद्याशक्तिर्योनिः । तस्या एकत्वेऽपि कार्यभेदेन भेदाद्वीप्सा । तदुक्तं सुरेश्वराचार्यैः ''स्वतस्त्वविद्या भेदोऽत्र मनागपि न विद्यत''इति । अधितिष्ठति प्रेरयति । न हि परमत ईश्वरस्य तदधिष्ठातृत्वं संमतमिति रहस्यम् ॥

नन्वजाशब्दो न तावत्तेजोऽबन्नात्मिकायां प्रकृतौ रूढः । छागादाविवाजात्वजात्याधारत्वाभावान्नापि यौगिकः, जनिमत्त्वात्तेजोऽबन्नानामित्यत आह ।

**कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १।४।१० ॥**

''च'' शब्दः शङ्कानिवृत्त्यर्थः । तेजोऽबन्नात्मिकायां प्रकृतौ नाजाशब्दस्यानुपपत्तिः । कुतः । कल्पनोपदेशात् । यथा लोके प्रसिद्धामजां भुक्तभोगामेकस्त्यजत्यन्यस्तामनुवर्तत एवं त्यागभोगयोः कार्यकारणसंघाताद्युपादानभूतायास्तेजोऽबन्नात्मिकायाः प्रकृतेः साम्यद्योतनार्थं कल्पनयाऽजात्वस्योपदेशात् । यथा मधुभिन्नस्यादित्यस्य ''सौ वा आदित्यो देवम''ध्विति मधुत्वोपदेशः । यथा वा धेनुभिन्नाया वाचो धेनुत्वोपदेशः । एवमजाभिन्नायाः

प्रकृतेरजात्वोपदेशे न कश्चिद्विरोधः। यदुक्तं जीवभेदोऽस्मिन्मन्त्रे प्रतिपाद्यत इति तन्न, लोकसिद्धभेदानुवादेन बन्धमोक्षव्यवस्थापरत्वादस्य मन्त्रस्य, 'एकोदेवः सर्वभूतेषु गूढ''इत्यादिनाऽऽत्मैक्यावगमात्। तस्मान्नात्र प्रधानस्यावकाश इत्यशब्दं प्रधानमिति सिद्धम् ॥

## न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ १ । ४ । ११ ॥

पूर्वमाध्यात्मिकाधिकारे प्रसिद्धच्छागीग्रहणायोगादजा तेजआदिकेत्युक्तम् । तथा "यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठित''इति मन्त्रे पञ्चजनशब्देन प्रसिद्धमनुष्यग्रहणायोगादवयवव्युत्पत्त्या सांख्याभिमतपञ्चविंशतितत्त्वानां ग्रहणमस्त्विति दृष्टान्तसङ्गत्याऽस्यारम्भः । फलं पूर्ववद्द्रष्टव्यम् । बृहदारण्यके षष्ठाध्याये श्रूयते "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत''मित्यनन्तरं "यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठितस्तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतं प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्य''मिति। परमार्थतोऽस्यार्थः। ज्योतिषां सूर्यादीनां ज्योतिर्भासकं तद्ब्रह्म देवा उपासत आयुष्ट्वेनामृतत्वेन च। तेनोपासनेनायुष्मन्तो जाता इति पूर्ववाक्यार्थः । सूर्यादिज्योतिरेकं पूर्वोक्तं "प्राणस्य प्राण'' मित्यादिवाक्यशेषगताश्चत्वारः प्राणादयश्चेति मिलित्वा पञ्चजनाः पञ्च। पञ्चजनशब्दोऽवयवार्थमनपेक्ष्य पुरुषमात्रं वक्ति लोके। अत एव "स्युः पुमांसः पञ्चजना''इत्यमरो जगाद। प्रकृते च पुरुषग्रहणे वाक्यस्य निस्तात्पर्यापत्त्या

तत्सम्बन्धिप्राणादयो गृह्यन्ते पञ्चजनशब्देन । ते कती-त्याकांक्षायां "पञ्चे"ति संख्यापूरणम् । तथा च पञ्च-पञ्चजना आकाशश्चाविद्याख्यो यस्मिन्प्रतिष्ठितस्तमेव निष्प्रपञ्चब्रह्मात्मकममृतमात्मानं मन्य इति मन्त्रदृशा याज्ञवल्क्येनोक्ते जनकः पप्रच्छ "बहिरेव त्वं किं विद्वान्म-न्तव्यादन्योमर्त्य" इति । नेत्याह । विद्वानमृत इति । अस्मी-ति शेषः । अविद्यया कल्पितं मर्त्यत्वमिति भावः । प्राणा-दीनां जीवनादिप्रदं त्वंपदलक्ष्यं ये विदुस्ते तस्य स्वरूपं पुराणं चिरन्तनमग्र्ये कार्यदशायामप्यलुप्तत्वेन भवमग्र्यं ब्रह्म निचिक्युर्निश्चयेन ज्ञातवन्त इति । तत्र किं पञ्चज-नशब्देन मूलप्रकृत्यादीनि पञ्चविंशतितत्त्वान्युच्यन्त उत वाक्यशेषगताः प्राणादय इति संशये तत्त्वानीति प्राप्तम् । तथा हि "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥ इति संगृहीतानि पञ्चविंशतितत्त्वानि वर्तन्ते । पञ्चपञ्चजना इति पञ्चानां जनानामादिमपञ्चपदेन पञ्चत्वोक्तौ पञ्चविं-शतिजनाः सम्पद्यन्ते । ते जनाः कतीत्याकांक्षायां सांख्य-स्मृतिगृहीतानि पञ्चविंशतितत्त्वानि सम्बध्यन्त इति ना-शब्दं प्रधानमिति । स्मृत्यर्थस्तु । मूलप्रकृतिः प्रधानमवि-कृतिरनादित्वात् । महदहङ्कारौ पञ्चभूतानि सूक्ष्माणि पञ्चतन्मात्रसंज्ञानि च सप्त महदाद्याः प्रकृतयो विकृतयश्च । तत्त्वान्तरोपादानत्वं प्रकृतित्वम् । अस्ति हि महतो बुद्ध्या-ख्यस्याहङ्कारतत्त्वं प्रत्युपादानत्वम् । प्रधानापेक्षया विकृ-तित्वम् । एवं पूर्वापेक्षयाऽहङ्कारादीनां विकृतित्वं द्रष्टव्यम् । प्रकृतित्वं चाहङ्कारस्य पञ्चतन्मात्राणामेकादशेन्द्रियाणां चोपादानत्वात् । पञ्चतन्मात्राणां चाकाशादिमहाभूतप्र-

कृतित्वम् । षोडशकस्य षोडशसंख्यावच्छिन्नस्यैकादशेन्द्रियपञ्चमहाभूतसमुदायस्य विकारत्वमेव न प्रकृतित्वम् । पुरुषस्तु कूटस्थ इत्यत्राभिधीयते । अस्मिन्मन्त्रे श्रूयमाणया पञ्चविंशतिसंख्यया स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसङ्ग्रहात्प्रधानस्य शब्दवत्त्वमित्यपि न । कुतः । नानाभावात् । अस्मिन्मन्त्रे सर्वनाम्ना ऽऽकाशशब्देन चात्माकाशयोः पृथक् श्रूयमाणत्वात्तौ विहाय गुणास्त्रयो महदादयो द्वाविंशतिः सम्भूय पञ्चविंशतिसंख्येया वक्तव्याः । तथा च घ्राणरसनचक्षुःश्रोत्रत्वक्षु यथा कर्मेन्द्रियव्यावृत्तं साधारणं कर्मज्ञानेन्द्रियत्वं, तद्वत्पञ्चानां पञ्चकानामेकपञ्चकपर्याप्तान्यपञ्चकव्यावृत्तधर्मवत्त्वाभावेन नानाभावात्पञ्चपञ्चेन पञ्चानां पञ्चकानां ग्रहणमिति प्रतिपादनमशक्यसमर्थनम् । लोके हि गोपञ्चकं ब्राह्मणपञ्चकमिति पञ्चकद्वयमिति वक्तुमुचितमेकपञ्चकपर्याप्तान्यपञ्चकव्यावृत्तगोत्वादिधर्मसत्त्वादित्यर्थः । नानात्वेऽपि कथं चित्पञ्चविंशतिसंख्याप्रतिपादकत्वाङ्गीकारे बाधकान्तरमाह, "अतिरेका"च्चेति । न ह्यस्मिन्मन्त्रे पञ्चविंशतिसंख्यैव श्रूयते । किं त्वतिरिक्तात्माकाशावपि श्रूयेते । तथा च तयोः पञ्चविंशतितत्त्वातिरिक्तत्वात्सप्तविंशतितत्त्वप्राप्तावपसिद्धान्तापातः । न च गुणत्रित्वविवक्षया पञ्चविंशतिसंख्यापूरणान्न तत्त्वातिरेक इति वाच्यं, तथा सत्यात्माकाशयोः पृथक्कथनवैयर्थ्यात् । कथं चिद्भोग्यजातापेक्षयाऽऽत्मनः पृथक्त्वेन कथनस्य सार्थत्वेऽप्याकाशस्य पृथक्कथनं निष्फलमेवेति भावः । वस्तुतोऽत्र पञ्चविंशतिसंख्याप्रतीतिरेव नास्तो"त्यपि"शब्देन सूचयति, पञ्चजनशब्दस्यैकत्वेन योगमनपेक्ष्य पुरुषेषु रूढत्वात्, ते कनीत्याकां-

न्तायां पञ्चवसंख्याऽन्वयात् । अन्यथा पञ्चजना इत्यत्र पदभेदाङ्गीकारे प्रधानजनान्प्रति गुणत्वेनान्वितस्य पञ्चत्वस्याद्यपञ्चत्वेनान्वयायोगो बाधकः, गुणयोः परस्परान्वयादर्शनात् । उभयोः पञ्चत्वयोः प्रधानजनान्वयसम्भवेऽपि जनेषु दशत्वसंख्याप्रतीतिरेव न पञ्चविंशतिसंख्याप्रतीतिरिति न शब्दवत्प्रधानम् ॥

ननु ते पञ्चत्वसंख्याकाः पञ्चजनाः क इति स्वरूपप्रश्नस्योत्तरमाह ।

## प्राणादयो वाक्यशेषात् ॥ १ । ४ । १२ ॥

माध्यन्दिनशाखायां पञ्चजनमन्त्रानन्तरमन्त्रे प्राणचक्षुःश्रोत्रान्नमनांसि श्रूयमाणानि पञ्चजनशब्देनोच्यन्ते । कस्मात् । वाक्यशेषात् "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमुतान्नस्यान्नं मनसो ये मनो विदु"रिति वाक्यशेषस्थत्वादित्यर्थः ॥

ननु माध्यन्दिनानां प्राणादिष्वन्नस्याम्नानाद्भवतु पञ्चसंख्या, काण्वानां त्वनाम्नानात्कथं पञ्चसंख्येत्यत आह ।

## ज्योतिषैकेषामसत्यन्ने ॥ १ । ४ । १३ ॥

एकेषां काण्वानामसत्यन्ने "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत"मिति पूर्ववाक्यस्थज्योतिषा पञ्चत्वं पूरणीयमित्यर्थः । तस्मादशब्दं प्रधानमिति सिद्धम् ॥

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १ । ४ । १४ ॥

पूर्वाधिकरणत्रयेण प्रधानस्याशब्दत्वप्रतिपादनेन जगत्कारणत्वलक्षणं ब्रह्मण्येवेति नातिव्याप्तमित्युक्त्या कारणविषयाणां वेदान्तानां ब्रह्मणि समन्वय उक्तः । स न

सम्भवति, तेषां वेदान्तानां परस्परविरुद्धार्थप्रतिपादकत्वेन स्वार्थनिश्चायकत्वाभावादनुमानसिद्धप्रधानलक्षकत्व उक्तसमन्वयासिद्धेरित्याशङ्का नरासार्थमिदमारभ्यते न चाविरोधार्थमधिकरणं नेह सङ्गतमिति वाच्यं, समन्वयतो वाक्यार्थज्ञाने स्मृत्यादिमानान्तरविरोधशङ्कानिरासस्यार्थत्वात्, इह तु कारणविषयवाक्यानामेव मिथो विरोधान्न समन्वयो ब्रह्मणीत्याशङ्क्य तन्निरासेनैव समन्वयस्य साध्यत्वादध्यायसङ्गतिसिद्धेः । असत्पदस्य बाह्याभ्युपेतासत्परत्वनिराकरणेन समन्वयस्थापनात्पादसङ्गतिर्बोध्या । पूर्वं पञ्चत्वसंख्यापूरणमन्नेन ज्योतिषा वेति विकल्पस्याविरोधेऽपि प्रकृते सिद्धे कारणात्मकवस्तुनि विकल्पायोगाद्विरोधे सत्यप्रामाण्यं वाक्यानामिति तन्निरासाय प्रधानस्य कारणत्वमिति प्रत्युदाहरणलक्षणावान्तरसङ्गतिः । पूर्वोत्तरपक्षयोः समन्वयासिद्धिस्तत्सिद्धिः फलमिति विवेकः । अत्र जगत्कारणवादिवाक्यानि ब्रह्मणि मानं न वेति विशये नेति प्राप्तम् । कस्मात् । परस्परविरोधदर्शनात् । तथा हि । क्वचि"दात्मन आकाशः सम्भूत" इत्याकाशपूर्विका सृष्टिः श्रूयते, क्वचिच्च "तत्तेजोऽसृजते"ति तेज आदिका, क्वचित्तु "स प्राणमसृजते"ति प्राणादिका क्वचिदक्रमैव सृष्टिः श्रूयते "स इमाँल्लोकानसृजताम्भोमरीचीर्मरमाप"इति । स ईक्षिता परमात्मा । लोकानेवाहा"म्भ"इति । अम्मयशरीरप्रचुरः स्वर्गलोकोऽम्भःशब्दार्थः । रश्मिप्रधानोऽन्तरिक्षलोको मरीचिः । मरणप्रधानोऽयं लोको मरः । अब्बहुलः पाताललोक आप इति विवेकः । एवं सृष्टौ विगाने तत्कारणत्वलक्षितब्रह्मणि विगानम् । साक्षादपि जग-

त्कारणे विगानं दृश्यते । "असद्वा इदमग्र आसीत्ततो वै सदजायते"त्यसतः कारणत्वं क्वचिदवगम्यते । एव "मसदेवेदमग्र आसीत्तत्सदासीत्तत्समभव"दिति । वस्तुतोऽयमर्थः । इदं जगदग्रे प्रागवस्थायामसदिवाव्यक्तमासीत् । ततोऽनभिव्यक्तनामरूपादव्यक्तात्कारणादभिव्यक्तनामरूपं जगज्जातम् । अव्यक्तमेव व्यक्तं भवतीति यावत् । तत्कारणं सदात्मना समभवत्तत्सदर्थक्रियोन्मुखमासीदिति । क्वचित्तु "यद्वैक आहुरसदेवेदमग्र आसी" दित्यसद्वादमुपन्यस्य कथमसतः सज्जायेतेति तन्निरस्य सतः कारणत्वमाह "सदेव सोम्येदमग्र आसी"दिति । क्वचित्स्वकर्तृकैव सृष्टिः श्रूयते "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते"ति । तदिदं जगत्तर्हि तदा प्रागवस्थायामव्याकृतं कारणमासीत् । तत्कल्पितशब्दात्मनाऽर्थात्मना च व्याक्रियत व्यक्तमभवदित्यर्थः । एवं परस्परविरोधान्न ब्रह्मणि समन्वयो वाक्यानाम्, किं त्वनुमानादिसिद्धप्रधानलक्षकत्वमिति प्राप्ते ब्रूमः । कार्यविषयं विगानमक्रमादिप्रयुक्तं "न वियदश्रुते"रित्यादिना परिहरिष्यत्याचार्यः । अत्र तु कारणविषयं विगानं परिहरति । "च" शब्द"स्तु"शब्दसमानार्थः शङ्कानिरासं वक्ति । ब्रह्मणः कारणत्वे विरोधो नास्ति । कुतः । यथाव्यपदिष्टोक्तेः । आकाशादिषु यथाभूत ईश्वरः कारणत्वेन व्यपदिष्ट एकस्मिन्वेदान्ते तथाभूतस्यैवापरवेदान्तेऽप्युक्तेरित्यर्थः ॥

न च क्वचिदसतः क्वचित्सतः क्वचित्स्वभावादुत्पत्तिश्रवणाद्विरोध इति वाच्यमित्याह सूत्रकारः ।

**समाकर्षात्** ॥ १ । ४ । १५ ॥

"असन्नेव स भवत्यसद्ब्रह्मेति वेद चे" दित्यसद्वादमपोद्य, "अस्ति ब्रह्मेति चेद्वेदे"ति सदात्मानं निर्धार्य, "सो कामयते"ति सतः सकाशात्सृष्टिमुक्त्वा, "तत्सत्यमित्याचक्षत"इति सदात्मानमुपसंहृत्य, "तदप्येष श्लोको भवती"ति प्रकृते सदात्मनि श्लोकमुदाहरति, "असद्वा इदमग्रआसो"दिति । तथा चासच्छब्देन सत एव समाकर्षान्नासतः कारणत्वशङ्केत्यर्थः । यद्यस्मिन्श्लोके निरात्मकमसदुच्येत, तदाऽन्यसमाकर्षणेनान्यस्योदाहरणात्प्रकृतासंबद्धः श्लोक आपद्येत । एव "मसदेवेदमग्र आसो"दित्यत्रापि "तत्सदासी"दिति समाकर्षादनभिव्यक्तनामरूपमसच्छब्दं ब्रह्मैव । एवं "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते"त्यत्रापि "स एष इह प्रविष्ट आनखाग्रेभ्य"इति प्रकृतपरामर्शिना "स" इत्यनेनात्मनः समाकर्षणान्न स्वभावादेव जगदुत्पत्तिः । व्याक्रियतेति कर्मण एव कर्तृत्वबोधकलकारो, लूयते केदारः स्वयमेवेतिवत् । सत्यपि पृथक्कर्तरि न विरुध्यते । यद्वा कर्मण्येवायं लकारो गम्यते ग्राम इत्यादिवद्द्रष्टव्यः । एवं ब्रह्मणः कारणत्वे न कश्चिद्विरोधः । नापि सृष्टिविरोधात्तत्कारणे ब्रह्मणि विरोधः, सृष्टिवाक्यानां निष्प्रपञ्चब्रह्मपरत्वेन सृष्टौ तात्पर्याभावात् । श्रुतिरपि निष्फलसृष्टेः फलवद्ब्रह्मप्रतिपत्त्यर्थत्वं दर्शयति । "अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्यशुङ्गेन सन्मूलमन्विच्छे"ति । शुङ्गं कार्यं तन्मूलं ब्रह्म । तस्मान्न केनापि विगानमिति जगत्कारणवाक्यानां ब्रह्मणि समन्वयः सिद्धः ॥

जगद्वाचित्वात् ॥ १ । ४ । १६ ॥

एवं हि गार्ग्याख्यर्षिणा बालाकिनाऽजातशत्रुनामकस्य राज्ञः संवादः श्रूयते कौषीतकीब्राह्मणे । बालाकिरजातशत्रुणा ब्रह्मज्ञेन ब्रह्मणि संवदितुं "ब्रह्म ते ब्रवाणी"त्युपक्रम्य, आदित्यादिपुरुषाञ्जीवानुक्त्वा तूष्णीं बभूव । तमजातशत्रुर्मृषावादितयाऽपोद्य शिष्यभूताय गार्ग्याय ब्रह्मोपदेशार्थमिदमाह "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स वै वेदितव्य"इति । अस्यार्थः । हे बालाके त्वया ये पुरुषा आदित्यादिगता ब्रह्मत्वेनोक्तास्तेषां पुरुषाणां कर्ता । न केवलं जगदेकदेशपुरुषकर्ताऽपि तु सर्वस्यैव जगत इत्याह "यस्ये"ति । कर्मपदं जगद्वाचि । एवं सामान्यविशेषाभ्यां जगत्कर्ता ततो निष्कृष्टो ज्ञेय इत्याह "स"इति । एवमस्य सङ्गतिः । पूर्वं सच्छब्दात्तदेकवाक्यस्यासच्छब्दो नीतः । इह तु बालाकिवाक्यस्थब्रह्मशब्दादजातशत्रुवाक्यस्थकर्मशब्दो न शक्यते तदनुगुणतया नेतुं वाक्यभेदादिति प्रत्युदाहरणम् । यद्वा वाक्यभेदेऽपि यथोत्तरसच्छब्दात्प्राचीनासच्छब्दो नीतस्तथोत्तरकर्मशब्दात्तदनुगुणतया ब्रह्मशब्दनयनमिति दृष्टान्तसङ्गतिः । उक्तवाक्यसमन्वयासिद्धिस्तत्सिद्धिः पूर्वोत्तरपक्षयोः फलं बोध्यम् । एवं स्थिते संशयः किमत्र पुरुषाणां कर्ता वेदितव्यः प्राण उत जीव आहोस्वित्परमात्मेति । प्राण इति तावत्प्राप्तम् । कुतः । यस्य वै तत्कर्मेति चलनात्मकस्य कर्मणो वाय्वात्मकप्राणस्यैव सम्भवाद्वाक्यशेषे चाप्यस्मिन्प्राण एवैकधा भवतीति प्राणशब्दश्रवणात् । जीवो वा, तल्लिङ्गस्यापि वाक्यशेषे दर्शनात् । "तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मा तैरात्मभिर्भुङ्क्त एवमेवैत आ-

स्मानं भुञ्जन्ती"ति । अयमर्थः । श्रेष्ठो प्रधानः पुरुषः स्वैर्भृत्यैरुपकरणैर्भुङ्क्ते । भृत्या अप्यशनाच्छादनादिना प्रधानमुपजीवन्ति । एवं जीवोऽप्यादित्यादिभिः प्रकाशादिना भोगोपकरणैर्भुङ्क्ते । भृत्यवदादित्यादयोऽपि देवा जीवं हविर्ग्रहणादिनोपजीवन्तीति । प्राणभृत्त्वाच्च जीवस्यैव भोग उपपन्नः । तस्माज्जीवमुख्यप्राणान्यतरसमन्वितमिदं वाक्यमिति प्राप्ते ब्रूमः । अत्र वेदितव्यः पुरुषाणां कर्ता परमात्मैव । तथा हि ब्रह्म ते ब्रवाणीत्युपक्रम्य बालाकिनाऽऽदित्याद्यमुख्यात्मसूक्तेषु सत्सु तममुख्यात्मवादितयाऽपोद्याजातशत्रुणा वेदितव्यतयोपदिष्टः पुरुषः कर्ता जीवो मुख्यप्राणो वा न हि भवितुमर्हति, तथात्वे गार्ग्यापेक्षयाऽजातशत्रोरविशेषप्रसङ्गात् । पुरुषकर्तृत्वं च परमात्मनोऽन्यत्राञ्जसा न सम्भवत्येव । न च कर्मशब्दानुपपत्तिः, क्रियत इति व्युत्पत्त्या कर्मशब्दस्य जगद्वाचित्वात् । प्रत्यक्षाद्युपस्थितं जगदेतदिति सर्वनाम्ना परामृशति । न च जगदन्तर्भूतपुरुषकर्तृत्वं पृथक् वक्तव्यमिति युक्तं, गार्ग्येण ब्रह्मत्वेनोक्तपुरुषाणामब्रह्मत्वद्योतनाय गोबलीवर्दन्यायेन पृथगुक्तिसम्भवादिति ॥

**जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १ । ४ । १७ ॥**

ननु जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च न ब्रह्मपरत्वावधारणमिति चेत्तद्व्याख्यातं प्रतर्दनाधिकरणे । "उपासात्रैविध्यादाश्रितत्वादिह तद्योगा"दित्यत्राविरोधतया जीवमुख्यप्राणलिङ्गं ब्रह्मपरं व्याख्यातमित्यर्थः । जीवप्राणपरत्वेऽभ्युपगम्यमाने ब्रह्मपरत्वस्याप्यवश्यकत्वाद्वाक्यत्रैविध्यं स्यादित्येष दोषस्तत्रोक्तः प्रकृतेऽपि समान इति

भावः । प्रतर्दनविचारे कर्मपदस्याविचारादगतार्थता द्रष्टव्या ॥

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १ । ४ । १८ ॥**

जैमिनिराचार्योऽस्मिन्प्रकरणे जीवपरामर्शमन्यार्थं ब्रह्मप्रतिपत्त्यर्थं यतो मन्यतेऽतो ब्रह्मपरमेवेदं वाक्यम् । कुतो मन्यते । प्रश्नव्याख्यानाभ्याम् । आत्मजिज्ञासुं बालाकिमादायाजातशत्रुः सुप्तपुरुषसमीपं गत्वा "हे सोमराज" न्निति सुप्तमाहूयाह्वानशब्दाश्रवणात्प्राणादीनामभोक्तृत्वं प्रतिपाद्य यष्टिघातोत्थापनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवातिरिक्ताधिकरणभवनापादानविषयान्प्रश्नान्स्वयमेव चकार "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागा" दिति । अयमर्थः । भो बालाके शयनमेतद्यथा तथैतत्पुरुषः कस्मिन्नधिकरणे स्वापे शयनं कृतवानित्यधिकरणप्रश्नार्थः । एतद्भवनमेकीभावो यथा स्यात्तथा काश्रये सुप्तोऽभूदिति भवनायतनप्रश्नार्थः । शयनभवनयोराधारं पृष्ट्वोत्थानावस्थायामागमनापादानं पृच्छति "कुत" इति । एतदागमनं यथा स्यात्तथा कस्मादुद्बोधावस्थायामागादुत्थानं कृतवानित्यर्थः । एतत्प्रश्नोत्तरदानासमर्थं बालाकिं मत्वा स्वयमेवोत्तरमाह "यथा सुप्तः स्वप्नं न कश्चन पश्यत्यथास्मिन्प्राण एवैकधा भवती" त्यादिना । शयनभवनयोराधार उत्थानापादानं च प्राणशब्दवाच्यैः परमात्मैवेत्युत्तरार्थः । तस्माद्यस्मिञ्जीवस्य भोक्तुः शयनभवने यस्माच्चोत्थानमेकीभावभ्रंशरूपं सोऽत्र परमात्मा वेदितव्यतयोपदिष्टः पुरुष-

भूतान्तान लक्षणक्रमसाक्षात्कारेणैवेति बोध्यम् एतेन स्थूलदृष्टान्तेन तुल्यजातिलक्षणदेशस्य परमाणुसामान्यस्यान्योन्यविवेकप्रत्यय ईश्वरस्य । योगिनश्च प्रकृत्यादिप्रेरणमभीप्सो लक्षणतत्क्रमानुभवाद्बोध्यः तथा हि पूर्वयोः परमाणुदेशतत्साहित्यसपादकलक्षणयोः साक्षात्करणात् अयं पूर्वदेशस्य अयमुत्तर इति विवेक यत उत्तरस्य पूर्वदेशानुपपत्त्योत्तरस्य स्वदेशप्राप्तिर्भिन्ना तयोः साहित्यसपादकलक्षणभेदात् येऽपि वैशेषिका मुक्तात्मनां प्रलये परमाणूना चानन्यजातिलक्षणदेशानामन्योन्य विभाजकान्तरासम्भवेन तत्कालिकत्वेनान्त्यो विशेषनामाकश्चनभेदकोयोगिग्राह्यपदार्थः स एवेदानीं परमाणूनामन्यताप्रत्यय करोतीति वदन्ति। तन्मतेऽपि संस्थानरूपमूर्तिव्यवधानजातिलक्षणदेशयोगिबुद्धिगम्य लक्षणभेदोऽन्यत्वहेतुरस्त्येवेति समान तत्र संस्थानाद्भेदः प्रसिद्ध एव संस्थानमवयवसंनिवेशः व्यवधिर्यथा कुशपुष्करद्वीपयोर्देशस्वरूपयोः अत एवोक्त वार्षगण्येन मूर्तिव्यवधिजात्यादिभ्यो भेदेनातिरेकेण विशेषस्याभावात् मूलेषु नित्यद्रव्येषु पृथक् विशेषपदार्थो नास्तीति अस्य मते वृद्धावस्थाया ये मूर्त्यादयः स्थितास्त एव मुक्त्यवस्थायामपि योगिभिर्गृह्यमाणा मुक्तानामन्योन्य भेदव्यवहारजनकाः । एवं परमाण्वादीनामपि प्रलये भेदव्यवहारः स्वगतसूक्ष्मकार्यभेदादुक्तलक्षणभेदाच्चेति मन्तव्यम् । मूलस्य प्रधानस्य तूक्तभेदहेत्वभावाद्भेदो नास्त्येव तदुक्त कृतार्थं प्रतिनष्टमप्यनष्टमिति ।

इदानीं विवेकजज्ञानस्य मोक्षोपयोगमाह ।

**तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५३ ॥**

इति हेतौ यतो विवेकजज्ञान सर्वविषयादिरूपं अतः सर्वत्र दोषसाक्षात्कारेणोक्तवैराग्यद्वारा ससारतारकमित्यर्थः तारक लौकि-

# पातञ्जलसूत्रवृत्तौ

इदानीं समाधिसिद्धेरुत्कर्षंदर्शयितु पञ्चप्रकारा सिद्धिमाह ।

**जन्मौषधिमन्त्रतपः समाधिजाः सिद्धयः ॥ १ ॥**

ऐहिकेन कर्मणा देवादिदेहान्तरजन्ममात्रेण भवन्ती अणिमादि सिद्धिर्जन्मजा असुरादिभवनेषु रसायनादिजा कायवज्रसारत्वादिसिद्धिरोषधिजा मन्त्रजपादिभिर्या ऽणिमाद्याकाशगमनादिसिद्धिः सा मन्त्रजा ॥ तपसा संकल्पसिद्धिस्तपोजन्या सा समाधिजा व्याख्याता ।

अथ निर्माणकायनिर्माणेन्द्रिययोरुत्पत्तिप्रकारमाह ।

**जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥**

अन्यजातिपरिणतानां कायेन्द्रियाणां पूर्वपरिणामापाये उत्तरपरिणामोपजनिस्ततत्कायेन्द्रियप्रकृतिभूतानामवयवानामापूरादनुप्रवेशाद्भवति । लोके वल्मीकादीनां क्षुद्रपरिणामापाये तदुत्तरमहापरिणामोत्पत्तेर्भूतप्रकृतीनामनुप्रवेशेन दृष्टत्वात् अतो योगिनामपि देहेन्द्रिययो' परिणामान्तरकाले धर्मा निमित्तापेक्षाः कायेन्द्रियप्रकृतय आपूरणेन स्व स्व जातीय विकारमुपकुर्वन्ति तत्र कायप्रकृति. पञ्चभूतानि इन्द्रियप्रकृतिश्चाहंकारः दृष्टश्च लोके तृणराशिनिक्षिप्तस्य वह्निकणस्य क्षणादेव प्रकृत्या पूरेण गगनव्यापीपरिणामः । एवमेववामनादीनां त्रिभुवनव्यापित्वे कृष्णेन चार्जुनादिभ्यो विश्वरूपप्रदर्शनं च प्रकृत्या पूरेण तडित्वत् क्षणभङ्गुरेणेति बोध्यम् । एवं शरीरस्य तारुण्यवार्धकादिकमपि एवमणिमादिकं प्रकृत्यपगमादितिबोध्यम् । अगस्त्यादीना समुद्रपानं च तोयादिप्रकृत्यपगमेनेति बोध्यम् । अत्र

जात्यन्तरशब्देन योगिना गजतुरगादिवैभव कायव्यूहादिकं च ग्राह्यम् । स एकधा भवति । त्रिधा भवति पञ्चधा शत च दश चैकश्च सहस्राणि च विंशति रितिकायव्यूहे श्रुतिः ।

ननु योगजधर्मैर्बलात्प्रकृत्याकर्षे प्रकृतिस्वातन्त्र्यसिद्धान्तहानिरत आह ।

**निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥**

धर्मादिरूपं निमित्तकारणं न प्रकृतीनां प्रेरकं परतन्त्रेण कार्येण स्वतन्त्रस्य कारणस्याप्रवर्त्तनात् । ननु प्रकृते स्वातन्त्र्ये धर्मादिकं व्यर्थमित्यत आह वरणेत्यादि । यथा क्षेत्रिकोद्भिः पूर्णात्केदारात् समनिम्न निम्नतरं वा केदारान्तरन्ताभिरद्भिः विप्लावयिषुर्नापः पाणिना ऽपकर्षति क्षिपति आवरणान्त्वासामिनत्ति आलवालाख्यं तस्मिश्च स्वयमेवापः केदारान्तर गच्छन्ति धर्मेण प्रकृतीनामावरणे ऽधर्मे भिन्ने स्वयमेव प्रकृतयः सजातीयं विकारं विकारप्रकृतीनां परिणामान्तरार्थे व्याप्नुवन्तिशिभावे-क्रियावदारम्भकसयोगोऽपि प्रकृतेः स्वत एव भवति तथा हि यथ एवक्षेत्रिकस्तस्मिन्नेव केदारे औदकान् भौमान्वा रसान्धाः प्रवेशयितुं नसमर्थः किं तर्हि मुद्गगवेधुकश्यामाकादींस्त अपकृष्टेषु तेषु स्वयमेव रसान्धान्यमूलान्यनुप्रविशन्ति निवृत्तिमात्रे कारणमधर्मस्य । शुध्यशुध्योरत्यन्तविरोधात् प्रकृतिप्रवृत्तौ संयोगविशेषे वा धर्मो हेतुः । एव चाधर्मादि प्रतिबन्धनिवृत्तिद्वारेणैव धर्मादि परिणामकारणम् । यथा सस्कार एव स्मृतिहेतुः सदृशादृष्टचिन्तादयस्त्वननुगता एव संस्कारस्योद्बोधकमात्राः उद्बोधश्च तमोदोषरूपावरणभङ्ग तथा प्रकृतिरेव जग-

त्कारणं कालकर्मेश्वरादयस्तु प्रकृतेः कार्यजननशक्त्युद्बोधकाः तत्र धर्माधर्मौ स्व विरुद्धाधर्मधर्मरूपावरणभङ्गेनोद्बोधकौ ईश्वरस्तु साम्यपरिणामादिरूपाखिलावरणभङ्गेनोद्बोधकः । कालादयस्तु । धर्माद्युद्बोधकतया दण्डादयस्तु कार्यान्तराभिव्यक्तिप्रतिबन्धकतयेत्यूह्यम् । एतदेव निमित्तकारणत्वं अव्यभिचारात्तु संयोगस्यासमवायिकारणत्वमिष्यत एव द्वारत्वात्तु न तेन प्रकृतेः स्वातन्त्र्यहानिरितिबोध्यम् । तत्र धर्मस्याधर्मापसारणद्वाराकायेन्द्रियपरिणामनिमित्तत्व । यथा नन्दीश्वरे स हि नन्दिनामामनुष्यो धर्मातिशयवशान्नन्दीश्वरो जातः एव बलवानधर्मोऽपि धर्मापसारणेन तन्निमित्तं यथा नहुषाजगरस्येति दिक् ।

यदा योगी बहून्कामान्निर्मिमीते तदा किं तेनिर्मातृमनोमात्रैकैव्यैत्रव्यवहारभाज उत तदतिरिक्तप्रातिस्विकमनोभाजस्तत्राह ।

**निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥**

स्व सङ्कल्पेन निर्मितचित्तानि निर्माणचित्तानि निर्मितदेह [illegible]ख्यानि भवन्ति ॥ चैत्रमैत्रादिशरीरेषु एकैकासाधारणचित्तान्वि[illegible]रिणाम्दर्शनात् तानि चाहंकाराख्यास्मितामात्रात् । चित्तशब्दोत्र मनोदेहोपवाची । योगिनो मनस्तु संकल्पमात्रेण निमित्तकारणन्तेषां । एव बुध्यहङ्कारौ अपि स्व प्रकृतिप्रधानबुध्यापूराद्भवन्तीति बोध्यं युक्तिसाम्यात् ततस्तानि सर्वाणि शरीराणि सचित्तानि भवन्ति । ननु व्यापकस्य निर्मातृचित्तेनैव कायव्यूहेषु वृत्तिसम्भवेनानेकतत्कल्पना व्यर्थेति चेत् न समाधिभोगयोर्ज्ञानाज्ञानयोश्चैकदैकस्मिंश्चित्ते विरोधेन तद्भेदसिद्धेः यदा तु योगी जीवभेदानेव स्वदेहान्निर्मितेषु देहेषु यो जयति तदा वश्यमन्तःकरणभेदापेक्षणाच्च । तस्माच्च मनसोभेदाज्जायन्ते चेतएवहि । एकधा स द्विधा चैव त्रिधाच बहुधा पुनः योगी-

श्वरः शरीराणि करोति विकरोति च प्राप्नुयाद्विषयान्कैश्चिदुग्रन्तपश्चरेत् संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिवेति स्मृतेः। कदाचित्तु योगिना-मेकान्तःकरणेनैव नानादेहेषु व्यवहारोऽपि स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वात् न चैवमात्मनानात्वकल्पना व्यर्था चित्तभेदे-नैव ज्ञानाज्ञानाद्युपपत्तेरिति वाच्यं । बन्धमोक्षव्यवस्थानुरोधेन तत्सिद्धेरिति दिक् ।

तत्र विशेषमाह ।

**प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥**

तेषां बहूनां चित्तानां कथमेकचित्ताभिप्रायानुसारिणी प्रवृत्तिः स्यादिति योगी पूर्वसिद्धं यच्चित्तं तदेव सर्वचित्तानां प्रयोजकं निर्मि-मीते नियामकं करोति एवं च तदभिप्रायेण तेषां प्रवृत्तिं ऐश्वर्यनि-र्वाहार्थमनेकचित्तेष्वन्तर्यामिविधया पूर्वसिद्धं चित्तं स्थापयित्वा तत्र प्रवृत्तिभेदं संपादयतीति भावः एतेनैकाभिप्रायानुरोधः स्वपरप्रति-सन्धानं चोपपादितं एतेन विष्णवादीनामंशावतारा अपि व्याख्याताः तेष्वात्मन एकत्वेऽपि अंशांशिभावव्यवहार उपाधीनामंशांशिभावे-नौपाधिका इति दिक् ।

अथोक्तपञ्चविधसिद्धियुक्तचित्तानां मध्ये मुक्तियोग्यं चित्तमाह ।

**तत्र ध्यानजमनाशयम् ॥ ६ ॥**

तेषु यत् ध्यानजं ध्यानसंस्कृतं निर्माणयोग्यं चित्तं तदेवाना-शयं क्लेशकर्मवासनारूपाशयरहितं योगेनैव ज्ञानोत्पत्त्या वासनोच्छेदो न मन्त्रादिभिरित्यर्थः इतरेषां तु कर्माशयोऽस्त्येव ।

चित्तविधकर्मवत्त्वादित्याह ।

**कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥**

योगिनो निष्पन्नयोगस्य कर्मकायादिव्यापारो ऽशुक्लाकृष्णः पुण्यपापाहेतुत्वात् । इतरेषामयोगिनां जन्मादिसिद्धानां त्रिविध शुक्ल कृष्णा शुक्लकृष्णां चेति । तत्र कृष्णां तमो वर्धकतया दुःखफलद यथा दुरात्मना शुक्ल सत्ववर्धकत्वात्सुखफलद यथा तपः स्वाध्याय‌ध्यानवतामसंन्यासिनामपि तस्य हि केवलेमनस्ययत्तत्वेनाबहिः-साधनाधीनतया परापीडयैवोत्पते शुक्ल कृष्णा शुक्लकृष्णा चेति । तत्र कृष्णां तमोवर्धकतया दुःखफलद यथा दुरात्मना शुक्ल सत्ववर्धकत्वात्सुखफलन्द यथा तपः स्वाध्यायध्यानवतामसन्यासिनामपि तस्य हि केवले मनस्यापत्तत्वेनाबहि साधनाधीनतया परापीडयैवोत्पतेः शुक्लकृष्णा रजोवर्धकत्वात्सुखदुःखफलदं । यथा कामिनां । तस्य देहेन्द्रियमनोभ्यो वहिर्यानिसाधनातितत्साध्यतयापरपीडानुग्रहोचयद्वारकत्वात् वहिः साधनसंपादने हि अन्ततोपरिहार्यापिपीलिकादीना पीडाभवत्येवेति बहिःसाधनसाध्यं सर्ववेदोक्तमपि कृष्णासङ्कीर्णमेव अनुग्रहश्च तत्र देवादीनां प्रसिद्ध एव अशुक्ला कृष्णा यथा सन्यासिनामभिमानफलत्व ानां क्षीणक्लेशानां चरमदेहाना न तु ेसन्यासाश्रमिमाचाणां अविद्यादिक्लेशसत्वे तेषामपि धर्माधर्मोदयात् । क्लेशत्रये च गृहिणामप्यशुक्लां कृष्णात्वात् । योगिभिः फलस्याहंकरोमीत्यभिमानस्य च त्यागात् । विहितं हि कामनायां सत्यामेव फलं ददाति विहितं निषिद्धं चेत्युभयमपि उपादानाख्याभिमाने सत्येवफलद अत्राशुक्लाकृष्णानां सुखदुःखफलस्यैव प्रतिषेधेन सत्वशुद्धिफलकत्वमस्त्येव । न च ज्ञानेनैव तेषा सत्वशुध्याख्यः पापक्षयो भविष्यति । कर्मणामपि ज्ञानाङ्गतया सत्वशुद्धिहेतुत्वात् आत्मरतिः क्रियावानेषब्रह्मविदा वरिष्ठ इति श्रुते', योगिनः कर्मकुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये इति स्मृतेश्च, । अन्यथा वसिष्ठादीनां कर्मा-

नुष्ठानानुपपत्तिः न च लोकसंग्रहार्थं तेषां कर्मलोकसंग्रहस्य स्वतो ऽपुरुषार्थतया कैवल्यहेतुसत्वशुद्धिद्वारैव तत्वस्यौचित्यादिति दिक् ।

नन्वयोगिना कर्मसत्वेपि वासनानभिव्यक्त्यामोदो स्त्वित्यत आह ।

**ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥८॥**

ततस्त्रिविधात्कर्मणो वासनानामभिव्यक्तिर्भवत्येव । नन्वेवं मानुष्यप्रापककर्मणां पश्वादिभोगवासनाभिव्यक्तौ तृणभोजने ऽपि प्रवृत्तिः स्यादतस्तद्विपाकानुगुणानामिति । यज्जातीयस्य कर्मणो यो विपाकस्तदनुगुणानामेवाभिव्यक्तिरित्यर्थः नहिदैव कर्मफलोन्मुखतिर्यग्मनुष्यवासनाभिव्यक्तिनिमित्त सम्भवति किन्तु दैवानुगुणवासनाभिव्यक्ति निमित्तमेवेति नारकतिर्यग्मनुष्ये चायं समानश्चर्चो विचार इति दिक् ।

चतुर्जन्मादिव्यवहितवासनाभिव्यक्ति कर्मफलान्यथानुपपत्याह ।

**जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥**

जात्यादिभिर्व्यवहितानामपि वासनानामानन्तर्यमव्यवहितवत्तत्कार्य्यकारित्व भवति ॥ अन्यथा कर्म्मफलानुपपत्ते स्मृतिसंस्कारयोरेकरूपत्वादेकाकारत्वादित्यर्थः ॥ तथा हि वृषदंशविपाकारम्भः स्वव्यञ्जकेनाञ्जनेन कालादिनाभिव्यक्तो वर्त्तमानावस्थो भवति न तु पूर्वदेहत्यागमात्रेण झटित्येवेति नियम स यदा जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितस्वव्यञ्जक प्राप्यउदियात् तदा शीघ्र पूर्वप्राप्तवृषदंशविपाकजनितसंस्काररूपवासनागृहीत्वैव व्यक्तो भवति व्यवहितानामपि वासनाना सदृश कर्म

व्यञ्जकमभिव्यक्तौ निमित्त प्रकृतेरेवोपादानत्वादित्यानन्तर्यमेवार्थात् सादृश्यं चैकजातीयफलकत्वेन प्रमाणमाह स्मृतिसंस्कारयोरेकरूपत्वात् । न चाव्यवहिते मनुष्यजन्मन्येववृषदंशवासना. सन्तु अनुभवैः स्व समानाकारसंस्काराणामेव जननात् । न चैव मनुष्यवासनयैव वृषदंशविपाकोऽस्तु । संस्काराणां कर्माशयानुरूपाणामेवापेक्षणात् । न च मनुष्यसंस्कारादेव वृषदंशविपाकनिर्वाहकस्मृतिरस्तु । स्मृतिसंस्कारयो समानरूपत्वात् । तस्मात् जात्यादि व्यवहितसंस्कारेभ्यः स्मृतिः न चैवमेकविपाककाले स्मृत्युत्पादनेन पूर्वसंस्कारनाशात्कथ पुनस्तज्जातीयं विपाकान्तर इदानीन्तनस्मृतिभिः पुनः संस्कारोत्पत्तेः एवमेते स्मृतिहेतुसंस्कारा कर्माशयोद्बोधाद्व्यज्यन्ते अतो व्यवहितानां निमित्तनैमित्तिकभावानुच्छेदादानन्तर्यमेवेति सिद्धम् ।

ननु सकलजन्मार्थं वासनास्वीकारेऽनवस्था स्यादत आह ।

## तासामनादित्वं चाशिषो नित्यत्वात् ॥ १० ॥

तासा वासनानामनादित्व प्रवाहरूपेणमानभूवभूयासमित्याशिषो नित्यत्वात् प्रतिजन्मनियतत्वात् । यद्यप्याशीर्नित्यतया तद्धेतुवासनानामनादित्वं सिध्यति न तु भोगहेतुवासनानां तथाऽपि तत्रानवस्थायाः प्रामाणिकत्वेनादोषत्वेन दृष्टान्तेनान्यास मप्यनादित्वमनुमेयम् । न चाऽन्यैष्णादिवदियमाशीश्चित्तस्य स्वाभाविक्येवास्तु । जातमात्रस्यानुमानाद्यसमर्थस्यात्रजन्मन्यननुभूतमरणादिधर्मकस्य द्वेषतदनुषक्ततत्कारणमरणादिदुःखस्मरणाभ्यामेवजायमानस्य यथोक्ताशीरूपस्य त्रासस्य पूर्वजन्मानुभूतमरणादिदुःखवासना विना ऽनुपपत्ते । न च स्वाभाविक सः खड्गदर्शनादिनिमित्तसापेक्षत्वात् अन्यदाऽभावात् । न हि स्वाभाविकं निमित्तसापेक्ष स हि दृश्यमानखड्गादेर्दुःखहेतुभावानुमानात् तच्च तज्जातीयादनुभूतदुःख

स्मरणे सति तज्जातीयतयाऽस्यापितत्वमनुमिनोति तस्मात्प्राग्भवीयोऽनुभवः शिष्यते । बालकस्य दृश्यमानः कम्पोभयात् ईदृशकम्पत्वात् मत्कम्पवत् भयञ्च द्वेषदुःखस्मृतिदुःखनिमित्तक भयत्वात् मद्भयवत् स्मृतिश्च पूर्वानुभवनिबन्धना साम्प्रतिकानुभवाभावविशिष्टस्मृतित्वादित्यनुमानेन तत्सिद्धि तस्मादनादिवासनानुविद्धमिद चित्त विपाकोन्मुखकर्मवशात् काश्चिदेववासना गृहीत्वा पुरुषस्य भोगायोपावर्त्तते । ननु वासनानामनादित्व चित्तस्य नित्यत्वे सर्वशरीरेष्वेकत्वे च स्यात् तत्तु न पुप्रकृत्यतिरिक्तस्य कार्यत्वाभ्युपगमात् । अणुमहच्छरीरभेदेन तत्तत्परिमाणचित्तस्यापि भेदाच्चेति चेत् अत्र सांख्याः प्रतिपुरुषं सर्वशरीरसाधारणमेकैकमेवचित्त कि तु घटप्रासादरूपस्वल्पमहदाश्रयभेदेन प्रदीपवत्स्वल्पमहच्छरीरभेदेन सकोचविकासशालितया स्वल्पमहत् परिमाण च न तु विभु । तथा सत्यणुत्वासंभवेनान्तराप्रलये लयस्यानुपपत्तेः । एवं चाणुतुल्यसूक्ष्मावस्थाया प्रकृते सत्वरूपाशता प्राप्नोतीति न प्रकृतिपुरुषातिरिक्तस्यानित्यताहानिः तथा संसारःसंसरण इहलोकपरलोकसंचारश्चोपपद्यते सक्रियत्वात् विभुत्वेचैतदुभय न घटत इति वदन्ति । एतच्छास्त्राचार्यास्तु आचार्यः स्वयभूरिति मिश्रा' विभ्वेव चित्त प्रतिनियतपुरुषभोग्यत्वात् । पुरुषभेदेनानन्तं च । चित्ताकाशं चिदाकाशमाकाशं च तृतीयकं द्वाभ्या शून्यतमं विद्धि चिदाकाशं वरानने । इति स्मृतेः यथा चाकाशस्य विभोरपि घटाद्युपाधिकं गमनं तथास्यापि वृत्त्युपाधिकं तत् । विभूनामेव जीवचित्तानां मलिनदर्पणवेदविद्याकामकर्मावृत्तप्रकाशशक्तीनां बाह्यसत्वान्तरोपष्टम्भात् ज्ञानादिहेतुरेकादशेन्द्रियपञ्चप्राणरूपः परिमाणविशेषः प्रदीपशिखावद्द्रव्यपो जायते सावृत्तिस्तावृत्तयश्च सकोचवि-

काशशालिन्य. स्वल्पमहच्छरीरभेदेन सङ्कोचविकासशीला भवन्ति प्राकृतलयपर्यन्तं च तिष्ठन्ति । तदुपाधिकं च गमनागमनं तद्वृत्तिजन्यवृत्तीना घटपटाद्याकाराणां ज्ञानादिशब्दवाच्यता एव च चित्त कार्याकार्यरूपेण द्विविधमाकाशवत् योगिनां युगपत्सर्ववस्तुज्ञानदर्शनाच्चास्य विभुत्वं । अन्यथा सन्निकर्षाभावात् कथं गृह्येत योगजधर्मस्यापि प्रत्यासत्तित्वकल्पने गौरवात् तस्माद्योगजधर्मेण तम आख्यप्रतिबन्धकनिवृत्तिमात्रे कारणं । योगिनोऽपि प्रत्यक्षसंयोगादिप्रत्यासत्त्यैव अनन्तवासनाधारत्वाच्च विभुत्वं । अत एव वासनानां देशव्यवधानमाचार्येणोक्तं ग्रन्थिवच्च वासनानां स्थितिर्भाष्ये उक्ता । सर्वथाणुत्वेतु युगपत्पञ्चेन्द्रियवृत्त्यनुपपत्ति. युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्यनेन च सदासर्वज्ञत्वाभाव एवमनआख्यकरणे लिङ्गत्वेनोक्त न त्वेकदा इन्द्रियद्वयवृत्त्यभाव. हेत्वसिद्धेरिति बोध्यम् ननु वृत्तीना सङ्कोचविकासयोः किंकारणमिति चेत् शृणु । धर्माधर्मरूप निमित्तकारणं तयोः अनादित्वाच्च नान्योन्याश्रयः न चैव शारीरादिधर्मे स्तुतिदानादिभिरेव ज्ञानसंभवे योगो व्यर्थः बाह्याध्यात्मिकभेदेन निमित्तद्वैविध्यात् । तत्र बाह्य शरीरादिसाधनापेक्ष स्तुतिदानाभिवादनादिनिन्दापरस्वादानादीनि च । आध्यात्मिकं चित्तमात्राधीन श्रद्धावीर्यस्मृतिसमाधिप्रज्ञारूप तद्विपरीतमश्रद्धादि च तदुक्तं । ये चैतेमैत्र्यादयोध्यायिनामपलसाध्यत्वेनविहारास्ते बाह्यसाधनानपेक्षस्वभावत्वेन निष्पाप प्रकृष्ट धर्ममुपादयन्तीति तयोराध्यात्मिकं बलवत् । ज्ञानवैराग्यरूपतया सर्वातिशायित्वात् । चित्तबलंविना दण्डकारण्य क. शारीरेण कर्मणाशून्य कुर्यात् समुद्रमगस्त्यवद्वापिबेत् दण्डकराजक्रोधेन दण्डकदेश सप्रदिनवृष्ट्या जनशून्य कृतवान् कश्चि-

द्योगी । एव च योगजधर्मवत् बाह्यधर्मो न तथा चित्तविकासका- रीति न तद्वैयर्थ्यमिति बोध्यम् ।

इदानीं मोक्षोपपत्तये नाद्यसंख्यानामपि वासनानामत्यन्तो- च्छेदमाह ।

**हेतुफला अपालम्बनैः संगृहीतत्वादेषामभावे तद्- भावः ॥ ११ ॥**

तत्र हेतुरुच्यते धर्मात्सुख अधर्माद्दुःख सुखाद्रागो दुःखात् द्वेषः ततः प्रयत्नस्तेन प्रयत्नेन मनसावाचाकायेन वा चेष्टमानः पर मनुगृह्णाति उपहन्ति वा ततः पुनर्धर्माधर्मौ सुखदुःखे रागद्वेषौ इति षडरधर्माधर्मसुखदुःखरागद्वेषरूपारषट्सहित प्रवृत्तमिदमविद्यादण्ड- प्रेरणेन भ्रामितं ससारचक्र ज्ञानकर्मवासनाहेतुः यथा कुलालचक्रस्य दण्डेन प्रेरणे वेगाख्य. संस्कारो भवति ततस्त विनापि किञ्चित्काल स्वयमेव भ्रमति तद्वदेव भ्रामित ससारचक्र वासनाहेतु । अस्य च प्रतिक्षणमावर्तमानस्याविद्यानेत्रीभ्रामिका सैवसर्वक्लेशानां मूलकारणं अविद्याक्षये च कर्मणां सत्वेपि चक्रभ्रमणेपि न वासनोदय इत्येषो- ऽविद्यारूपो वासनाया हेतुः फल तु य पुरुषार्थमुद्दिश्य धर्माद्युत्पन्न तदेव वासनानामपि फल कर्मवासनयोरन्योन्यसहकारित्वात् । ननु फलेन सह कथकारणस्य नियमरूपः सग्रह' फलाभावेपि कारणस्य सत्वादिति चेन्न अपूर्वस्यासतो जन्माभावात् । एव च सत्कार्यवा- दस्वीकारेणानागतावस्थफलेन तत्सभवः आश्रयस्तु वासनाना साधि- कार पुरुषार्थजन्मनः प्रलये वासनासत्वानुरोधेन तदाश्रयमनसो नित्यत्वमभिप्रेत्य साधिकारमित्युक्त । अधिकारसमाप्तौ तु मनसो लयेन क्वनिराश्रयावासनास्तिष्ठेरन् मनोऽथचित्तं आलम्बन तु यद- भिमुखीभूतं वस्तु या वसाना व्यनक्ति तस्यास्तदालम्बन मोक्षकाले

तु कामिनीरूपादीना रागवासनाऽव्यञ्जकत्वान्नालम्बनत्वं एवमेतैर्हेतुफलाश्रयालम्बनैः सगृहीता व्याप्ताः सर्वावासना अत एषामभावे ऽत्यन्तोच्छेदे विदेहमुक्तिसमये तदाश्रयाणां तन्नियतानां वासनानामभावोऽत्यन्तोच्छेद इति तासामनादित्वे ऽपि मोक्षसभव इत्यर्थः ।

ननु सत्कार्यवादात्कथ वासनानामत्यन्तोच्छेदोऽत आह ।

**अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ १२ ॥**

स्यादय दोषो यदि स्वरूपापायस्तासामुच्येत किन्त्वत्यन्तातीततामात्रमुच्यते यतोऽतीनागत वस्तु स्वरूपतोऽस्ति । ननु विरुद्धधर्माणां कथमेकदा सत्ता तत्राह अध्वभेदादिति भिन्नाध्वकत्वादविरोधइत्यर्थः वर्तमानलक्षणानामेव विरोध एकदेतिभावः । तयोः स्वरूपानपाये किं प्रमाणमिति चेत् शृणु भविष्यदभिव्यक्तिकमनागतं अनुभूताभिव्यक्तिकमतीतं अनुभूयमानाभिव्यक्तिकं वर्त्तमानं त्रयमप्येतत्स्वरूप सत् यतो योगिना प्रत्यक्षज्ञानस्य विषयः यदि चेतत्स्वरूपतो न स्यात् नेदनिर्विषयं ज्ञानमुदयत्स्यत् । शशशृङ्गादीनां ज्ञानादर्शनात् न च शुक्तिरजतादि वद्बुद्धिपरिणामविशेष एवयोगजधर्मादिजन्योऽतीतादिस्थले साक्षिज्ञानविषयोऽस्त्विति चेन्न । योगिना पूर्वानुभूतातीतादे कालान्तरे ऽपि प्रत्यभिज्ञायमानत्वात् वर्त्तमानवस्तूनामप्येवं बुद्धिमात्रताप्रसङ्गाच्च । अस्मदादीनां तु सौक्ष्म्यादनुपलम्भ उपपन्नः घटोऽतीत इति प्रतीति वन्नास्तीति प्रत्ययोप्यतीततादिविषयकः । किं च यदि भोगसाधनस्यापवर्गसाधनस्य वा कर्मणः फलमुत्पत्स्यमान निरूपाख्यमसत् तदा तेन निमित्तेन तदुद्देशेन कुशलस्य योगिनो ऽनुष्ठान न स्यात् अनागत साक्षात् कृत्ययोगी तद्वर्त्तमानत्वापपतते । यथार्जुन' कालात्मके कृष्णशरीरे भाविनं भीष्मादिमृत्यु दृष्ट्वा युद्धे प्रवृत्त. न चैव कारणव्यापारो विफल सत

एव फलस्य वर्त्तमानीकरणे व्यापारात् दृष्टं च तिलेषु विद्यमानस्यैव तैलस्य तैलिकव्यापारेणाभिव्यक्तिमात्र नापूर्वोत्पजने कारणव्यापारः शिलायामंकुरोत्पादनेऽपि तदापत्तेः न चैवं कारणस्यापि नित्यत्वादतीतकारणादपि कार्याभिव्यक्तिः स्यात् । वर्त्तमानस्यैव कारणस्य कार्याभिव्यक्तिहेतुत्वात् । न त्वपूर्वोत्पादने हेतुत्व शशशृङ्गादेरप्युत्पत्यापत्तेः उत्पत्तेः प्राक् द्वयोरपि परमते तुल्यत्वात् धर्मी चानेकधर्मस्वभावः तस्य च ते धर्मा अध्वभेदेन प्रत्यवस्थिता. न च विरोधः । अभिव्यक्तिरूपेण विशेषेणैव धर्माणा विरोधो न स्वरूपत इत्यभ्युपगमात् न हि यथा वर्त्तमानमभिव्यक्तिमापन्न द्रव्यतः स्वक्रियाकारित्वे नास्ति एवमतीतमनागत च वर्त्तते किं तर्हि स्वेनैव भाविव्यक्तिकेन रूपेणानागतमस्ति अतीतं वानुभूताभिव्यक्तिकेन स्वरूपेणास्ति वर्त्तमाने एवत्वध्वनिस्वरूपव्यक्तिरिति अतीतानागतयोरध्वनोस्तस्या अभावः न चैवमेकाध्वसमयेऽपराध्वाभावात्तत्रैव सत्कार्यहानि. एकस्य चाध्वनोऽभिव्यक्तिसमयेद्वावध्वानौ धर्मिसमन्वागतौ भवत एवेति नाभूत्वाभावस्त्रयाणामध्वनामित्यदोषात् एतच्चोपपादित प्राक् ।

अथ सदसत्ववैधर्म्येण कार्यकारणयोर्विवेकं सम्यक् ज्ञानविषयमाह ।

**ते व्यक्तसूक्ष्मागुणात्मानः ॥ १३ ॥**

तेऽमीअध्वानो धर्मावर्त्तमानाव्यक्तस्वरूपा. अतीतानागता सूक्ष्मात्मानः षडविशेषरूपाः सर्वमिदमहदादिघटपटान्त धर्मजात गुणाना सन्निवेशविशेषमात्र परमार्थतस्तु गुणात्मान एव ते धर्मा ॥ गुणरूपेणैवेषा सत्व न तु स्वरूपेणेत्यर्थः ॥ तदुक्तम् गुणानां परम रूप नदृष्टिपथमृच्छति । यत्तु दृष्टिपथ प्राप्तं तन्मायेवसुतुच्छक

मिति । परम पारमार्थिक नित्यमिति यावत् । मायेव लौकिकमा-
यावत् क्षणभङ्गुर । अतः सुतच्छकमत्यन्ततुच्छमत्यसार । स्थिरां-
शाभावात् । अत्र सुशब्देन परिणामितया गुणानामपि तुच्छत्व सूचित
तेषामपि परिणामितया कूटस्थनित्यापेक्षया तुच्छत्वात् गुणकार्य
तु ततोपि तुच्छम् यद्यपि मायाशब्दो मिथ्यावस्तूनां कारणेमुख्य
मायान्तु प्रकृति विद्यादिति श्रुतेः, विश्वस्य बीज परमास्मिमायेति
स्मृतेश्च, मायात्व च मृषाविकारेण व्यामोहकत्व । तच्च प्रकृतावेव
मुख्य तथाऽपि कार्यकारणाभेदात्कार्येपि मायाशब्द उक्तः दैवीह्येषा-
गुणमयी मममायादुरत्ययेत्यादिवत् ।

ननु सर्वविकाराणामनेकगुणरूपत्वे कथमेक शब्दतन्मात्र-
मेक चक्षुरित्यादयो व्यवहारा इत्यत आह ।

**परिणामैकत्वाद्वस्तु तत्त्वम ॥ १४ ॥**

परमार्थतो नानात्वेपि व्यावहारिकेण परिणामरूपेण परिणा-
मस्यैकत्वाद्वस्तुना गुणानामेकत्वव्यवहार इत्यर्थः दृष्टोहि बहूनाम-
प्येक परिणामो यथारूमानिक्षिप्तानां गवाश्वमहिषमातङ्गानामेकोल
वणत्वजातीयः परिणाम. वर्तितैलानलाना च प्रदीप इति तथा हि
प्रख्याक्रियास्थितिशीलाना गुणाना ग्रहणात्मकाना सात्त्विकान्तः-
करणरूपैकरूपेण परिणतानां बाह्यकरणभावेन श्रोत्रेन्द्रियमेकः परि-
णाम' एवमन्यान्यपि ज्ञानेन्द्रियाण्येक. परिणाम तथाग्राह्यात्म-
काना तामसान्त'करणरूपेण परिणतानां शब्दतन्मात्रादिरूप एकः
परिणामः स शब्दःशब्दतन्मात्ररूप द्रव्य विषयो नाम जडःदेवा-
दिश्रोत्रेन्द्रियविषयश्चेति एवं राजसान्तःकरणरूपेण परिणतानां गुणा-
नामेकः परिणामो वागादीन्द्रिय । तेषामेव शब्दतन्मात्रादीना
मूर्त्याकाठिन्येन सजातीयानि द्रव्याणामेकः परिणामः पृथिवीपरमा-

कर्ता । अपि चैवमेके वाजसनेयिनो बालाक्यजातशत्रुसंवाद एवं स्पष्टं विज्ञानमयं जीवं तद्व्यतिरिक्तं परमात्मानमामनन्ति । "य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्कुत एतदागा"दिति प्रश्ने "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत" इत्युत्तरे चाकाशः परमात्मेति दहराधिकरणे निर्णीतम् । तस्मात्पुरुषकर्तरि वेदितव्ये परमात्मनि कौषीतकीब्राह्मणवाक्यं समन्वितमिति सिद्धम् ॥

## वाक्यान्वयात् ॥ १ । ४ । १९ ॥

पूर्वं ब्रह्मोपक्रमसामर्थ्याद्ब्रह्मपरत्वमुक्तम् । तर्हि तद्वदेव मैत्रेयीब्राह्मणवाक्यस्य जीवोपक्रमसामर्थ्याज्जीवपरत्वमस्त्विति दृष्टान्तसङ्गतिः । फलं पूर्ववत् । बृहदारण्यके श्रूयते "स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवती"त्युपक्रम्य पतिजायापुत्रपशुवित्तादिप्रपञ्चस्यात्मार्थत्वेन प्रियत्वमुक्त्वा ऽनन्यार्थतया निरुपाधिप्रियत्वेनानतिशयानन्दात्मनो ज्ञातव्यतामाह याज्ञवल्क्यः, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित"मिति । अत्र संशयः किं जीवोऽत्र द्रष्टव्यत्वादिरूपेणोपदिश्यते किं वा परमात्मेति । तत्र जीव इति प्राप्तम् । कुतः । पतिजायादिभोग्यजातवतो भोक्तुरुपक्रमात्, मध्येऽपी"दं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ती"ति प्रकृतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं जीवस्वरूपेण वदन्, जीवस्य द्रष्टव्यत्वं दर्शयति । श्रुत्यर्थस्तु । इदं प्रत्यग्रूपं महदनवच्छिन्नं भूतं सत्यमनन्तं नित्यमपारं सर्वगतं विज्ञानघनो ज्ञानैक-

तानः । जात्यन्तरासंमिश्रार्थत्वमेवकारार्थः । स चैतेभ्यः कार्यकारणाकारेण परिणतेभ्योऽविद्याभूतेभ्यः साम्येनोत्थाय जीवत्वमनुभूय तान्येव भूतानि ज्ञानाद्विनश्यन्ति सन्त्यनु पश्चाद्विनश्यति जीवत्वं त्यजति । न हि तत्त्यागानन्तरमस्य रूपादिविशेषज्ञानमस्ति । तस्माज्जीव इति प्राप्ते ब्रूमः । परमात्मैवात्र द्रष्टव्यतयोपदिष्ट आत्मा । कुतः । वाक्यान्वयात् । उपक्रमादिपर्यालोचनया वाक्यस्य ब्रह्मण्येवान्वयादित्यर्थः । तथा हि, "अमृतत्वस्य तु नाशास्ति वित्तेने"ति वित्तसाध्येन कर्मणा मोक्षं प्रत्याशा नास्तीति याज्ञवल्क्यादुपश्रुत्य मैत्रेयी मोक्षमाशासाना तत्साधनं पृच्छति "येनाहं नामृतास्यां किमहं तेन कुर्यां यदेव भगवान्वेत्थ तदेव मे ब्रूही"ति । यदमृतत्वसाधनं त्वं वेत्थ तदेव मे ब्रूहीत्यर्थः । एवं पृष्टो याज्ञवल्क्य इदमात्मज्ञानमुपदिशति, "आत्मावा अरे द्रष्टव्य"इत्यादिना । न हि जीवज्ञानान्मोक्ष इति कश्चिदभ्युपैति । अतो द्रष्टव्यः परमात्मा । तथाऽऽ"त्मनो वा अरे दर्शनेने"ति यदात्मज्ञानात्सर्वज्ञानं प्रतिज्ञातं तद्दुन्दुभ्यादिदृष्टान्तैः साधयन्नस्य परमात्मत्वं गमयति। "स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुया"दित्यादिना दुन्दुभिशङ्खवीणाशब्दा दृष्टान्तत्वेनोक्ताः । तस्यायमर्थः । दुन्दुभिशङ्खवीणापदैस्तज्जन्यसामान्यशब्दा लक्ष्यन्ते । तथा च, यथा दुन्दुभ्यादिशब्दसामान्याद्दुन्दुभ्यादिशब्दविशेषा भेदेनागृह्यमाणाः शुक्तिग्रहग्राह्यरजतवत्प्रकल्पितास्तद्ग्रहणे गृहीता भवन्ति, तथा चिद्रूपस्फुरणं विना स्थितिकाले स्फुरणशून्यं जगत्तत्र कल्पितं तद्ग्रहणेन गृहीतं भवतीति, ततो नातिरिच्यत इति । तथा, "एतावदरे खल्वमृतत्व"मित्युपसंहारदर्शनाच्चात्र द्रष्टव्य आत्मा परमात्मैव ॥

ननु पतिजायादिभोग्यजातेन लिङ्गेन जीवोपक्रमः प्रतीयते स कथमित्यत आह ।

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ १ । ४ । २० ॥**

जीवब्रह्मणोर्हि कार्यकारणयोर्भेदाभेदौ वर्तेते, अत्यन्तभेद एकविज्ञानप्रतिज्ञाविरोधप्रसङ्गात् । तथा च तत्प्रतिज्ञासिद्धेरिदमभेदांशमादाय जीवोपक्रमणं लिङ्गमित्याश्मरथ्य आचार्यो मन्यते ॥

जीवस्य कार्यत्वमभेदसमानसत्ताकभेदवत्त्वं चासहमानः समाधानान्तरमाह

**उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ १ । ४ । २१ ॥**

संसारदशायामत्यन्तभिन्नस्य जीवस्य ब्रह्मात्मत्वसाक्षात्कारात्कार्यकारणसंघातादुत्क्रमिष्यत एवंभावात्परमात्मनैकीभावाद्भविष्यदभेदमादाय जीवोपक्रम इत्यौडुलोमिराचार्यो मन्यते ॥

नन्विदमप्यसङ्गतं, सत्यकार्यकारणसंघातवतः संसारिणोऽत्यन्तभिन्नस्य मुक्तिदशायामभेदायोगादित्यरुच्या परमं समाधानमाह

**अवस्थितेरिति काशकृत्स्नः ॥ १ । ४ । २२ ॥**

ब्रह्मण एवाविद्याकल्पितभेदेन जीवरूपेणावस्थितेर्जीवोपक्रमाविरोधं काशकृत्स्न आचार्यः श्रुतितात्पर्यज्ञो मन्यते। अत एव विज्ञानात्मभावेन ब्रह्मणो भूतेभ्यः समुत्थानं जीवलिङ्गत्वेन प्रागुपन्यस्तं न विरुध्यतेऽभेदादेव। तस्माद्द्रष्टव्ये परे ब्रह्मणि मैत्रेयीब्राह्मणवाक्यं समन्वितमिति सिद्धम् ॥

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १।४।२३ ॥**

"जन्माद्यस्य यत" इति सूत्रे यद्ब्रह्मणो जगत्कारणत्वमुक्तं तदत्र विचार्यते । यद्यपि जन्मादिनयानन्तर्यमेतस्य युक्तं, तथाऽपि निर्णीततात्पर्यैर्वेदान्तैर्निमित्तत्वमात्रसाधकानुमितेर्विरोधोक्तिः सुकरेति समन्वयावसाने लिखितमिदमधिकरणमिति बोध्यम् । न च जन्माद्यधिकरणवैयर्थ्यं, निर्विषयकसमन्वयसाधनासम्भवेन जगत्कारणात्मकविषयमात्रस्य तत्रोक्तत्वात् । उपादानत्वं त्वेतदधिकरणसिद्धं तत्रोक्तमिति न कश्चिद्दोषः । जन्मादिनयस्याध्यायादिसङ्गतत्वादस्यापि तद्विचारात्मकस्यास्त्यध्यायादिसङ्गतिः । पूर्वपक्ष एकविज्ञानात्सर्वविज्ञानप्रतिज्ञागौणत्वं,सिद्धान्ते तन्मुख्यत्वमिति फलभेदः । अत्र संशयः किं ब्रह्मणि जगन्निमित्तत्वमात्रमुतोपादानत्वमपीति । तत्र "तदैक्षत बहु स्यां प्रजायेये" त्यादिना सर्वत्रेक्षापूर्वककर्तृत्वश्रवणात्कुलालवन्निमित्तत्वमात्रमिति प्राप्ते ब्रूमः । प्रकृतिश्च ब्रह्म । चकारान्निमित्तमपि । कुतः । प्रतिज्ञादृष्टान्तानुपरोधात् । प्रतिज्ञादृष्टान्तयोः सामञ्जस्यादित्यर्थः । प्रतिज्ञा हि "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात" मिति । अस्यां च प्रतिज्ञायामात्मज्ञानेन सर्वविज्ञानमुच्यमानमात्मन उपादानत्वं गमयति, निमित्तत्वे तदसंभवात् । न हि कुलाले ज्ञाते घटादिकं ज्ञातमिति शक्यते वक्तुम् । उपादानत्वे तु तयोरुपादानोपादेययोरव्यतिरेकाद्युक्तं तज्ज्ञानेन तज्ज्ञानम् । दृष्टान्तोऽपि "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य" मित्युपादानविषय एव दृश्यते । विकारो हि वागालम्बनमात्रं वस्तुतो

ऽसन्निति यावत् । तदेव साधयति "नामधेय"मिति । शून्यशेषत्वं निषेधति "मृत्तिके"ति । निमित्तत्वमपि प्रतिज्ञादृष्टान्तानुपरोधादेव बोध्यं, निमित्तस्योपादानाद्भेदे प्रतिज्ञादृष्टान्तयोरसामञ्जस्यात् । तथा बृहदारण्यकेऽपि प्रतिज्ञादृष्टान्तौ दृश्येते, "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदित"मिति प्रतिज्ञाय "स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत"इति दृष्टान्तः । घटाद्यधिष्ठानतयाऽनुगतो यः प्रकाशः स उपादानमित्यत्र दृष्टान्तो यथा तथोच्यते । बाह्यान्दुन्दुभिशब्दसामान्यबहिर्भूतान्दुन्दुभेस्तच्छब्दसामान्यस्येत्यर्थः । तथा च हन्यमानदुन्दुभिजन्यस्य शब्दसामान्यस्य ग्रहणमन्तरेण कश्चित्पुमान्दुन्दुभिशब्दसामान्यबहिर्भूताञ्छब्दविशेषान्ग्रहणाय ग्रहीतुं न शक्नुयादिति व्यतिरेकः । अन्वयोऽपि । दुन्दुभिशब्दसामान्यस्य ग्रहणेन दुन्दुभ्याघातसंज्ञको विशेषशब्दो गृहीतो भवति, दुन्दुभ्याघातस्य वीररसाभिव्यञ्जकस्य विशेषशब्दस्य ग्रहणात्तदवान्तरशब्दविशेषो गृहीतो भवतीत्यर्थः ॥

## अभिध्योपदेशाच्च ॥ १ । ४ । २४ ॥

इतश्चात्मनः कर्तृत्वप्रकृतित्वे । कुतः । अभिध्योपदेशाद्ध्यानोपदेशादित्यर्थः । "सोऽकामयते"ति ध्यानोपदेशात्कर्तृत्वं, "बहुस्या"मिति ध्यानोपदेशात्प्रकृतित्वमिति ॥

## साक्षाच्चोभयाम्नानात् ॥ १ । ४ । २५ ॥

प्रकृतित्वे हेत्वन्तरमिदम् । "सर्वाणि ह वा इमानि

भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ती" त्याकाशशब्देन साक्षाद्ब्रह्म गृहीत्वा जगदुत्पत्तिप्रलययोरुभयोराम्नानाद्ब्रह्म प्रकृतिरित्यर्थः । यस्मिन्नुत्पत्तिप्रलयौ यस्य कार्यस्य तत्कार्यं प्रति तदुपादानं, यथा घटस्य मृदिति व्याप्तेरिति भावः ॥

**आत्मकृते परिणामात् ॥ १ । ४ । २६ ॥**

लोके हि कृतिमान्कर्ता कृतिविषयो मृदादिरुपादानमिति व्यवस्था । प्रकृते चात्मनः कृतिमत्वं कृतिविषयत्वं च श्रूयते "तदात्मानं स्वयमकुरुते"ति । आत्मानमिति द्वितीयया कृतिविषयत्वं, स्वयमित्यनेन कृतिमत्त्वम् तथा च ब्रह्म निमित्तमुपादानं च । कुतः । आत्मकृतेः । आत्मसम्बन्धिनी कृतिरात्मकृतिः । सम्बन्धो विषयविषयिभाव आधाराधेयभावश्च । ततो हेतोरित्यर्थः । नन्वात्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं कृतिकर्मत्वमत आह "परिणामा"दिति । परिणामो विवर्तः । सिद्धस्यापि विवर्तात्मना साध्यत्वात्कर्मत्वोपपत्तिरित्यर्थः । यद्वा "परिणामा"दिति पृथक्सूत्रम् । इतश्च प्रकृतिर्ब्रह्म । कुतः । परिणामात्, "सच्चासच्चाभव"दित्यादिना परिणामसामानाधिकरण्येनात्मनः श्रवणादित्यर्थः । मृद्धट इति प्रकृतिविकारयोः सामानाधिकरण्यं दृष्टमिति भावः ॥

**योनिश्च हि गीयते ॥ १ । ४ । २७ ॥**

"यद्भूतयोनिं परिपश्यन्ति धीराः कर्तारमीशं पुरुषं ब्रह्मयोनि"मिति प्रकृतिवाचकयोनिशब्देनात्मा यतो गीयतेऽतश्च प्रकृतिर्ब्रह्मेत्यर्थः। तस्माद्ब्रह्मणः प्रकृतित्वं कर्तृत्वं चेति सिद्धम् ॥

**एतेन सर्वे व्याख्याता व्याख्याताः ॥ १ । ४ । २८ ॥**

एतावता ग्रन्थे "नेक्षतेर्नाशब्द"मित्यादिनाऽशब्दत्वादिभिर्हेतुभिः प्रधानकारणवादो निराकृतः, न पुनरणुस्वभावासत्कारणवादाः । तेषामपि कारणत्वबोधकश्रुतयो दृश्यन्ते । तथा हि च्छान्दोग्ये श्वेतकेतुं प्रत्युद्दालकः सूक्ष्मवस्तुनि स्थूलस्यान्तर्भावं प्रतिपिपादयिषुराह "न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति तं होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै किल सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठती"ति जगतः प्रागवस्थायां दृष्टान्तः श्रूयते । तत्र "नकिञ्चनाणु"शब्दयोः श्रवणाच्छून्यस्वभावाणुकारणवादा दार्ष्टान्तिकत्वेन प्रतीयन्ते । तथा, "असदेवेदमग्र आसीत्तन्नामरूपाभ्यां व्याक्रियते"त्यादावसत्स्वभाववादौ प्रतीयेते । तासां श्रुतीनां तेषु वादेषु तात्पर्यमस्ति न वेति संशये, अस्तीति प्राप्तेऽतिदिशति "त्येतेने"ति । एतेन प्रधानकारणवादनिराकरणे ये हेतवोऽशब्दत्वाचेतनत्वैकविज्ञानप्रतिज्ञाऽनुपपत्त्यादयस्तेषामण्वादिपक्षेऽपि साम्येन सर्वेऽण्वादिकारणवादा निराकृतत्वेन व्याख्याताः । न च "नकिञ्चना"दिशब्दविरोधः, तस्यानभिव्यक्तनामरूपपरत्वेनाविरोधात् । सूक्ष्मत्वाच्चात्मन्यणुशब्दो गौणः । स्वभाववादस्तु पूर्वं समाहितः । अभ्यासोऽध्यायपरिसमाप्तिं द्योतयति । तस्माज्जगत्कारणे सर्वज्ञे जिज्ञास्ये वेदान्तानां समन्वयो नान्यत्रेति सिद्धम् ॥

समन्वये स्पष्टलिङ्गमस्पष्टत्वेऽप्युपास्यगम् ।

ज्ञेयगं पदमात्रं च चिन्त्यं पादेष्वनुक्रमात् ॥

॥ हरिः ओं तत्सत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुन्दगोविन्दश्रीचरणशिक्षितश्रीरामकिङ्करवर्यकृतौ ब्रह्मामृतवर्षिण्यां प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ प्रथमाध्यायः समाप्तः ॥



॥ श्रीगणेशाय नमः ॥

अतिदेशाधिकरणे प्रधानवदशब्दत्वं परमाण्वादीनामपीत्युक्तम् । सम्प्रति प्रधानस्य वैदिकशब्दत्वाभावेऽपि स्मृतिरूपशब्दवत्त्वमाशङ्क्य परिहरति ।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २ । १ । १ ।**

प्रथमेऽध्याये सर्वज्ञे सर्वशक्तौ जगज्जन्मादिकारणे सर्वेषां वेदान्तानां समन्वयः प्रतिपादितः । अशब्दत्वादिहेतुभिः प्रधानादिकारणवादाश्च निराकृताः । इदानीं द्वितीयाध्याये प्रथमपादे सांख्यादिस्मृतितर्काभ्यां स्वपक्षे विरोधः परिह्रियते । द्वितीयपादे सांख्यादिमतानां दुष्टत्वं प्रतिपाद्यते । तृतीयपाद आद्यभागेन पञ्चमहाभूतश्रुतीनां परस्परविरोधः परिह्रियते, द्वितीयभागेन जीवश्रुतीनाम् । चतुर्थपादे लिङ्गशरीरश्रुतीनां विरोधपरिहार इत्येतदर्थमयमध्याय आरभ्यते । तदुक्तम् ।

द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता ।
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता ॥

इति । उक्तसमन्वयस्य स्मृत्यादिविरोधे तन्निरसनमनेन क्रियत इत्यनयोरध्याययोर्विषयविषयिभावः सम्बन्धः । निर्विषयकविरोधपरिहारायोगाद्विषयभूतसमन्वयस्यादौ विचारः कृतः । विषयिभूतविरोधपरिहार इदानीं क्रियत इति युक्तमेतस्याध्यायस्य पूर्वाध्यायानन्तर्यम् । श्रौतसमन्वयेऽपि विरोधपरिहारपरत्वादस्य पादस्य श्रुत्यध्यायसङ्गतिः । सर्वत्र पूर्वोत्तरपक्षयोर्विरोधाविरोधौ फलमिति विवेकः । तत्र प्रथमं स्मृतिविरोधपरिहारः । अत्र

संशयः, उक्तसमन्वयः किं सांख्यादिस्मृत्या विरुध्यते न वेति । विरुध्यत इति प्राप्तम् । कुतः । सर्वज्ञकपिलादिप्रणीतत्वेन प्रामाण्यात् । श्रुतिरपि कपिलमुनिमप्रतिहतज्ञानं दर्शयति, "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्ये"दिति । यस्तावदग्रे सर्गादौ जायमानं कपिलनामानमृषिं स्थितिकाले च प्रसूतं भूतभविष्यद्वर्तमानविषयकज्ञानैर्बिभर्ति पुष्णाति तमीश्वरं पश्येदिति योजना । तस्मान्न ब्रह्मणि कारणे समन्वयः, महर्षिप्रणीतप्रधानकारणवादिस्मृतीनामनवकाशदोषप्रसङ्गात् । न च जगत्कारणे सिद्धे वस्तुनि विकल्पो युज्यते । तस्मात्प्रधानानुगुणतया श्रुतयो नेया इति "चेदि"त्यन्तसूत्रावयवार्थः । परिहरति "ने"ति । कुतः । अन्यस्मृत्यनवकाशदोषप्रसङ्गात् । तथा हि चेतनं प्रकृत्य "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे"ति स्मृतिरव्याकृतनामरूपप्रपञ्चस्य ब्रह्मजन्यत्वमाह । तथा भगवद्गीतास्व "प्यहं सर्वस्य जगतः प्रभवः प्रलयस्तथे"ति चेतनकारणत्वं स्मर्यते । तथा च प्रधानकारणवाद एतत्स्मृतीनामनवकाशो दोषः प्रसज्येत । अतः स्मृतिद्वयविरोधे श्रुत्यविरुद्धा स्मृतिः प्रमाणमित्यप्रामाण्यसांख्यस्मृत्या न विरोधः । श्रुतिश्चैतदन्यकपिलविषया, कपिलैक्ये प्रमाणाभावादिति ॥

इतश्च सांख्यस्मृतेरनवकाशो न दोष इत्याह ।

## इतरेषां चानुपलब्धेः ॥ २ । १ । २ ॥

सांख्यस्मृतिप्रसिद्धानां प्रधानादितरेषां महदहङ्कारादीनां तत्त्वानां लोके वेदे चानुपलब्धेश्च सांख्यस्मृतेरप्रामाण्यं न दोषः । तथा च तदेकदेशप्रधानस्मृतेरप्यप्रामाण्यमिति भावः ॥

**एतेन योगः प्रत्युक्तः ॥ २ । १ । ३ ॥**

अतिदेशत्वान्न पृथक्सङ्गत्याद्यपेक्षा । योगास्तावत्सेश्वरा इत्येतावान्कपिलमताद्विशेषः । प्रधानादिप्रक्रिया समैव । तथा च कपिलमतनिरासेनैव पातञ्जलमतं निरस्तं भवतीत्यर्थः । न चातिदेशवैयर्थ्यं, ज्ञानसाधनत्वेन श्रुतिसिद्धयोगप्रतिपादकत्वेन प्रामाण्याशङ्कायामतिदेशसार्थक्यात् । तर्ह्यप्रामाण्ये कथं तस्माद्योगप्रमेति चेदुच्यते । तात्पर्यविषयभूतार्थेऽप्रामाण्यं हि शास्त्रस्याप्रामाण्यमावहति, यथा कपिलस्मृतेः । न हि योगस्मृतेः प्रधानादौ तात्पर्यं येनाप्रामाण्यं भवेत्, किं तु योग एव । स चाबाधितः, श्रुतिसिद्धत्वात् । किञ्चिदालम्ब्य योगः प्रतिपादनीय इति परप्रसिद्धप्रधानादिकमालम्बनत्वेन गृहीतम् । तत्रापि प्रामाण्याशङ्कायामतिदेश इत्यविरोधः । एवं यदंशे सांख्यस्मृतेरविरोधस्तदंशे प्रामाण्यमित्यधिकरणद्वयस्य तात्पर्यम् । योगस्य कथं श्रौतत्वमिति चेत्तद्वदामः । श्वेताश्वतरोपनिषदि "त्रिरुन्नतं स्थाप्य समं शरीर"मित्यादिना योगप्रपञ्चः कृतः । त्रीणि कायग्रीवशिरांस्युन्नतानि यस्मिंस्तच्छरीरं समं संस्थाप्य युञ्जीतेति योजना । तथा काठकेऽपि "तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणा"मिति "विद्यामेतां योगविधिं च कृत्स्न"मितीन्द्रियाणां स्थिरामैकाग्र्यलक्षणां धारणां योगविदो योगं मन्यन्ते । यथोक्तमैकाग्र्यमेव परमं तप इति वक्तु"मिति" शब्दः । एतां ब्रह्मविद्यां योगप्रकारं च सर्वं मृत्योस्सकाशान्नचिकेता लब्ध्वा ब्रह्म प्राप्तोऽभूदित्यर्थः ॥

**न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २।१।४ ॥**

स्मृतिविरोधः परिहृतः । इदानीं न्यायविरोधः

परिक्लियते । यद्यपि सापेक्षतर्केण निरपेक्षश्रुतिसमन्वयस्य न विरोधस्तथाऽपि साक्षात्कारस्य मोक्षसाधनत्वेन प्राधान्यात्तर्कस्य दृष्टान्तानुसारेणार्थसमर्पकत्वेनापरोक्षार्थविषयकत्वात्प्रधानसाक्षात्कारस्य विषयतोऽन्तरङ्गं तर्कः, शब्दस्तु परोक्षार्थैकबोधनस्वभावो बहिरङ्गमिति बलवत्तर्केण विरुध्यत इत्याक्षेपो युक्तः । पूर्वं वेदविरुद्धस्मृतेर्मूलाभावादप्रामाण्यमुक्तम् । नहि तर्कस्य व्याप्तिपक्षधर्मतयोर्मूलत्वेन लोकसिद्धत्वात्तेन विरोध इति प्रत्युदाहरणसङ्गत्याऽयमाक्षेपः । आकाशादिकं न चेतनप्रकृतिकं द्रव्यत्वाद्घटवदिति तर्केण समन्वयो विरुध्यते न वेति सन्देहे, विरुध्यत इत्याह "न विलक्षणत्वा"दिति । जगच्चेतनप्रकृतिकमिति यदुक्तं तन्न । कुतः । विलक्षणत्वादस्य जगतश्चेतनाद्विलक्षणत्वात् । चेतनं ब्रह्म शुद्धम्, जगदचेतनं परिच्छिन्नमशुद्धमिति विलक्षणम् । यद्यद्विलक्षणं न तत्तत्प्रकृतिकं, यथा तन्तुविलक्षणो घटो न तन्तुप्रकृतिक इति । ननु ब्रह्मजगतोर्वैलक्षण्यं कुत इत्यत आह "तथात्वं च शब्दा"दिति । तथात्वं वैलक्षण्यं "विज्ञानं चाविज्ञानं चे"त्यादित्यादिश्रुतितोऽवगतमित्यर्थः । तत्र श्रुतावविज्ञानशब्देन जडमुच्यते ॥

ननु ब्रह्मवज्जगदपि चेतनं श्रूयते "ते हेमे प्राणा अहं श्रेयसे विवदमानाः," "मृदब्रवीत्," "आपोऽब्रुवन्", "ते ह वाचमूचुस्त्वं न उद्गाये"त्यादिश्रुतिभिरित्यत आह ।

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ २ । १ । ५ ॥**

उक्तशङ्कानिरासार्थं "स्तु"शब्दः । उक्तश्रुतिभिर्न जगतश्चेतनत्वं प्रत्येतव्यं, यतो मृदाद्यभिमानिनीनां देवतानां

तत्र व्यपदेशो भवति, न मृदादिमात्रस्य । इदं कुतः । विशेषानुगतिभ्याम् । कौषीतकीब्राह्मणे "एता ह वै देवता अहंश्रेयसे विवदमाना" इति, बृहदारण्यके प्राणसंवादे श्रुतप्राणानां देवताशब्देन विशेषितत्वान्न प्राणा इन्द्रियाणि किं तु तदधिष्ठानदेवता इति नेन्द्रियादिजगतश्चेतनत्वम् । "अग्निर्वाग्भूत्वा मुखं प्राविश" दित्यादिमन्त्रार्थवादादिषु सर्वत्र तदभिमानिदेवतानामनुगतेः श्रवणाच्च न चेतनं जगत् । "ते ह वाचमूचु" रि यत्रापि ते ह देवा वागभिमानिनीं देवतामूचुः । किमिति । त्वं न उद्गायेति । भोगमस्मभ्यं संपादयेत्यर्थो बोध्यः । तस्माद‍चेतनस्य जगतो वैलक्षण्यान्न चेतनप्रकृतिकत्वमिति प्राप्ते राद्धान्तसूत्रम् ॥

**दृश्यते तु ॥ २ । १ । ६ ॥**

पूर्वपक्षनिरासार्थं "स्तु" शब्दः । यदुक्तं चेतनविलक्षणं जगन्न तत्प्रकृतिकमिति तन्न, चेतनात्पुरुषात्तद्विलक्षणानां नखलोमादीनामचेतनानामचेतनाच्च गोमयाच्चेतनवृश्चिकस्योत्पत्तिर्यतो दृश्यतेऽत इत्यर्थः । प्रकृतिविकारयोरत्यन्तसादृश्ये प्रकृतिविकारभावानुपपत्त्या यत्किञ्चित्सादृश्यं वाच्यम । तच्च प्रकृतेऽपि जगति स्फुरणादनुवृत्त्या समानमिति भावः । किञ्च ब्रह्मण्युपनिषद्व्यतिरिक्ततर्कादेः प्रमाणस्य प्रवेशाभावान्न तेन विरोधः समन्वयस्य । तथा च श्रुतिः "नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठे" ति "को अद्धा वेद क इह प्रवोचत्तदियं विसृष्टिर्यत आबभूवे" ति । ब्रह्मविषया मतिरेषा तर्केण नापनेया न प्रापणीयेत्यर्थः । यद्वैषा कुतर्केण नापनेया निरस्या न भवति । किं त्वन्येनैवाचार्येण वेदविदा प्रोक्ता सती सुज्ञानाय फलावसायिसाक्षात्काराय भवति हे प्रेष्ठ

प्रियतमेति नचिकेतसं प्रति मृत्योर्वचनम् । क इह ब्रह्मव्यवहारभूमावद्धा साक्षाद्वेद को वा तत्प्रवोचत्प्रावोचदित्यर्थः । छान्दसो दीर्घलोपः । यत आत्मनः सकाशादियं विविधा सृष्टिर्बभूव स एव स्वरूपं वेद नान्य इति मन्त्रप्रतीकयोरर्थः ॥

**असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ २ । १ । ७ ॥**

ननु चेतनस्य नामादिहीनस्याचेतननामादिमज्जगद्धेतुत्व उत्पत्तेः पूर्वं जगदसदेव स्यादिति चेन्न । कुतः । प्रतिषेधमात्रत्वादसत्स्यादिति योऽयं प्रतिषेधस्तत्प्रतिषेधमात्रं न तु तस्य प्रतिषेध्यमस्तीत्यर्थः । अयं भावः । न हि कार्यसत्ता कारणाद्भिद्यते, किं तु कारणमेव । स्थितिदशायामपि जगत्सत्ता ब्रह्मैव । तथा च ब्रह्मैव जगतः सत्त्वमुत्पत्तेः पूर्वमप्यविशिष्टमिति नासज्जगदिति ॥

आक्षिपति ।

**अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ २ । १ । ८ ॥**

ननु शुद्ध्यादिगुणकं ब्रह्म जगदुपादानमित्यसमञ्जसम् । कुतः । अपीतौ तद्वत्प्रसङ्गात् । अपीतौ प्रलयसमये जाड्याशुद्ध्यादिगुणकं जगद्ब्रह्मणि लीयमानं स्वनिष्ठजाड्यादिभिर्धर्मैर्ब्रह्म दूषयेत् । यथा शाकादौ लीयमानं हिङ्ग्वादिकं स्वनिष्ठगन्धादिभिः शाकादिकं दूषयति तद्वत् । तथा च तद्वत्कार्यवत्कारणस्यापि ब्रह्मणोऽशुद्ध्यादि प्रसज्येतेत्याक्षेपसूत्रार्थः । परिहरति ।

**न तु दृष्टान्तभावात् ॥ २ । १ । ९ ।**

"तु" रेवार्थः । पूर्वोक्तमसमञ्जसं नास्त्येवेत्यर्थः । कुतः ।

दृष्टान्ताभावात् । कार्यं कारणे लीयमानं स्वधर्मेण कारणं न दूषयतीत्यस्मिन्नर्थे शतशो दृष्टान्तानां सत्त्वादित्यर्थः । यथा घटशरावादिकं कार्यं मृदि लीयमानं मृदं स्वनिष्ठधर्मैर्न दूषयति, यथा वा स्वप्नप्रपञ्चो न स्वप्नधर्मैः कारणमात्मानं दूषयति, तथा मायिक जगदुत्पत्तिस्थितिलयाख्यावस्थात्रयसाक्षिणं परमात्मानं न जगत्स्वनिष्ठजाड्यादिभिर्धर्मैर्दूषयेत् । परमात्मनोऽवस्थात्रयासम्बन्धे वृद्धसम्मतिरपि ।

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥"

इति । माययाऽऽवृतस्वरूपो जीवो यदाऽऽचार्यप्रतिपादनावस्थायां स्वरूपज्ञानभाग्भवति तदाऽद्वैतं बुध्यत इति योजना । "अज"मित्युत्पत्त्यवस्थायाः सम्बन्धाभाव उक्तः, "अनिद्र"मिति लयावस्थायाः, "अस्वप्न"मिति स्थित्यवस्थाया इति भेदः । किं च कार्यस्य कारणात्मकत्वेऽपि न कारणं कार्यात्मकमिति न कार्यधर्मदूषणं कारणस्येति समञ्जसं वेदान्तशास्त्रमिति ॥

**स्वपक्षदोषाच्च ॥ २ । १ । १० ॥**

ये दोषा विलक्षणत्वात्प्रकृतिविकारभावानुपपत्तिरुत्पत्तेः प्राग्जगतोऽसत्त्वप्रसङ्गोऽपीतौ तद्वत्प्रसङ्ग इति सांख्येनोद्भावितास्ते सांख्यपक्षेऽपि समानाः, शब्दादिहीनप्रधानसकाशाच्छब्दादिमतो विलक्षणस्य जगत उत्पत्त्यङ्गीकारादित्यर्थः । वस्तुतः प्रपञ्चसत्यत्ववादिनः सांख्यस्यैवैते दोषा न ममानिर्वचनीयवादिन इति भावः ॥

**तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ २ । १ । ११ ॥**

केवलस्य तर्कस्याप्रतिष्ठानादप्यप्रतिष्ठितत्वाच्च न तेन समन्वयविरोधाशङ्केत्यर्थः । एकेन तार्किकेण यत्नेनानुमितोऽप्यर्थोऽन्येन श्रेष्ठतरेणान्यथा नीयते । एवमन्येन श्रेष्ठतमेनान्यथानयनमिति तर्कस्याप्रतिष्ठानं बोध्यम् । ननु तर्कमात्रस्याप्रतिष्ठितत्वे धूमज्ञानानन्तरं वह्न्यर्थिप्रवृत्त्यनुपपत्तिः, वाक्यार्थसन्देहे तर्केणानिर्णयप्रसङ्गश्च । किञ्च "तर्काप्रतिष्ठाना"दित्ययमपि तर्कोऽप्रतिष्ठित एवेति तेन परमतनिराकरणं स्यात् । तस्मात्कस्य चित्तर्कस्याप्रतिष्ठितत्वेऽपि कस्यचित्प्रतिष्ठितत्वसम्भवात्तेन समन्वयविरोधाशङ्का युक्तेत्याक्षिप "त्यन्यथाऽनुमेयमिति चे"दित्यन्तेन । अप्रतिष्ठिततर्कादन्येन प्रकारेण प्रतिष्ठिततर्केण समन्वयविरोधादिकमनुमेयमिति शङ्कार्थः । तर्कस्य क्वचित्प्रतिष्ठितत्वमङ्गीकृत्य समाधत्त "एवमपी"ति । अन्यत्र तर्कस्य प्रतिष्ठितत्वेऽपि प्रकृते लिङ्गादिहीने ब्रह्मणि वेदनिरपेक्षस्य तर्कस्याप्रतिष्ठितत्वदोषादनिर्मोक्षप्रसङ्ग एवेति समाधानार्थः । यद्वा महतां कपिलकणादादीनां परस्परविप्रतिपन्नैरागमनिरपेक्षैस्तर्कैस्तत्त्वनिर्णयाभावादनिर्मोक्षप्रसङ्ग इत्यर्थः । तस्मादागमविरोधी तर्कोऽप्रमाणमिति न तेन विरोध इति सिद्धम् ॥

**एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥२।१।१२॥**

अतिदेशत्वान्न पृथक्सङ्गत्याद्यपेक्षा । ब्रह्म न जगदुपादानं विभुत्वाद्व्योमवदित्यनेन वैशेषिकाद्यनुमानेन ब्रह्मकारणबोधकः समन्वयो विरुध्यते न वेति सन्देहे, विरुध्यत इति प्राप्तम् । कुतः । अनुमानेन बाधितत्वात् । तस्मादणवादय एवोपादानमिति प्राप्तेऽतिदिशति । एतेन मन्वादिभिः शिष्टैः केन चित्सत्कार्यवादाद्यंशेन परिगृहीतप्रधानकार-

पसंहारः। तथा हि। यदि तावत्पुत्रादीप्सितं तत्रोपेय-नित्यता विहन्येत। तदिच्छाया अनित्यत्वात्। तत्र याव-ज्जीवमित्यनर्थकम्। नाप्यधिकारिविशेषणतयार्थवत्। अर्थसिद्धेः।

अथ, मतं सर्वेषां सर्वदा सर्वमीहितं फलं भविष्यत्यु-पात्तदुरितनिर्हरणम्। भवेदेवं नित्यता, फलवशेन न शब्दात्। तथा हि। फलस्य नित्यसमीहितत्वात्तद्वशेना-ऽवश्यकर्त्तव्यता वास्तवी। शब्दस्तु नित्यसमीहितोपाय-प्रतीतिमात्रोपलक्षणः। तत्राऽसति शब्दव्यापारे ततो निर्द्द-

ताया इति, स च सुगम एव। यदि च समीहितसाधनता ततो यथाशक्ति चाङ्गोपसंहारः कथमिति चेत्यनुकृष्यते। तदभावे न नित्यतेत्यर्थः। ननु समीहितसाधनत्वनित्यत्वयोः को विरोध? इत्यत आह—तथा हि। यदि तावत्पुत्रादीप्सितं तत्रोपेयनित्यता विहन्येत। कुतः? तदिच्छाया अनित्यत्वात्। भवतु अनित्यत्वं को दोष? इत्यत आह—तत्राऽनित्यत्वे सति यावज्जीवमित्यन-र्थकम्। नाप्यधिकारिविशेषणतया ऽर्थवत्। अर्थसिद्धेर्यावत्पदस्यान-र्थक्यं स्थितमेव। यावज्जीवनमात्रस्याप्यधिकृतविशेषणत्व न संभ-वति, व्यवच्छेद्याऽभावात्। न ह्यजीवतो ऽधिकारप्रसक्तिस्तेनार्थ-सिद्धेरनर्थकत्वमित्यर्थः।

अथ मत, सर्वेषा सर्वदा सर्वमीहितं फल भविष्यति उपात्त-दुरितनिवर्हण, ततश्च नित्यसमीहितसाधनत्वान्नित्यत्वमुपपत्स्यत इति। निराचष्टे—भवेदेव नित्यता। किं तु फलवशेन, न तु शब्दात्। स्फुटयति—तथा हि। फलस्य नित्यसमीहितत्वात्तद्वशेनाऽवश्यकर्त्त-व्यता[1] वास्तवी। शब्दस्तु समीहितो[2]पायप्रतीतिमात्रोपलक्षणः। ननु नित्यतया नः प्रयोजन, सा च फलतो ऽपि लभ्येति कृतं शब्दने-

१ कर्तव्यफल इति २ पु पा०। २ समीहितोपायो विश्वजिदिति मू पु पा०।

त्यर्थकृच्छ्रादिवत्सर्वाङ्गोपसंहाराप्रसङ्गो, ऽन्यथा फलाऽभावात्। शाब्दे हि नित्यत्वे परिपूर्णाङ्गं सर्वदा चेत्यसंभवाद्यथा शक्नुयादित्युपपद्यते[1]। इतरथा ऽङ्गाम्नानस्याऽविकल्प्यत्वाद्यो यदेति विश्वजिदादिवत्स्यात्। न हि सर्वेषां समीहितोपायो विश्वजिति पङ्ग्वादयो ऽधिकारिणः। नानुषङ्गिकमीप्सितं, प्रमाणाऽभावात्। अर्थापत्तेरक्रियायां प्रत्यवायेनापि क्षयात्। स्मृतिवाक्यशेष-

त्यत आह—तत्राऽसति शब्दव्यापारे नित्यतायामेनोनिर्हृत्यर्थकृच्छ्रादिवत्सर्वाङ्गोपसंहाराप्रसङ्गः। कुतः? अन्यथा ऽनुपसंहारे सर्वेषामङ्गानां प्रायश्चित्तवदेव फलाऽभावात्। न चैष शाब्देऽपि नित्यत्वे प्रसङ्ग इत्याह—शाब्दे हि नित्यत्वे परिपूर्णाङ्गं सर्वदा चेत्यसंभवात् शब्देनैवाऽवश्यकर्तव्यताऽभिधायिना सर्वाङ्गोपसंहृतौ सत्यामनुपपद्यमानेन यथा शक्नुयादित्युपपद्यते। अथ वास्तवेनापि नित्यत्वेन किमिति नोपपद्यते? इत्याह—इतरथा तु वास्तवे नित्यत्वे नित्यवदङ्गाऽऽम्नानस्याऽविकल्प्यत्वाद्यो यदेति विश्वजिदादिवदुपलभ्येत।

दृष्टान्तं विवृणोति—न हि सर्वेषां समीहितोपाये विश्वजिति पङ्ग्वादयो ऽधिकारिणः। पङ्ग्वादय इत्यसमाधेयाङ्गवैकल्यं सूचयति। इदमत्राकूतम्। शाब्दमङ्गाम्नानं शाब्देनैव नित्यत्वेन शक्यं व्यवस्थापयितुं, न वास्तवेन, तस्य प्रमेयत्वादङ्गाम्नानस्य च प्रमाणत्वात्प्रमाणतन्त्रत्वात्प्रमेयव्यवस्थितेः। ननु 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'ति यावज्जीवोपबन्धान्नित्यकर्तव्यताप्रतिपादनपरं शास्त्रं, ततश्च नित्यकर्तव्यता शाब्दी भविष्यतीति तत्पराच्च शास्त्रादानुषङ्गिकं सर्वदा सर्वजनसमीहितं दुरितक्षयलक्षणं भवतोच्यतइत्यत आह—नानुषङ्गिकमीप्सितं, प्रमाणाऽभावात्। न खलूपात्तदुरितनिबर्हणकाम इति यावज्जीववाक्यशेषमधीयते। नाप्यर्थापत्तिः। कुतः? अर्थापत्तेरक्रियायां प्रत्यवायेनापि क्षयात्।

---

१ उपबध्यते मू पु पा।

षाभ्यां च तत्कल्पनाया एव युक्तत्वात् । स्मृतितश्च पुनस्तदर्थावगमात् । प्रतिषिद्धस्य च नियोगतो ऽकर्त्तव्यस्य क्रियायामिव नियोगतः कर्त्तव्यस्याऽक्रियायां प्रत्यवायो युक्तः । तथा नियोगोपपत्तेः । प्रत्यवायभयात् ईप्सि-

नन्वेवमुभयथा ऽप्युपपत्ते कस्य कल्पनौचित्य ? मित्यत आह—स्मृतिवाक्यशेषाभ्यां च तत्कल्पनाया एवाऽकरणे प्रत्यवाय-कल्पनाया एव युक्तत्वात् । तत्र स्मृति 'अकुर्वन्विहितं कर्मे'त्यादिका । वाक्यशेषोऽपि 'यो ह वै दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वा ऽतिपादयेत्स स्वर्गाल्लोकाच्च्यवते' इति । तथा हि । यावज्जीवोपबन्धयोर्दर्शपूर्णमासयोः किमुपात्तदुरितचय कल्प्यता,-मुताऽकरणे प्रत्यवायप्राप्ति ? रिति सन्देहे 'यो ह वै' इति वाक्यशेषात्स्मृतेश्चाऽकरणे प्रत्यवाय इति निर्णयः । अपि च लौकिक्या अपि स्मृतेस्तदर्थाऽवगमात् । तथा हि । यदवश्यकर्त्तव्यमिति लोके विधीयते यच्च निषिध्यते यथा ग्रामान्तराऽऽनीतानां राजाश्वादीनां नीराजनादि, भुजगाङ्गुलिदानादि वा तदकरणे । तत्करणे च प्रत्यवायो भवतीति प्रतिपद्यन्ते लौकिकाः । तदेवमनादिलौकिकस्मृतिदृढिमलब्धव्युत्पत्तिरित्यवश्यकर्त्तव्यता ऽकरणे प्रत्यवायकल्पनाबीजेन पुनरुपात्तदुरितनिर्हरणकल्पनाया इत्याह—स्मृतेश्च पुनस्तदर्थाऽवगमात्प्रतिषिद्धस्य नियोगतो ऽकर्त्तव्यस्य क्रियायामिव नियोगतः कर्त्तव्यस्याऽक्रियायां प्रत्यवायो युक्त । न चात्र न संशयो येन वाक्यशेषादिभ्यो निर्णय इत्याह—तथा नियोगोपपत्तेस्तदकरणे प्रत्यवायकल्पनायामेव नियोगस्याऽवश्यभावस्य कर्त्तव्यताया उपपत्तेः । कुतः ? अकरणे प्रत्यवायभयादीप्सितोपायत्वेनाऽवश्यभावः प्रवृत्तेरित्याह—ईप्सितोपायेष्विच्छया प्रवृत्तेरिच्छायाश्चाऽवश्यभावादिति

तोपायेष्विच्छया प्रवृत्तेः । तथा च यादृशी प्रवृत्तिर्न्न तादृ-श्यभ्युदयाय । नित्येप्सितोपायनित्यत्वफलवत्त्वयथाश-क्त्यनुष्ठेयत्वानां चासङ्गतेरकरणे प्रत्यवायकल्पना । तस्मान्नित्येप्सितोपायानि न नित्यानि । प्रवृत्तिश्च तेष्वकरणे प्रत्यवायकल्पनात् । दुःखात्मकत्वाच्च कर्म्मणः आनुषङ्गिकात्कार्य्यविरोधिनः पाप्मनः क्षयादिति । भावनायाश्चभावः । ननु नेप्सितोपायतामात्रमपि तु नित्येप्सितोपायत्वं, ततश्चाऽवश्यभावनियमः प्रवृत्तेस्तद्धेतोः इत्यत आह—तथा च यादृशी प्रवृत्तिर्न तादृश्यभ्युदयाय । तथा हि । नितान्तसमीहितेष्वपि कदाचिदालस्यादुदासते तदर्थिनस्तदुपायेषु, न त्वक्रियमाणे प्रत्यवायहेताविति सर्वजनीनमेतदित्यर्थः । परपक्षे विरोधमादर्शयति—नित्येप्सितोपायनित्यत्वफलवत्त्वयथाशक्त्यनुष्ठेयत्वानां च का सङ्गतिः ? विरुद्धं खल्वेतन्नित्येप्सितोपायनित्यत्वं फलवत्त्वं यथाशक्त्यनुष्ठेयत्वं चेति । तथा हि । सदातनाङ्गसाकल्यवत्ता हि साधननित्यता, सा यथाशक्त्यनुष्ठेयत्वेन कतिपयाङ्गवैकल्येन विरुध्यते । तथा तदेव फलवत्त्वेन नित्येप्सितोपायनित्यत्वं विरुध्यते । तथा हि । ईप्सितप्राप्ताविच्छा निवर्त्तते । न निवर्त्तते चेत् न नूनं तदीप्सितम् । इच्छानिवृत्तौ च न नित्यमीप्सितं, सोयं फलवत्त्वेप्सितत्वयोर्विरोधाद्विरोधः । तस्माच्छब्दावगतनित्यत्वनिर्वाहायाऽकरणे च प्रत्यवायकल्पनैव ज्यायसी । उपसंहरति—तस्मान्नित्येप्सितोपायतया न नित्यानि कर्माणि । प्रवृत्तिस्तु तेष्वकरणे प्रत्यवायात् । ननु नित्येषु केषुचिदुपात्तदुरितक्षयोऽपि फलं श्रूयत इत्यत आह—दुःखात्मकत्वाच्च कर्मणस्तदानुषङ्गिकात् कार्यविरोधिनः पाप्मनः क्षयात्प्रवृत्तिर्न तच्छाब्दं फलं कर्मण्येव स्वभावतो दुःखात्मनि विधीयमाने दुःखविरोधित्वात्पाप्मनस्तत्क्षयस्य हविर्विकारादिवदानुषङ्गिकत्वादित्यर्थः ।

यदि नित्यानां कर्मणां नाऽभिमतसाधनत्वं किं तु तान्येव कर्त्तव्यतया चोद्यन्ते तदा तेषां करणवाचिनी तृतीया दर्शपूर्णमा-

साध्यत्वात् अग्निहोत्रमितिवन्निर्देशार्थत्वाद्विपरिणम्यापि संभवात्तृतीयानिर्देशाऽविरोधः । वार्त्तमेतत् । तथा हि ।

नित्यं नित्येहितोपाये यावज्जीवमिति श्रुतेः[१] ।
अङ्गान्यतो यथाशक्ति न वा सर्वाणि चाऽन्यथा ॥

न तावदिष्टसाधनत्वे ऽपि नित्यत्वविहतिः । नित्ये- ष्टस्यैव साध्यत्वकल्पनात् दुरितनिर्हरणस्य । सुखे तद्धेतौ वा कदा चिन्माध्यस्थ्यमेवेति दुःखतद्धेतुभ्यां तु सर्वदो- द्विजमानस्य तन्निवृत्तौ सर्वदाकामः, हितमपि च प्रेप्सित-

साध्या,मित्यनुपपन्नेत्याशङ्क्याह—भावनायाश्च साध्यत्वात् । अयमर्थः । यद्यपि यजेर्नेष्टं प्रति साधनता । यद्यपि च प्रत्यवायप्रागभावो न साध्यस्तथापि भावनैव साध्या भविष्यति । यद्यपि भावनाव्याप्य- तया तां प्रति कर्मत्वान्न करणत्वं यजेस्तथापि फलपक्षे यथा भाव- नाव्याप्यस्य साधनावच्छेदकतया करणभावस्तथेहापि भविष्यतीति ।

परिहारान्तरमाह—अग्निहोत्र,मितिवन्निर्देशार्थत्वाद्विपरिण- म्यापि संभवात्तृतीयानिर्देशाऽविरोधः । अयमर्थः । यथा 'ऽग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यग्निहोत्र,मिति तृतीयार्थे द्वितीया तथा दर्श- पूर्णमासाभ्यामिति तृतीया द्वितीयार्थे भविष्यति । निर्देशार्थत्वा- दिति । निर्दिश्यतइतिनिर्देशः कर्मरूपार्थस्तदर्थत्वा,द्विपरिणामस्तृती- याया इत्यर्थः । परिहरति—वार्त्तमेतत् । तथा हि ।

नित्यं नित्येहितोपाये यावज्जीव,मिति श्रुतेः ।
अङ्गान्यतो यथाशक्ति न वा सर्वाणि चाऽन्यथा ॥

न तावदिष्टसाधनत्वे नित्यत्वविहतिः, नित्येष्टस्यैव साध्यत्व- कल्पनाद् दुरितनिर्हरणस्य विश्वजिदादिभ्यो वैलक्षण्यम् । प्रवृत्तेर- वश्यभावायाह—सुखे तद्धेतौ वा कदा चिन्माध्यस्थ्यमित्यालस्या- दिभ्यो दुःखतद्धेतुभ्यां तु सर्वदोद्विजमानस्य तन्निवृत्तौ सर्वदा कामः ।

१ श्रुति-मू पु पा ।

**स्तस्य प्रतिबन्धक्षये समीहा ऽस्त्येव । तस्मादिष्टनिबन्धनः पाप्मनः क्षयः सदा समीहितः। नित्यानां कर्म्मणां फलनित्यत्वादेव यावज्जीवमिति शब्दावगतादिति न नित्यत्वविरोधः। अनित्ये हि साध्ये सा विहन्येत। यथाशक्त्युपसंहारश्च नित्यत्वादेवाऽहीनाङ्गस्य नित्यं क्रियासंभवात्। न चेदं वास्तवं नित्यत्वं, न हि फलवादिनो यावज्जीवशब्दं नामनन्ति[1] फलविशेषशब्दं वा ऽधीयते, किं तु यावज्जीवश्रुतेरवगतनित्यत्वास्तत एवाऽर्थापत्त्या फलभेदप्रयोगभेदौ कदा चिदुन्नयन्ति । अनित्ये साध्ये परिपूर्णाङ्गे**

ननु हितकामनासमये नाऽभावस्तीति कथं सर्वदे? त्यत आह— हितमपि च प्रेप्सतस्तस्येष्टस्य प्रतिबन्धक्षये प्रतिबध्यते ऽनेनेति दुरितं प्रतिबन्धस्तस्य क्षये समीहा ऽस्त्येव । तस्मान्नित्येप्सितोपायत्वफलवत्त्वयोरविरोध इत्याह—तस्मादिष्टनिबन्धनः पाप्मनः क्षयः सर्वदा समीहितः । नित्यानां कर्मणां फलनित्यत्वादेव याज्जीवमिति शब्दाऽवगतादिति न नित्यताविरोध. । यदनुपपत्त्या यत्कल्प्यते न तेन तदेव बाध्यतइत्यर्थः । न च तस्य स्वभाव एव कर्मणो नित्यताविरोधीति व्यतिरेकमुखेन दर्शयति—अनित्ये साध्ये सा विहन्येत । इदं नित्य समीहितम् । यथाशक्त्यनुष्ठेयत्वस्याऽविरोधमाह—यथाशक्त्युपसंहारश्च नित्यत्वादेव । कुतः ? अहीनाङ्गस्य नित्य क्रियासंभवो यतः । न चेदं वास्तव नित्यत्व येन प्रमेयं सदङ्गविधिं न व्यवस्थापयेत्, अपि तु शाब्दमेव । कुतः ? न हि फलवादिनो यावज्जीवशब्द नामनन्ति, फलविशेषशब्दमेव वा ऽधीयते । यतः शब्दावगतान्नित्यत्वान्नैवविध फल कल्पयेरन् । कि तु यावज्जीवश्रुतेरवगतनित्यत्वास्तत एवार्थापत्त्या फलभेदप्रयोगभेदावुन्नयन्ति । अर्थापत्ति दर्शयति—अनित्ये साध्ये परिपूर्णाङ्गे च

१ स्वर्गादि मू पु ।

**च प्रयोगे यावज्जीवशब्दाधिगतनित्यकर्त्तव्यताऽनुपपत्तिः । न हि कदा चिदीप्सितोपायात्मिकायां कर्त्तव्यतायां परिपूर्णाङ्गसाधनात्मिकायां च यावज्जीवशब्दो ऽन्वेति । नित्यत्वाच्च कल्पितः फलभेदो न तदेव बाधते । कथं तर्हि नित्येप्सितोपायत्वान्नित्यत्वमुक्तं ? शब्दाऽवगतस्यैव तस्याऽविघातः शब्दसामर्थ्यलभ्येनैव तेनोक्तो यथाशक्ति प्रयोगेण तन्त्रेण च । तत एवाऽनयोर्मानान्तरं मृग्यम् । कथं**

प्रयोगे यावज्जीवशब्दाऽवगतनित्यकर्तव्यताऽनुपपत्ति: न हि कदाचिदीप्सितोपायात्मिकायां कर्त्तव्यतायां परिपूर्णाङ्गसाधनात्मको यावज्जीवशब्दो ऽन्वेति । नित्यत्वाच्च कल्पित: फलभेदो न तदेव बाधते अपि तु तदधीनाऽऽत्मलाभत्वात्तदनुगुणात्मलाभत्वात्तदनुगुणात्मतया व्यवतिष्ठते । यदि शब्दाऽवगम्यमेव नित्यत्वं कथ तर्हि नित्येप्सितोपायत्वान्नित्यत्वमुक्तम् ? परिहरति—शब्दाऽवगतस्यैव यावज्जीवमिति शब्दावगतस्यैव कर्मनित्यत्वस्याऽविघात: शब्दसामर्थ्यलभ्येनैव तेन नित्यसमीहितोपायत्वेनोक्तो यथाशक्ति प्रयोगेण तन्त्रेण च ।

प्रसङ्गात् किंचिदाह—तत एव यतो यावज्जीवश्रुतिविशिष्टया लिङा नित्येप्सितमिह फलं कल्पितं तत उभयोरपि काम्यनित्ययो: कर्मणो' क मनाकृतप्रवृत्तित्वेनाऽगृह्यमाणविशेषतया साधारणतया तन्त्रमनुष्ठानमस्मदभिमतं सिध्यति ।

मीमांसकैकदेशिनस्तु काम्ये क्रियमाणे प्रवृत्तौ नियोगात् कामनाया बलीयस्त्वान्नित्यस्यैकदेशकालकर्तृकतया प्रासङ्गिकीं सिद्धिं मन्यन्ते । तदिदमसाम्प्रतम् । यदि हि नैसर्गिकी कामनिबन्धना प्रवृत्तिर्नियोगनिबन्धनाया: प्रवृत्तेर्बलीयसी स्यात् ततो भवन्मतेन प्रत्यवायक्लेशधनव्ययपराङ्मुखा नित्यनैमित्तिकेषु प्रवर्त्तयत्यपि नियोगे

**चेदं नित्यत्वं कर्म्मणो यदि नित्यसमीहितसाधनत्व ? मिति नित्याऽनुष्ठानादेतदकरणे प्रत्यवायान्नित्यक्रिया शब्दादेव । नैतत् । शब्दादेव चेदस्य कर्त्तव्यता किमर्थमकरणे प्रत्यवायकल्पना ? शब्दादेव प्रवृत्तिसिद्धेः । न च शब्दः कारक-**

न प्रवर्त्तेरन् । तथा निषिद्धेभ्यो हिंसादिभ्यो न निवर्त्तेरन्निति नित्यनैमित्तिकनिषेधगोचराः खलु विधयो दत्तजलाञ्जलयः प्रसज्येरन् । स्यादेतत् । केवला कामना विधेर्दुर्बला, विध्यनुगृहीता तु बलीयसी नाऽनुग्रहार्थो भवेत् । न हि नित्यनैमित्तिकेषु विधिना प्रवृत्तौ कर्त्तव्यताया कामनाया. कश्चिदुपयोगः । नापि दृष्टार्थेषु काम्येषु तदा विधेरुपयोग' । तस्मान्न काम्ये ऽनुष्ठीयमाने प्रासङ्गिकत्व नित्यस्य । तस्मादस्मन्मतावलम्बनेन तन्त्रतैव रमणीयेति ।

क्वचित् पाठ' न तु तत एवेति । अस्यार्थः न तु नित्य समीहितोपायत्वाद्यथाशक्तिप्रयोगाच्च नित्यत्वकल्पना, किं तु श्रुतादेव नित्यत्वादेतदुभयमिति । अन्यथेति यथार्थो स्यादिति । तयोश्च नित्यसमीहितोपायत्व यथाशक्त्यनुष्ठानयोर्मानान्तर मृग्यम् । यदि पुनर्यावज्जीवश्रुतिप्रतिपन्ननित्यत्वोपपादनार्थं नित्यसमीहितफलकल्पनायामपि वास्तवी नित्यता न शाब्दीति मन्येत तत्राह—कथ चेदं वास्तव नित्यत्वं कर्मणो यदि नित्यसमीहितसाधनत्वमिति । नित्याऽनुष्ठानात्परस्याप्येतत्तुल्यमित्याह—अकरणे प्रत्यवायादितरस्याप्यनुष्ठानमिति तुल्यम् । शब्दपूर्वकत्वेन तत्कल्पनायामङ्गीक्रियमाणाया नाऽशब्दनित्यत्वमुभयो. परस्याऽऽत्मनश्च । पर आह—नाऽकरणे प्रत्यवायादस्मन्मते नित्यक्रिया किं तु शब्दादेव । परिहरति—नैतत् । शब्दादेव चेदवश्यकर्त्तव्यता किमर्थमकरणे प्रत्यवायकल्पना ? शब्दादेव प्रवृत्तिसिद्धेः । ननु शब्द एव स्वरूपेण प्रवर्त्तयिष्यति मा च भूदकरणे प्रत्यवाय इत्याशङ्क्याह—न

त्वेन प्रवृत्तिहेतुरित्युक्तम् । ज्ञापकत्वे चाकरणे प्रत्यवायज्ञापनान्नित्यमनुष्ठापयतीति वास्तवमेव स्यात् । तस्मादव्यवस्थितविधितत्त्वानामीदृशा नानाविधाः समुल्लासाः । कृच्छ्रविश्वजितोस्तु सदा सर्वस्य समीहितसाधनयोरपि सर्वस्य सर्वदेति शब्दस्याऽभावात्सर्वाङ्गप्रयोगः । ननु फलवत्त्वे शक्त्यनुसार एव न संभवति, वैगुण्यात्फलाऽभावप्रसङ्गात् । किमिदं वैगुण्यं ? चोदनार्थत्वहानिः, न तर्हि वैगुण्यं, यावज्जीविके यथाशक्त्यङ्गोपेते ऽपि चोदनार्थत्वात् । अचोदनार्थत्वे वा शक्तेरफलत्वे ऽपि सर्वाङ्गोपसंहारो,

च शब्द. कारकत्वेन प्रवृत्तिहेतुरित्युक्तम् । ज्ञापकत्वे चाऽकरणे प्रत्यवायज्ञापनान्नित्यमनुष्ठापयतीति वास्तवमेव नित्यत्व स्यात् । उपसहरति—तस्मादव्यवस्थितविधितत्त्वानामीदृशा नानाविधाः समुल्लासाः ।

यत्तु विश्वजिदादिवदित्युक्त, तत्र वैधर्म्यमाह-कृच्छ्रविश्वजितोस्तु सदा सर्वस्य समीहितसाधनयोरपि सर्वस्य सर्वदेति शब्दस्याऽभावात्सर्वाङ्गप्रयोगः । चोदयति—ननु फलवत्त्वे शक्त्यनुसार एव न सभवति, वैगुण्याद्धेतोः फलाऽभावप्रसङ्गात् । साधनाद्धि फलेनोत्पत्तव्यम्, । अङ्गसाकल्यवच्च साधनं नाङ्गवैकल्ये सति तत्त्वे व्यवस्थातुमर्हतीत्यर्थः । परिहरति—किमिदं वैगुण्यम् । ? यद्युच्येत चोदनार्थत्वस्य हानिस्तत्राह—न तर्हि वैगुण्यम् । कुतः ? यावज्जीविके यथाशक्त्यङ्गोपेते ऽपि चोदनार्थत्वात् । यावज्जीवशब्दस्यैष महिमा यत्कतिपयाऽङ्गविकलमपि साधन फलाय कल्पते इत्यर्थः । न चेदेवं परमते ऽपि तुल्यः प्रसङ्ग इत्याह—अचोदनार्थत्वे वा शक्तेरफलत्वे ऽपि सर्वाङ्गोपसहार । कुतः ? यावज्जीवशब्दाऽनादरे यो यदेत्युपबन्धात्साङ्गस्याऽफलस्यापि चोदनार्थत्व-

ऽन्यथा चोदनार्थनिवृत्त्यभावाच्चेति । तदा क्रियाव्यतिरिक्तसाध्याभावान्नाङ्गापेक्षा । अनङ्गत्वमेव प्राप्तं, कर्म्मणो विज्ञातोपायत्वात् । क्रिया ऽपि विधेयरूपेण ज्ञातस्वभावा चोदनार्थनिवृत्तये अपेक्षते ऽङ्गानीति चेत्, सर्वाङ्गोपसंहारप्रसङ्गः । अथाऽऽख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति यावज्जीवश्रुतेः शक्तिश्चोदनार्थः । फलवादिनो न सा दण्डवारिता । किं चेदं रूपं[1] चोदनायाः । यदि दर्शपूर्णमास-

त्किञ्चिदङ्गवैकल्ये चोदनार्थनिवृत्त्यभावात् । यद्युच्येत तदा क्रियाव्यतिरिक्तसाध्याऽभावान्नाङ्गापेक्षा साध्याऽभावसूचनपरश्च यावज्जीवशब्द इति । दूषयति—अनङ्गत्वमेव तर्हि युक्तं कर्मणः । कुतः ? विज्ञातोपायत्वात् । शङ्कते—क्रियापि विधेयरूपेणाऽज्ञातस्वभावा चोदनार्थनिवृत्तये ऽपेक्षते ऽङ्गानीति चेत् । यद्यपि क्रियास्वरूपं लौकिकं लौकिकोपायसाध्यं च, तथापि चोदनागम्येन रूपेणालौकिकत्वात् साङ्गस्य चोदनार्थत्वादङ्गानामप्यनुष्ठानं युक्तमित्यर्थः । निराचष्टे—सर्वाङ्गोपसंहारप्रसङ्गः । आशङ्क्य साम्यमाह—अथाऽऽख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति यावज्जीवश्रुते शक्तिश्चोदनायाः । फलवादिनोपि सा न दण्डेन वारिता । अपि च किं चेदं रूपं चोदनार्थं, कर्मस्वरूपं हि देवतोद्देशेन पुरोडाशत्यागात्मकं, तच्च मानान्तरात्समधिगम्यमिति न चोदनार्थस्तत्र प्रमाणमिति भावः ।

ननु भवतु कर्मस्वरूपं मानान्तरवेद्यं यत्पुनरेतस्याष्टसु कपालेषु संस्कृतपुरोडाशद्रव्यत्वमग्निदेवतत्वं च त'दाग्नेयोऽष्टाकपाल' इत्येतस्मादुत्पत्तिवाक्यादन्यतो ऽशक्यावगममिति । न चोत्पत्तिवाक्याऽवगतविविधविशेषणे कर्मणि न्यूनातिरेककरणाय प्रमाणान्तरं प्रभवति, तत्करणे तत्स्वरूपग्रहणप्रसङ्गादन्यतस्तदविज्ञानादित्याशयवानाशङ्कते—यदि दर्शपूर्णमाससक्रम् । निराकरोति—तदुत्प-

१ किं चिदेव रूपम् मू पु पा ।

**संज्ञकं तदुत्पत्तिवाक्याऽवगतमित्यनौत्पत्तिकानामभावः । अथान्यन्न तच्छ्रेयःसाधनत्वात् । यथोक्तम् । 'श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते' इति । 'तस्याऽयमभ्युपाय इति हि तेषामुपदेश' इति च । नाऽप्यकरणे प्रत्यवायहेतुता, असतो हेतुत्वाऽनुपपत्तेः ।**

त्तिवाक्याऽवगतमित्यनौत्पत्तिकानामभाव प्रसज्येत । यन्मात्रमेव हि द्रव्यदेवतादिकमङ्गमुत्पत्तिवाक्याऽवगत तावतो ऽशक्यहानत्वा-त्तद्धाने कर्मस्वरूपहानप्रसङ्गात् । मा भूत्परित्याग, अन्यानि यानि पुनरङ्गान्युत्पत्तिकर्मसंबन्धीनि सन्निपत्योपकारकाण्यवघातादीन्यारा-दुपकारकाणि च प्रयाजादीन्यनौत्पत्तिकान्याग्नेयाद्युत्पत्त्यसंबन्धीनि तेषामभावप्रसङ्ग । न खलु तेषा प्रहाणे कर्मस्वरूप निरपेक्षोत्पत्ति-वाक्यावगत विद्यते । अथाऽन्यन्न तच्छ्रेय साधनत्वात् । यथोक्त श्रेय साधनता ह्येषां नित्य वेदात्प्रतीयते' 'तस्यायमभ्युपाय इति हि तेषामुपदेश'इति च ।

यत्पुनरुक्त यावज्जीवोपधाना ल्लिङो ऽवश्यकर्तव्यता कर्मणो ऽवगम्यते । लोकश्च तदवश्यकर्तव्यमवगच्छति यदकरणे प्रत्यवायो भवति, भयाद्धि यादृशी प्रवृत्तिर्न तादृशी लोभात्, तदकरणनिमित्त-प्रत्यवायमेव कल्पयिष्यामो न पुनरुपात्तदुरितक्षयलक्षण फलम् । तथा सत्यकुर्वन्विहित कर्मेत्यादिभूयांसि वचासि धर्मशास्त्रकाराणा वाक्यशेषश्च 'यो ह वै'त्युपपत्स्यते इत्यत आह—नाप्यकरणे प्रत्य-वायहेतुता । असतो हेतुत्वाऽनुपपत्ते. । अयमर्थ सत्य करणे-नाऽकरण निवर्तते । किमिति पुनस्तन्निवर्तनीयम् । प्रत्यवाय-हेतुत्वादिति चेत् । तदसत् । कुत. ? असतो हेतुत्वानुपपत्ते । न च करणेन भावरूपेण प्रत्यवायाऽभाव प्रागभावरूप शक्योप जन: । ननु च नित्याऽकरणे तत्काले ऽन्यान्येव कर्माणि कानि चिदन्ततो निमेषादीन्यपि तानि प्रत्यवाय जनयन्ति । नित्यक्रि-

तुल्ये च साध्यत्वे नाऽनुपपत्तिः प्रयाजादीनाम् ।

यथा तु सन्त्यपि तानि न जनयन्तीत्येवं किमिति न कल्प्यते ? न शक्य कल्पयितुम् । तथा हि । यावज्जीवं जुहुयादिति होमाऽनुरक्ताया भावनायां पुरुष प्रवर्त्तयतीति प्रवर्तना, सा चाऽन्वयव्यतिरेकाभ्य मपेक्षितोपायतैव प्रवृत्तिविषयस्य निवर्तना वा ऽनर्थसाधनता निवृत्तिविषयस्य । तद्यच प्रवर्तयति यतश्च निवर्त्तयति तस्यैव हितोपायत्वमहितोपायत्व च प्रतिपादयति । न पुनरन्यस्य नित्यसमये क्रियमाणस्य कर्मणः प्रत्यवायहेतुतामवगमयितुमुत्सहते । श्रुतिसम्भवे लक्षणाश्रयणाऽयोगात् ।

यच्चोक्त भयात् प्रवृत्तिर्ध्रुवभाविनी न तथा लोभादिति । सत्यमेतत् । वाङ्मनःशरीरचेष्टाभिर्दशविधाभिर्निषिद्धत्वेन विवेकिना परिह्रियमाणाभिरपि दैवाद्दिवानिशमुपगताभिराधीयमानात्पाप्मनो विविधदुःसहदुःखबीजाद्बिभ्यतस्तत्प्रक्षयलक्षणसमीहितसाधने ऽपि ध्रुवप्रवृत्तयो भवन्त्येव । न च क्वचित्समीहितसाधनता, क्वचिदपरामृष्टसाधनत्व लिङर्थ इति युक्तम् । ऐकात्म्ये सम्भवत्यव्याप्यत्वादर्थवैचित्र्यस्याऽव्यवस्थाप्रसङ्गात् । न च स्मृतिविरोधः । समीहितसाधनत्वे ऽपि नित्यानां यदा न तानि क्रियन्ते तदा दुरितान्यक्षीणानि प्रायश्चित्तान्तरेण क्षेप्यन्तइति नाऽनुपपत्तिः । वाक्यशेषोपि सन्देहे ऽपेक्षितो निर्णयहेतुतां प्रतिपद्यते । अपेक्षितोपायत्वे विध्यावुपात्तदुरितक्षयप्रत्यवायाऽभावस्याऽसन्देहान्नित्यानां न वाक्यशेषापेक्षा ऽस्तीति अर्थवादमात्र वाक्यशेष इति कृतं विस्तरेण ।

किं चाऽस्मिन्मते तुल्ये च साध्यत्वे प्रयाजादीनां दर्शपूर्णमासयोश्च तृतीयाया अपि द्वितीयार्थे व्याख्यानाद्भावनायां वा कथचित्करणभावेनोपपादनात्प्रयाजादीनामङ्गत्वाऽनुपपत्तिः । विनियोजकप्रमाणाभावात् । कर्तव्यस्य हीतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणमाचक्षते । तदिह दर्शपूर्णमासयोर्नित्ययोर्नैष्फल्यत्वेन प्रयाजादीनां

**न हि स्वरूपे कार्ये वा ऽनुपयोगयङ्गम् । प्रयुक्तेरप्येवंविधस्याऽभावात् । न च दुःखत्वात्कर्मण आनुषङ्गिकात्पापक्षयात्प्रवृत्तिरशास्त्रीयत्वे तप्तशिलारोहणादिवत् । पापकृतत्वे च पुरुषकारवैयर्थ्यात् । अतत्कृतत्वे वा नाशाऽभावात् । शास्त्रीयेण तूपायेन विपाचने न दोषः ।**

च यावद्दर्शपूर्णमासौ कर्तव्यतया प्रयाजादीन् नापेक्षेते तावत्प्रयाजादयोऽपि किमिति दर्शपूर्णमासौ अपेक्षन्ते? इति न प्रकरणं विनियोजकं भवितुमर्हति । न च प्रकरणव्यतिरिक्तमेषां प्रयोजकं प्रमाणान्तरं प्रतिज्ञायते प्रज्ञायते वा । न च द्वारकार्याभावे ऽङ्गता युक्ता । तस्यास्तद्व्याप्यत्वेन तन्निवृत्तौ निवृत्तेरित्याह—न हि स्वरूपे कार्ये वा ऽनुपयोगयङ्गम् ।

ननु मा भूदविनियोजकं, प्रकरणादिप्रयुक्तिरेव तु विधेराक्षेपाऽपरनामा लिङ्गसंख्यादीनामिव प्रयाजादीनामङ्गत्वं मर्गयिष्यतीत्यत आह—प्रयुक्तेरप्येवंविधस्याऽभावादेवंविधस्येति दर्शपूर्णमासाभ्यां साध्यत्वेन तुल्यस्यापि नियुक्तस्य न प्रयुक्तिरुपादानं सम्भवति विनियोगाऽनुसारित्वादुपादानस्य । अत एव 'नोद्यन्तमादित्यमीक्षेत' 'सुवर्णं भार्य'मित्येवमादयो विनियोगाऽभावात् क्रतुविधिना ऽनाक्षिप्यमाणा क्रत्वर्था न भवन्ति । न च दुःखत्वात्कर्मण आनुषङ्गिकात् पापक्षयात्प्रवृत्तिः अशास्त्रीयत्वे तप्तशिलारोहणादिवत् । अपि च तस्य नित्यक्रियाजन्मनो दुःखस्याऽऽक्षिप्तपापकृतत्वे विधानमनर्थकं, नित्यानां कर्मणां प्राग्भवीयपापपरिपाकादेवोत्पादात्पुरुषकारवैयर्थ्यात् । अतत्कृतत्वे वा नाशाभावात्स्वफलविरोधित्वात्पापस्य । ननु यद्यकृतेन विधिना नाश्यते पाप्मा कथं तर्हि त्वन्मते ऽपि नित्यात्कर्मणो विनङ्क्ष्यतीत्यत आह—शास्त्रीयेण तूपायेन विपाचने न दोषः प्रायश्चित्तैरिव । पाचनं फलजननाऽभिमुखीभावः, तस्यैकान्तिकी निवृत्तिर्विपाचनं चिरभावार्थं । शास्त्रगम्यो ऽयमर्थो न पर्य-

**यदि तर्हि फलवत्यपि न सर्वाङ्गोपसंहारः काम्ये ऽपि तथा स्यात् । यावज्जीवश्रुतेरितरत्रैवमिति चेत् । इहापि स्वर्गकामश्रुतेरस्तु । यथैव यावज्जीवमशक्यमहीनाङ्गं तथा सर्वेण स्वर्गकामेन तत्र यथा यदा यावन्ति शक्नोति तदा तावतामुपसंहारः, तथा यो यावन्ति शक्नोति स तावन्त्युपसंहरिष्यति । अङ्गविधिविरोधाद्धि स्वर्गकामश्रुतिरर्थिमात्रविषया विशेषमनुरुध्यते[1] शक्त्यपेक्षायां त्वङ्गविध्यविरोधे नित्यवन्न विशेषानुरोधहेतुः ।**

नुयोगमर्हति, तप्तशिलारोहणादि तु न शास्त्युक्तिगोचर इति भावः ।

अथ चोदयति—यदि तर्हि फलवत्यपि न सर्वाङ्गोपसंहारः, काम्ये ऽपि तथा स्यात् । चोदक एवाऽऽशङ्क्य परिहरति—यावज्जीवश्रुतेरितरत्र नित्ये एव न सर्वाङ्गोपसंहार इति चेत् । इहापि स्वर्गकामश्रुतेरस्तु । एकग्रन्थेनाह—यथैव यावज्जीवमशक्यमहीनाङ्गं तथा सर्वेण स्वर्गकामेन यत्र यथा नित्ये यदा यावन्ति शक्नोति तदा तावतामुपसंहारः तथा काम्ये ऽपि यो यावन्ति शक्नोति स तावन्त्युपसंहरिष्यति ।

स्यादेतत् । अङ्गानां नित्यवद्विधानात् व्यवस्थायां च तदनुपपत्तेर्नार्थिमात्रमधिकृत्य विधेरुपपत्तिः । अर्थिश्रुतिस्तु सर्वाङ्गोपसंहारसमर्थविषयत्वेनाप्युपपन्ना । न ह्यसौ न स्वर्गकामस्तस्मात्काम्येषु यो यदेत्येव युक्तमित्यत आह—अङ्गविधिविरोधाद्धि स्वर्गकामश्रुतिरर्थिमात्रविषयापि विशेषमनुरुध्यते । शक्त्यपेक्षाया त्वङ्गविध्यविरोधे च नित्यवन्न विशेषाऽनुरोधहेतुरस्ति तस्याः । अस्यार्थः । सति विरोधे ऽङ्गविधिभिः स्वर्गकामश्रुतिरविशेषप्रवृत्ता विशिष्टविषया व्याख्येया, नित्यवत्तु यो यावन्ति शक्नोतीति शक्त्यपेक्षायामङ्गविधीनामविरोधेन स्वर्गकामश्रुतेः प्रस्थितायाः सङ्कोचो न्याय्यः । अथोच्येत, विषयसङ्कोचलक्षणास्तावदुपरोधो ऽङ्गविधीनां स्वर्गकामश्रुतेश्च

१ अवरुध्यते मू पु पा ।

अथ मतम्—अनुपरोधे स्वर्गकामश्रुतेरङ्गविधय एवो-परुध्येरन् अविशेषप्रवृत्ता यथाशक्ति व्यवस्थायाम् । नित्ये ऽपि तुल्यम् । यावज्जीवश्रुतेरनन्यगतित्वात् । तत्रैवंकाम-श्रुतिस्तु सर्वाङ्गोपसंहारसमर्थेऽप्युपपन्नैव । तत्राऽविरोधात् कांस्यभोजिन्यायेन तदनुरोधेनाङ्गिवृत्तिः । सत्यमविरो-

तुल्यस्तत्राङ्गविधीनां बहुत्वात्तदनुरोधेन वरं स्वर्गकामश्रुतिरेको ऽव-रुध्यतामिति ।

शङ्कते—अथ मतमनुपरोधे स्वर्गकामश्रुतेरङ्गविधय उपरुध्ये-रन्नविशेषप्रवृत्ता यथाशक्तिव्यवस्थायामिति । परिहरति—नित्ये ऽपि तुल्यमिति । तत्राप्येकैव यावज्जीवश्रुतिरङ्गविधयश्च बहव इति भावः । स्यादेतत् । यदि नित्ये यदा यावन्त्यङ्गानीति शक्त्यपेक्षा नाश्री-येत ततो यावज्जीवश्रुतिरत्यन्तं बाध्येत । न ह्यस्ति सम्भवो याव-ज्जीवं यजेत सर्वाङ्गोपसंहारेणेति । अस्ति तु सम्भवः स्वर्गकामो यजेत सर्वाङ्गोपसंहारेणेति । न हि सर्वाङ्गोपसंहारसमर्थस्य स्वर्गका-मस्य स्वर्गकामपदमवाचकमित्याह—यावज्जीवश्रुतेरनन्यगतित्वात् । तत्रैवंकामश्रुतिस्तु सर्वाङ्गोपसंहारसमर्थे ऽप्युपपन्नैवेति ।

ननु भवतु समर्थोऽपि स्वर्गकामस्तथापि तत्पदमनियतवृत्ति सत् कथमप्रधानैरङ्गविधिभिर्नियम्यते? इत्याशङ्क्याह—तत्राऽविरोधात् कांस्यभोजिन्यायेन तदनुरोधेनाङ्गिविधिवृत्तिरिति । अयमर्थः । कामि-पदं हि कामोपाधिना प्रतिपुरुषवृत्त्यङ्गविधिविरोधेन समर्थे नियम्यमानमपि न विरुध्येत कांस्यभोजिन्यायेन । तद्यथोपाध्यायः प्रधानो नित्यं तत्तत्पात्रभोजी शिष्यस्त्वप्रधानः कांस्यपात्र एव भुङ्क्ते, तत्र प्रवृ-त्तिलाघवादेकस्मिन्पात्रे उपादातव्ये यदि प्रधानोपाध्यायानुरोधाद्य-त्किंचित्पात्रमुपादीयेत शिष्यस्य भोजनं न संपद्येत । कांस्यपात्रे तूपादीयमाने नाऽनियतपात्रभोजनमुपाध्यायस्य भोजनविरोधः ।

**धेनदर्शिनस्तु स्वर्गकामश्रुतेर्विषयसंकोचलक्षणो विरोधः। तत्राऽप्रधानविरोधे प्रधानाऽनुरोधः श्रेयान्, लोकवत्। यथा हि ब्राह्मणान्भोजय नानाविधोपकरणेनाऽन्नेनेति यथाशक्त्युपकरणव्यवस्थानोपकरणाऽनुरोधेन ब्राह्मणनियमः।**

तेनाऽविरोधे प्रधानमपि गुणाऽनुरोधान्नियम्यतएवेति तदनुरोधेनेति अङ्गविध्यविरोधेऽङ्गविधिवृत्तिरिति। तदेतद् दूषयति- सत्यमविरोधो दर्शितस्तु स्वर्गकामश्रुतेर्विषयसंकोचलक्षणो विरोध इति। नायं कास्यपात्रभोजिन्यायस्य विषयः। तथा हि। तत्राऽनियतपात्रभोजनोपाध्यायो न सहसैव सर्वेषु पात्रेषु भुङ्क्ते येन नियतपात्रभोजिना शिष्येण विरुध्येत, कामश्रुतिस्तु कामसंबन्धमात्रलब्धवृत्तिः सकृदेव समर्थमसमर्थं वा ऽधिमात्रमुपस्थापयन्ती समर्थे ऽर्थेनिव्यवस्थाप्यमाना कथं नाङ्गविधिभिरुपरुध्येतेति।

ननु भवतु विरोधस्तथापि भूयस्त्वादङ्गविषयो बलीयसो बाधिष्यन्त इत्याशङ्क्याह—तत्राङ्गप्रधानविरोधे प्रधानाऽनुरोधः श्रेयान् लोकवदिति। सर्वथा साम्ये हि भूयस्त्वं बलीयस्त्वे हेतुः, इह कामश्रुतिरेकापि प्राधान्याद् भूयसो ऽप्यप्रधानतया ऽङ्गविधीन् व्यवस्थापयितुमर्हत्येवेत्यर्थः।

लोकवदिति दृष्टान्तं व्याचष्टे—यथा ब्राह्मणान् भोजयाऽनेन नानाविधोपकरणेनाऽन्नेनेति यथा ब्राह्मणशक्त्युपकरणव्यवस्थानोपकरणाऽनुरोधेन ब्राह्मणनियमः। यदा तु कामश्रुतेरसंकोचो नाङ्गविधीनां यो यावन्त्यङ्गानि समर्थ उपहर्तुं स तावद्भिरुपेतं प्रधानं निवर्तयतीति व्यवस्थापना तदा प्रधानविधिरङ्गानि कानि चित्कदा चिदपेक्षते कदा चिन्नेति नैकान्ततो ऽङ्गविध्यपेक्षा भवति, यथा 'केशश्मश्रु वपते न वे'ति विधिप्रतिषेधसामर्थ्यलब्धजन्मनि विकल्पाऽवगमे सति नैकान्ततः प्रधानविधिरङ्गं वपनमपेक्षतेऽत्र किं त्वपेक्षतापि

णवादनिराकरणप्रकारेण शिष्टापरिग्रहाः शिष्टैः केन चिद्‌प्यंशेनापरिगृहीता अणवादिकारणवादा व्याख्याता निरस्ता द्रष्टव्या इत्यर्थः । तर्कस्य वेदबाधितत्वादिति भावः ॥

**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ २ । १ । १३ ॥**

अद्वितीयब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयः प्रत्यक्षादिना विरुध्यते न वेति सन्देहे, ब्रह्मणि तर्कस्याप्रतिष्ठितत्वेऽपि जगद्भेदे तस्य प्रतिष्ठितत्वाद्विरुध्यत एवेति प्रत्युदाहरणेनायमाक्षेपो "भोक्त्रापत्तेरविभागश्चे"दिति । अद्वितीयब्रह्मणो जगदुपादानत्वे भोक्तृभोग्यप्रपञ्चस्य सर्वस्य ब्रह्मानन्यत्वेन भोग्यशब्दादेर्भोक्त्रात्मकत्वापत्तेर्भोक्तुर्वा भोग्यात्मकत्वापत्तेः प्रत्यक्षसिद्धः परस्परविभागो न स्यादिति प्रत्यक्षविरोधः समन्वयस्य, भोक्तृभोग्य प्रपञ्चो नाद्वितीयोपादानकः परस्परभिन्नत्वाद्व्यतिरेकेण ब्रह्मवदित्यादितर्कविरोधश्च । विपक्षे हेतूच्छित्तिर्बाधिकेति शङ्कार्थः । समाधत्ते "स्याल्लोकवदिति । एकब्रह्मोपादानकत्वेऽपि भोक्तृभोग्यप्रपञ्चस्य परस्परं विभागः स्याल्लोकवत् । यथामृदात्मनाऽभिन्नानां घटशरावादीनां परस्परभेदोऽस्ति, यथा वैकरज्जूपादानकानां दण्डसर्पादीनां परस्परं भेदः, तद्वदित्यर्थः । कल्पितभेदसत्त्वान्न प्रत्यक्षविरोधः । दण्डादौ व्यभिचारान्नतर्कः प्रमाणमिति गन्तव्यम् ॥

ननु ब्रह्माभेदं जगतोऽङ्गीकृत्य लोकदृष्टान्तेन विरोधः परिहृतः । तस्य ब्रह्मभेद एव कुतो न स्यादित्याशङ्क्य जगतोऽनिर्वचनीयत्वान्न ब्रह्मातिरेकेण सत्तेत्याह ।

**तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ २ । १ । १४ ॥**

पूर्वं परिणामवादमालम्ब्यापाततः "स्याल्लोकव"दिति समाधानमुक्तम् । इदानीं विवर्तवादमालम्ब्य परमं

समाधानमुच्यत इत्येकफलकत्वसङ्गतिः । सन्देहः पूर्ववत् । तस्माद्ब्रह्मणः प्रपञ्चस्यानन्यत्वं पृथक्सत्ताराहित्यम् । कुतः । आरम्भणशब्दादिभ्यः । एकविज्ञानात्सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं दृष्टान्त उपन्यस्तः, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मिति । तत्र मृत्पिण्डे ज्ञाते कथं घटादिज्ञानमित्याशङ्क्य विकारो घटादिर्वागालम्बनमात्रं यतो नामधेयं विकारो न तु नामातिरेकेण विकारोऽस्तीत्युक्त्वा मृत्तिकामात्रमेव विकारस्य पारमार्थिकं स्वरूपमिति तस्मिञ्ज्ञाते वस्तुतो घटादिर्ज्ञातो भवतीत्युक्त्वा, विकारो मिथ्या कारणं सत्यमित्ययमर्थो दृष्टान्तवाक्ये सिद्धः । तथा दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण प्रपञ्चसत्ता नास्तीति तदनन्यत्वम् । सूत्रस्थादिशब्देन 'ब्रह्मैवेदं सर्व'मित्यादि तदनन्यत्वप्रतिपादकं गृह्यते ॥

तदनन्यत्वे हेत्वन्तरमाह ।

**भावे चोपलब्धेः ॥ २ । १ । १५ ॥**

भावपदं कारणसत्त्ववाचकं तदुपलब्ध्युपलक्षणार्थम् । एवमुपलब्धिपदं कार्योपलब्धिवाचकं कार्यसत्त्वोपलक्षणार्थम् । तथा चायं प्रयोगः । विकारः कारणादनन्यः कारणसत्त्वोपलम्भानुविधायिसत्त्वोपलम्भवत्त्वात् । यो यस्माद्भिन्नो न स तत्सत्त्वोपलम्भानुविधायिसत्त्वोपलम्भवान्, यथा घटात्पट इति । हेतावुपलम्भपदद्वयत्यागे वह्निसत्त्वानुविधायिधूमे व्यभिचारः स्यात् । तद्वारणाय तद्ग्रहणम् । सत्त्वपदद्वयत्यागे यथा श्रुतसूत्रे चालोकसत्त्वोपलम्भानुविधायिज्ञानवति रूपे व्यभिचारः । अतस्तदर्थं तद्-

ग्रहणमिति । यद्वा "भावाच्चोपलब्धे"रिति सूत्रम् । न केवलं श्रुत्या कार्यकारणयोरनन्यत्वं, किं तु प्रत्यक्षोपलब्धेर्भावाच्चानन्यत्वमित्यर्थः । नहि तन्तुव्यतिरेकेण पटो नाम कश्चिदुपलभ्यते, किं तु संयोगविशेषावच्छिन्नास्तन्तव एव पटव्यवहारविषयाः प्रत्यक्षमुपलभ्यन्ते । अतो ऽनन्यत्वं विकारस्य ॥

## सत्त्वाच्चापरस्य ॥ २ । १ । १६ ॥

अपरस्य कार्यस्योत्पत्तेः प्राक्कारणानन्यत्वेन सत्त्वात्सत्त्वश्रवणादुत्पत्त्यनन्तरमप्यनन्यत्वं सिद्धमित्यर्थः । "ब्रह्म वा इदमग्र आसी"दित्यादौ प्रपञ्चोपस्थापके"दं"पदस्य ब्रह्मसामानाधिकरण्यात्तदनन्यत्वं द्रष्टव्यम् । अन्यथा ब्रह्मात्मना पूर्वं प्रपञ्चस्यासत्त्वे तत उत्पत्त्यनुपपत्तिः । न हि सिकतात्मनाऽविद्यमानं तैलं ताभ्यो जायतइति ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ २ । १ । १७ ॥

नन्व "सद्वा इदमग्र आसी"दित्यादिना प्रागुत्पत्तेरसत्त्वव्यपदेशान्न कार्यस्य कारणात्मना पूर्वं सत्त्वमिति चेन्न । न ह्यत्यन्तासत्त्वाभिप्रायेणायमसत्त्वव्यपदेशः, किं तु व्याकृतत्वरूपधर्मापेक्षयाऽव्याकृतत्वं धर्मान्तरम् । तेन धर्मान्तरेणायमसत्त्वव्यपदेशः । कुतः । वाक्यशेषात् । "तत्सदासी"दिति वाक्यशेषः पूर्वमत्यन्तासतो ग्रहणे बाध्येत । "असदेवेद"मित्यत्रा सत्त्वं किं तुच्छं किं वा सदेवानभिव्यक्तनामरूपमिति सन्देहे ऽनभिव्यक्तनामरूपम सच्छब्दितमिति निश्चीयते । आसीदित्यतीतकालसम्बन्धोक्तेर्न शून्यमिति । तस्माद्व्याकृतं सदित्युच्यते ऽव्या-

कृतं चासदिति सिद्धं कारणानन्यत्वं कार्यस्य ॥

**युक्तेः शब्दान्तराच्च ॥ २ । १ । १८ ॥**

कारणानन्यत्वमुत्पत्तेः प्राक्सत्त्वं चेति शेषः । युक्तिरेवम् । घटो जायत इति प्रतीत्या घटस्य तावदुत्पत्तिकर्तृत्वं प्रतिभाति । न ह्युत्पत्तेः प्रागत्यन्तं घटस्यासत्त्वे तत्कर्तृत्वं युक्तम् । तस्मात्कारणात्मना सत्त्व एव घट उत्पत्तिकर्ता । किं च मृदात्मना पूर्वं घटस्यासत्त्वे मृदेव घटार्थिना नोपादीयेत । असत्त्वाविशेषाद्यत्किञ्चिदेवोपादीयेतेत्येवमाद्या युक्तिरूह्या । पूर्वसूत्रोदाहृतासच्छब्दाच्छब्दान्तरं "सदेव सोम्येदमग्रआसी"दित्यादौ विद्यमानः सच्छब्दः । तस्मादपि कारणादनन्यत्वं पूर्वमुत्पत्तेः सत्त्वं चेत्यर्थः ॥

युक्तेरित्येतत्प्रपञ्चयति ।

**पटवच्च ॥ २ । १ । १९ ॥**

ननु मृद्घटौ भिन्नौ विलक्षणप्रतीतिविषयत्वाद्घटपटवदित्युक्ते तस्य हेतोर्व्यभिचारमाह "पटवच्चे"ति । यथा संवेष्टितप्रसारितपटस्य विलक्षणप्रतीतिविषयत्वेऽपि न भेदः, एवं मृद्घटयोरित्यर्थः ॥

न विलक्षणकार्यकारित्वमपि हेतुर्व्यभिचारादित्याह ।

**यथा च प्राणादि ॥ २ । १ । २० ॥**

यथा प्राणायामादिना निरुद्धः प्राणापानादिर्जीवनमात्रं कार्यं निर्वर्तयत्यनिरुद्धस्त्वाकुञ्चनप्रसारणादिकं कार्यं करोति, नैतावता तस्य प्राणस्य भेदोऽस्ति । तस्मात्कार्यकारणयोरनन्यत्वं सिद्धम् । तदनन्यत्वाच्चैकविज्ञानात्सर्वविज्ञानप्रतिज्ञा सिद्धा भवति ॥

## इतरव्यपदेशाद्धिताकरणादिदोष- प्रसक्तिः ॥ २ । १ । २१ ॥

पूर्वं कार्यस्य कारणादनन्यत्वमेकविज्ञानप्रतिज्ञासिद्धये समर्थितम् । तर्हि तेनैव न्यायेन जीवब्रह्मणोरप्यभेदाज्जीवधर्मा हिताकरणादयो ब्रह्मणि प्रसज्येरन्नित्याक्षेपात्सङ्गतिः । जीवाभिन्नं ब्रह्म जगदुपादानमिति ब्रुवन्समन्वयो विषयः । स किं "यदि तादृग्ब्रह्म जगज्जनयेन्न तर्हि स्वानिष्टं जनये"दिति तर्केण विरुध्यते नवेति सन्देहे पूर्वपक्षमाहे"तरव्यपदेशा"दिति । इतरस्य जीवस्य "तत्त्वमसी"त्यादिना ब्रह्मत्वव्यपदेशादितरस्य ब्रह्मणो वा "ऽनेन जीवेनाऽऽत्मनाऽनुप्रविश्ये"त्यादिना शारीरत्वव्यपदेशाद्ब्रह्मणः स्रष्टृत्वे जीवस्यैव स्रष्टृत्वं स्यात् । तथा च हिताकरणादिदोषप्रसक्तिर्ब्रह्मणः । नञ् व्यत्यासेनाहितजरामरणादिबहुविधानर्थकरणरूपदोषस्य प्रसक्तिरित्यर्थः । आदिपदेन जीवस्य जगदादिकं मया सृष्टमिति ज्ञानं स्यात्तत्संहर्तृत्वं च स्यादित्यादिदोषा गृह्यन्ते । तस्माज्जीवाभिन्नब्रह्मणो नानिष्टप्रपञ्चजनकत्वमभ्रान्तचेतनत्वादिति न चेतनोपादानकं जगदित्याक्षेपसूत्रार्थः ॥

समाधत्ते ।

## अधिकं तु भेदनिर्देशात् ॥ २ । १ । २२ ॥

तुः पूर्वपक्षव्यावृत्त्यर्थः । यतः शारीरादधिकमन्यत्सर्वज्ञं सर्वशक्ति ब्रह्म जगदुपादानं स्रष्टृचेति ब्रूमः । अतो न हिताकरणादिदोषप्रसक्तिः । कुतः । भेदनिर्देशात् । "आत्मा वा अरे द्रष्टव्यः," "सता सोम्य तदा सम्पन्नो भवती"त्यादिना कल्पितभेदस्य व्यपदेशादित्यर्थः । न हि

कृतं चासदिति सिद्धं कारणानन्यत्वं कार्यस्य ॥

युक्तेः शब्दान्तराच्च ॥ २ । १ । १८ ॥

कारणानन्यत्वमुत्पत्तेः प्राक्सत्त्वं चेति शेषः । युक्तिरेवम् । घटो जायत इति प्रतीत्या घटस्य तावदुत्पत्तिकर्तृत्वं प्रतिभाति । न ह्युत्पत्तेः प्रागत्यन्तं घटस्यासत्त्वे तत्कर्तृत्वं युक्तम् । तस्मात्कारणात्मना सत्त्व एव घट उत्पत्तिकर्ता । किं च मृदात्मना पूर्वं घटस्यासत्त्वे मृदेव घटार्थिना नोपादीयेत । असत्त्वाविशेषाद्यत्किञ्चिदेवोपादीयेतेत्येवमाद्या युक्तिरूह्या । पूर्वसूत्रोदाहृतासच्छब्दाच्छब्दान्तरं "सदेव सोम्येदमग्रआसी"दित्यादौ विद्यमानः सच्छब्दः । तस्मादपि कारणादनन्यत्वं पूर्वमुत्पत्तेः सत्त्वं चेत्यर्थः ॥

युक्तेरित्येतत्प्रपञ्चयति ।

पटवच्च ॥ २ । १ । १९ ॥

ननु मृद्घटौ भिन्नौ विलक्षणप्रतीतिविषयत्वाद्घटपटवदित्युक्ते तस्य हेतोर्व्यभिचारमाह "पटवच्चे"ति । यथा संवेष्टितप्रसारितपटस्य विलक्षणप्रतीतिविषयत्वेऽपि न भेदः, एवं मृद्घटयोरित्यर्थः ॥

न विलक्षणकार्यकारित्वमपि हेतुर्व्यभिचारादित्याह ।

यथा च प्राणादि ॥ २ । १ । २० ॥

यथा प्राणायामादिना निरुद्धः प्राणापानादिर्जीवनमात्रं कार्यं निर्वर्तयत्यनिरुद्धस्त्वाकुञ्चनप्रसारणादिकं कार्यं करोति, नैतावता तस्य प्राणस्य भेदोऽस्ति । तस्मात्कार्यकारणयोरनन्यत्वं सिद्धम् । तदनन्यत्वाच्चैकविज्ञानात्सर्वविज्ञानप्रतिज्ञा सिद्धा भवति ॥

## इतरव्यपदेशाद्धिताकरणादिदोष-प्रसक्तिः ॥ २ । १ । २१ ॥

पूर्वं कार्यस्य कारणादनन्यत्वमेकविज्ञानप्रतिज्ञासिद्धये समर्थितम् । तर्हि तेनैव न्यायेन जीवब्रह्मणोरप्यभेदाज्जीवधर्मा हिताकरणादयो ब्रह्मणि प्रसज्येरन्नित्याक्षेपात्सङ्गतिः । जीवाभिन्नं ब्रह्म जगदुपादानमिति ब्रुवन्समन्वयो विषयः । स किं "यदि तादृग्ब्रह्म जगज्जनयेन्न तर्हि स्वानिष्टं जनये"दिति तर्केण विरुध्यते नवेति सन्देहे पूर्वपक्षमाहे"तरव्यपदेशा"दिति । इतरस्य जीवस्य "तत्त्वमसी"त्यादिना ब्रह्मत्वव्यपदेशादितरस्य ब्रह्मणो वा "ऽनेन जीवेनाऽऽत्मनाऽनुप्रविश्ये"त्यादिना शारीरत्वव्यपदेशाद्ब्रह्मणः स्रष्टृत्वे जीवस्यैव स्रष्टृत्वं स्यात् । तथा च हिताकरणादिदोषप्रसक्तिर्ब्रह्मणः । नञ् व्यत्यासेनाहितजरामरणादिबहुविधानर्थकरणरूपदोषस्य प्रसक्तिरित्यर्थः । आदिपदेन जीवस्य जगदादिकं मया सृष्टमिति ज्ञानं स्यात्तत्संहर्तृत्वं च स्यादित्यादिदोषा गृह्यन्ते । तस्माज्जीवाभिन्नब्रह्मणो नानिष्टप्रपञ्चजनकत्वमभ्रान्तचेतनत्वादिति न चेतनोपादानकं जगदित्याक्षेपसूत्रार्थः ॥

समाधत्ते ।

## अधिकं तु भेदनिर्देशात् ॥ २ । १ । २२ ॥

तुः पूर्वपक्षव्यावृत्त्यर्थः । यतः शारीरादधिकमन्यत्सर्वज्ञं सर्वशक्ति ब्रह्म जगदुपादानं स्रष्टृचेति ब्रूमः । अतो न हिताकरणादिदोषप्रसक्तिः । कुतः । भेदनिर्देशात् । "आत्मा वा अरे द्रष्टव्यः," "सता सोम्य तदा सम्पन्नो भवती"त्यादिना कल्पितभेदस्य व्यपदेशादित्यर्थः । न हि

ब्रह्मणो नित्यमुक्तस्य हितमहितं वा किञ्चिदस्तीति न हिताकरणादिदोषप्रसक्तिः । कल्पितभेदमादायैव सर्वेषां कार्योपपत्तिरिति तात्पर्यम् ॥

नन्वेकरूपस्य ब्रह्मणो जगत्कारणत्वे कार्यवैचित्र्यं न स्यादिति दोषं दृष्टान्तेन परिहरति ।

## अश्मादिवच्च तदनुपपत्तिः ॥ २ । १ । २३ ।

यथा लोक एकपृथिवीजन्यानामश्मनां वज्रवैडूर्येन्द्रनीलपद्मरागादिभेदेन वैचित्र्यमेवं ब्रह्मकार्याणां स्वरूपवैचित्र्यं युज्यते । नन्वेकब्रह्माश्रितकार्येषु कथं धर्मवैचित्र्यं कथं वाऽर्थक्रियावैचित्र्यमित्याशङ्कानिरासार्थं "मादिवच्चे"त्युक्तम् । तस्यार्थः । यथैकपृथिव्याश्रितानां बीजानां बहुविधं पत्रपुष्पफलगन्धरसादिवैचित्र्यं, यथैकस्यान्नस्य केशनखादिविचित्रार्थक्रियाकारित्वं तद्वत्सर्वमुपपद्यत इति । तदनुपपत्तिरुक्तदोषानुपपत्तिरित्यर्थः ॥

## उपसंहारदर्शनान्नेति चेत्क्षीरवद्धि ॥ २ । १ । २४ ॥

असहायाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयः । स किं "ब्रह्म नोपादानं कर्तृवाऽसहायत्वात्संमतव"दिति न्यायेन विरुध्यते न वेति सन्देहे, पूर्वमौपाधिकजीवभेदाद्धिताकरणादिदोषो नास्तीत्युक्तम् । सम्प्रत्युपाधितोऽपि विभक्तब्रह्मणः प्रेरणादिकं नास्ति ब्रह्मनानात्वाभावादिति प्रत्युदाहरणेनाक्षिप्य समाधत्त "उपसंहारे"ति । लोके कुलालस्य कर्तुर्दण्डचक्राद्युपसंहारदर्शनान्मृदो वोपादानस्य स्वभिन्नकुलालादिसाहाय्यदर्शनात्तदुभयविलक्षणस्य ब्रह्मणो न जगत्कर्तृत्वमुपादानत्वं वा सम्भवतीति चेदिति

शङ्कार्थः । समाधत्ते "क्षीरवद्धी"ति । हि शब्दो हेत्वर्थः । यथा लोके क्षीरं बाह्यमाधनान्यनपेक्ष्य दध्याकारेण परिणमते तद्वद्ब्रह्मापीत्यर्थः । न चौष्ण्यसापेक्षत्वं क्षीरस्यास्तीति वाच्यमौष्ण्यस्य दधिभावे त्वरामात्रनिमित्तत्वादिति । श्रुतिरप्यसहायस्य ब्रह्मणः कार्यकारित्वं दर्शयति "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे"ति ॥

ननु चेतनत्वे सत्यसहायत्वं हेतुः । अतो न क्षीरे व्यभिचार इत्याशङ्क्य चेतनदृष्टान्तेन तस्य व्यभिचारमाह ।

## देवादिवदपि लोके ॥ २ । १ । २५ ॥

लोक्यते ऽनेनेति लोकः शब्दो मन्त्रार्थवादेतिहासादिः । तस्मिन्यथा देवाः पितर ऋषय इत्येवमादयश्चेतनाः स्वतस्सिद्धसामर्थ्याः साधनान्तरं बाह्यमनपेक्ष्य सङ्कल्पमात्रेणैव नानाविधकार्यकर्तार उपलभ्यन्ते, तद्वद्ब्रह्मापीत्यर्थः । अयं भावः । कुलालस्तावद्बाह्यमान्तरं च सङ्कल्पादिकमपेक्ष्य कार्यकर्ता भवति, देवादयस्त्वान्तरसङ्कल्पमात्रमपेक्ष्य कार्येषु समर्थाः । तथा च यथैकस्य कार्यजनने सामर्थ्यं तथैवान्यस्येति नियमाभावान्न दृष्टान्तेन प्रत्यवस्थानमिति ॥

निरवयवाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयः सावयवस्यैव नानाकारेण परिणाम इति न्यायेन विरुध्यते न वेति क्षीरादिदृष्टान्तकथनेन ब्रह्मणः परिणामित्वभ्रमोत्पत्त्या सन्देहे कार्यकारणभावसङ्गत्या पूर्वपक्षयति ।

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २ । १ । २६ ॥

पूर्वाधिकरणस्य भ्रमोत्पादकत्वेन कारणत्वमेतस्य कार्यत्वमिति बोध्यम् । ननु ब्रह्म निरवयवं वा परिणमते, उत सावयवं वा । आद्ये कृत्स्नस्य ब्रह्मणः कार्याकारेण परिणामप्रसक्तिः । ततश्च कार्यातिरिक्तं ब्रह्म न स्यात् । दुर्ज्ञानत्वश्रुतिविरोधश्च, कार्यस्य प्रत्यक्षत्वात् । द्वितीये कृत्स्नप्रसक्तिर्नास्त्येकांशपरिणामे ऽप्यपरांशस्थितिसम्भवात् । तथासति "निष्कल"मित्यादिनिरवयत्वशब्दकोपः । उभयस्मिन्पक्षेऽप्यनित्यत्वप्रसङ्ग इति ब्रह्मणः परिणामित्वभ्रममूलकः पूर्वपक्षः ॥

सिद्धान्तयति ।

**श्रुतेस्तु शब्दमूलत्वात् ॥ २ । १ । २७ ॥**

"तु" शब्दः आक्षेपनिरासं ब्रूते न तावत्कृत्स्नप्रसक्तिरिति । कुतः । श्रुतेः । यथा जगदुपादानत्वं ब्रह्मणः श्रूयत एवं कार्यव्यतिरेकेण ब्रह्मणः सत्त्वं श्रूयत "एतावानस्य महिमे"त्यादौ । तथा च श्रुत्यैव विवर्तवादः स्फुटीकृतः । न हि परिणामवादे कार्यव्यतिरेकेण सत्त्वं सम्भवति । तस्मात्कार्यातिरेकेण ब्रह्मणो ऽवस्थानश्रुतेर्नोक्तदोष इत्यर्थः । ननु श्रुतिर्वा कथं कार्यातिरेकेण ब्रह्मणः सत्त्वं बोधयेदुक्तयुक्तिबाधितत्वादित्यत आह "शब्दे"ति । ब्रह्मणः शब्दैकप्रमाणकत्वाद्यथाशब्दं कार्योपादानत्वं तदतिरेकेण सत्त्वं चाविरुद्धमित्यर्थः ॥

जगतो ब्रह्मविवर्तत्वेन स्वप्नप्रपञ्चवन्मायिकत्वात्तदुपादानत्वे ऽपि ब्रह्मणो न कृत्स्नप्रसक्त्यादिदोषः स्वप्नसाक्षिवदित्याह ।

**आत्मनि चैवं विचित्राश्च हि ॥ २ । १ । २८ ॥**

एवं ब्रह्मणीव हि यस्माद्धेतोरेकस्मिन्नात्मनि स्वप्नदृशि

निरवयवे विचित्राः सृष्टयः श्रूयन्ते "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजत" इत्यादौ । स्वप्ने रथादीनामभावे कथं तदुपलब्धिरित्याशङ्कोक्तं श्रुता "यथे"त्यादि । सूत्रे "च" शब्देन मायविदृष्टान्तं समुच्चिनोति । यथा लोके मायाविनिस्वरूपानुपमर्दनेनैव हस्त्यश्वरथादिविचित्राः सृष्टयो दृश्यन्ते तथा ब्रह्मण्यपि विविधसृष्टिरित्यर्थः ॥

"यश्चोभयोः समो दोष" इति न्यायेन कृत्स्नप्रसक्त्यादीनामनुद्धाट्यत्वं दर्शयति ।

**स्वपक्षदोषाच्च ॥ २ । १ । २९ ॥**

सांख्यादयोऽपि निरवयवं प्रधानं जगत्परिणामीत्यङ्गीचक्रुः । तथा च कृत्स्नप्रसक्त्यादिदोषाः सर्वे समानाः । अणुवादिनोऽपि परमाणुद्वयसंयोगेन द्व्यणुकादिसृष्टिमङ्गीचक्रुः । स संयोगः किं व्याप्यवृत्तिरव्याप्यवृत्तिर्वा । आद्ये दृष्टविरोधः कार्यप्रथिमानुपपत्तिश्च । द्वितीये सावयवत्वं विनाऽव्याप्यवृत्तिसंयोगानुपपत्तिर्निरवयवत्वव्याकोप इत्यादयो दोषाः समानाः । ब्रह्मवादे ते दोषा न सन्ति च । तस्मादत्यन्तमुपपन्नः परमात्मकारणवादः ॥

एकस्यापि ब्रह्मणो विचित्रकार्यशक्तिमत्त्वमुक्तम् । तत्समर्थयति ।

**सर्वोपेता च तद्दर्शनात् ॥ २ । १ । ३० ॥**

मायाशक्तिमतो ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो "ऽशरीरस्य न माये"ति न्यायेन विरुध्यते न वेति सन्देहे, पूर्वोक्तशक्तिमत्त्वविषयकशङ्कानिरासेन तत्समर्थनात्मकत्वाद्विषयविषयिभावसङ्गत्या विरुध्यत इति पूर्वपक्षे राद्धान्तः । सर्वोपेता सर्वशक्तियुक्ता परादेवता । कुतः ।

तद्दर्शनात् । तस्याः सर्वशक्तियोगस्य श्रुतौ दर्शनादित्यर्थः । "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्त" इत्यादि श्रुतिद्र्ष्टव्या ॥

**विकरणत्वान्नेति चेत्तदुक्तम् ॥ २ । १ । ३१ ॥**

सर्वशक्तियुक्तानामपि देवादीनां चक्षुरादिकरणवतामेव विचित्रकार्यकर्तृत्वमवगम्यते । "अचक्षुष्कमश्रोत्र"-मित्यादिना ब्रह्मणो विकरणत्वावगमान्न कर्तृत्वमिति चेत्, यदत्रोत्तरं वक्तव्यं तत्पूर्वमेव "न विलक्षणत्वात्" "देवादिवदपि लोके" इत्यादावुक्तम् । श्रुत्यैकसमधिगम्यत्वान्न तर्केण विरोधाशङ्का । यथैकस्य तथैवान्यस्येति नियमाभावादित्यादिकमित्यर्थः ॥

ब्रह्मणो जगत्कर्तृत्वं हेत्वन्तरेणाक्षिपति ।

**न प्रयोजनवत्त्वात् ॥ २ । १ । ३२ ॥**

अवाप्तसकलकामाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो "ब्रह्म विना फलेन न सृजत्यभ्रान्तचेतनत्वात्सम्मतव"-दिति न्यायेन विरुध्यते न वेति सन्देहे पूर्वोक्तकर्तृत्वाक्षेपसङ्गत्या पूर्वपक्षः । ब्रह्मणो जगत्कर्तृत्वं न सम्भवति नित्यतृप्तत्वेन प्रयोजनाभिसन्धिरहितत्वात्प्रवृत्तेः प्रयोजनवत्त्वावगमादिति ॥

तत्र राद्धान्तः ।

**लोकवत्तु लीलाकैवल्यम् ॥ २ । १ । ३३ ॥**

"तु" उक्तशङ्कानिरासकः । यथा लोके राजतदमात्यादीनां फलं विनैव केवललीलारूपाः प्रवृत्तयो दृश्यन्ते, यथा वोच्छ्वासादयः स्वभावादेवोत्पद्यन्त एवं ब्रह्मणोऽपि विचित्रकार्यरचना लीलाकैवल्यं केवललीलामात्रं न फल-

सापेक्षम् । कथंचिद्राजादीनां लीलायां फलसम्भवेऽपि नित्यतृप्तस्य ब्रह्मणो लीलामात्रमेतदित्यभिप्रायः ॥

विधान्तरेण ब्रह्मणः कारणत्वमाक्षिप्य समाधत्ते ।

**वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ २ । १ । ३४ ॥**

निरवद्याद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो "यो विषमसृष्टिकर्ता स सावद्य" इति न्यायेन विरुध्यते नवेति विशये पूर्वं मायामय्या लीलया यत्स्रष्टृत्वमुक्तं तस्यात्राक्षेपात्सङ्गतिसिद्धौ पूर्वपक्षः । ब्रह्म किं प्राणिकर्मसापेक्षं जगत्कर्तृ, निरपेक्षं वा । नाद्योऽनीश्वरत्वप्रसङ्गात् । द्वितीये वैषम्यनैर्घृण्ये प्रसज्येयाताम् । कांश्चित्तिर्यगादीनत्यन्त दुःखिन उत्पादयति कांश्चिन्मनुष्यादीन्सुखदुःखसाधारणान्कांश्चिद्देवादीनत्यन्तसुखिन इति वैषम्यम् । सर्वसंहर्तृत्वाच्च नैर्घृण्यम् । ततश्च सावद्यत्वं प्रसज्येत । तस्मान्निरवद्यस्येश्वरस्य न जगत्कर्तृत्वमिति शङ्काया निरासमाह । वैषम्यनैर्घृण्ये न स्याताम् । कस्मात् । सापेक्षत्वात्प्राणिकर्मसापेक्षत्वात् । कर्मानपेक्षत्वे हि वैषम्यादिः स्यान्न सापेक्षत्व इत्यर्थः । न च सापेक्षत्वेऽनीश्वरत्वं, भृत्यादिसेवानुसारेण फलदातू राज्ञोऽराजत्वादर्शनात् । ईश्वरस्तु पर्जन्यवद्द्रष्टव्यः । यथा तत्तद्बीजे सत्यपि न पर्जन्यं विनाऽङ्कुरोत्पत्तिस्तद्वदिति । कर्मणैवोपपत्तौ किमर्थमीश्वरः स्वीकर्तव्य इति चोद्यं श्रुत्या पराकृतमित्यादिभाष्ये द्रष्टव्यम् । नन्वीश्वरस्य कर्मसापेक्षत्वं कुत इत्यत आह "तथा हि दर्शयति" । श्रुतिः स्मृतिश्चेत्यर्थः । "एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासा-

धुकर्म कारयति तं यमधोनिनीषत" इति "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन कर्मणे"त्याद्या श्रुतिः । यमुन्निनीषत ऊर्ध्वं नेतुमिच्छतीश्वरस्तं साधु कर्म कारयति पूर्वजन्मकृतसुकृतवशादिति योजना । पुण्यः सुखी । पापो दुःखी । स्मृतिश्च ।

" ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" ।

इत्याद्या द्रष्टव्या ॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥ २ । १ । ३५ ॥

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मित्यादिना सृष्टेः प्रागविभागावधारणान्न तदानीं कर्मास्तीत्यतः कर्मापेक्षया विषमा सृष्टिरित्यसङ्गतमिति चेन्न । अनादित्वात्संसारस्य बीजाङ्कुरवद्धेतुहेतुमद्भावोपपत्तेरित्यर्थः । पूर्वसृष्टौ सम्पादितधर्माधर्मप्रपञ्चस्यात्यन्तिकनाशाभावात्तदपेक्षयोत्तरसृष्टौ न किञ्चिद्बाधकमिति भावः ॥

ननु संसारस्यानादित्वं कुत इत्यत आह ।

## उपपद्यते चाप्युपलभ्यते च ॥ २ । १ । ३६ ॥

संसारस्यानादित्वमुपपद्यते च । अन्यथाऽकस्मादेव सृष्ट्यङ्गीकारे मुक्तस्यापि पुनर्जन्मप्रसङ्गात्पूर्वसृष्टिसादृश्यानुपपत्तेश्च । श्रुतिस्मृत्योः संसारस्यानादित्वमुपलभ्यते च । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति प्राणधारणनिमित्तेन जीवशब्देन सृष्ट्यादौ शारीरमभिलपन्प्राणधारणादिसंसारस्यानादित्वं दर्शयति । "धाता यथापूर्वमकल्पय"दित्याद्या श्रुतिरपि पूर्वकल्पसद्भावं दर्शयति । स्मृतिरपि संसारस्यानादित्वमाह ।

"न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च सम्प्रतिष्ठा" ।

इति । स्मृत्यर्थस्तु । अस्य संसारवृक्षस्य कल्पितस्य रूपं पारमार्थिकं स्वरूपं ब्रह्म । तथा घटादिवदिह प्राकृतैर्व्यवहारभूमौ नोपलभ्यते । न चान्तोऽवधिरस्य संसारस्य विना ब्रह्मविद्यामुपलभ्यते । नाप्यादिरनिर्वचनीयत्वादेव । नाऽपि सम्प्रतिष्ठा मध्यमिति ॥

इदानीं परपक्षप्रतिषेधप्रधानं पादमारब्धुकामः स्वपक्षे निर्दुष्टतामुपसंहरति ।

**सर्वधर्मोपपत्तेश्च ॥ २ । १ । ३७ ।**

पूर्वाधिकरणे कर्मवशादीश्वरस्य विषमसृष्टिहेतुत्वमुक्तम् । तदस्तु विषमसृष्टिप्रयोजककर्मणः सत्त्वात् । तद्वदुपादानत्वप्रयोजकसगुणत्वस्याभावान्नोपादानत्वमिति प्रत्युदाहरणेनास्यारम्भः । निर्गुणब्रह्मणो जगत्सर्गं वदन्समन्वयो "यन्निर्गुणं तन्नोपादानं यथा गन्ध" इति न्यायेन विरुध्यते न वेति सन्देहे विरुध्यत इति प्राप्ते ब्रूमः "सर्वधर्मोपपत्तेश्चे"ति । सर्वे जगत्कारणत्वसर्वज्ञत्वादयः कारणधर्मा ये विद्यन्ते तेषां पूर्वोक्तप्रकारेण ब्रह्मण्युपपत्तेर्ब्रह्मैव जगत्कारणमित्यौपनिषदशास्त्रं निर्दोषमित्यर्थः । अयं भावः । यन्निर्गुणं तन्नोपादानमिति व्याप्तौ किं परिणामित्वाभावो व्यापक उत विवर्तोपादानत्वाभावः । नाद्य इष्टत्वात् । न द्वितीय आरोपितानित्यत्वोपादाने ज्ञानजात्यादौ व्यभिचारात् । तस्मान्निर्गुणत्वे ब्रह्मणो विवर्तजगदुपादानत्वमविरुद्धमिति । तस्मान्न कथमपि समन्वयस्य विरोध इति सिद्धम् ॥

॥ इति द्वितीयाध्यायस्य प्रथमः पादः ॥

इयता प्रबन्धेन मुमुक्षूणां सम्यग्ज्ञानोत्पत्तये वाक्यानां समन्वयः प्रतिपादितः । तस्मिन्समन्वये परपरिकल्पितदूषणनिरासेन स्वपक्षः स्थापितः । इदानीं मुमुक्षूणामद्वैतशास्त्रे निर्विचिकित्सप्रवृत्तिसिद्धये परमतदूषणप्रधानः पाद आरभ्यते ।

## रचनाऽनुपपत्तेश्च नानुमानम् ॥ २ । २ । १ ॥

सांख्यमतस्य शिष्टपरिगृहीतत्वेनाभ्यर्हितत्वात्तदादौ निराक्रियते । पूर्वं "ईक्षतेर्नाशब्द"मित्यादिना प्रधानपरत्वेन वेदान्तानां व्याख्यानं निरस्तम् । इह तु प्रधानसाधकवेदनिरपेक्षयुक्तीनामाभासत्वमुच्यत इति न पौनरुक्त्यम् । अत्र सांख्यादिमतनिरासेन समन्वयस्य तन्मतविरोधनिरासद्वारा दृढीकरणादस्य पादस्य श्रुत्यध्यायसङ्गती बोध्ये । समन्वयविरोधनिरासेन स्वपक्षस्थापनपरप्रथमपादेनास्य पादस्योपजीव्योपजीवकभावः सङ्गतिः । स्वपक्षस्थापनं विना परमतनिरासायोगात्स्वसिद्धान्तज्ञानहेतुत्वद्वारा पूर्वपादस्योपजीव्यत्वं बोध्यम् । परमतयुक्तिनिरासपरत्वादेव सर्वेषामधिकरणानां पादसङ्गतिः । "सर्वधर्मोपपत्तेश्चे"त्यनेन ब्रह्मणि कारणधर्माणामुपपत्तिरित्युक्तम् । तेषां प्रधान एवोपपत्तिः किं न स्यादित्याक्षेपस्यात्रनिरासादनयोरधिकरणयोराक्षेपलक्षणावान्तरसङ्गतिः । फलं तु पादसमाप्तिपर्यन्तं परमतयुक्तिविरोधाविरोधाभ्यां समन्वयासिद्धिस्तत्सिद्धिरिति विवेकः । तत्र प्रधानमचेतनं जगदुपादानमिति सांख्यसिद्धान्तो विषयः, सन्दिह्यमानस्यैवाधिकरणविषयत्वात् । स च सिद्धान्तः सन्दिह्यते किं प्रमाणमूलो भ्रान्तिमूलो वेति । तत्र प्रमाण-

मूल एवेति युक्तम् । तथा हि बाह्याध्यात्मिकं जगत्सुखदुःख-
मोहात्मकसामान्योपादानकं भवितुमर्हति, तदन्वितत्वात्,
यद्यदन्वितं तत्तदुपादानकं, यथा मृदन्वितं घटादिकं मृदु-
पादानकमिति । तथा च यदेव सुखदुःखमोहात्मकं किञ्चि-
त्सिद्धं तदेव सत्त्वरजस्तमोगुणात्मकं प्रधानमिति प्रामा
णिकः सांख्यसिद्धान्त इति प्राप्ते ब्रूमः । उक्तानुमानसिद्धं
प्रधानं न जगदुपादानम् । कुतः । रचनानुपपत्तेः । चेतना-
प्रेरितात्स्रष्टव्यज्ञानशून्यात्प्रधानादनेकविधविचित्रजगद्र-
चनानुपपत्तेरित्यर्थः । लोके विचित्रप्रासादादिरचनायां
बुद्धिकुशलशिल्प्यादिकार्यत्वदर्शनादिति भावः । सूत्र
"च" शब्देन हेतोः स्वरूपासिद्धिं समुच्चिनोति । सुखा-
दीनामान्तरत्वप्रतीतेस्तदन्वितत्वं जगतोऽसिद्धम् । तस्मा-
दप्रामाणिकः सांख्यसिद्धान्त इति ॥

## प्रवृत्तेश्च ॥ २ । २ । २ ॥

साम्यावस्थाऽऽपन्ना गुणा हि प्रधानं । साम्यावस्थायां
च न किञ्चित्कार्यं जायते, किं तु साम्यावस्थाप्रच्यवेन
गुणानामङ्गाङ्गिभावे जाते कार्यस्योदय इति प्रक्रिया । सा
न युक्ता । लोकेऽचेतनरथादिप्रवृत्तेश्चेतनाधीनत्वदर्शनात्प्र-
धानस्य साम्यावस्थाप्रच्युतिरूपप्रवृत्तेश्चेतनप्रेरणं विनाऽनु-
पपत्तेरित्यर्थः ॥

## पयोऽम्बुवच्चेत्तत्रापि ॥ २ । २ । ३ ॥

नन्वचेतनस्य स्वयं प्रवृत्तिरपि दृश्यते । यथा क्षीरं
वत्सविवृद्धये स्वयमेव प्रवर्तते, यथा वा जलं स्वयमेव
स्यन्दते, तथा पयोऽम्बुवत्प्रधानं स्वयमेव प्रवर्तेत इति चेन्न,
यतस्तत्रापि परमात्मा प्रेरकः श्रूयते "योऽप्सु तिष्ठ"न्नित्या-

दिना । तथा च पक्षत्वान्न व्यभिचारः पयोऽम्बुनोरिति भावः ॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ २ । २ । ४ ॥

अपि च न स्वतन्त्रं प्रधानं जगदुपादानम् । कुतः । व्यतिरेकानवस्थितेः, स्वतन्त्रस्य तस्य कारणत्वे सर्वदा कार्यप्रसक्तौ कदाचिदपि कार्यव्यतिरेकस्यावस्थित्यभावप्रसङ्गादित्यर्थः । तदपि कुतः । अनपेक्षत्वात् । स्वतन्त्रस्य प्रधानस्य चेतनादिसहकार्यन्तरानपेक्षत्वाभ्युपगमादित्यर्थः ॥

अन्यत्राभावाच्च न तृणादिवत् ॥ २ । २ । ५ ॥

ननु तृणोदकादिकं निमित्तान्तरनिरपेक्षमेव क्षीराकारेण परिणमते । तद्वत्प्रधानमपीति चेन्न । कुतः । अन्यत्राभावाद्धेन्वादेरन्यत्र बलीवर्दादौ तृणादेः क्षीरभावस्याभावादित्यर्थः । तथा च धेन्वादिसापेक्षमेव तृणादिकं क्षीरीभवति । निरपेक्षत्वे बलीवर्दादावपि क्षीरीभावप्रसङ्ग इत्यर्थः ॥

अभ्युपगमेऽप्यर्थाभावात् ॥ २ । २ । ६ ॥

प्रधानस्य स्वतः प्रवृत्त्यभ्युपगमे पुरुषार्थस्याप्यपेक्षाऽभावप्रसङ्गादिति भावः । न चेष्टापत्तिः प्रधानमचेतनं चेतनस्य पुरुषार्थं साधयितुमेव प्रवर्तत इति, स्वाभ्युपगमविरोधादिति भावः । यद्वाऽर्थाभावात्प्रयोजनाभावादित्यर्थः । तथा हि न तावत्प्रधानप्रवृत्तिः पुरुषस्य भोगार्था, भोग्यानामानन्त्यादनिर्मोक्षप्रसङ्गात् । नाप्यपवर्गार्था, भोगाभावप्रसङ्गात्प्रधानस्याप्रवृत्तिप्रसङ्गाच्च, पुरुषस्य स्वरूपेणावस्थितिलक्षणस्य मोक्षस्य प्रधानाप्रवृत्त्यैवसिद्धेः । तस्मात्प्रयोजनाभावान्न प्रधानस्य जगद्धेतुत्वम् ॥

श्रीः

श्रियै नमः ।

श्रीधराय नमः ।

पूर्वाचार्यपरम्पराभ्यो नमः ।

श्रीमते रामानुजाय नमः ।

# ईशा वास्योपनिषत् ।

— ⁂ —

## विशिष्टाद्वैतसिद्धान्तानुयायिव्याख्योपेता ।

विश्वं व्याप्य धार्य्यं तेन विविचाश्च शक्तयो यस्य ।
श्रीरङ्गेश तमृषि तनुवाक्चित्तैरुपास्महे पुरुषम् ॥ १ ॥
सर्वेशान सर्वभूतान्तरात्मा दोषानर्हं सर्वविद्यैकवेद्यः ।
कर्माराध्यस्साध्यभक्त्येकलभ्यः श्रीमान् व्यक्तो वाजिना संहितान्ते ॥ २ ॥
यस्याचार्य्यैः कृत भाष्य गम्भीर विदुषा मुदे ।
बालामोदाय तद्भावो यथाभाष्य प्रकाश्यते ॥ ३ ॥
ईशावास्यानुवाकोऽय वाजिना संहितान्तगः ।
शिष्याय गुरुणा यस्मिन् ब्रह्मविद्योपदिश्यते ॥ ४ ॥
कर्मणा संहितोक्ताना विनियोगपृथक्त्वतः ।
विद्याङ्गताऽस्ति तद्व्यक्त्यै निबन्धोऽस्य तदन्ततः ॥ ५ ॥

ईशा वास्यमिद सर्वमित्येषोऽनुवाकोऽष्टादशमन्त्रात्मकः, एते च मन्त्राः पुरुषसूक्तोदितपरमपुरुषतत्त्वस्वरूपतदुपासनप्रपदनतत्प्राप्तिरूपतत्त्वोपायपुरुषार्थाना सग्रहेण सम्यक् प्रतिपादकत्वात् कर्मसु कल्पसूत्रकृता कात्यायनेन विनियुक्तत्वाच्चोपनिषत्सारभूताः । भगवद्गीतादिभिश्चैतेषा मन्त्राणामुपबृहणा तत्रतत्र परस्तात् प्रदर्शयिष्यते । नन्वेव ब्रह्मकाण्डे

बृहदारण्यक एवैषा पाठः स्यात् । न संहितायां, प्रयोजनाभावादिति चेन्न । एतेषु सारभूतानां पञ्चषमन्त्राणां बृहदारण्यकेऽपि पाठदर्शनात् ।

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ।
यज्ञेन दानेन तपसाऽनाशकेन ॥
विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥

इत्यविद्याख्यस्य कर्मविशेषस्य ब्रह्मविद्यायां विनियुक्तत्वात् संहितायामुदाहृतं कर्मजातं विद्याया अप्यङ्गमिति विशदीकरणार्थमेषां संहितान्ते पाठोपपत्तेश्च । अतः कर्मसु विनियुक्तत्वात्पूर्वोक्ततत्त्वोपाय-प्रयोजनप्रतिपादनपरत्वाच्चोपनिषद एवैते मन्त्रा इति सिद्धम् ॥

**ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥१॥**

तत्र तावदाचार्यः प्रथमं रजस्तमःप्रचुरदेहेन्द्रियादिविशिष्टत्वात् 'ईश्वरोऽहमहम्भोगी'त्यादिश्रीभगवद्गीतोक्तप्रक्रियया स्वतन्त्रोऽहं, देवतान्तरपरतन्त्रोऽहमिति च भ्राम्यतस्तत्त्वबुभुत्सया चोपसन्नस्य शिष्यस्य स्वतन्त्रात्मभ्रमादिनिवृत्त्यर्थं चिदचिदात्मकस्य कृत्स्नस्य प्रपञ्चस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तित्वमुपदिशति । ईशा वास्यमिति । इदम्—अचिन्त्यविविधविचित्ररचनया ब्रह्मादिस्तम्बपर्यन्तं क्षेत्रज्ञमिश्रिततया च प्रत्यक्षादिप्रमाणसिद्धमित्यर्थः । सर्वम्-ईश्वरव्यतिरिक्तं भोग्यभोक्तृरूपं सर्वम् । ईशेति तृतीयैकवचनान्तम् । सर्वनियन्त्रेत्यर्थः । सङ्कोचे मानाभावात् । महापुरुषेणेति यावत् । योऽसावसौ पुरुष इत्यनुवदिष्यमाणत्वात् । स एव हि सर्वस्येष्टे । तथा च अन्यत्र 'पतिं विश्वस्यात्मेश्वर'मिति । तेन वास्यं निवासनीयम् । व्याप्यमिति भावः । अनन्याधारत्वात् परस्य ब्रह्मणः । यद्वा सर्वाधारे स्वस्मिन्नेव स्वेन वसनीयम् । सर्वं प्रतिष्ठापनीयमित्यर्थः । स्मर्यते हि—

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ इति ।

जगत्यामुर्व्याम् । इद लोकान्तराणामप्युपलक्षणम् । जगत्—अन्यथात्वङ्गच्छत् । तत्राचिदंशस्य भोग्यत्वाय स्वरूपविकाररूपमन्यथात्वम्, चिदंशस्य तु भोक्तृत्वाय सङ्कोचविकाशादिलक्षणस्वभावविकारेणान्यथात्वमिति भेदोऽनुसन्धेय. । ईशेनाव्याप्य किञ्चिदपि नास्तीति द्रढयितु* यत्किञ्चेति जगद्विशेष्यते । जगत्यादिषु लोकेषु यत्किञ्चिद् भोक्तृभोग्यरूपं जगद्वर्तते तदिद सर्वम् ईशा वासुदेवेन वास्यं—व्याप्यं धार्य्यं चेत्यर्थः ।

इन्द्रियाणि मनो बुद्धिस्सत्त्व तेजो बल धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्र क्षेत्रज्ञ एव च ॥

इत्याद्युपबृहणसहस्रमिहानुसन्धेयम् ।

पृथगात्मान प्रेरितार च मत्वा, ज्ञाज्ञौ द्वावजावीशनीशौ ।

छान्दसो ह्रस्व' । ईशानीशावित्यर्थः । 'नित्यो नित्याना चेतनश्चेतनानामेको बहूना यो विदधाति कामानि'त्यादिषु प्रसिद्धो जीवेश्वरयोरीशेशितव्यत्वादिलक्षणोऽत्यन्तभेदोऽप्यत्र सिद्धः । ननु रूढिर्योगमपहरतीति न्यायादीशोऽत्र रुद्र स्यात् । मैवम्, 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नाग्निर्न सूर्यो न चन्द्रमाः स न एकाकी न रमत' इत्यादिषु 'अनपहतपाप्मा वा अहमस्मि नामानि मे धेही'त्यादिषु च भगवत्कार्यत्वेन कर्मवश्यत्वेन च सम्प्रतिपन्ने रुद्रे सर्वव्यापित्वसर्वाधारत्वादेरन्वयासम्भवेन विरुद्धार्थविषयतयैवेह रूढेर्भङ्गत्वात् । एवं च जगत्कारणवादिवाक्यगताकाशप्राणादिशब्दन्यायेन—'अजः सर्वेश्वरः सिद्ध' इत्यनवच्छिन्नैश्वर्य्यतया प्रसिद्धे सर्वेश्वरे यौगिक एवायमीट्शब्द' प्रत्येतव्य इति सिद्धम् । एव मुमुक्षोरीश्वरपारतन्त्र्यबोधमुत्पाद्य वैराग्यभूषिता वृत्तिमुपदिशति । तेन त्यक्तेन भुञ्जीथाः । तेन—जगता । भोग्यताभ्रमविषयेणेति भावः । त्यक्तेन अल्पत्वास्थिरत्वदुःखमूलत्वदुःखमिश्रत्वदु खोदर्कत्वदेहात्माभिमानमूलत्वस्वाभाविकब्रह्मानन्दानुभवविरुद्धत्वरूपा ये विषयदोषाः सप्त तन्निरूपणपूर्वक परित्यक्तेनोपलक्षितः सन् भुञ्जीथाः । भगवदुपासनोपयुक्तदेहस्य धारणमात्रोपयिक्मन्नपानादिक

* दर्शयितुमिति पा ।

यागदानहोमार्चनाद्युपयोगपरिजनपरिच्छदादिकं च भोग्यवर्गं भुञ्जीथा इत्यर्थः । यद्वा दोषसप्तकनिरूपणात् त्यक्तेन भोग्याभासेनोपलक्षितः सन् भुञ्जीथाः-सर्वावासत्वेन प्रकरणे प्राप्तं प्रकृतमुक्तदोषप्रतिभटं निरतिशय-भोग्यं वक्ष्यमाणोपायमुखेन भुञ्जीथा इति योज्यम् । तत्र-भोक्ता भोग्यं प्रेरितारं च मत्वा, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति, । समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महि मानमिति वीतशोकः महिमानम् इति-प्राप्नोतीत्यर्थः । छान्दसो गुणा भावः । तदेति प्रतिनिर्देशोऽध्याहार्य्यः, यदा अन्यमीशमस्य महिमानं च पश्यति तदा वीतशोको भवतीत्यन्वयो वा । मागृधः कस्यस्विद्धनम् । कस्यापि बन्धोरबन्धोर्वा धनं मागृधः माभिकाङ्क्ष. गृधु अभिकाङ्क्षायामिति धातुः । आह च यमः किङ्करं प्रति-

हरति परधनं निहन्ति जन्तूंन्वदति तथाऽनृतनिष्ठुराणि यश्च ।
न सहति परसम्पदं विनिन्दां कलुषमतिः कुरुते सतामसाधुः ॥
परमसुहृदि बान्धवे कलत्रे सुततनयापितृमातृभृत्यवर्गे ।
शठमतिरुपयातियोऽर्थतृष्णां पुरुषपशुर्न स वासुदेवभक्तः ॥ इति,

भगवद्गीतासु च-न काङ्क्षे विजयं कृष्णेत्यादि । इदं च धना-शाप्रहाणं परमात्मव्यतिरिक्तकृत्स्नविषयवैराग्योपलक्षणं, स्मरन्ति हि-
परमात्मनि यो रक्तो विरक्तोऽपरमात्मनीति ॥ १ ॥

**कुर्व्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२॥**

एवं विरक्तस्य विदुषः फलसङ्गकर्त्तृत्वादित्यागयुक्तो ब्रह्मविद्या-ङ्गभूतः कर्मयोगो यावज्जीवमनुष्ठेय इत्याह कुर्वन्नेवेति । शतं समाः शतं संवत्सरान् । प्रायिकवादोऽयम् । कर्माणि नित्यनैमित्तिकानि कुर्वन्नेव इह लोके जिजीविषेत् जीवितुमिच्छेत् ब्रह्मविदो ऽपि यावद्विद्यापूर्त्ति-जीवितुमिच्छा भवतीति प्राप्तत्वात् शतायुर्वै पुरुष इति श्रुतेः यावज्जी-

वमित्यर्थः । शतसङ्ख्याकान् वत्सरान् जीवन्नित्यनूद्य कर्माणि कुर्वीतैवेति विधिः सङ्क्रमयितव्यः यावज्ज्ञानयोगाधिकार कर्म्मयोगः कर्त्तव्य इति भावः । कर्मयोगो नाम दैवमेवापरे यज्ञमित्यादिना विकल्पविहितेषु कर्म्मयोगावान्तरभेदेषु एक यथारुच्यङ्गितया स्वीकृत्यान्यानि नित्यनैमित्तिकानि तदङ्गतयोपसहृत्य असाङ्गकर्मानुष्ठानविशेषः न कदाचिदपि विद्याङ्ग कर्म परित्यजेदित्येवकाराभिप्रायः । त्वयीश्वरपरतन्त्रात्मस्वरूपज्ञानतया तदाज्ञापरिपालनरूपकर्मानुष्ठाने अधिकारपूर्त्तिमतीति भावः । एवम्-एवमेवानुष्ठेयानीत्यर्थः । उक्तमर्थं व्यतिरेकेण दृढीकरोति नान्यथेतोऽस्तीति, इतः कर्मानुष्ठानात् अन्यथा-प्रकारान्तरमननुष्ठान नास्तीत्यर्थ. । नान्य. पन्थास्तत्तोषकारणमिति स्मृते. । ननु ब्रह्मविदोऽपि कर्मानुष्ठानाऽवश्यम्भावे बन्धः स्यादित्यत्राह । न कर्म लिप्यते नरे । इति, विद्याविरुद्धेषु कर्मफलेषु न रमत इति नरः, । प्रस्तुतब्रह्मविदि नरे विद्याङ्गतया क्रियमाणः कर्मयोगो न लिप्यते न स्वर्गादिहेतुर्भवति । अपि तु ज्ञानयोगद्वारा वा साक्षाद्वा प्रथम परिशुद्धजीवात्मविषययोगमुत्पाद्य पश्चाद्भक्तियोगाङ्गभूत प्रत्यगात्मसाक्षात्कारमेवोत्पादयतीति भावः । यत्तु कुर्वन्नेवेह कर्माणीत्यय विधिरविद्वद्विषय एव न तु ब्रह्मविद्विषय इति, तस्य विधिनिषेधशास्त्रवश्यत्वाभावात् । तस्य हि ब्रह्मज्ञानाग्निनाऽधिकारः प्रनष्ट इति शाङ्करव्याख्यानं तत्प्रकरणविरुद्धम् ।

विद्या चाविद्या च यस्तद्वेदोभय सह ।
अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते ॥

इत्युपरितनविध्यन्तरविरुद्ध चेति न वेदविदो बहुमन्यन्ते ॥ २ ॥

**असुर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।**
**तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः ॥३॥**

एव मन्त्रद्वयेन तत्त्वत्रयस्वरूप विद्याङ्गकर्मानुष्ठानस्वरूपं च यथावदुपदिष्टम् । इदानीं ये केचनासुरप्रकृतयो यथोपदेश तत्त्वत्रयमविदित्वाऽन्यथा जानन्ति कामक्रोधलोभाद्यन्वितास्सन्तः शास्त्रविधिमुत्सृज्य

यज्ञादि कर्म कुर्वन्ति, निषिद्धानि चाचरन्ति ते सर्वे स्वात्मघातिनस्तेषां निरयपातोऽवश्यम्भावीत्युपदिशत्याचार्य्य. असुर्या इति, असुराणां स्वभूता असुर्य्याः । असुरस्वभावभूता वा । असुरप्रकृतीनामेवानुभाव्याः । अन्येषां दैवप्रकृतीनामनुभवितुमशक्या इत्यर्थ., अतिभीषणा इति यावत् । नामेति प्रसिद्धौ, अतिभीषणा नरकसञ्ज्ञितास्ते लोकाः सन्तीति सर्वशास्त्रप्रसिद्ध-मिति भावः । पुनस्तान् विशिनष्टि अन्धेन तमसाऽऽवृता इति । अन्धेना तिगाढेन तमसा अन्धकारेण आवृता व्याप्ताः तानतिभीषणानालोकसङ्ग रहितांश्च लोकानिति भावः । येके च देवजातीया मनुष्यजातीया वा तत्रापि ब्राह्मणा वा क्षत्रियादयो वा आत्महन. असन्नेव स भवति असद्ब्रह्मेति वेद चेदित्याम्नातामसत्कल्पतां स्वात्मान नयन्तः ब्रह्मज्ञानविहीनाः काम्यकर्मादिनिष्ठा इत्यर्थः । तथा च बृहदारण्यके—

अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधा जना' ॥ इति,

देहपातमुखेन पातकवर्गस्य चोपलक्षणमिद पातकिनश्च ये जना', तन्निमन्तः ससरन्त इत्यर्थः । स्वात्मघातिनस्ते सर्वे प्रेत्य तदातनदेहादुत्क्रम्याभिगच्छन्ति अभितो गच्छन्ति सर्वानपि पृथिव्यन्तरिक्षस्वर्गरौरवादिसञ्ज्ञितान्नरकांश्चिरन्तर गच्छन्तीति भावः ॥ ३ ॥

**अनेजदेकं मनसो जवीयो**
**नैत*द्देवा आप्नुवन्पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येति तिष्ठ-**
**त्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥**

एव तृतीयेन मन्त्रेण विद्याया शीघ्रप्रति†पत्तिसिद्ध्यर्थम् अवि दुषामनर्थ उक्तः । अथाचार्य्यः सर्वावासत्वेन प्रस्तुतस्य परस्य ब्रह्मणोऽनन्तविचित्रशक्तियोग विरुद्धवदभिलापेन व्यञ्जयन्नुपदिशति । अनेजदिति । अनेजत्—एजृ कम्पने अकम्पमानम् एक प्रधानतम शास्त्र-

* नैनद्देवा । इति पा । † प्रवृत्तिसिद्ध्यर्थमिति पा· ।

विदुषा स्वाधीनत्वम् । समानाधिकत्वसमानद्वितीयरहितमिति वा । न तत्समश्चाभ्यधिकश्च दृश्यते इतिश्रुतेः परमसाम्यमापन्ना अपि मुक्ता ब्रह्माधीना एवेति भावः । मनसो जवीयः—वेगवतो मनसो ऽपि जवीयः—वेगवत्तर प्रकृत्यतिक्रान्तमपि देशं क्षणमात्रात् मनः सङ्कल्पेन गच्छति चेत् ततः पूर्वमेव तत्र गच्छतीति भावः । निष्कम्प वेगवत्तर चेति विरोध[illegible]तीतिः । परिहारस्तु विभुत्वाद्वस्तुतोऽनेजत् तत एव मनसोऽप्यगोचरदेशे सर्वदैव वृत्तेर्मनसो जवीय इत्युपचर्य्यते इति । किञ्च देवा ब्रह्मरुद्रादयोऽपि पूर्वं मर्षत् प्रागेव सर्वान् देशान् प्राप्नुवन्नित्यर्थः, एतत्प्रस्तुत सर्वावास्यं पर ब्रह्म नाप्नुवन् एतावन्त काल न लेभिरे इति भाव. । पूर्वमेव प्राप्त न लेभिरे इति च विरोधप्रतिभान विभुतया प्राप्तमपि कर्मसङ्कुचितज्ञानाः क्षेत्रज्ञा आचार्य्योपदेशं विना स्वबुद्ध्या नाप्नुवन्निति परिहारः । यथोक्तं छान्दोग्ये तद्यथा ।

> हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्य्यु
> परि सञ्चरन्तो न विन्देयुरेवमेवेमाः ।
> सर्वा प्रजा अहरहर्गच्छन्त्य एतं ब्रह्म-
> लोकं न विन्दन्त्यनृतेन हि प्रत्यूढा ॥ इति,

अपि च तद्धावतोऽन्यान्ऽनत्येति तिष्ठत् यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन् यः सर्वेषु भूतेषु तिष्ठन्नित्यादिक्रमेण सर्वत्र तिष्ठदेव तद्ब्रह्म धावतोऽन्यान् गरुडादीनप्यत्येति तिष्ठतः पुरुषस्य धावदतिक्रमणं न घटत इति विरोधप्रतिभान जविनो यावद्यावद्धावन्ति तावतस्तावतः परस्तादपि वर्त्तते इति तात्पर्यादविरोधः । यथोच्यते ।

> वर्षायुतशतैर्वापि पक्षिराडिव सम्पतन् ।
> नैवान्तं कारणस्येयाद् यद्यपि स्यान्मनो जवः । इति, ॥

अन्यदपि किञ्चिदाश्चर्यमित्याह तस्मिन्नपो मातरिश्वा दधाति, तस्मिन् वासुदेवे अवस्थितो मातरिश्वा अप इत्युपलक्षण पाथःपयोधरवहनक्षत्रनारकादिकं बिभर्त्तीत्यर्थः, धारणानुगुणकाठिन्यरहितोऽपि वायुः पाथ· प्रभृतिकं बिभर्तीत्यद्भुत सर्वाधारभूतेन सर्वेश्वरेण विधृतो वायुस्तच्छ-

त्येव बिभर्त्तीत्यभिप्रायः, एष सेतुर्विधरण एषां लोकानामसम्भेदाय, एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ।

द्यौः सचन्द्रार्कनक्षत्रा ख दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥

इत्यादिषु प्रसिद्धमेतत् ॥ ४ ॥

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।**
**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥५॥**

अथेदानीमाचार्य्यः स्वोपदिष्टं विचित्रशक्तित्वमेवादरार्थं मुखान्तरेण पुनरनुशास्ति तदेजतीति भूयोभूय प्रवचन श्रवणं च कर्तव्यमिति च पुनरनुशासनस्याभिप्रायः । तथा च शास्त्र परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान् नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रिय ब्रह्मनिष्ठ, तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय, येनाक्षर पुरुष वेद सत्यं प्रोवाच ता तत्त्वतो ब्रह्मविद्यामिति तत्त्वतः अज्ञानसंशयविपर्ययनिरासो यथा भवति तथा प्रोवाच प्रकर्षेण ब्रूयात् पुनःपुनरुपदिशेदित्यर्थः । अत एव तद्विद्धि प्रणिपातेनेत्यादिना भगवतोपदिष्टस्यार्थस्य वैशद्याय तत्त्वदर्शिसकाशात् प्रणिपातादिपुरस्सर पुनःश्रवण विहितम् उपदिष्टा च पुनरनुगीतेत्याहुराचार्य्याः । तदेजति । तत्सर्व व्याप्त पर ब्रह्म एजति एजतीव कम्पत इव जवीय एवेति यावत् । तदु तदेव नैजति वस्तुतस्तु न कम्पते तद्दूरे च तदेवान्तिके च वर्त्तते आसुरदैवप्रकृतिकपुरुषभेदापेक्षया विभोरेव दूरान्तिकवर्तित्वव्यपदेशः । आह च भगवान् शौनकः-

पराङ्मुखाना गोविन्दे विषयासक्तचेतसाम् ।
तेषा तत्परम ब्रह्म दूराद्दूरतरे स्थितम् ॥
तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः ।
विषयत्यागिनस्तेषा विज्ञेय च तदन्तिके ॥ इति, ।

इदमप्येकं वैचित्र्यमित्याह तत् सर्वव्याप्त परं ब्रह्म अस्य सर्वस्य विविधविचित्ररूपतया प्रमाणप्रसिद्धस्य सर्वस्य वस्तुनोऽन्तर्भवति तदेव पुनस्तदानीमेव सर्वस्य बहिरपि भवतीत्यर्थः । अन्येषा तु गृहान्तर्वर्तिपुरुषाणा तदानीमेव न बहिष्ट्वं सम्भवति बहिर्वसता च नान्तर्वर्तित्वमितीह वैचित्र्यमिति भावः । यद्यप्यणुषु नान्तर्वर्तितासम्भवति तथाऽप्यप्रतिघातादविभक्तदेशतया वर्तित्वमात्रेणाण्वन्तर्वर्तित्वोक्तिः । एवं बहिर्व्याप्तिरप्यविभुद्रव्यापेक्षयैव न तु विभुद्रव्यापेक्षयापीति द्रष्टव्यं, तदिदं वैचित्र्यं तैत्तिरीयकेऽप्युक्तम्–'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति ॥ ५ ॥

**यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥**

एवं सर्वस्य ब्रह्मात्मकत्वमुक्तम् । अथ सर्वं जगद्ब्रह्मात्मकमित्यनुसन्दधानस्यैहिकं प्रयोजनमाह यस्तु सर्वाणीति, यः–तत्त्वज्ञानी अस्याधिकारिणो माहात्म्यविशेषज्ञापनाय तु–शब्दः सर्वाणि भूतानि ब्रह्मादिस्थावरान्तानि आत्मन्येव परमात्मन्येव अनुस्यूतानि पश्यति विशदं निध्यायतीत्यर्थः । पृथिव्यादिभिर्ध्रियमाणमपि तन्मुखेन परमात्मन्येव स्थितमित्येवकाराभिप्रायः । किञ्च सर्वभूतेषु चात्मानं परमात्मानं य. पश्यतीति इदं व्याप्तिमात्रपरं परमपुरुषस्यानन्याधारत्वादिति भावः । यच्छब्दस्य स इति प्रतिनिर्देशोऽध्याहार्यः सः–उक्ततत्त्वज्ञानी । ततस्तेषु–सप्तम्यर्थे तसिः, ब्रह्मात्मकतया दृष्टेषु सर्वेषु भूतेष्वित्यर्थः, न विजुगुप्सते कुतश्चिदपि न बीभत्सते स्वात्मविभूतिन्यायात् क्वचिदपि निन्दा न करोतीति भावः ॥ ६ ॥

**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यत ७ ॥**

एवं वैयधिकरण्येनोक्तं सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येनापि द्रढयंस्तथाऽनुध्यानस्य सद्यः शोकमोहनिवर्तकत्वमाह । यस्मिन्

सर्वाणीति । प्रणिधानसमये विजानत ईशा वास्यमित्यारभ्य ततो न विजु-
गुप्सत इत्यन्तेनोपदिष्ट स्वतन्त्रपरतन्त्रवस्तुभेद यथोपदेश विविच्य जानत
इत्यर्थः । नन्वेवमत्यन्तभेदाभ्युपगमे सर्वाणि भूतान्यात्मैवाभूदिति
सामानाधिकरण्य भज्येतेत्याशङ्कानिरासाय यस्य पृथिवी शरीरम् इत्या-
दिघटकश्रुतिसिद्ध सम्बन्धविशेषमाह । एकत्वमनुपश्यतः इति, आकृति-
व्यक्त्योरिव गुणगुणिनोरिव चात्यन्तभिन्नयोरेव जगद्ब्रह्मणोरैकत्व विभा
गानर्हसम्बन्धविशेष पश्यतः विशदतममनुध्यायत इत्यर्थः । रामसुग्रीव
योरैक्य देव्येव समजायत इत्यादिष्विवेहापि एकशब्दस्य सम्बन्धविशेष
एवार्थो विवक्षितु युक्त इति भावः । एव च सत्याह सर्वाणि भूतान्या
त्मैवाभूदिति परात्मैव सर्वभूतशरीरकः प्रतीतोऽभूदित्यर्थः–तत्र तदा
प्रणिधानसमये को मोहः स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न सम्भ-
वति । कः शोकः परमात्मविभूतितयाऽवगते सर्वस्मिन् निर्ममत्वसिद्ध्या
पुत्रमरणराज्यहरणादावपि न कश्चिच् शोकः स्यादित्यर्थः । यथाऽऽह ।

अनन्त बत वित्त मे यस्य मे नास्ति किञ्चन ।
मिथिलाया प्रदीप्ताया न मे किञ्चन दह्यते ॥ इति, ।

अत्र केचित्सर्वाणि भूतानि आत्मैवाभूदिति बाधार्थ सामा
नाधिकरण्य तथा चात्मैव सर्वाणि भूतानि आत्मव्यतिरिक्तानि सर्वाणि
न सन्तीत्यर्थ., यथा चोरः स्थाणुरिति स्थाणुरेवाय न चोर इति
हि तस्यार्थः, तथेहापीत्याहुः । अन्ये तु नरपतिरेव सर्वे लोका इति-
वदौपचारिकमिद सामानाधिकरण्य, नरपत्यधीनाः सर्वे जना इति हि
तत्र निर्वाह', तद्वदिहापि परमात्माधीनानि सर्वाणि भूतानीति भाव
इति वर्णयन्ति । अपरे तु घटशरावादयः सर्वे मृत्पिण्डा एवेतिवज्जग
द्ब्रह्मणोरेकद्रव्यत्व परिकल्प्यैवेद सामानाधिकरण्य निर्वाह्यमित्याचक्षते ।
सिद्धान्तस्तु देवोऽह मनुष्योऽहमित्यादिवत् शरीरात्मभावसम्बन्धेनैव
जगद्ब्रह्मणो' सामानाधिकरण्यनिर्वाहे सम्भवति सति बाधोपचारस्वरू
पैक्यपक्षा वैदिकैर्बहिष्कार्य्या इति ॥ ७ ॥

**स पर्य्यगाच्छुक्रमकायमव्रण-**
**मस्नाविरꣳ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्**
**व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥**

पुनरप्येनमीशेशितव्यतत्त्ववेदिनं वेदितव्येश्वरस्वरूपशोधनेन च विशिषन् ध्यानयोगादिकमप्युपदिशति स पर्यगादिति । स.–सर्वभूतान्तरात्मभूतब्रह्मदर्शी पर्य्यगात् पर्यगच्छत् प्राप्नुयादित्यर्थ. । ब्रह्मविदाप्नोति परमिति न्यायात् । यद्वा समाधिलब्धेनानुभवेन प्राप्तवानिति सिद्धानुवादः अत्र ब्रह्म समश्नुत इतिवत् । शुक्रम्–अवदात स्वप्रकाशरूपमित्यर्थः । अकायम्–सर्वशरीरकमपि कर्मकृतहेयशरीररहितमित्यर्थ. । न तस्य प्राकृती मूर्तिर्मांसमेदोस्थिसम्भवेति हेयशरीरस्यैवान्यत्र प्रतिषेधदर्शनात् । न तु दिव्यमङ्गलविग्रहरहितमित्यर्थः । यत्ते रूप कल्याणतम तत्ते पश्यामि, य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, आदित्यवर्णं तमसः परस्तादित्याद्युपनिषत्प्रसिद्धस्याप्राकृतदिव्यविग्रहस्येह निषेधायोगादिति भावः। अव्रणम्–कर्मजन्यशरीराभावादेवाक्षतम् । अस्नाविरम्–स्नायुः सिरा यस्मिन् विद्यते तत् स्नाविर स्नाविर न भवत्यस्नाविरम् । शुद्धम्–अनाघ्राताज्ञानादिदोषगन्धम् अशनायादिषडूर्मिरहितं वा। अपापविद्धम् अज्ञानादेः कार्यभूतैः कारणभूतैश्च पुण्यपापरूपकर्मभिरनालीढमित्यर्थः । न शोको न सुकृत न दुष्कृतम् इत्यारभ्य सर्वे पाप्मानोऽतो निवर्तन्त इति पापशब्देनोपसहारदर्शनात् स्वर्गादिहेतुभूतपुण्यविशेषस्यापीह पापशब्देन सग्रहणमिति भाव· । एवमशेषहेयप्रत्यनीक परमात्मान स विद्वान् पर्य्यगादिति पूर्वेण सम्बन्ध । एवरूपः परमात्मा प्राप्यः प्रापकः उपायश्च यस्य त ब्रह्मविदं विशिनष्टि कविः–व्यासादिवत् परमपुरुषतत्त्वरूपतद्विभूतितत्कल्याणगुणादिप्रकाशकप्रबन्धविशेषाणां निर्म्मातेत्यर्थः । अथवा कविः–क्रान्तदर्शी योगाभ्यासविधुरमनसा दुर्दर्शे परिशुद्धजीवात्मस्वरूपे अतिविशदाविच्छिन्नधारास्मृतिरूपज्ञानयोगनिष्ठ इत्यर्थ । कर्मयोगस्तु

कुर्वन्नेवेह कर्माणीति श्लोकेन पुरस्तादेवोक्तः । अथ ज्ञानयोगसाध्य प्रत्यगात्मसाक्षात्कारहेतुभूत जीवात्मयोगमाह मनीषीति । मनस ईशित्री बुद्धिर्मनीषा, तद्वान् मनीषी सौन्दर्यसौशील्यादिभगवद्गुणाना स्मृत्यभ्यासेनान्यविषयवैराग्येण च निगृहीतान्तःकरण इत्यर्थः । तथा च गीयते ।

असशय महाबाहो मनो दुर्निग्रहं चलम् ।

अभ्यासेन च कौन्तेय । वैराग्येण च गृह्यते ॥ इति ।

निरतिशयसुखरूपस्वात्मसाक्षात्काराय स्वात्मनि मनःप्रणिधानक्रियारूपयोगाभ्यासपर इति भावः । परिभूः—कामक्रोधलोभादीनरातीन् परिभवतीति परिभूः, अनेन विरोधिनिवृत्तिरूपयोगाङ्गसेवनमुक्तम् । योगाभ्यासफलमाह स्वयभू—अन्यनिरपेक्षसत्ताकः । नित्यनिरतिशयसुखरूपतया स्वात्मदर्शीति यावत् । याथातथ्यतोऽर्थान् व्यदधात् । यथावद्विविच्य अर्थान् प्रणवार्थान् तस्य वाचकः प्रणवस्तज्जपस्तदर्थभावनमिति सूत्रोक्तान् व्यदधात्—हृदयेन धृतवानित्यर्थः । अर्थान्—मोक्षतदुपाय—तद्विरोधिप्रभृतीन् सर्वान् पदार्थान् शाश्वतीभ्यः समाभ्यः, यावद्ब्रह्मप्राप्तीत्यर्थः । याथातथ्यत, यथावद् व्यदधात्, विविच्य हृदयेन धृतवान् । सर्वप्रत्यूहशमनार्थमिति भावः । अथवा शुक्रमित्यादिद्वितीयान्तपदजातं परिशुद्धजीवपरत्वमपि स परमात्मा पर्य्यगात् परितो व्याप्य स्थित इति प्रथमान्तपदजात परमात्मपर योजनीय तथाहि कविः स्वतः सर्वदर्शी श्रीपञ्चरात्रादिप्रणेतेति वा । मनीषी मनःप्रभृतीना जीवकरणाना नियन्ता । परितो भवतीति परिभूः । सर्वव्यापी स्वयमेव भवति उद्भवतीति स्वयभू बहुधा विजायत इत्यादिप्रसिद्धावतारशालीत्यर्थः । अत्र कविरित्यादिना कल्याणगुणविधानात् छान्दोग्ये एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास इति हेयगुणान् प्रतिषिध्य सत्यकामः सत्यसङ्कल्प इति कल्याणगुणविधानाच्च निर्गुण निरञ्जनमित्यादिसामान्यनिषेधस्य हेयगुणनिषेधपरत्वं सुगमम् । याथातथ्यतः इत्यादि । अर्थान् कार्यपदार्थान् शाश्वतीभ्यः समाभ्यः यावद्विलयमव-

स्यात् याथातथ्यत इति यथावत् व्यदधात्–विविच्योत्पादितवान् न पुनरैन्द्रजालिकवत् केवलं प्रकाशितवानिति भाव ॥ ८ ॥

**अन्धं तमः प्रविशन्ति ये ऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायाꣳरताः ॥ ९ ॥**

एवं विचित्रशक्तिकपरमात्मविषया कर्मयोगाद्यङ्गिका विद्यामुपदिश्यानन्तरं त्रिभिः श्लोकैः केवलकर्म्मावलम्बिनः केवलविद्यावलम्बिनश्च पुरुषान् विनिन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निःश्रेयसावाप्तिमाह अन्धं तमः प्रविशन्तीति । बृहदारण्यके चायं मन्त्रः पठितः । ये भोगैश्वर्य्यप्रसक्ताः अविद्या विद्यान्या क्रिया केवलं कर्मेत्यर्थः, विद्याविधुरं कर्मेति यावत् अविद्याकर्मसञ्ज्ञाऽन्या तृतीया शक्तिरिष्यत इति स्मृतेः । उपासते एकान्तमनसो ऽनुतिष्ठन्ति अन्धं तमः अतिगाढं तमः अज्ञानमित्यर्थः, त्रिवर्गाभिषङ्गाद्यान्तरीयं नारकं अन्धं तमो वा । अधीयते चाथर्वणिकाः प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म एतच्छ्रेयोऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्तीति । य उ विद्यायां रता. उकार उत्तरपदेनान्वेतव्यः ये स्वाधिकारोचितकर्मपरित्यागेन विद्यायामेव रताः ते ततः कर्म्ममात्रनिष्ठप्राप्यान्धतमसाद् भूय इव तम. तदधिकमज्ञानं प्रविशन्ति इव-शब्दः तमस इयत्ताया दुर्ग्रहत्वं द्योतयति ॥९॥

**अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां येनस्तद्व्याचचक्षिरे ॥ १० ॥**

किं तर्हि मोक्षसाधनमित्यत्राह अन्यदेवाहुरिति, विद्ययेति, पञ्चम्यर्थे तृतीया यथाश्रुते अन्यशब्दानन्वयात् अन्यदेवाहुः सम्भवादिति वक्ष्यमाणानुसाराच्च । तथा विद्यायाः कर्मरहितविद्यातः अन्यन्मोक्षसाधनमित्याहुरुपनिषद इति शेषः । अविद्ययेति पूर्ववत्पञ्चम्यर्थे तृतीया, विद्यातः ब्रह्मज्ञानविधुरकर्मणश्चान्यदेव मोक्षसाधनमित्याहुरुपनिषद इति भावः । पूर्वपूर्वसम्प्रदायसिद्धोऽयमर्थोऽस्माकमित्याह इति शुश्रुम इति, ये पूर्वाचार्य्याः नः प्रणिपातादिभिः सम्यगुपसन्नानामस्माकं तन्मो-

क्षसाधनं व्याचचक्षिरे विविच्योपादिशन्, तेषां धीराणां धीमताम् । पञ्चम्यर्थे षष्ठी । तेभ्यो धीरेभ्य इति योजनीयम् । नटस्य शृणोतीतिवत् । नटाच्छृणोतीत्यर्थः । इति शुश्रुम एवम्प्रकारमश्रौष्म । ननु परोक्ष एवार्थे लिड्विधानात् शुश्रुमेतिलिडुत्तमपुरुषो न घटत इति चेत् मैवं, ब्रह्मवि द्याया दुरवगाहत्वेन निःशेषग्रहणमस्माभिर्न कृतमित्यभिप्रायकत्वादुत्त-मपुरुषस्येत्याहुः ॥ १० ॥

**विद्याञ्चाविद्याञ्च यस्तद्वेदोभयꣳसह ।**

**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥**

अन्यदिति सामान्येनोक्तं मोक्षसाधनं विवृणोति । विद्या चावि द्या चेति । कुर्वन्नेवेह कर्माणीति श्लोके कर्मयोगस्य प्रत्यगात्मदर्शनद्वारा परभक्त्युत्पादकत्वमुक्तम् इह तूत्पन्नभक्तियोगेन विदुषा पूर्वोक्तकर्मयोग-वेष परित्यज्यादरहरनुष्ठीयमानानां नित्यनैमित्तिककर्मणां कल्मषनिब-र्हणद्वारा भक्तियोगोपचायकत्वमुच्यते । सहशब्दस्वारस्यात् अतो न पुनरुक्तता, यः-यथावस्थितविद्योपदेशवान् विद्या-ब्रह्मोपासनरूपाम् । अविद्याम्-तदङ्गभूतकर्मात्मिकां चाविद्याम् एतदुभयं सह वेद अङ्गाङ्गि-भावेन च सहानुष्ठेयं वेदेत्यर्थः । अत्राविद्याशब्दः क्षत्रियविषयकाब्राह्म णशब्दवत्तदन्यवृत्त्या विद्याङ्गकर्मविषय इति भावः । अविद्यया विद्या-ङ्गतया चोदितेन कर्मणा मृत्युम्-विद्योत्पत्तिप्रतिबन्धकभूतं पुण्यपापरूपं प्राक्तनं कर्म तीर्त्वा निरवशेषमुल्लङ्घ्य विद्यया परमात्मोपासनरूपया अमृ तमश्नुते मोक्षं प्राप्नोतीत्यर्थः । तीर्त्वेत्यत्रोपायविरोधितरणमुच्यते अमृत-मश्नुत इति उपेयब्रह्मप्राप्तिविरोधिभूतेभ्यः सर्वपापेभ्यो मोक्ष इति भेदः । एवं च सति-

इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।

ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥

ज्ञानव्यपाश्रयः शास्त्रश्रवणजन्यब्रह्मज्ञानवान् स जनकोऽपि ब्रह्म-विद्यां निदिध्यासनरूपाम् अधिष्ठाय फलत्वेनाश्रित्येत्यर्थः. भक्तियोगो-

त्पत्तिं कामयमान इति यावत् । मृत्युम्—भक्त्युत्पत्तिविरोधिप्राचीन कर्म्म-जातम् अविद्यया अनभिसंहितफलेन विद्याङ्गकर्मणा तर्त्तुम्—व्यपोहितुं सुबहून् यज्ञान् ज्योतिष्टोमादिकान् इयाज अकरोदित्यर्थः । पाकम्प-चतीतिवत् तथा च कषायपक्तिः कर्म्माणि ज्ञानं तु परमा गतिः । भगव-दाराधनरूपाणि अनभिसंहितस्वर्गादिफलानि कर्माणि कषायस्य, उभय-विधपापस्य तज्जन्यरागद्वेषादेर्वा पक्तिः—विनाशकारणानि । ज्ञानं तु परमा गतिः—परमगतिसाधनमित्यर्थः । उभयत्रापि कारणे कार्य्योपचारः

कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते ।

तथा विद्या च विप्रस्य निःश्रेयसकरावुभौ ।

तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥

इत्यादीन्युपबृंहणशतानि सुसङ्गतानि भवेयुः ।

**अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।**

**ततो भूय इव ते तमो य उ संभूत्यांरताः ॥ १२ ॥**

एवं समाधिनिष्पत्तेरनभिसंहितफलनित्यनैमित्तिककर्म्मसाध्यत्वमुप-दिश्यानन्तरं त्रिभिः श्लोकैर्निषिद्धनिवृत्तिरूपयोगाङ्गसाध्यत्वमाह । तत्र प्रथमं पूर्ववदेकैकमात्रनिष्ठान् विनिन्दति । अन्धं तमः प्रविशन्तीति । एतमितः प्रेत्याभिसम्भवितास्मि, ब्रह्मलोकमभिसम्भवानीत्यादिषु प्राप्ति रूपानुभूतिः संभूतिशब्देनोक्ता इह तु समाधिरूपा सा संभूतिशब्देनोच्यते असंभूतिशब्दस्तु समाधिरूपसंभूत्यं या समाध्यङ्गभूता निषिद्धनिवृत्तिमाह संभूतिं च विनाशं चेत्युत्तरत्र विनाशशब्देनासंभूतेरनुवादानात् । तथा च ये विद्याधिकारिणः असंभूतिमेव मानदम्भहिंसास्तेयादीनां योगविरुद्धानां निवृत्तिमेवोपासते निवृत्तिमात्रनिष्ठा इत्यर्थः । ते अन्धं तमः प्रविश-न्तीति पूर्ववदर्थः । ये पुनः समाधिरूपसंभूत्यामेव रताः ते ततो भूय इव बहुतरमिव तमः प्रविशन्तीत्यर्थः ॥ १२ ॥

**अन्यदेवाहुस्सम्भवादन्यदाहुरसम्भवात् ।**

**इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे ॥ १३ ॥**

किं तर्हि मोक्षसाधनमित्यत्राह अन्यदेवाहुरिति, सम्भवात्—सम्भूतेः, असम्भवादसम्भूतेरित्यर्थः । केवलात्सम्भवादसम्भवाच्च अन्यदेव मोक्षसाधनमित्युपनिषद आहुर्लिङ्गुत्तमः पूर्ववत् स्पष्टमवशिष्टम् ॥ १३ ॥

**सम्भूतिं च विनाशं च यस्तद्वेदोभयꣳ सह ।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४ ॥**

अन्यदित्युक्तं विवृणोति । सम्भूतिं चेति । सम्भूतिं च समाधिरूपब्रह्मानुभूतिं च विनाशं च मानदम्भहिंसास्तेयबहिर्मुखेन्द्रियवृत्तिविशेषरूपा ये योगविरोधिनः तेषां विनाशं वर्जनं चेत्येतदुभयं यो विद्वानङ्गाङ्गिभावेन सह वेद स विद्वान् विनाशेन निषेव्यमाणेनेति शेषः । विरोधिनिवृत्तिरूपयोगाङ्गसेवनेनेत्यर्थः । मृत्युं समाधिविरोधिपापं तीर्त्वा—अपाकृत्य निष्पन्नयासम्भूत्या अमृतमश्नुते प्राप्तिरूपां सम्भूतिमेवाश्नुत इति भावः । अयमेव दम्भादिविनाशो बृहदारण्यके तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेदिति बाल्यशब्देन विद्याङ्गतया विहितः । अत्र सम्भूतिविनाशशब्दाभ्यां सृष्टिप्रलयविवक्षया कार्य्यहिरण्यगर्भस्याव्याकृतप्रधानस्य चोपासनं विधीयते इति शाङ्करव्याख्यानमनुपपन्नं तथा सति मृत्युतरणामृतत्वप्राप्तिरूपफलवचनानौचित्यादिति ॥ १४ ॥

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥**

एवमाचार्य्यं साङ्गां भगवद्भक्तिमुपदिश्याथ तन्निष्ठस्यानुसन्धेयमन्त्रद्वयमुपदिशति तत्र प्रथमेन मन्त्रेण पूषन्शब्दविवक्षितं भगवन्तं प्रति प्रस्तुता समाधिप्रतिबन्धकनिवृत्तिं प्रार्थयते हिरण्मयेनेति, हे पूषन्—आदित्यान्तर्यामिन्, य आदित्ये तिष्ठन्नित्यारभ्य य आदित्यमन्तरो यमयतीति शतपथश्रुतेः शास्त्रदृष्ट्या तूपदेशो वामदेववत् इत्यादिन्यायाच्च । यद्वा पूषन्नाश्रितपोषणस्वभावेत्यर्थः । साक्षादप्यविरोधं जैमिनिरिति च सूत्रितत्वात् सत्यस्य, सत्यशब्देनात्र प्रकृत्यादिवत्स्वरूपविकाररहितजीवात्मोच्यते सत्यं चानृतं च सत्यमभवदित्यादिषु जीवेऽपि सत्यशब्दप्रयोगात् । तस्य मुखं

शिष्टा यूयमित्यपेक्षायामाह-ज्याघात इत्यादिना। येषां करतल कार्मुकस्य धनुषः ज्याघात शिञ्जिनीनाद अयन्ति। कण्ठम ओङ्कार नादो योगाभ्यासाद्भूत अयतीति अत्राप्यनुषज्यते। अवनितले जग न्मण्डले प्रतापाख्य तेज उज्ज्वलप्रतापरूपमेव तेजो भाति। अन्त हृदये च आत्मीयज्योति ब्राह्मन्तेजो भातीत्यनुषज्यते। सिंहासन श्री राज्यासनशोभा राज्य वक्ति व्यनक्ति, पद्मासनश्री योगाभ्यासा ङ्गध्यानासनशोभा परम परा काष्ठा प्राप्त शम शान्ति वक्ति॥ राज्यस्य योगस्य च लक्षणानि युगपदेव युष्मासु उपलभ्यन्ते। अतो राजर्षयो यूय राज्यानुरक्तचिता अपि ब्रह्मानन्दसन्दोहानुभाविन इति भाव। स्रग्धरा वृत्तम॥ १०॥

कौशिकोक्तिमनुमोदयन्नाह-वाराङ्गनेति। एते राजान एव हंसा (सन्यासिवाचिहंसशब्दप्रयोगेण जनकस्य विरक्त्यतिशय सूचित) वाराङ्गनाना करै तरङ्गिता उत्क्षिप्ता ये चामरा तेषामेव या ऊर्मय तरङ्गा तेषु स्पर्शीनि यानि श्वेतातपत्राणि शुक्लछत्राणि॥ तान्येव शतपत्राणि कमलानि यस्मिन् तत् तस्मिन् एवम्भूते राज्य मेव यत् सर. सरोवर तस्मिन् क्रीडन्ति विहरन्ति। राज्योचित- सुखान्यनुभवन्तीति भाव॥ अय च धीरा धृतिमन्त। योगीन्द्रो याज्ञवल्क्य एव चन्द्रो मार्गप्रदर्शक तेन तत्प्रसादेन सुगमे सुबोधे पथि योगमार्गे। स्वय आत्मनो ब्रह्मानन्दस्य रस आस्वादो यस्मिन् कर्मणि तद्यथा स्यात्तथा सञ्चरन्ति। योगानन्दमनुभवन्तीति भाव.॥ वसन्ततिलकं वृत्तम॥ रूपकमलङ्कार.॥ ११॥

चित्रीयत इति। विचित्रभाव विस्मय गतोऽहमित्यर्थ.। लक्ष्मण प्रतिबोधयन्नाह राम-छत्रच्छयेति अमी भूभुज जनकस दृशा राजान किमप्यनिर्वचनीय ज्योति पारमार्थिक शीलयन्ति अभ्यस्यन्ति। तदेव ज्योतिर्निरूपयति-यदित्यादिना। यत् ज्योति. छत्राणा राज्योचितातपत्राणा छाया न तिरयति तिरोदधाति। अथ च दृप्यन् मत्तो यो गन्धद्विपः मदगज तस्य मदसलिलमेव या मषी कृष्णद्रव्यविशेष. तस्या य पङ्क स एव नाम यस्य स तथा भूत कलङ्क, राज्यश्रीजनितमदमत्ततेति यावत यत ज्योति स्प्रष्टु मलिनीकर्तु न ईष्टे पारयति। पुन लीलया सविलास लोल चञ्च- लो य चामराणा समीरो वायु यत ज्योति न शमयति शान्तीक रोति। योगानन्दविरोधीन्यपि राज्यलिङ्गानि अमीषाम अन्तर्ज्यो तिर्न म्लापयन्तीति विशेषोक्त्या जनकस्य प्रभातिशय सूचित। मन्दाक्रान्ता वृत्तम्॥ १२॥

सकलेति। सकलाना कुवलयाना (रक्षपक्षे कमलाना, राजपक्षे कु. पृथिवी तस्या वलयस्य मण्डलस्य 'उत्तस प्रधानं भूषणम्॥

अस्मदिति। अस्मत्पूर्वपुरुषेषु चक्रवर्तिष्विति यावत। ग्राम टिका क्षुद्रग्राम'।

(५३) उक्तस्तुतिं द्रढयन्नाह-अवनिमिति । अवनिपाला अन्ये राजानः सयशो बहुशः अवनिं पृथिवीं पालयन्ताम् । अनादरोक्तिरियम । अवनिपतियशस्तु यथार्थपृथिवीपत्याख्या तु त्वां विना त्वदृते अपरस्य अन्यस्य राज्ञो नैव । युज्यत इति शेषः ॥ तदेव जानकीवार्ताप्रस्तावेच्छया द्रढयति-यदिति । यत यस्मात्कारणात । हे जनक । कनकगौरी तनूजा प्रसूता सती भूः पृथिवी जगति अखिले संसारे भवन्तमेव अद्वितीयगुणतया दुहितृमन्तं वितेने कृतवती । पृथिवीप्रसूतया कन्यया त्वं दुहितृमान, अतः त्वमेव पृथिव्याः यथार्थपतिरिति भावः । मालिनी वृत्तम् ॥ १३ ॥

कौशिकस्य महिमानं वर्णयन् आह नूतनेति । नूतना नाः भुवनानां निर्माणे सृष्ट्यां निपुणस्य दक्षस्य भगवतः इयम् अभिनववचनचातुरी प्रतिक्षणोचितवचनविन्यासः कियती नाम, न किमपि इति भावः । त्रिशङ्कुपातकृच्छ्रेन विश्वामित्रेण सृष्ट्यन्तरं प्रारब्धम् इत्यादि पौराणिकी कथाऽत्रानुसन्धेया ॥ शलाकीकृत्येति । स खलु भवान् ख्यातकीर्तिः यस्य भवतः असमकोपेन अरुणा रक्ता रुचिः कान्तिः यस्याः सा तां एकीभूतां स्वां दृशं नेत्रं शलाकीकृत्य चित्रलेखनीरूपेण धृत्वा गगनतलमेव भित्तिं चित्राश्रयीभूतां तस्यां सुरश्रेणीचित्रं रचयतः । प्रथमरचितम् अन्येभ्यः प्रागेव निर्मितम् सुधांशोर्भानोश्च बिम्बयुगलं चन्द्रसूर्यमण्डलद्वयं सुधायाः स्वच्छलिखनद्रव्यस्य लाक्षायाश्च रक्तद्रव्यस्य यौ सान्द्रद्रवौ घनद्रवीभूतौ ताभ्यां भरितं पूरितं पात्रद्वयम अभूत् । नूतनजगच्चित्रकारस्य विश्वामित्रस्य कोपारुणनेत्रं लेखनी, गगनतलं भित्तिः, सृष्टिविषयभूताः अभिनवसुरगणाः चित्रणीयपदार्थाः, चन्द्रमण्डलं स्वच्छरञ्जनद्रव्यपूर्णपात्रं, सूर्यमण्डलं च रक्तद्रव्यपूर्णपात्रं इति रूपकम । शिखरिणी वृत्तम् ॥ १४ ॥

जनकोक्तिमनुमोदयन्नाह-त्रिशङ्कोरिति । त्रिशङ्कोः तन्नाम्नो राज्ञः स्वर्लोकादवनितले भूमण्डले पातं रचयितुं कोपाद्विकसितपदाब्जः पादाहतिव्यापारे यस्य स तथाभूते सुनासीरे इन्द्रे सति विकसितः प्रफुल्लितः । पुनः भक्त्या मुकुलिते कराब्जे प्रणतौ यस्य स तथाभूते सुरस्तोमे देवगणे सति मुकुलितः सङ्कुचितो, निवृत्त इति यावत् ॥ कश्चासौ विकसितो मुकुलितश्चेत्यपेक्षायामाह-यदीय इति । यदीयो यस्य विश्वामित्रस्य नव्यमभिनवं यत् त्रिदशनगरं देवपुरं तस्य आरम्भे नूतननिर्माणे रभसः उत्साहः ॥ इन्द्रपादतलाहते त्रिशङ्कौ क्रुद्धो विश्वामित्रो देवनगरं निर्मातुमुत्साहितो भूत्वा पुनर्भीतेन सुरगणेन प्रणतेन अभिनन्दितः सन् तस्माद्विरराम ॥ शिखरिणी वृत्तम ॥ १५ ॥

प्रतापितेति । प्रतापितं भीत्या प्रकाशेन च भुवनत्रयं येन तत्तथाभूतम् । कौशिकस्य महिमानं लक्ष्मणाय प्रकटयन्नाह-रोषेति ।

रोषेण चाण्डालीभूतत्रिशङ्कुस्वर्गारोहणात् क्रोधेन अभिभूतो य पुरुहूत इन्द्र तस्य पदेन चरणेन अभिभूत आहत त्रिशङ्कु दृष्ट्वा कोपेन विपाटला रक्ता श्री शोभा यस्या सा तथाभूता । पुन आकुड्मलीकृतानि प्रणामके मुकुलितानि कराम्बुजानि देवगणकरकमलानि तेषा राजिभि पङ्क्तिभि. प्रतिबिम्बिताभि रम्या सुशोभना । एवम्भूता यस्य दृष्टिः अमरै देवै उपासिता पूजिताऽभूत । उपमानमुपन्यस्यति–सन्ध्येवेति । सन्ध्याऽपि अस्तमितसूर्यावशिष्टकिरणाभासा रक्ता सूर्यास्तमयेन च मुकुलिते कमले रम्या भवति । किं च सर्वे जना कृताञ्जलय एव सन्ध्योपासन कुर्वन्तीत्यनुसन्धेयम ॥ वसन्ततिलक वृत्तम् ॥ १६ ॥

(५४) रत्नगर्भेति । रत्नगर्भा पृथिवी, रत्नगर्भागर्भादेव कान्या रत्नस्योत्पत्तिरुचिता ॥

अलङ्करिष्यत इति । कन्यारत्नेनालङ्कृत मा जामातृरत्नमलकरिष्यत इति भाव । भवत्प्रसादादिति स्वाभीप्सितरामचन्द्रवरणसूचकम् ॥

रामचन्द्रं दृष्ट्वा जनक. पृच्छति–सकलेति । सकलाना जनाना विलोकनस्य दर्शनस्य य· उत्सव उल्लास· तस्य अयनम आश्रय·, समस्तजनतादर्शनोल्लाससरणिरिति यावत्, अयनमित्यत्र नित्यनपुसकत्वाच लिङ्गव्यत्यास । अय पुरः अग्रे कुमार कतर· । य· हरितमणिमयूख मरकतमणिकान्तिरिव हारिण सुन्दरस्य कल्पतरो प्ररोहस्य अङ्कुरस्य लीला शोभा कलयति भजते । मरकतमणिकान्तिहारिकल्पतरोरपि नवाङ्कुरमेव रामसदृशमित्यहो सुकुमारता बालकस्येति भाव. ॥ पुष्पिताग्रा वृत्तम ॥ १७ ॥

लक्ष्मण परामृशति नीलनीरजेति । नीलनीरजदलवत नीलकमलवत् उज्ज्वला कान्ति यस्य स तस्य तथाभूतस्य रामचन्द्रस्येति यावत्, अन्तिके समीपे काञ्चनवत् गौर लक्ष्मण स्फुरति । उपमानमुपन्यस्यति-लोचनस्येति । सुदृश सुलोचनाया लोचनस्य नीलिमप्रधानस्य, अन्तिके इत्यनुषज्यते, श्रवणापे सन्निविष्ट. चम्पकगुच्छ इव ॥ स्वागता वृत्तम ॥ १८ ॥

कर्णामृतमिति । भाविवात्सल्यसूचकम् ॥ रामलक्ष्मणयो· सादृश्य विभाव्याह–एतयोरिति । उदाररूपयो रूपातिशयशालिनो·, पुन उल्लसन्तौ सहजस्य स्वाभाविकस्य सौहृदस्य स्नेहस्य श्री ययो· तौ तयो तथाभूतयो·, प्रव्यक्तपरस्परस्नेहशालिनोरिति यावत्, एतयोः कुमारयो कामपि स्वजनता परस्परसम्बन्धित्व विभावये तर्कयामि । कयोरिव । कौस्तुभामृतमयूखयोरिव समुद्राज्जातयो. कौस्तुभमणिचन्द्रयोरिव ॥ रथोद्धता वृत्तम् ॥ १९ ॥

शतानन्दोक्तिं समर्थयमान आह—एतयोरिति । प्रकृत्या स्वभावेनैव रम्यं रूपं ययोस्तौ तयोः उल्लसदित्यादि पूर्ववत् । एवम्भूतयोरेतयोः कुमारयोः आन्तरः आन्तरिकः बाह्यसादृश्यातिरिक्त इति यावत्, सन्निधिः सम्बन्धः । प्रत्यगात्मपरमात्मनोरिव जीवात्मपरमात्मनोः परब्रह्मभूतयोः सम्बन्ध इव प्रतिभाति ॥ ये गिराजमुखे समुचितमेवेवंविधमुपमानम् । रथोद्धता वृत्तम् ॥ २० ॥

(५५) योगीश्वरशिष्येति । जनकसम्बोधनम् । ईदृशेषु गभीरेषु गहनेषु सामान्यजनदुरधिगमेषु । अभिनवाः नूतनाः अननुभूतपूर्वाः ये उदन्ताः वार्ताः प्रत्यगात्मपरमात्मसादृश्यवचारायणतदशावतारभूतयोः रामलक्ष्मणयोः सादृश्यमित्येव रूपाः ते एव पीयूषममृतं तस्य वेशन्तेषु सरस्सु भवत एव योगिनो मनो निमज्जति एव विधगूढ-विषयाणि निरूपयतीति भावः । अनयोः रामलक्ष्मणयोः स्वजनभावे सम्बन्धित्वे वयं साक्षिणः । वयं तु केवलं जानीमो यदिमौ भ्रातराविति भावः ॥

रामलक्ष्मणौ वर्णयन्नाह—तनुश्रियेति । तनोः शरीरस्य श्रिया कान्त्या निर्जिते विजिते अधरीकृते चम्पकोत्पले ( चम्पको लक्ष्मणेन नीलोत्पलं रामेणेत्येव क्रमः सर्वत्र) याभ्यां तौ तथाभूतौ । पुनः सुवर्णोत्पलस्य नीलोत्पलस्य च कोशवत् कुड्मलान्तरवत् कोमलौ स्निग्धौ कमनीयौ पुनः दृशां नेत्राणामुत्सवदाने उल्लासने दक्षिणौ चतुरौ ॥ सुलक्षणौ सकलशुभलक्षणसम्पन्नौ । इमौ लक्ष्मणलक्ष्मणाग्रजौ । लक्ष्मणरामचन्द्रावित्यहो साश्चर्यहर्षे । अत्र व्यतिरेकोपमानुप्रासप्रथाख्यानां सङ्करः । वंशस्थवृत्तम् ॥ २१ ॥

रामस्यामानुषेयत्वं विभाव्याह—यथाऽहमिति । निःसीमोऽपारो यो हर्षः तेन सुभगो रम्यो भोगः आस्वादः साक्षात्कारो यस्य स तस्मिन् तथाभूते । यद्वा निस्सीम उत्सवः ऐश्वर्यं तस्य भोग आस्वादो यस्मिन् स तस्मिन्, सदानन्दमये इति यावत् एवम्भूते चेतःप्रणयिनि चिन्मये । पुनः भवकथापथातीते सांसारिकवार्ताऽनिर्वचनीये परमे पुंसि परब्रह्मणि अहं यथा रमे आनन्दं लभे । समाधाविति भावः । तथैव दलतः प्रफुल्लस्य अमलस्य स्वच्छस्य नीलोत्पलस्य दलस्य पत्रस्य य उदरो गर्भस्तद्वत् श्यामे अस्मिन् बाले रामे रामाभिधे नयनपदवीं दृष्टिसरणिमागतवति अहं रमे इत्यभिसन्धिः ॥ अनेन रामस्य परमपुरुषांशत्वं व्यज्यते ॥ शिखरिणी वृत्तम् ॥ २३ ॥

न खल्विति । प्रश्नरूपः काकुः । सकलसामान्यजननयनाह्लादकोऽपि चन्द्रः शिवशिरोवर्तिनः चन्द्रस्यैव अन्यद्रूपम् ॥ यथा सकललोचनानन्दकरस्य आकाशगतस्य चन्द्रस्य हरशिरःशेखरीभूतचन्द्रात् न कश्चिद्भेदः तथैवात्रापि सकललोकप्रत्यक्षस्य रामचन्द्रस्य

योगिजनानुभवनीयपरमपुरुषाच्च कोऽपि भेद इत्याशय ॥ **कः पुनरिति** । यस्येमौ पुत्रौ स सर्वथा पुत्रवतां वरिष्ठ इत्यत. कथय कोऽसौ धन्यो यस्येमौ पुत्राविति भाव ॥

जनकप्रश्नोत्तर वक्तुकाम दशरथ स्तुवन् तस्य कीर्ति वर्णयति-**किमिति** ॥ यस्य दशरथस्य कीर्तय दिशिदिशि त्रिदिवौकसा देवाना कान्ताभि. स्त्रीभि जातकुतूहलाभि उत्सुकाभि सानन्द यथा स्या तथा आलोकिता सन्त्य. क्रीडन्ति प्रस्फुरन्ति । कुतूहलस्य कारणमाह **किमित्यादिभि** । एता कीर्तय. किं शीतांशो. चन्द्रस्य मरीचयः किरणा ? अथवा सुरस्रोतस्विन्या: स्वर्गङ्गाया गङ्गाया वीचयो लहर्यः किम? किं वा केतकस्य पुष्पविशेषस्य सूचयोऽग्रभागाः? अथवा चन्द्रोपलाना चन्द्रकान्तमणीना चयः समूह. किम ? कीर्ते । धवलत्वात् तस्या सकलस्वच्छवस्तुसन्देह ॥ सशयोऽत्रालङ्कारः । शार्दूलविक्रीडित वृत्तम ॥ २३ ॥

**सकलेति** । सकलैर्गुणैरवदात. शुद्ध । "अवदात. सितो गौर." इत्यमर. ॥

**अपिनामेति** । तातप्रतापवर्णनश्रवणोत्कण्ठा व्यनक्ति पुनर्दशरथप्रताप वर्णयन्नाह-**यस्योद्यदिति** ॥ यस्य दशरथस्य उद्यन् यो भुजदण्डः तस्य चण्डिम्ना उद्धतत्वेन वलत् उल्लसत तत कोदण्डं धनुस्तस्य लीलायिते चेष्टिते निष्पीते नाशिते दनुजेन्द्राणा दानवराणा याः चन्द्रवदना रमण्य । तासा भ्रूवल्लरीणा भ्रूलताना विभ्रमे । दनुजेन्द्रनिधनात तद्रमणीना वैधव्येन भ्रूविलासे विनाशिते सतीत्यर्थ । आखण्डलोयमिन्द्रस्य व[illegible] शरीरम । पौलोम्या शच्या. करजाङ्कुराणा नखाग्राणा व्यतिकरात सस्पर्शादेव केवल असृविपाटलवतमयो रुधिराराविता लक्ष्मी शोभामालम्बते । इन्द्रस्य वपु. केवल शच्या नखै. क्षत न पुनर्दानवास्त्रैरिति हृदयम । शार्दूलविक्रीडित वृत्तम ॥ २४ ॥

प्रश्नोत्तरमुपसहरति **तस्येति** । पद्मवनबान्धवस्य सूर्यस्य वशे ये उत्तमा. शिरोऽलभूता मासला विशाला महामणय प्रख्यातनृपतय स्तेषा मौलि प्रधानभूत तस्य, रविकुलमौलिमाणिक्यस्येति यावत, एवम्भूतस्य दशरथस्य इमौ पुरोवर्तिनौ । कायकान्त्या शरीरमासा परिभूतो निर्जितो मनोज्ञः कामो याभ्या तौ तथाभूतौ कुमारौ ॥ स्वागता वृत्तम् ॥ २५ ॥

दशरथप्रताप वर्णयन्नाह-**यद्बाह्विति** । यस्य दशरथस्य बाहू धनुर्मौर्व्या समाकर्षणेन जातो य किण कठोरीभूतमासग्रन्थि तस्य श्यामिका कलिमानम वहत. दधाते । कामिव । पराक्रमेण दृप्ता प्रत्यर्थिना वैरिणा या. सीमन्तिन्यः रमण्य. तासा चक्षुषा कज्जलस्य

कालिका श्यामतामिव । निहतेषु शत्रुषु तत्सीमन्तिन्य कज्जलं नैव परिदधते तदेव च कज्जलं बाहुगतकिणरूपेणावस्थितमित्युत्प्रेक्षा । अथ च यस्य दोष्णा बाहुना तत्सम्बन्धेन दुर्मदं उद्धतं कर्म यस्य तत कार्मुकं तस्य गुणस्य शिञ्जिन्या ये प्रोत्ताला उद्धता.कोलाहला टङ्काराः तै वैरिस्त्रीणां कलमेखलानां रणत्काञ्चीनां कलकला. शिञ्जितानि पीता निगीर्णा इव अस्तं गता निराकृता.। निपातितेषु वैरिषु तत्स्त्रियः मेखलापरित्यक्तवत्य । तेषामेव रणितानि दशरथधनुर्मौर्वीटङ्काररूपेण निशान्तीत्युत्प्रेक्षा। शार्दूलविक्रीडितं वृत्तम ॥ २६ ॥

एतदेव दशरथप्रतापं वर्णयन्नाह-यस्येन्द्रारीति । इन्द्रारय दानवस्य यो जय तस्य तज्जन्यया श्रिया शोभया सह मौर्वीलता धनुर्ज्या झटित्याकृष्य, आततज्य एव यस्य धनुषि सर्वे दानवा पराजिता इति भाव.। भूवलयेन पृथिवीमण्डलेन साकं सह चापवलयं बिभ्रति सति दोर्मण्डले बाहौ। आखण्डल इन्द्र पौलोमीकुचकुम्भस्य सीमनि प्रान्तभागे नवमचिरकृतं नखाङ्कं रहः एकान्ते पश्यन् चेतसि मनस्येव केवलं न तु करे, कोदण्डं धत्ते। शत्रुनिराकरणभारे दशरथहस्तयो रर्पिते सति नि शङ्कं शच्या सह विहरन् इन्द्र तस्या कुचयोर्धनुराकारं नखाङ्कं दृष्ट्वा सादृश्यात स्मरत्येव केवलं धनु न कदापि करे धत्ते प्रयोजनाभावादित्याशय.॥ सहोक्तिरत्रालङ्कार । शार्दूलविक्रीडितं वृत्तम ॥ २७ ॥

रामलक्ष्मणौ परामृशन्नाह–तपनकुलेति । तपनकुलस्य सूर्यवंशस्य याः शिर किरीटकोटय मुकुटश्रेणय । तासु स्फुरत् यदरुणोत्पलकुड्मलम् अरुणकमलमुकुलं तस्य तद्रूपस्य रविकुलमौलिभूषणस्य दशरथनृपते इमौ तनूजौ तनयौ मृगाङ्कप्रतिमे चन्द्रसदृशे सुरेखे कमनीयाभोगे च मुखाम्बुजे ययो तौ तथाभूतौ किमिमौ दशरथतनूजौ इति प्रश्न ॥ पुष्पिताग्रा वृत्तम् ॥ २८ ॥

द्वे अपीति । द्वे अपि दृशौ नेत्रे तनयावलोकनेन तनयद्वयावलोकनाह्लादिते इत्यभिसन्धि.॥

दिशाविति । पार्श्वद्वयमित्यर्थः । चतुरो दशरथतनयानाश्रित्य विश्वामित्रोक्ति ननु दिश इति ॥

चरुभागानामिति । ऋष्यशृङ्गकृतयज्ञनिष्पादितचरुभागजनिता इत्यर्थः ।

भवतोरिति । महात्मान एव महात्मनां प्रभावं गुणं च जानन्तीत्याशय.। 'गुणी गुणं वेत्ति न वेत्ति निर्गुण' इत्यादि ।

(५८) महिमेति । महिम्न आभोगो विस्तार तम । "कासार सरसी सरः" इत्यमर । दशरथो महिम्ना सागरसम । अह तु सामा

न्यहर एव। अतो नैव शक्यते मया दशरथमहिमविस्तृति परिशीलयितुमित्याशय ॥ **शोभन्त इति** । अधरीकृतो नीचीकृतः आत्मनो महिमा यासु ता. तथाभूता सत्यविधुरा अनृता अपि । विनयमधुराणा विनीतानां वाच शोभन्त एवेत्यभिसन्धि' ॥ तत्त्वतो दशरथमहिम्नो जनकमहिमा न लघीयान् । किन्तु विनयोक्तिषु आनृत्य न दोषायेति भाव. ॥

निजमनोरथाक्षेप कुर्वन जनकोक्तिमन्यथा समर्थयते—**जज्ञिवानिति** । इन्दुमिव सुन्दरमूर्ति राम स राजा दशरथो जज्ञिवान् उत्पादितवान । त्व पुन' । लोकलोचनविगाहने शील यस्या. सा ताम अवलोकनीयस्वरूपा सीता कुमुदिनीमिव । उत्पादितवानित्यनुवर्तते । सागराच्चन्द्रस्य सरस' कुमुदिन्याश्च जन्म । अत' स सागर' त्व च सर इति समुचितमेवेति हृदयम। कुमुदिनीचन्द्रवत च सीतारामचन्द्रयो सम्बन्ध उचित इति सूचित मुनिना । तथा चावगत लक्षणेन । स्वागता वृत्तम ॥ २९ ॥

**अपवार्येति** । यथाऽन्यो न शृणोति तथेत्यर्थ । **सविधानमिति** । वृत्तान्त इत्यर्थ ।

**भङ्ग्येति** । वक्रोक्त्येत्यर्थ ॥ **किमपीति** । सीतारामचन्द्रविवाहरूपमित्यर्थ । **रभसवशंवदेनेति** । "रभसो वेगहर्षयो" इति विश्व'। रभसस्य वशवदेन परवशेन । हर्षातिरेकपरवशचित्तेनेत्यर्थ । **विस्मृतमिति** । असम्भावनीय मङ्गल यत सम्भावयति । नैवानमनीय धनू रामेण अतिबालेन तत्कृतोऽस्य जानकीकरग्रहसम्भावनेति हृदयम् ॥ **वक्रकमनीयेनेति** । वक्रा भङ्ग्योक्त्या कमनीय. सकलजनहृदयगमाभिलाषसूचकत्वात् ॥

**उद्भावयतीति** । मम स्मारयतीत्यर्थ ॥ **भवत्विति** । समीहितमेव तत्रः इति भाव. ।

(५६) **मुग्धइवेति** । अनभिज्ञ इवेत्यर्थ । **दुग्धमुखमिति** । अतिबालकमित्यर्थ ॥ धनुर्महिमान वर्णयन्नाह—**एतदिति** । एतत आलापविषयभूत तत प्रख्यात तुहिनगिरिमय हिमालयनिर्मित कार्मुक धनु'। यत्र यस्मिन । दर्वीकराणा सर्पाणा पतिः वासुकि मौर्वी ज्या जज्ञे यात इति सर्वत्र सम्बध्यते। उदधिसुताया लक्ष्म्या नायको विष्णु' सायको बाणो जज्ञे । एवम्भूतमेतत धनु चन्द्रमौले शिवस्य दोर्दण्डै बाहुभि नतम आततज्यमपि कार्मुकाणा मध्ये उन्नत उत्कृष्ट शैवमपि धनु' । त्रिपुरासुररमणीना वाष्पाम्भोवृष्टये अश्रुजनने ऐन्द्रमेवासीत । यथोन्नतमैन्द्र धनु जलवृष्टि जनयति तथैवोन्नत शिवस्य धनु त्रिपुरासुररमणीनामश्रुवर्षण चकारेति भाव । नतमप्युन्नत शैवमप्यैन्द्रमित्यत्र विरोधाभास । स्रग्धरा वृत्तम् ॥ ३० ॥

हरधनुर्महिमानं वर्णयन्नाह–सेवायातेति । सेवार्थे आयाताः ये समस्ताः खेचराः देवा तेषां करक्रीडाभिः चलन्त्यो याश्चामरश्रेण्यः ताभ्यो निःसृतो यो मारुतः तस्य पानेन पीनो यो ज्याभूत मौर्वीभूत पन्नगवरो वासुकिः । तमाकर्षति य तेन एवम्भूतेन पुरवैरिणा शिवेन । यदीयै कार्मुकसम्बन्धिभि गाढ दृढ यदाकुञ्चनमानमन तेन जृम्भमाणाः उत्पद्यमाना ये तुहिनस्यन्दाः हिमप्रवाहाः ते । श्रम त्यक्त । तदिद शैलेन्द्रसार हिमालयसारभूत धनुरिति अह जानामीत्यभिसन्धिः । कार्मुकस्य तुहिनगिरिमयत्वात तदानमनात्तुहिनप्रवाह उचित एव । पवनपानस्थूलज्याग्रगाकर्षणेन यः श्रमो जात स तुहिनप्रवाहस्य शीतलत्वाच्छान्त इति भावः । शार्दूलविक्रीडित वृत्तम ॥ ३२ ॥

रामचन्द्रवीर्यं जनकम्प्रति बोधयन्नाह–मारीचेति । मारीचस्य मारी मारणा तस्या चतुरम् । पुनः सुबाहो अपवारणा सुबाहुनिवारकम् पुन ताटकाताडन ताटकाघातक धनु लक्ष्मणाकरे न्यस्यताम । कृत सुबाहुमारीचताटकानिराकरणोऽय बालको न सामान्यबालवत्तया लघु मन्तव्य इति हृदयम् ॥ ३३ ॥

असम्भावनीयमिति । अतिकिशोरकृतटाकणारासनि ाकरणा निर्वर्ण्य रामचन्द्रकृतशरासनारोपणपुरस्सरजानकीकरग्रहणमसम्भावनीयमनोऽभिलाष कथ वृथा उद्भावयसि जनदसि ॥

रामचन्द्रस्य पराक्रम वर्णयन्नाह–प्राप्येति । इत मत्सकाशात क्रमात यथोचितक्रमेण चापनिगमान् धनुर्वेदान् प्राप्य सम्यगधीत्य अभ्यस्य पुन विशिखैः बाणैः निशाचरान राक्षसान् सम्प्रताप्य । अस्मदीयमखस्य यज्ञस्य या रक्षणक्रिया तस्या या दक्षता निपुणता सैव गुरुदक्षिणीकृता । गुरुदक्षिणारूपेण मम यज्ञरक्षण कृत रामचन्द्रेणेति भावः । रथोद्धता वृत्तम ॥ ३४ ॥

(६०) धनुरुद्यमनासम्भवप्रदर्शयन्नाह–मारीचमुख्येति । मारीच एव मुख्यो येषा ते तथाभूता ये निशाचरा तेषा यच्चक्र समूह तस्य चूडाया शिरोभूषणस्य चञ्चन्त्यो या मरीचयो रश्मयः ताभिः चुम्बित पादपीठ यस्य स तथाभूतः शशाङ्कमुकुटस्य शिवस्य योऽचलः पर्वत कैलासः । तस्य चालने उत्तोलकोऽपि, रावणोऽपीति यावत्, अत्र अस्मिन् धनुषि विफलो बाहुबले अवलेपो गर्वो यस्य स तथाभूतः । अभवत । न शक्तो रावणोऽपि धनुश्चालयितुम । अतो मारीचमात्रदमने रामेनातीवाशेति हृदयम ॥ वसन्ततिलक वृत्तम् ॥ ३५ ॥

अत एवेति । समुचित एव कुण्ठीकृतदशकण्ठे दशकण्ठदमनस्य प्रयास इति हृदयम ॥

कुमुदिनीति । कुमुदिनीकान्तकलाकिरीटः शिवः तत्कार्मुकस्य यदारोपणा तत्र प्रवीणतया ॥

राम प्रति विश्वामित्रस्योक्ति परामृशति–**यस्येति** । यस्य विश्वा मित्रस्य तप श्री तप प्रभावः सकले जगति निस्तमिस्रा अविकला ज्योतिष्मती, स्वच्छेति यावत, ख्याता । एवम्भूत एष गाधे' तनूजो विश्वामित्र. मिथ्या अपूरणीया उत्कण्ठा आशा यस्य स तथाभूत कथ स्यात् । न कदापीति भाव । अपर च रामो बाल शिशु. । चन्द्रमौले शिवस्य कार्मुक धनुश्च किमपि अनिर्वचनीय यथा स्यात्तथा गहनम । अत कथं स तदारोपयिष्यतीति । उभयपक्षस्य प्राबल्यात् बालरामकृतधनुरारोपणासम्भावनीयत्व कौशिकोत्कण्ठासूचिततत्स म्भावनीयत्व च विभाव्य मे चित्तवृत्ति मुहु दोलारोह कलयति । उभ यपक्षाश्रितत्वाच्चञ्चला भवतीति भाव । 'इत्येकपक्षाश्रयविक्लवत्वादा सीत्स दोलाचलचित्तवृत्ति' इति रघुवंशे । मन्दाक्रान्ता वृत्तम ॥ ३६ ॥

**रतिरिवेति** । ते नन्दिनी पुत्री सीता रतिरिव कामवधूरिव [illegible] नन्दिनी [illegible] त्वदर्थी । अय पुरे वर्ती कुमारो राम कुसुमशर इव कामदेव इव रूपस्य सौन्दर्यस्य सार एकमात्राश्रय इति यावत । एव सति यदि इद धनु. अस्य हस्तम प्राप्य कुसुमम य मिव कामधनुरिव लघु स्यात तर्हि सम्प्रदाय रते' कामदेवपत्नीत्व कामदेवस्य च कुसुममयचापधरत्वमित्येव रूप. सम्भृत. पालित भवेदिति शेष । मालिनी वृत्तम ॥ ३७ ॥

**अनुवर्तस्वेति** । धनुरानयनाय आनमनाय च राममाज्ञापयै त्यर्थ ॥

(६१) **सुमतिरिति** । धनुरारोपणपणाद्विरमेत्यर्थं ।

सन्देशप्रेषकरूपेण परशुद्वारा परशुराम वर्णयति **पीत्वेति** । हे वैदेह स जामदग्न्यपरशु त्वामेतदाभाषते इत्यभिसन्धि । क स इत्यपेक्षायामाह–**पीत्वेत्यादि** । य परशु. क्ष्मापालनारीदृशा सक- लनृपतिरमणीनेत्राणा कालिमान कज्जलमखिलानि शेष पीत्वा । तासा पतीन् निहत्य ता. विधवा' कृत्वा कज्जलमपसार्येत्यर्थ. । पुन. स्फीत यश एव योऽट्टहासः उच्चैर्हसन तस्य महसा कान्त्या लोकत्रय शुभ्रता स्वच्छता नीत्वा । अद्यापि चरितानां शिवचरित्राणा ये एकदेशा केचिदशा पुरस्त्रीकज्जलापसरणाट्टहासस्वच्छीकरणरूपा तेषा विभ वे अनुकारी चण्डीश शिव सेवते । स एवविध परशुरिति सम्बन्ध. । नरपतिरमणीकज्जलापसारणेन यशोधवलीकरणेन च शिवस्य चरितैकदेशमनुकुर्वाण त सेवते इति भाव. । शार्दूलविक्री- डित वृत्तम ॥ ३८ ॥

**गर्वाङ्कुरस्येति** । एतद्गर्वोक्त्यैव गम्यते यत्सन्देशेऽपि काचिद्व क्रता वर्त्तत इत्यर्थः । किं तत यदाभाषत इति पूर्वेण सम्बन्ध. ॥

सन्देश विवृणोति **कस्मैचिदिति** । कस्मैचित् नरपतिशिशवे ।

धनुरारोपणपरीक्षामकृत्वैवेत्यर्थः । कन्या देहि । ततश्च अस्मत्प्रसादेन दीर्घमायुर्लभस्व । पुनः पुरमथनस्य शिवस्य धनुष यत कर्षणमानमन तस्य आलाप चर्चैव यत् पाप तस्मात न अप्रियात् व्यावर्त्तस्व विरम । धनुरारोपणचर्चामेव मा कार्षीरित्यर्थ । नो चेत, अन्यथा, तव धनुःकर्षणालापरूपस्य कलुषस्य पापस्य यो मषीपङ्क कज्जललेप. । तस्य सञ्चालनाया क्षालनक्रियायां मम परशोर्यत विस्तारि धाराया अञ्चल तस्मिन् बहलो य पयःपूर जलप्रवाह तस्मिन् यो दूरावगाह अवगाहन स एवान्य. पूर्वोक्तादन्यादृश. उपायोऽस्तु । यदि त्व नास्मद्वचनप्रतिपालन करिष्यसि तदा परशुधारानिपात एव तव पापस्य शमनोपाय इत्यर्थ. । स्रग्धरा वृत्तम् ॥ ३६ ॥

जनकस्य प्रतिसन्देश **त्वं मित्रमिति** । हे जामदग्न्यपरशो त्व मम मित्रम । नित्यनपुंसकत्वान्न लिङ्गपरिवृत्ति । तेन तत एव कारणात एतद् वक्ष्यमाण त्वमाभाष्यसे सन्दिश्यसे । यत किल सम्प्रति अधुनैव यथाप्रतिश्रुत धनुरारोपणपुरस्सरम इय कन्या मया दीयते । तेन तस्मात् कारणात स्वयमेव एत्य अत्रागत्य भवता । धूर्जटे शिवस्य धनुषो धारयौ वहनशीलौ यौ दोषौ बाहू ताभ्या सम्पत शोभा यशो यस्य स तस्य एवम्भूतस्य मम जामातु पुरत अग्रे चिराय चिरकालपर्यन्त धाराजल त्यज्यताम । तस्याराधनायेति ध्वनि ॥ धूर्जटीत्यादि- हेतुगर्भ विशेषण हरधनुर्भञ्जकस्य परशुरामसमान्यत्वात् ॥ शार्दूलविक्रीडित वृत्तम ॥ ४० ॥

**आङ्गिरसेति** । हे आङ्गिरस शतानन्द इद तावदारब्धमेव जामदग्न्येन निजकोपानलकणिकास्फालनमित्यर्थ । **अतिगम्भीरेति** । अतिगम्भीर अतीवदुरवगाहो यो भुजसारकासार बाहुबलसरोवर तस्य ये कैरवा तेषामाराम. आश्रय । अनेन विशेषणेन स्फुलिङ्गनिवारकत्व सूचितम ॥

**पर सहस्रा इति** । सहस्रात परा इत्यर्थ । **श्रीकण्ठेति** । अमी दृश्यमाना. नानादिगन्तजगतीपतय नानादेशराजान श्रीकण्ठस्य कार्मुकेण निरस्तो भुजावलेप भुजबलदर्पो येषा ते तथाभूता सन्त मम अभ्यर्थना प्रार्थनाम अभिवर्तमाना पालयन्त कानिचिदहानि कियद्दिनपर्यन्त नरेन्द्रपूजा उचितातिथिसत्कार गृह्णन्ति स्वीकुर्वन्त तिष्ठन्तीत्यर्थ । वसन्ततिलक वृत्तम् ॥ ४१ ॥

(६३) **तदेषामेवेति** । अनादरे षष्ठी । **पूरयेति** । चापारोपणेनेत्यर्थ. ।

**अपरिशीलितेति** । अपरिशीलिता अपरिचिता सन्निवेशा गृहदेशविभागा यस्य स तस्य तथाभूतस्य प्रत्यनन्तरीभूयता सहायरूपेण उपसर्पता भवानित्यर्थ ॥ **करेति** । करे कलिता न्यस्ता कमलमाला स्वयवराभिलाषसरोजमाला यस्या सा तस्या ।

**रामचन्द्रेति ।** रामचन्द्रस्य यश. तस्य या पताका तस्याः केतुदण्डेन । एवम्भूतेन हरचापखण्डेन विभाति उद्धृतमेव किम । विधुद्धृतहरचापखण्ड यश पताकाकेतुदण्ड एवेति भाव ।

चापभञ्जन वर्णयन्नाह-**राघवेणेति ।** शिशुनाऽपि अतिबाल्यवयस्केनापि राघवेण लीलया हेलया अनायासेनैव नमित आरोपितो हरचाप । यस्य गुणघोष ज्याघातनिस्वन (अथ च कीर्तिघोष) अम्बरे ऽपि गमित सन् दूरमुल्लसति । न केवल भूमण्डलमपि तु अम्बरतलमपि व्याप्त ज्याघोषेण रामचन्द्रयशोवर्णनघोषरूपेणेति भाव. ॥ स्वागता वृत्तम् ॥ ४२ ॥

कौशिकोक्तिमनुमोदयन्नाह-**पूर्णा इति ।** पुरारे शिवस्य चापस्य स्फुटन त्रुटस्य गिरिराजस्य (तुहिनगिरिमयत्वात काकूक्ति) या गूढाः अनेकगुहा. कन्दरा । तासा गभीरकुहरस्फारा गुहान्तर्गतविवरा तेषु प्रतिध्वानिभि । पुन मौर्वीभूत यो भुजङ्गराज शेष तस्य वदन शेषेभ्य सहस्रवदनेभ्यो विसर्पन्ति निर्गच्छन्ति यानि वचासि तै प्रारब्धा या आर्यस्य रामचन्द्रस्य यश प्रशस्ति कीर्तिवर्णन तत्सदृश तदिव भासमानैरित्यर्थः । एवम्भूतै ज्याघातघोषै. दिश. पूर्णा व्याप्ता । शार्दूलविक्रीडित वृत्तम् ॥ ४३ ॥

(६४) **एतैरिति ।** एतै श्रूयमाणै श्रीकण्ठकोदण्डस्य चञ्चन्ती त्रुटन्ती या मौर्वी तत्सवै तदुद्भूतै रवै शब्दै द्वारीभूतै मम प्रतिज्ञया साक मम मनोरथ अभिलाषोऽपि पूर्ण ॥ न केवल दिश एव पूर्णा अपि तु मम प्रतिज्ञा मनोरथश्च पूर्ण इत्यर्थ. । सहोक्तिरलङ्कार ॥ ४४ ॥

**समग्रीक्रियत इति ।** परस्परालोकनेन । धनु खण्डसदृशभ्रू युगलमेलनेनेति यावत् ॥ स्पष्टीकृतमेतदग्रिमश्लोके ॥ प्रतीहार्या उक्तिमनुमोदयन्नाह—**करकिसलयेति ।** करकिसलयस्य या लीला तया चारु कमनीय यथा स्यात्तथा दशरथतनयेन रामेण स्वैर यथेच्छम अनायासेन ईषच्च आकृष्यमाणे हरचापे । रसेन सरसो रमणीय अत एव विकासी प्रफुल्ल । पुन कुवलयदलदामवत सरोजमालावत श्यामा कान्ति शोभा यस्य स एवम्भूत कटाक्ष सीतयापुङ्खित पुङ्खलोकृत. । समग्रीकृत इति यावत ॥ मालिनी वृत्तम ॥ ४५ ॥

धनुष्टाङ्कार वर्णयन्नाह—**भिन्दन्निति ।** क्रूयमाण यत त्रिपुरहरस्य शिवस्य धनु तस्य भङ्गात भवति उत्पद्यते य स तथाभूत टाङ्कार आविरस्ति प्रकटीभवति । कि कुर्वन्नित्यपेक्षायामाह **भिन्दन्नित्यादिना ।** मुरारे क्षीरोदधिप्रसुप्तस्य विष्णो निद्रा भिन्दन शब्दस्य तीव्रत्वेनेत्यर्थ । सकलभुजभृता सकलनृपाणा शौर्यदर्प वीर्यगर्व म्लानयन् अनन्यचालितत्वाद्धनुष । पुन दिक्कुम्भिना दिग्गजाना यानि कर्णाञ्चलानि तेषा चलनकला ईतस्ततश्चलनशीलता छिन्दन परि

हरन् । उत्कटघोरश्रवणचकितत्वाद्गजानाम । पुन: कूर्मराज धराधार भूत कम्पयन् शब्दाघातस्योत्कटत्वात् । किम्भूतष्टाङ्कार इत्यपेक्षाया-माह आर्येत्यादिना । आर्यस्य रामचन्द्रस्य श्लाघया प्रशसया गभीर) पूर्ण । अथ च प्रलयकालीनो यो जलधर तस्य यद् ध्वान शब्द तस्य धिक्कारे न्यक्करणे धीर योग्य । स्रग्धरा वृत्तम् ॥ ४७ ॥

(६९) त्रैलोक्यमिति । भगवच्चण्डीश्वरधनुष्टणत्कार· उद्गच्छतीत्यभिसन्धि·। किम्भूतष्टणत्कार इत्यपेक्षायामाह-त्रैलोक्यमित्यादिना । त्रैलोक्य लवयन् व्य मुवन् । पुन गिरिगभीरगुहासु पूर्व सुप्तस्य पश्चात् जाग्रत: सिहस्य स्फार विकटमुन्मीलन् य कण्ठ तस्य स्तनितस्य शब्दस्य प्रतिरवोद्गारेण आपूर्यमाण व्याप्त यत् तस्मिन् एव म्भूते भज्यमाने विदीर्यमाणे ब्रह्माण्डे । बहुविकटो य कटत्कार· शब्द तस्य प्राग्भारेण विस्तारेण भीमो भयङ्कर । अनेनोक्तविकटशब्दादप्यधिकतरवैकट्य धनुष्टङ्कारस्य सूचितम् ॥ ४८ ॥

रामचन्द्रशोभा नृपान्तरचित्तवृत्तीश्च वर्णयन्नाह-क्रीडेति । क्रीडया अनायासेन भग्नं मृगाङ्कमौले चन्द्रचूडस्य शिवधनु· येन स त तथाभूतम । पुन सीतार्पिता कमलस्रज सरोजमाला वक्षसा हृदयेन बिभ्राण दधानम । पुन शृङ्गारवीरश्रियो रत्युत्साहयो निजगृहम एकमात्रावलम्बनम । पुन व्रीडावशात ( अतिविनीतत्वात ) लज्जया अवाञ्चितम ईषत् नमित मुख यस्य स त तथाभूत राम पश्यता भूमिभुजा नृपाणा चेत· चित्तम ( कर्तृ ) । क्रोध ( निजपरिभवनावगतिज· ) विषाद ( जानक्यलाभजनित· ) विस्मय ( बालकवीर्यातिशयदर्शनजन्य· ) मुत् हर्ष ( योग्यायोग्यसम्बन्धदर्शनोत्थ ) इति क्रोधविषादविस्मयमुद, तासा विविधा विचित्रा ऊर्मय तरङ्गा ता समालिङ्गति । उक्तभावचतुष्टयमय भवतीति भाव । शार्दूलविक्रीडित वृत्तम ॥ ३९ ॥

विषीदेति । धनुर्भञ्जनं शुन्वेत्यर्थ· । प्रसीदेति । योग्यजामातृलाभादिति भाव । ज्यावल्लीमिति । ललिताङ्गुलीकिसलयै सुभगाब्जपत्रसदृशाङ्गुलीभि ज्यावल्ली धनुर्मौर्वीम आकर्ण कर्णपर्यन्तम् आकृष्यत रघुशिशो रामचन्द्रस्य भ्रू भङ्गुरता वक्रता न गता ( अनायासेनाकर्षणात् ) । तथाऽपि धूर्जटे शिवस्य धनु भग्न खण्डितम भूत् । अथ च रामचन्द्रस्य कण्ठे अहङ्कारतरङ्गित· धनुर्भञ्जनजनित गर्वमूलक· ध्वनि शब्दो नाभूत । अपि तु दीर्यत· त्रुट्यतो धनुष टङ्कार तारतरल तारेण उच्चध्वनिना उत्कट सन् जगत् शब्दाद्वितीय शब्द एव अद्वितीय यत्र तत तथाभूत, ध्वनिमयमिति यावत्, चकार ॥ शार्दूलविक्रीडित वृत्तम । भ्रू भङ्गुता न गता हरधनुस्तु भग्नम, कण्ठे ध्वनिर्नाभूत् जगत्तु शब्दाद्वितीयमभूदिति विरोधाभास ॥ ५० ॥

अतिभूमिमिति । उत्कर्षकोटिमित्यर्थः । धनुष आनमनमात्रमेव जनकस्येप्सितमासीत् न पुनर्भञ्जनमित्यवगम्यते । अत एव च विषीदन्तीति शतानन्दोक्तिः सङ्गच्छते ॥

(६६) अनायासेन धनुर्भञ्जननिवारणस्य अवसराभावं वर्णयति— यावदिति । कन्दुकलाञ्छनाञ्चितः करः बालोचितकन्दुकक्रीडापरिचितः । शोणाब्जानाकृतिः रक्तकमलसदृशः । पुनः कौशल्यया अर्पितमङ्गलपरिसरः बालोचितरक्षादिरूपं यस्मिन् स तथाभूतः । वत्सस्य रामस्य दोःकन्दलः बाहुदण्डः यावत् किञ्चित् ईषदेव चञ्चति धनुराकर्षणे चलति । तावदेव तत्क्षणमेव दलन् त्रुट्यन् यः चण्डीशचापः हरधनुः तस्मात् उच्छलन् उद्गच्छन् यः शब्दः स एव यः एकार्णवः अद्वितीयः समुद्रः तस्मिन् जगत्त्रयं मग्नम् । धनुर्भञ्जनशब्देन जगत्त्रयं व्याप्तम् । निवारणस्यावसरो नैवासीदित्याशयः । शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

सद्य इति । विघट्टमानेन संघट्टिताविति विरोधाभासः । तत्परिहारस्तु अनयोर्विवाहः संवृत्तो हरचापभञ्जनेनैवेति ॥ ५३ ॥

तद्दुर्मिलेति । जानकीरामभद्रयोर्विवाहः संवृत्त एव । अतो नात्रावश्यकता मुनेरनुमतेः । लक्ष्मणस्यैव विवाहविषये तस्याज्ञाभ्यर्थनीयेति भावः ॥

भरतशत्रुघ्नयोर्विवाहं सूचयन्नाह पाणीनिति । जनककन्यानां पाणीन् पीडयद्भिः अनुजैः सर्वैस्त्रिभिः सह मे रामभद्रः सीतायाः पाणिपीडनमिच्छति । सहैव सर्वेषां भ्रातॄणां विवाहो भवत्विति हृदयम् ॥ ५४ ॥

अधिशेखरमिति । मौक्तिककुसुममिव साह्लादं गृहीता मया भवदनुज्ञेति भावः । समीहितमिति । दशरथतनयविवाहरूपमित्यर्थः ॥

इति श्रौतस्मार्ताचारपरायणमैथिलश्रोत्रियकुलावतंसोपाध्यायोपनामकश्रीतीर्थनाथशर्मतनूजजगन्नाथविरचितायां प्रसन्नराघवटीकायां भावबोधिन्यां तृतीयाङ्कव्याख्या ॥ ३ ॥

# प्रसन्नराघवटीकायाम्

## भावबोधिन्याम्

### चतुर्थोऽङ्कः

(६७) ध्रुवेति । ध्रुवालक्षणमुक्तं राजशेखरेण "प्रथयति पात्रविशेषान् सामाजिकजनमनांसि रञ्जयति अनुसन्दधाति च रसान् नाट्यविधाने ध्रुवा गीतिः ॥" इति । मणिमये त । जनकनरेन्द्रस्य मण्डपे मणिमयो मङ्गलदीपो ज्वलति । यस्मिन् मङ्गलदीपे मणिमयत्वात् चण्डानिलोऽपि प्रचण्डवेगोऽपि वायुः विफलागमो भवति निर्वापयितुं नैव शक्नोति । चण्डानिलशब्दोऽत्र परशुरामागमनसूचकम् "प्रथयति पात्रविशेषान्" इति लक्षणोक्त्यनुसारेण । तदागमनस्य च परिणामनिष्फलत्वं सूचितं विफलागमपदेन ॥ अत्रातिशयविशेषोक्त्योः सङ्करः ॥ १ ॥

जामदग्न्यं वर्णयन्नाह-कुर्वन्निति । कोपात् हरचापारोपणश्रवणजन्यक्रोधात् उदञ्चद्भिः प्रोल्लसद्भिः । रविकिरणसटा सूर्यकिरणजालं तद्वत् पाटलैः ईषद्रक्तैः । दृष्टिपातैः । कुठारम् अद्यापि कृतैकविंशतिवारनिःशेषनाशेऽपि क्षत्राणां नृपाणां कण्ठात् च्युता या रुधिरसरित् तया सिक्ता धारा यस्य एवम्भूतं कुर्वन् । अथ च पुनरपि पूर्ववदेव भुवनोत्पातमासूचयद्भिः तीव्रैः निःश्वासपातैः तद्द्वारा गर्जन्ती आस्फालने शब्दायमाना मौर्वी यस्य स तथाभूतः चापो यस्य स त्रिभुवनविजयी जामदग्न्यः परशुरामः समेति आयाति । अतो हे क्षत्रियाः एतस्य लोचनपथाद् अपसरतेति सम्बन्धः । पाटलदृष्टिप्रतिबिम्बेन कुठारस्य रक्तत्वम् । ततश्च रुधिरानुलिप्ततानुमानम्, तीव्रनिःश्वासपातशब्देन च मौर्वीगर्जनानुमानमिति भावः । उत्प्रेक्षाऽलङ्कारः । स्रग्धरा वृत्तम् ॥ २ ॥

परशुं विलोकयन् सरभसमाह-सकलेति । सकलानां नृपाणां याः कठोराः कठिनाः कण्ठपीठ्यः ताभ्यः बहलमधिकं यथा स्यात् तथा गलन् च्युतो यो रुधिरौघः शोणितप्रवाहः तेन क्षालिता धारा यस्य स तथाभूतोऽयं जमदग्निनन्दनस्य मम परशुः तत् तस्मात्कारणात् हरचापारोपणप्रतिज्ञापराधात् इदं जगत् अजनकं जनकविहीनं विधत्ते विधास्यति । अतिसामीप्यादवश्यं भवित्वाच्च भविष्यदर्थे लट् । समस्तनृपसमूहं निहत्य जनकं पश्चान्निपातयामि । अथवा

क्षतैर्विंशतिवारनरपतिक्षयो मे परशुरयं जनकं निपातयिष्यतीति भाव ॥ पुष्पिताग्रा वृत्तम् ॥ ३ ॥

(६८) पुनः स्वविक्रमं वर्णयन्नाह-**उदित इति**। अर्जुनस्य कार्तवीर्यस्य भुजा एव वनम् तस्मिन् उदितः उत्पन्नः पुनः तुङ्गेषु दर्पोद्धतेषु नृपतिवंशेषु क्षत्रियकुलेषु ज्वलितः। एवंभूतः त्वं हे कोपानल निमिकुलमेव जनकवंश एव यः कमलकाननं तं स्पृशसि किम्। न युक्तमेतत् तव प्राचीनपराक्रमस्येति भावः। वंशेषूज्ज्वलितस्य अधःस्थितकमलस्पर्शो नातीव उचित इति हृदयम्। रूपकमलङ्कारः। आर्याप्रभेदः ॥ ४ ॥

पुनर्निजक्षत्रियता विभाव्याह-**अलमिति**। अस्मिन् जनककुले उपेक्षया अवहेलया अलम्। अयं जनकः मनोरथेन यथेष्टम् उपनीतः प्राप्तो यो जामाता तस्य भुजबलेन यः अवलेपो दर्पः तेन दुर्ललितः दुर्विनीतः। जनकस्य प्रतिसन्देशं स्मरति-**तथाहीति** ॥ **दुरवलेप इति**। दुष्टगर्व इत्यर्थः ॥

स्वनिष्पादितकार्तवीर्यनिधनं वर्णयन्नाह-**यस्योद्यदिति**। यस्य परशोः उद्यत् प्रोच्छलत् यत् घोरधाराञ्चलं तीक्ष्णधाराप्रान्तं तेन दलितम् अत एव गलत् रुधिरप्लावितं यत् बाहुशाखासहस्रं तस्मात् प्रोद्गच्छन्तो या रक्तधारा शोणितौघाः तस्य निवहेन जितं नवोन्मीलदर्कस्य नवोदितसूर्यस्य अंशुजालं येन एवम्भूतः क्ष्मापालः पृथिवीपतिः कार्तवीर्यः सुरपुरसुदृशां स्वर्नारीणां। पुष्पितो यो अशोकशाखी अशोकवृक्षः तस्य भ्रान्तिं दत्वापि (बाहुबाहुल्यात् शाखित्वं रुधिरप्लावितत्वाच्च पुष्पितत्वम्)। निजपुरसुदृशां स्वपुरनारीणां चित्ते शोकशाखी शोकमूलं बभूव। निजमरणेन तासां मनसि शल्यमर्पितवानिति भावः। अशोकभ्रान्तिं दत्त्वा शोकशाखी बभूवेति विरोधाभासः। स्रग्धरा वृत्तम् ॥ ५ ॥

पुनः परशुं वर्णयन्नाह-**येनेति**। येन भुजमण्डलेन नर्मदायाः अम्बुनिवहो जलप्रवाहः अबध्यत। सख्ये युद्धे च लङ्केश्वरो रावणश्च येन भुजमण्डलेन अबध्यत बद्धः। ततः अर्जुनस्य कार्तवीर्यस्य भुजा एव ये क्षोणीरुहा वृक्षाः तेषां मण्डलं यस्मिन् कुठारे निरमज्जत शान्तोऽभूत्। पुनः यस्य कुठारस्य केलयः चरितानि क्षत्रस्त्रीणां नयनाम्बुपूरमिषतः अश्रुप्रवाहच्छलेन खेलन्ति। तादृशः मे परशुः अधुना धाराजलं मुञ्चति। जनकस्य प्रतिसन्देशं प्रत्ययमाक्षिप। शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

**सहर्षमिति**। ताण्डायनेनोक्तो निवृत्तेत्यस्य 'चापारोपणप्रतिज्ञाया उपरतो जनकः' इत्यर्थो गृहीतो जामदग्न्येन। अत एवास्य

**एवं चाऽङ्गविधीनामपि नाऽत्यन्तसापेक्षत्वम् । ततः काम्येष्वपि यथा शक्नुयादित्येवास्तु, न यो यदा शक्नुयादिति, अवैलक्षण्यात् । नैतत्सारम् । एकप्रयोगविधिवैरूप्यप्रसङ्गा-**

तथैते सर्वे ऽपि कामविधयो ऽङ्गानीति सिद्धं भवतीत्याह—एवं चाऽङ्गविधीनामपि नात्यन्तसापेक्षतेति । एवं च सर्वेषामेव नित्यकाम्यविधीनामवैरूप्यं स्यादित्याह—ततः काम्येष्वपि यथा शक्नुयादित्येवास्तु, न यो यदा शक्नुयादिति, अवैलक्षण्यात् ।

तदेतद् दूष्यति—नैतत्सारम् । एकप्रयोगविधिवैरूप्यप्रसङ्गादिति । अयमर्थः । सकृत्प्रवृत्ता खल्वियं कामश्रुतिरर्थिमात्रविषया यदि सर्वानेवाऽविशेषेणार्थिनो ऽन्धादीन् विकलाऽवयवांश्चोपस्थापयेत्तदा स्वर्गकामोपहितमर्यादो ऽय प्रयोगवचनो नयनवन्तं स्वर्गकामं प्रत्याज्यावेक्षणं विदधाति अन्धं च स्वर्गकामं प्रति स एव तदेव न विदधातीति वैरूप्यं प्रसज्येत । न ह्यन्धादिपदान्यर्थिपदेन सह समभिव्याहृतानि, येन व्यवस्था स्यात् । ननु नैकश. प्रयोगवचनाङ्गे प्रवर्त्तते येन तस्य वैरूप्यं स्यात् किं त्वेकफलसबन्धानर्थानेकप्रधानोपकार[1]सबन्धांश्चैकस्य कर्तुरेकव्यापारतामापादयति, तथा च न प्रयोगविधिरङ्गानि प्रापयति किं तर्हि प्राप्तान्यङ्गान्यभिसमीक्ष्योपसहरति एकप्रयोगमापादयतीति यावत् । तेन यथा श्रुत्यादिप्रापितान्यङ्गानि तदनुसारेणैव प्रयोगवचनेनोपसंह्रियन्ते तथा ऽऽख्यातानामर्थं ब्रुवता शक्ति. सहकारिणीति स्रुवाऽऽज्यावदानवत्कर्तृसामर्थ्यस्यापि प्रापकत्वादन्धस्वर्गकामकर्तृसामर्थ्याऽनुसारेणाऽऽज्यावेक्षणमात्रवर्जितमङ्गजातमुपसंहरिष्यति । चक्षुष्मन्तं तु प्रति तत्सहितमिति को विरोधः ? यदि चक्षुष्मन्तमेव प्रत्युपसहरेत् नोपसहरेच्च ततो भवेत्प्रयोगविधिवैरूप्यलक्षणो विरोध इत्याशङ्क्याह—अनेकप्रयोगकल्पनाप्रसङ्गादिति । मा प्रापद्विरोधलक्षणं वैरूप्यं सम-

१ प्रकारोपकार । १ पु पा° ।

दनेकप्रयोगकल्पनाप्रसङ्गात् । केवलपदार्थव्यवहाराभावाद्विशेषश्रुतेरविरोधाच्च । स एव प्रयोगविधिस्तस्यैवाऽङ्गस्य प्रयोगं तमेव प्रतिविदधाति न विदधातीति[1] स्यात् । कल्पथाऽसमर्थार्थि समन्वयव्यवस्थापनया तत्तदङ्गोपादानपरिवर्जनाऽऽपादितप्रयोगभेदरूपं तु प्रयोगवैरूप्य कल्पनागौरवापादक प्रयोगवचनः प्रतिपद्यतएवेत्यर्थः ।

ननु च प्रामाणिकं कल्पनागौरवमपि न दोषमावहति । अस्ति चाऽत्र प्रमाण स्वर्गकामश्रुतेरसङ्कोच' सामान्येन प्रवृत्तायाः । ऐकरूप्ये तु प्रयोगस्य सङ्कोचे विरोध. स्यादित्याशङ्क्याह—केवलपदार्थव्यवहाराऽभावाद्विशेषश्रुतेरविरोधाच्च । अयमर्थः । प्रत्यायनाय पदान्युच्चारयन्ति प्रेक्षावन्त', स एव च तैरर्थो बोधयितव्यो यो बुभुत्सितः परै, स्तमेव च परे बुभुत्सन्ते यो व्यवहाराङ्ग, न चाऽविशिष्टपदार्थसाध्यो ऽस्ति कश्चिद्व्यवहार, स्तेन यद्यपि पदात्पदार्थमात्रमवगम्यते तथापि तन्मात्र न व्यवहाराङ्गमित्यपर्यवस्यत् पदार्थान्तरं विशेषमपेक्षमाणं यत्पदान्तरेण योग्यमुपनीयते पदार्थान्तर तदवच्छेदमनुमन्यतेतरा प्रयोगे, न तु प्रति[2]क्षेपकरणमन्यथा वाक्यार्थप्रत्ययाऽभावात्तदुच्छिन्नपदसङ्कथमत्यन्त मूक जगत्प्रसज्येत । तदिह स्वर्गकामश्रुतिरपि लोकाऽनुसारेण स्वार्थमात्रे पर्यवस्यन्ती पदान्तरेण वाक्यान्तरेण वा योग्येन य एव विशेषः कश्चिदुपनीयते तमनुमन्यमाना न सङ्कोचेन हूयते । न हि तथा सर्वाङ्गोपसंहारसामर्थ्यविशेषणे ऽर्थिनि लभ्यमाने न लब्ध' स्वार्थ कामिपदसम्बन्धोपहितसीम्नस्तस्यापि तत्त्वादित्यप्रामाणिकत्वात् कल्पनागौरव दोषायेति ।

एकप्रयोगविधिवैरूप्यप्रसङ्गादित्युक्त, तद्विस्पष्टयति—एव हि स एव प्रयोगविधिस्तस्यैवाङ्गस्य प्रयोग तमेव प्रति विदधाति न विद-

---

१ तमेव प्रतिविदधातीति मू पु पा ।
२ प्रागेव तु प्रति २ पु पा ।

नागौरवं च, सामर्थ्यभेदेन प्रयोगभेदात् । पदस्य च पदान्तरसम्बन्धे विशेषपरत्वं सर्वत्रगमिति न कदा चिदन्यायकल्पना । नित्ये ऽपि तर्ह्येवमेवास्तु जीवन्यदा शक्नुयात् । यावदित्यनुपपन्नमिति चेत् । अनियतनिमित्तेषु कथम्? अपि च सातत्येन होमप्रसङ्गः । अथ कालविशेषोपादाना-

धातीति स्यादिति । अनेककल्पनाप्रसङ्गादिति स्फुटयति—कल्पनागौरवं चाऽऽसामर्थ्यभेदेन प्रयोगभेदादिति ।

केवलपदार्थे व्यवहाराऽभावाद्विशेषश्रुतेरविरोधादिति यदुक्तं तत्स्पष्टयति—पदस्य च पदान्तरसम्बन्धे विशेषपरत्वं सर्वत्रगमिति न कदा चिदन्यायकल्पनेति । ननु यदि पदस्य पदान्तरसम्बन्धे विशेषपरत्वमविरुद्धमिति स्वर्गकामपदं समर्थं विषयमिति यो यदेति सम्बन्धः, हन्त तर्हि जीवनमपि सामर्थ्येनाऽवच्छिन्नं नित्ये ऽपि यो यदेत्युपबन्धमावेदयिष्यतीत्याह—नित्ये ऽपि तर्ह्येवमेवाऽस्तु जीवन्यदा शक्नुयादिति ।

शङ्कते—यावदित्यनुपपन्नमिति चेत् । अयमभिसन्धिः । एकैकत्र चेतने कामनानिवेशादेकस्मिन्नपि समर्थे स्वर्गकामश्रुतेः समवेतार्थत्वान्न विरोधः, इह तु यावच्छब्दस्य जीवनकालव्याप्त्यर्थत्वात् यदाशब्दस्य कालैकदेशव्यवस्थापकत्वाद्व्याप्तिविरुद्धत्वादस्ति नास्तीतिवदसङ्गतिरिति । परिहरति—अनियतनिमित्तेषु कथमिति । नाऽयमेकान्तो, यावच्छब्दाऽननुबन्धेषु नैमित्तिकेषु ग्रहोपरागादिस्नानेषु यदा शक्नुयादित्युपबन्धो नोपपन्न इत्यर्थः ।

इदानीं यावच्छब्दोपबन्धेपि यदा शक्नुयादिति सम्बन्धयितुं प्रसङ्गमापादयति—अपि च सातत्येन होमप्रसङ्ग. । यावज्जीवेत्पदं च जीवनावच्छिन्नकालव्यापनार्थमिति यावदयं प्राणिति तावदनेन होतव्यमित्यनपेक्षिते प्रातःसायंनियमे निरन्तरमेव जुहुयात् सर्वोपि

ऽनुरोधान्न तथा । हन्ताऽङ्गविध्यनुविधायिन्यपि यावज्जीवश्रुतिः सामर्थ्यं संबन्धमन्वेतीत्यङ्गविध्यनुरोधाद्यदेति स्यात् ।

अथ मतं—जीवन्नपि साङ्ग एव कर्म्मण्यधिक्रियते नाङ्गशून्यं विधान,मधिकृतस्य तु प्रयोगो यावदधिकारं नाङ्गाऽनुरोधेन निवर्त्तते । यथासम्भवं तु अधिकारायत्तत्वा-

प्रानाहारव्यवहारो विपद्येतेति । अथ कालविशेषोपादानाऽनुरोधान्न तथा, तत्राह—हन्त कालविशेषोपादानवत्सर्वाङ्गविध्यनुविधायिन्यपि यावज्जीवश्रुतिः सामर्थ्यं सम्बन्धमन्वेतीत्यङ्गविध्यनुरोधाद्यदेति स्यात् । अयमर्थः । यथा सायंप्रातःसमयविधिसामर्थ्यात्सायप्रातः समयाऽवच्छिन्नमेव जीवनं यावदित्युपबध्यते तथा सर्वाङ्गविधिसामर्थ्यात्तदेकवाक्यतया सर्वाङ्गोपसंहारसामर्थ्यसमयावच्छिन्नमेव जीवन यावदित्युपमन्स्यन्ते । ततश्च नित्ये ऽपि काम्यवदेव यदा शक्नुयादित्युपबन्धसिद्धिरिति ।

अथ मतं जीवन्नपि साङ्गएव कर्मण्यधिक्रियते, नाङ्गशून्य विधानं, साङ्गस्येव तस्य करणभावेनाऽवगमात् । ननु तथापि काम्यान्नित्यस्य को विशेष ? इत्याशङ्क्याह—अधिकृतस्य तु प्रयोगो यावदधिकार नाङ्गानुरोधेन निवर्त्तते । अयमभिसन्धिः । यद्यप्यङ्गविध्येकवाक्यताबलान्निखिलाङ्गोपसंहारसमर्थस्य जीवतो ऽधिकारो विधेरवगतस्तथापि सामर्थ्यमालोच्य पुरुष. प्रवृत्तो ऽनन्तर तु यदि कश्चित्प्रमादत कतिपयाङ्गकरणाऽसमर्थ. समर्थश्चेतराणि सर्वाण्येव कर्तुं तत्र किमेषो ऽसमर्थः कतिपयेष्वङ्गमिति सर्वथैव ततः प्रयोगादुपरमताम् ? अथ यत्राप्यसमर्थस्तदङ्गसहितमप्यधिकारप्रतीतिसामर्थ्यादनुतिष्ठतु ? आहो स्विदशक्यकतिपयाङ्गवर्जितमितराङ्गग्रामसहित प्रधानमप्रयुङ्क्ता ? मिति यथासम्भव त्वधिकारायत्तत्वात्तस्येति । अय-

**त्तस्य । न च काम्ये ऽपि प्रसङ्गः । कार्यनिष्ठत्वात्कामाधिकारस्य[1] प्रयोगनिष्ठत्वाच्च नैमित्तिकस्य । साधनापेक्षत्वात्**

मर्थः । सत्यप्यधिकारप्रत्यये शक्यकरणाऽनुपपत्ते सर्वथोपरमे चाधिकाराऽङ्गविरोधादधिकाराऽतिक्रमप्रसङ्गनाऽन्तिमपक्षपरिग्रहः । अशक्याङ्गवर्जितेतराङ्गसहितप्रधानानुष्ठानं खल्वधिकारानुरोधादयं प्रयोगविधिरवलम्बते इति ।

ननु काम्येष्वेतत्सर्वं समानमित्याशङ्क्याह—न च काम्ये ऽपि प्रसङ्गः, कार्यनिष्ठत्वात्कामाऽधिकारस्य प्रयोगनिष्ठत्वाच्च नैमित्तकस्य । अयमभिप्रायः । काम्ये हि स्वर्गकामो यजेतेति साध्यस्वर्गविशिष्टो नियोज्यस्तदेव कार्यं प्रतिपद्यते यत्स्वविशेषणाऽनुकूलं, साध्यस्यैव सतो विशेषणत्वात्, तदननुकूलत्वे तु कार्यस्य, न तत्र स्वर्गकामो नियोज्यः स्यात्कार्यं च कृत्यवच्छिन्नं नाप्रतीयमानायां कृतौ शक्यनिरूपणम् । न ह्यनवगतविशेषणो विशिष्टमवगच्छति । कृतिव्याप्यं हि प्रधानं कार्यमुच्यते । प्राधान्यं च तदुद्देशेन कृतेः प्रवृत्तिः । कृतिश्चैवंविधेषु वाक्येषु चेतनव्यापारः प्रयत्नशब्दवेदनीय एवाऽऽस्थेयः । चेतनो हि नियोज्यस्तदेव कार्यं प्रतिपद्यते यत्र कार्ये तिरश्चीनमात्मानमवगच्छेत् । न चाऽन्यव्यापारव्याप्ये तथा ऽवगन्तुमर्हति । प्रयत्नश्च प्रत्ययवन्न विषयमन्तरेण शक्यो निरूपयितुं, विषयश्च तस्य प्रायेण भावार्थः । तदालम्बनस्यैव प्रयत्नस्याऽपूर्वाभिधानकार्योद्देशेन प्रवृत्ते. । न खलु लोके ऽप्यलब्धपाकरूपभावार्थविषयः पक्तुः प्रयत्न ओदनोद्देशेन प्रवर्तितुमर्हतीति । ततश्च कृतिमन्तरेण कार्यस्याऽनिरूपणात् कृतेश्च भावार्थं विना ऽप्रतीतेः कृतिप्रणाडिकया कार्यस्य भवति भावार्थो विषय, स्तद्बन्धनत्वात् । षिञ् बन्धने इत्यस्माद्विषयपदव्युत्पत्ते । तदेवं कामोपायस्य कार्यस्य विषयभावमुपगच्छन् भावार्थो नाऽनुपायः पारयति गन्तु[1]मित्युपायतामेव पुरोधाय विषयता ऽवगम्यते भावार्थस्य काम्येषु । उपायता

---

[1] मेतुम् १ पु णा ।

च निखिलाङ्गसंपादितोपकारतया नाऽन्यथा, मिलितानां च सर्वेषामङ्गभावः। प्रत्येकं तद्भावे ऽष्टविधदोषनिदानविकल्पाऽऽपत्तेः। तथाऽऽगन्तुके ऽप्यक्रियमाणे समस्ताऽङ्गजन्यस्य करणोपायस्य[1] सम्पत्तेरुपायत्वाऽभावाद् विषयिणो ऽधिकारस्याऽप्रतीतेर्न तद्बलेन हीनाङ्गं काम्य कर्म संपादयति, अपि तु सर्वोपसंहाराय घटते। समर्थस्तु कश्चित्प्रयोगादेव निवर्त्तते। नित्ये तु नायं प्रकारः संभवी। न हि तत्र साध्यविशिष्टो नियोज्यो, येनाऽनुपायं कार्यं कार्यतया नावगच्छेत्। तेनाऽन्यत सिद्धनिमित्तावच्छिन्नो नियोज्यः कृतेः प्राधान्यिकया भावार्थमात्रविषयमेव तावत्प्रथमं कार्यमवगच्छति। प्रतिपन्नसविषयकार्यस्तु कृत्युपहितस्वरूपत्वात्कार्यस्य कृतेश्च क्रियात्वेन करणनान्तरीयकत्वात्कार्यं प्रति करणमपेक्षमाणः संनिधानाद्विषयीभूतस्य भावार्थस्य करणतां प्रतिपद्यते। न च कृतिनिवृत्तस्य भावार्थस्य कथं तामेव कृतिं प्रति करणत्वमिति वक्तव्यम्। तदवच्छिन्नायास्तदपूर्वविशेषेण कृतिभावाल्लोके तथा प्रतीतेः। यथा च्छेत्तुरुद्यमननिपातनलक्षणया क्रियया व्याप्यमानमपि व्रश्चनं तामेव प्रति साधनं भवति, व्रश्चनविषययोरुद्यमननिपातनयोश्छिदारूपत्वप्रतिलम्भात्। न हि लोष्ठसमाश्रये उद्यमननिपातने अनाहितद्वैधीभावे छिदेति निरूपयन्ति। तेन यद्यपि भावार्थो व्याप्यते कृत्या तथाप्यपूर्वोऽर्थप्रवृत्तयेति तां प्रति न भावार्थः कर्म, किं तु करणम्, अपूर्वं तु प्रधानं कर्म, तदुद्देशेन कृतेः प्रवृत्तत्वात्। तदेव नित्ये ऽपि विषयभूतस्य भावार्थस्य पश्चात्करणत्वप्रतीतेरवगतसाङ्गप्रधानकरणत्वस्तदनुष्ठानसमर्थः प्रवृत्तः कुतश्चिन्निमित्ताद्यदि किं चिदुपहर्तुं न पारयति तथाप्यधिकारप्रतीतेः प्रतीत्यनुबन्धीभूतभावार्थमात्रविषयाऽवगमनोपायान्नोपरन्तुमर्हति, किं तु किं चिदङ्गहीनं प्रयोगमनुतिष्ठति। तदिदं प्रयोगनिष्ठत्वं कार्यनिष्ठत्वप्रतिपत्ततयोपन्यस्तम्।

1 करणोपकारस्य। 2 पु पा।

कार्य्यस्य, यावदङ्गं च साधनभावाऽवगतेः सर्वाङ्गोपसंहारेणैव कार्य्यसिद्धेः। ननु उभयत्राप्यधिकार एव कर्त्तव्यः। सत्यम्। एकत्र निमित्तपर्य्यन्तो ऽपरत्र फलपर्य्यन्तः। तत्र

यदि कामाऽधिकारस्य कार्यनिष्ठत्वं ततः किं भवती ? त्यत आह–साधनाऽपेक्षत्वात्कार्यस्य, यावदङ्गं च साधनभावाऽवगते: सर्वाङ्गोपसंहारेणैव कार्यसिद्धेर्न काम्ये प्रसङ्गः। ननूभयत्रापि काम्ये नैमित्तिके चाऽधिकार एव कर्त्तव्यः। नियोगस्यैव कार्यस्य विधिप्रत्ययादवगतेस्तस्यैव प्रधानत्वात्। तत्कर्त्तव्यतायाश्चाऽनुष्ठानमन्तरेणाऽनुपपत्तेरनुष्ठानस्य च पुंसः कर्तृतामन्तरेणाऽसम्भवात् कर्तृतायाश्चाऽधिकारिणां कर्मणि स्वामितामन्तरेणाऽसिद्धेरधिकारितायाश्च नियोज्यतां प्रधानीभूतकार्ये नियोग प्रत्यात्मनस्तदश्वीनभावबोद्धृतां विना ऽपर्यवसानात् नियोज्यो ऽपेक्षितः। स चाऽविशिष्टो न शक्यः प्रतिपत्तुमिति तद्विशेषणाकाङ्क्षायां क्वचित्सिद्धमेव विशेषणं जीवनादि स्वीकरोति, क्वचिच्च कामादिपदाऽऽपादितसाध्यभावं स्वर्गादि। न च नियोगविशेषणस्य साध्यता नियोगस्य साध्यत्वमुपहन्ति, नियोगसाध्यत्वनिमित्तत्वान्नियोज्यविशेषणसाध्यत्वस्य। 'न च निमित्त विधिरपबाधत' इति न्यायात्। तेनोभयत्र नित्ये काम्ये च नियोगस्यैव कर्तव्यत्वात्कार्यनिष्ठत्वादित्यविशेष इत्यर्थः।

समाधत्ते–सत्यमेकत्र निमित्तपर्यन्तो ऽपरत्र फलपर्यन्तः। अयमर्थः। निमित्तपर्यन्ताऽधिकारात्[1] निमित्तस्य चाऽसाध्यत्वात् निमित्तवान्नान्योपायतया कार्यमवबुध्यते, किं तर्हि भावार्थविषयमेव[2]। तस्यां च दशायां प्रतिपत्त्यनुबन्धितया भावार्थः प्रतीयमानस्तदनुरञ्जकत्वेनैव परमवतिष्ठते नोपायतया। ततश्च नैमित्तिकाऽधिकारस्य भावार्थमात्रविषयता न तूपायीभूतभावार्थविषयता। ततश्च यावद्भावार्थरूपभावित्वादधिकाराऽवगतेस्तन्मात्रेण च निमित्तस्य नि-

---

[1] निमित्तवतो ऽधिकारात्। २ पु पा०। [2] विषय स्वनिष्टमेव। २ पु पा।

निमित्तपर्य्यन्ते निमित्तवतो ऽधिकृतस्याऽप्रयुञ्जानस्याऽधिकाराऽतिक्रान्तिरिति यथासंभवं प्रयोगः । फलपर्य्यन्ते त्वङ्गवैकल्ये फलाऽनुपपत्तिः । फलकामिता ऽधिकारहेतुर्निवर्त्तते इत्यधिकाराऽभावान्नाधिकाराऽतिक्रान्तिदोष

मित्ततापर्यवसानान्निमित्तपर्यन्त इत्युक्तम् । कामाधिकारे तु कामोपायस्यैव कार्यस्य प्रधानस्याऽवगते फलपर्यन्त इत्युक्तम् । यद्येव तत. किं सिध्यतीत्यत आह—तत्र निमित्तपर्यन्ते निमित्तवतः सर्वाङ्गोपसंहारसमर्थस्य प्रवृत्तस्य दैवात्किञ्चिदङ्गमुपसंहर्तुमपारयतो ऽपि भावार्थमात्रविषयत्वान्नियोगस्य तस्य च किञ्चिदङ्गहानादप्रच्युतेर्[1]धिकृतस्याऽप्रयुञ्जानस्य प्रयोगमननुतिष्ठतो ऽधिकाराऽतिक्रान्तिरिति यथासम्भव प्रयोगः । फलपर्यन्ते त्वधिकारे ऽङ्गवैकल्ये सति न साधनत्व, साङ्गस्य साधनभावात् असाधनात्फलाऽनुत्पत्तौ नाथ तौ वा ऽतिप्रसङ्गात् फलकामिता निवर्त्तते ।

ननु न प्रत्यात्मवेदनीया फलकामिता ऽङ्गहानौ न निवर्त्तत इति शक्य वक्तुमित्याशङ्क्याह—अधिकारहेतुरिति । अयमर्थः । फलकामिता खलूक्तेन मार्गेण करणीभूतस्य भावार्थस्याऽधिकारविषयभावमापादयन्त्यधिकारहेतुः । सा चाऽङ्गवैगुण्ये सति केवलस्य भावार्थस्योपायभावात् विषयाऽभावे[2]न विषयिणो ऽधिकारस्यापि निवृत्तेः सत्यपि नाधिकारहेतुतया ऽस्तीति फलकामिता निवर्त्तत इत्युच्यते इति । तस्मादधिकाराऽभावान्नाऽधिकाराऽतिक्रान्तिदोष इति न यथा कथं चित्प्रयोगः ।

ननु यदि नैमित्तिकेष्वङ्गवैगुण्येष्वधिकाराऽनपगमो भावार्थमात्रविषयत्वाऽनपायात्[3] तथा सति यावज्जीवमग्निहोत्रं जुहुयादिति सायप्रातःकालयोरनङ्गत्वेन तदभावे ऽप्यधिकारस्याऽनपेतत्वान्मध्यन्दिनादिकाले ऽप्यजुह्वदधिकारमतिक्रामेदिति निरन्तरमेव

१ अप्रच्युते । पु पा० । २ विषयत्वाभावेन । पु पा ।
३ विषयस्याऽनपायात् । पु० पा ।

**इति न[1] यथा कथं चित्प्रयोगः । एवं न सातत्येन प्रयोगो नाऽर्थाऽवरुद्धेषु यथाशक्ति चोपसंहारो नित्येषु न काम्येष्विति सर्वं चतुरस्रम् ।**

होमप्रसङ्ग इत्याशङ्क्याह—एव सति न सातत्येन होमप्रसङ्गः । इदमत्राकूतम् । यद्यपि नैमित्तिकेषु प्रथम भावार्थमात्रमेव विषयस्तथापि कार्यस्य कृत्युपहितत्वेन करणाऽपेक्षायां भावार्थे पश्चात्करणं भवति । लब्धकरणत्वस्य चाऽङ्गापेक्षायामङ्गान्युपतिष्ठन्ते, तेन साङ्गोपसंहार[2] प्रति स्वाभाविकसामर्थ्यशालिन एव पश्चादधिकाराऽवगमादप्रतिसमाधेयाऽन्धत्वादिदोषाणामपेक्षमाणाद्यङ्गवति अत्यार्षेयाणां च त्यार्षेयचरणवत्यनग्न्याहितानां चाऽऽहवनीयादिभाजि मध्यन्दिनसमयवर्त्तिनां च पुंसां सायंप्रातःसमयाऽङ्गसङ्गिनि नाऽधिकारः कर्मणि, यथाविहितकर्मोपसंहार प्रति निजसामर्थ्याऽभावात् । येषां पुनराजानिक[3]मस्ति सामर्थ्यं यथा दरिद्राणां प्रतिसमाधेयबाधिर्यादीनां च तेषां सत्यपि दरिद्राणत्वे सत्यपि च बाधिर्यादावस्त्येव धनसाधने श्रवणादिसाधने च कर्मण्यधिकार इति तदकरणे भवत्यधिकाराऽतिक्रमो नित्येषु, न तु काम्येषु । स्वाभाविकसामर्थ्ये सत्यपि तदानीन्तनेन प्रतिसमाधेयेनाप्यसामर्थ्येनाङ्गवैकल्ये सति साधनत्वाऽपायेन साधनीभूतभावार्थविषयस्याऽधिकारस्य निवृत्तेः । ननु विशेषणेषु भवतु भावार्थमात्रमेव विषयः कार्यस्य, तथापि तस्यामपि कार्यत्वेन करणाऽधीनोत्पत्तित्वात् प्रतिसमाधेयेनाप्यसामर्थ्येनाङ्गाऽननुष्ठाने सति तद्विकल्पादनुत्पत्तेः कथमनपायो ऽधिकारस्य नापायस्तस्य यावद्विषयं प्रत्यभिज्ञानाद्विषयस्य भावार्थस्य कतिपयाङ्गवैगुण्येप्यनपेतत्वान्निजस्य च सर्वाङ्गोपसंहारसामर्थ्यस्य च तदनपाये ऽनपेतो ऽधिकारस्तदानीन्तनमागन्तुक कतिपयाङ्गाऽनुष्ठानसामर्थ्यमवलोक्य यावदुपसंहरणीयाङ्गसंपाद्यतामेवात्मनो ऽवगमयति । न

---

१ नेति नास्ति मू पु । २ सर्वाङ्गोपसंहारम । पु पा । ३ स्वाभाविकम । पु पा ।

नेदं चतुरस्रम्। इदमङ्ग[1] भवान्व्याचष्टां किं शक्त्यपेक्षो ऽधिकारो यथाधिकारं च प्रयोगः, आहो स्विच्छ्रुत्यपेक्षो ऽधिकारो, ऽधिकृतस्य तु यथाशक्ति प्रयोगः? पूर्वस्मिन्क-

ह्यस्ति सम्भवो ऽधिकाराऽवगतिरननुष्ठानं चेति। तस्मादधिकारा-ऽवगतिसामर्थ्यात्तस्यां दशायां यथाशक्त्युपसंह्रियमाणाङ्गाऽऽधेयोपका-रतामेवाऽन्यथानुपपत्तेः स्वकरणस्य कार्यमवलम्बते। सो ऽयमङ्गवैक ल्याद्गौणः शास्त्रार्थ इत्युच्यते। औत्सर्गिकी तु सकलाङ्गग्रामसपाद नीयकरणोपकारितैव नित्याऽधिकारस्येति सर्वाङ्गोपसंहारो मुख्यः शास्त्रार्थः। तस्मात्सूक्तं न सातत्येन प्रयोगो नाऽर्थावरुद्धेषु काले-ष्विति। नापि तस्यैव होमस्याऽऽहाराद्यवरुद्धेषु कालेषु यथा सतत-होमो न सतत सायमादिकालमपेक्षते, किं तर्हि अर्थाऽविरुद्धका-लाऽवलम्बन,मन्यथा संततत्वाऽभावप्रङ्गात्, न्यायतएवैतत्सतत हो-तव्य न तत्सायमादिसमयाऽपेक्षमिति, तथेह होमे सायमादिसमय-विधनात्तस्य च मध्यन्दिनादिसमये ऽवश्यमनुपसंहार्यत्वात्। तस्मान्न सातत्येन होमो यथाशक्ति चोपसंहारो नित्येषु न काम्येष्विति सर्वं चतुरस्रम्।

तदेकदेशिमत दूषयितुं विकल्पयति—नेद चतुरस्रम्। इद-मङ्ग भवान् व्याचष्टां कि शक्त्यपेक्षो ऽधिकारो यथाधिकार च प्रयोग, आहो यच्छ्रुत्यपेक्षो ऽधकारो ऽधिकृतस्य तु यथाशक्ति प्रयोगते' इति। अयमर्थः। अङ्गोपदेशसामर्थ्यादश्रुतमपि सर्वाङ्गोपसंहारनिजसाम-र्थ्यमनुपादेयत्वादधिकारविशेषणतामापद्यमइति तदपेक्षो ऽयमधि कारो भवति। यथाधिकारं च प्रयोग इत्येकः कल्पः। अपरस्तु यावज्जीवश्रुतिमात्राऽपेक्षो ऽधिकारो नाङ्गोपसहारसामर्थ्यमपेक्षते, तस्याऽश्रुतत्वादिति। तत्र प्रथम कल्प शक्त्यपेक्षो ऽधिकार इति

---

१ अथ मू पु पा०।

ल्पे यथैव कालविशेषयुक्ते कर्म्मणि तत्कालजीविनोऽधिकृताऽन्यस्य तद्विशिष्टकर्म्मोपसंहाराऽसामर्थ्यात्। अन्यथाऽन्यदापि अकुर्वतोऽधिकाराऽतिक्रान्तिः । पश्चिमे तु नाङ्गशक्तिरधिकारं विशिनष्टीति सातत्यप्रसङ्गः । न ब्रूमोऽङ्गशक्तिरधिकारं विशिनष्टीति, किं त्वङ्गशक्त्यपेक्ष एवाऽधिकार इति । तादृशस्यैव तु कस्य चिदङ्ग-

दृष्टान्तद्वयेनोपपाद्य दूषयति—यथैव कालविशेषयुक्ते कर्मणि 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्येवमादौ तत्कालजीवनाधिकृतादन्यस्याऽतत्कालजीवस्य तत्कालविशिष्टकर्मोपसंहारसामर्थ्याऽभावात् । अवश्यं च तदास्थेयमित्याह—अन्यथाऽन्यदापि पञ्चम्यादावपि अकुर्वतोऽधिकाराऽतिक्रान्तिः स्यात् । यथा राजसूये राजत्वमन्यस्य संपादयितुमशक्तेरधिकारं विशिनष्टि । न जातु ब्राह्मणवैश्यौ राजत्वमात्मनः संपादयितुमर्हतो, येन राजसूये राजकर्तृके ऽधिक्रियेयाताम् । तथाऽङ्गादेशाऽपेक्षत्वादधिकारस्य तत्सामर्थ्यविशिष्टजीवनमधिकारकारणमिति । भवत्वेवं तथापि को दोष? इत्यत आह—कुतः प्रथमे कल्पे तादृशस्याङ्गोपसंहाराऽसमर्थस्याऽधिकाराऽतिक्रान्तिः ।

द्वितीयं कल्पं श्रुत्यपेक्षोऽधिकार इति दूषयति—पश्चिमे तु नाङ्गशक्तिरधिकारं विशिनष्टीति सातत्यप्रसङ्गः । अस्यार्थः । यदा हि श्रुत्यपेक्षोऽधिकारस्तदा जीवनमात्रस्य श्रुतत्वात्तन्मात्रमेवाऽधिकारिविशेषणमिति होमादिसातत्यप्रसङ्गः । किं च काम्ये चाङ्गहानादननुष्ठाने ऽधिकाराऽतिक्रमः स्यात् । किं च पङ्ग्वादेश्चाऽधिकारप्रसङ्गो, न ह्यसौ न स्वर्गकामो न चाऽजीवनवान् ।

अत्रैकदेशी गूढाऽभिप्रायः प्रथमं पक्षमाश्रित्याह—न ब्रूमोऽङ्गशक्तिरधिकारं विशिनष्टीति, किं त्वङ्गशक्त्यपेक्ष एवाऽधिकार इति । किमिति तर्ह्यङ्गवैकल्ये नैमित्तिकं प्रयुज्यते? इत्याशङ्क्याह । तादृशस्यैव ह्यधिकारिणः कस्य चिदङ्गस्याऽसम्भवे ऽपि न प्रयोगो निव-

स्याऽसंभवे न प्रयोगो निवर्त्ततइति। वैगुण्याच्चापि फले ऽधिकारहेतुरेव नास्तीत्युक्तम्।

कोयमसंभवः? तदुपसंहारासामर्थ्यं, न तर्ह्यधिकृतस्तद्विशेषणत्वात्तस्य। अथाऽनुपसंहारो, ऽनङ्गत्वमेव। कादाचित्कमसामर्थ्यमसंभवो न तेनाऽधिकारात्पर्युदासो द्रव्यार्तनइति सामर्थ्यस्याऽधिकारिविशेषणत्स्य भ[illegible] [illegible]ऽधिकारिविषयस्य च तदानीमपि नैमित्तिकेषु भा[illegible]

काम्ये तर्हि हीनाङ्गे प्रयुज्यमाने समर्थे[illegible] [illegible]तिक्रान्तिः प्रसज्येतेत्याशङ्क्याह—वैगुण्याच्चापि फले ऽ[illegible] [illegible]नास्तीत्युक्तम्। अयमर्थः। वैगुण्ये सत्यविद्यमानफलत्व[illegible] [illegible] करणत्वमिति यावत्। करणीभूतस्य भावार्थस्य विषयन्[illegible] [illegible]ऽकरणत्वे विषयत्वाऽभावा[1]दधिकाराऽवगम[illegible] [illegible]ऽननुष्ठाने ऽधिकाराऽतिक्रान्तिरित्युक्तं कार्य[illegible] [illegible]त्काम्य[illegible] [illegible] तदेतद्विकल्प्य दूषयति— कोऽयमसम्भवो [illegible] [illegible]सामर्थ्यं न तर्ह्यधिकृतः, तद्विशेषणत्वात्तस्य। अथ[illegible] [illegible]हाऽसामर्थ्यमङ्गस्याऽसम्भवस्तत्कारणत्वेनोप[illegible] [illegible] सामर्थ्यस्याधिकारिविशेषणस्याऽसम्भवादनधिकृत[illegible] [illegible] नैमि[illegible]कमङ्गविकलं प्रयुञ्जीत। अथाऽनुपसंहारो, ऽनङ्गत्वमेव[2]। अत्र समर्थो ऽपि नोपसंहरति किंचिदङ्गमनुपसंहार एवाऽङ्गस्या[illegible] उच्यते तदा न नूनमेतदङ्गं, न ह्यस्ति सम्भवो यद्विद्वान् समर्थः किञ्चिदङ्गमपहाय प्रधानं प्रयुङ्क्तइति सेयमुभयतस्पाशा रज्जुः।

साम्प्रतमेकदेशी स्वाऽभिप्रायमविष्करोति—कादाचित्कमसामर्थ्यमसम्भवो न तेनाऽधिकारात्पर्युदासो द्रव्याप्रतिसमाधेयाऽङ्गवैकल्यइव। इदमत्राकूतम्। द्वेधा खल्विह पुमांसो व्यवस्थिताः। केचिदसमर्थाः केचित्तु तिरोहितसामर्थ्याः। तत्र ये तावदसमर्था अन्धपङ्ग्वादयः शूद्रादयश्च तेषामनधिकार एव, सामर्थ्यस्याऽधि-

[1] विषयाभावात् पु पा।  [2] अनङ्गमेव २ पु पा०।

**प्रतिसमाधेयाङ्गवैकल्यवत् । सत्यं, न शूद्रवदेकान्ततो न**

कृतविशेषणस्याऽभावात् । ये ऽपि समर्था. कुतश्चिन्निमित्तादभिभूत-सामर्थ्यास्तेषामधिकृतविशेषणस्य सामर्थ्यस्य सद्भावात्को ऽधिकार-विलयहेतुः ? न खल्वभिभूतसामर्थ्यो भवत्यसमर्थः । न च कार्य-व्यवसेयत्वात्सामर्थ्यस्य कार्याऽभावे तदप्रमाणमिति वाच्यम् । प्रती-तचरसामर्थ्यस्य कार्यकारिणः पश्चादकरणे पुनश्च करणे किं साम-र्थ्यविनाशोत्पादौ, आहो स्वित्तिरोभावाऽऽविर्भावौ ? इति विषये परैव कल्पना ज्यायसी, लाघवात्, न पूर्वा । तदा हि समर्थ्यरूप-धर्मकल्पनाया गौरवप्रसङ्गः । ततश्च सामर्थ्यस्याऽधिकृतविशेषणस्य विद्यमानत्वादुपक्रमे प्रयोगस्य साध्वेव चाऽधिकृत इति यथाशक्ति नैमित्तिकमारभेत समापयेच्चेति । अत्रैव निदर्शनमाह—द्रव्याऽप्रतिस-धेयाङ्गवैकल्यवत् ।

तद् दूषयति—सत्यं न शूद्रवदेकान्ततो न त्वस्याऽधिकारहेतु विगमे ऽधिकारो न निवर्तते । अयमत्राऽभिसन्धिः । इदमत्र भवान् व्याचष्टां यदेतत्सामर्थ्यमधिकृतविशेषणमुच्यते तत् किं साक्षात्साम-र्थ्यस्य श्रुतेराहो स्विदङ्गोपदेशवचनात् ? तत्र तावत्प्रथमः कल्पो ऽनु-पलब्धिनिराकृत एव । द्वितीये तु कल्पे ऽङ्गोपदेशसामर्थ्याद्यथा-विनियोगमधिकारव्यवस्थितेरयमधिकारवधिः साङ्गस्य प्रधानस्याऽनु-ष्ठानमाक्षिपन् कर्तारमन्तरेण तदनुपपत्तेः कर्तारमाक्षिपति । न चाऽसामर्थ्यस्य कर्तृत्वं कारकविशेषस्य तद्भावाच्छक्तिमतश्च कारक-त्वात् । क्रियानिमित्तं हि कारकं, निमित्तं च नाम तदुच्यते यस्मिन् सति नैमित्तिकं भवत्येवेत्युपरिष्टाद्वक्ष्यते । न च द्रव्यस्वरूपमात्रे सति क्रिया भवत्येव । तस्माच्छक्तिमदुपकारकत्वाऽध्यवसानम् । यथा न द्रव्यमात्रं कारकं तथा न शक्तिमदपि । अभिभूतशक्तेरपि

त्वधिकारहेतुविगमे ऽधिकारो न निवर्त्तते वीतायामिव फलेच्छायां कामिनः। अन्यथा ऽधिकृतस्य समर्थस्य स्वर्गशक्तिमतः क्रियाया अनुपजननात्। ततश्चोद्भूतशक्तेरेव सहकारिसमवधानशालिनः कर्तृत्वं कारकत्वं चेति रमणीयम्। न चाऽधिकारमन्तरेण कर्तृत्वं न च नियोज्यमन्तरेणाऽधिकार इति तदाविर्भूतसामर्थ्ये कर्तृताप्रणाडिकया नियोज्यताऽवस्थामुपगतमनुपादेय इति योज्यविशेषणतामनुभवति। यथा चाऽसमर्थवदभिभूतसामर्थ्यो ऽप्यनियोज्यो नाऽधिकृतश्च। तदुक्तं 'न त्वस्याऽधिकारहेतुत्वविगमे ऽधिकारो न निवर्तत' इति। न सामर्थ्यमात्रमनुष्ठानाऽनुपयोगि सदप्यधिकारमनुवर्त्तयति, किं तर्हि यदनुष्ठानहेतुस्तद्द्रव्यविशिष्टम्, तस्यैवाऽधिकारहेतुत्वात्। तच्चेदुद्गतमधिकारो ऽपि निवर्त्ततएवेति न कस्य चिदङ्गस्योपसंहारसामर्थ्ये तिरोभावे ऽप्यप्रयुञ्जानस्य नैमित्तिकाऽधिकाराऽतिक्रान्तिरित्यर्थः। अपि च जातेष्टौ भवता संवलिताऽधिकारपक्षे जन्मवतः पुत्रस्येन्द्रियादिकामस्य पितुरधिकारादितरकाम्यवत्करणीभूतस्यैव भावार्थस्य विषयभावात्तन्मात्रविषयत्वे काम्यत्वाऽनुपपत्तेर्नैमित्तिकस्य च करणीभूतभावार्थविषयत्वे ऽप्यविरोधात् यथाशक्तिप्रयोगाऽनुपपत्तिरित्यास्तां तावत्।

अथोच्येत अधिकाराऽवगमः प्रवृत्तिहेतुत्वात्प्रवृत्तेः पूर्वमुपयुज्यते, न प्रवृत्तावुपजातायां, न जातूपजनितकुम्भे कुम्भकारः कुम्भकरणाय घटते। तदुद्भूतसाङ्गप्रधानकरणसामर्थ्यो ऽधिकृतः सन्यदि कुतश्चित्प्रमादतो ऽङ्गैकदेशे न स्वसामर्थ्यमुत्पश्यति तथापि तदा ऽनधिकृतो न विरन्तुमर्हतीत्यत आह—वीतायामिव फलेच्छायां कामिन'। इदमत्राकूतम्। अस्ति हि किं चिन्निमित्तकारणमपि यदुपजनितकार्ये निवर्त्तमानं कार्यमपि निवर्त्तयति। यथा ऽपेक्षाबुद्धिर्द्वित्वसंख्यानिमित्तमुत्पादितद्वित्वा निवर्त्तमाना द्वित्वमपि निवर्त्तयति। समवायस्य समवायिकारणेषु सर्वत्र प्रायेणेयमेव गतिः।

**कामस्य कादाचित्काङ्गशक्तिवैकल्ये फलाऽनुत्पत्तावप्यधि-**

तदिहापि स्वर्गकामः प्रवृत्तो ऽप्युपरतकामो नाऽधिकारी केवलं शिष्टविगर्हणाभिया ऽनधिकृतो ऽपि कर्म समापयति । तथा निमित्तवानपि तिरोहितसामर्थ्यो ऽसन्ननधिकारीत्यकुर्वन्नाधिकारमतिक्रामेत् । शिष्टगर्हणभयात्तु समापन काम्ये ऽपि समानमिति न नैमित्तिकस्य विरोधायाऽलमिति ।

यदि च समर्थस्य प्रवृत्तस्य पश्चात्सामर्थ्याऽभिभवेन प्रवृत्त्युपरमे ऽधिकाराऽतिक्रान्तिर्नैमित्तिके काम्ये ऽपि[1] प्रसज्येतेत्याह—अन्यथा ऽधिकृतस्य समर्थस्य स्वर्गकामस्य कादाचित्काऽङ्गवैकल्ये[2] फलाऽनुत्पत्तावधिकाराऽतिक्रान्ति स्यात् । ये पुनराहुः । एकाङ्गवैकल्ये ऽपि प्रयोगस्य प्रत्यभिज्ञानात्प्रवृत्तस्यापि नाऽधिकारविगमो, न खलु भग्नशृङ्गो गौरिति । तान् प्रति काम्ये ऽपि समानमित्युत्तरम् । प्रसिद्धतरत्वाच्च तदुपेत्य दूषणान्तरमाह—अप्राप्तकालं चाऽकुर्वतो ऽधिकाराऽतिक्रान्ति स्यादिति चेनाऽनुषज्यते । अप्राप्तकालं च पश्चम्यामिष्टिप्रयोगमकुर्वतो ऽधिकाराऽतिक्रान्तिर्भवेदित्यर्थः । अथापि स्यात् किमित्येवमप्राप्तकालमननुतिष्ठन्नधिकारमतिक्रामति । न हि निमित्तानन्तरमेव नैमित्तिकं कर्तव्यमिति प्रमाणमस्ति, किं तर्हि निमित्ते सतीति सत्तामात्रमवगम्यते। शास्त्रान्मीमांसित्वा व्यवस्थापितमिदं हि जातेष्टौ । एवं हि श्रूयते । 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति । तत्र संशयः किं पुत्रजन्माऽनन्तरमेव निर्वप्तव्य,मुत कृते जातकर्मणी ? ति । किं प्राप्तम् । पुत्रजन्माऽनन्तरमिति । कुत ? जातइति निमित्तश्रुतेः । सत्यस्मिन्नक्रियायां तद्विरोधप्रसङ्गादिति प्राप्ते उच्यते । कृते जातकर्मणीति । कुत ? इष्टिभावनायामस्यां भाव्याकाङ्क्षायामर्थवादतो बहवः खल्विह भावेन सम्बन्धु

१ नैमित्तिकस्य काम्ये ऽपि २ पु पा । २ अङ्गशक्तिवैकल्ये २ पु॰ पा ।

काराऽतिक्रान्तिः स्यात् अप्राप्तकालं चाऽऽकुर्वतः ।

अथाऽधिकृतो ऽपि जातपुत्रवत्कालशौचे कालमुपसंहृत्य कुर्वन्नाऽधिकारमतिक्रामति निमित्तानन्तर्य्यस्याऽशसमर्थास्तेजस्वितेन्द्रियावित्वादय पुत्रगामिनः श्रूयन्ते । तत्तेषामेव रात्रिसत्रन्यायेन फलत्वकल्पना । यदि च जातमात्रे एव कुमारे इष्टिरियं निरूप्येत ततो ऽकृतजातकर्मणा स्तन्यदाननिषेधादिष्टिक्रियायां च कालयोगात् कुमारविपत्तिप्रसङ्गात्तद्गुणविधानार्थमिष्टिरनर्थिका स्यादिति न जातमात्रे इति निरूपितम् ।

तथेदमपर चिन्त्यते । अवगतमेतन्नाऽकृते जातकर्मणीति । इदमिदानीं सन्दिह्यते किं जातकर्माऽनन्तरमेव निर्वप्तव्य,माहोस्विदूर्ध्वं दशरात्रादिति । कुमारमरणभयात्कारणाज्जन्माऽऽनन्तर्यमतिक्रान्तम् । कृते तु जातकर्मणि पुत्रजन्मनो निमितस्य सन्निधानादिति क्रमकारणाऽभावाज्जातकर्माऽनन्तरमेवेति प्राप्ते ब्रूमः । शुचिना कर्म कर्तव्यमिति शौचस्याप्यधिकारकारणत्वादानन्तर्यस्य च जातकर्मणैव बाधितत्वात् सति भावमात्रतया निमित्तभावाऽवलम्बनाद्दशरात्रस्य परस्तादपि तदुपपत्तेरतीते दशरात्रे इति सिद्धान्तः ।

पुनश्चिन्त्यते दशरात्राऽनन्तरमियमिष्टि,रुताऽमावास्यादिकालप्रतीक्षे[१]ति । तत्राऽत्यन्तव्यवधाने सति निमित्तस्य निमित्तभावः अत एकान्ततो बाधितः स्यादिति दशरात्राऽनन्तरमेवेति प्राप्ते ऽभिधीयते । कालप्रतीक्षेति । तदवच्छिन्नस्य निमित्तस्य निमित्तभावान्नात्वतिक्रान्ते दशरात्रे दर्शपूर्णमासकालावच्छिन्नसद्भावो जातपुत्रो जातपुत्रतामतिवर्तते । तदेव जातेष्टिन्यायेन निमित्तानन्तर्यस्याऽशाब्दत्वात् पञ्चम्यामिष्टिमप्रयुञ्जानो ऽपि नाऽधिकारमतिपततीत्याह— अथाऽधिकृतो जातपुत्र इव कालशौचे कालं च शौचं च निमित्ते पुत्रजन्मन्युपसंहृत्य यथा जातपुत्रो दशरात्रस्य परस्तादमावास्यायां पौर्णमास्यां वा जातेष्टिं कुर्वन्नाऽतिपतत्यधिकार तथा जीवनवानपि

१ सप्तम मू पु पा ।

## पुरुषाश्मवदिति चेत्तथाऽपि ॥ २ । २ । ७ ॥

ननु पुरुष एव प्रधानप्रवर्तकः । स तु स्वयमप्रवर्तमानः कथं परं प्रवर्तयेदिति चेत् "पुरुषाश्मव"दिति ब्रूमः । लोके यथा पङ्गुः पुरुषः स्वयमप्रवर्तमानोऽन्धं प्रवृत्तिशक्तिमन्तं प्रवर्तयति, यथा वाऽयस्कान्तोऽश्मसन्निधिमात्रेणायः प्रवर्तयति, एवं पुरुषः प्रवर्तक इति चेन्न । यतस्तथाऽपि दोषाणामनिर्मोक्षः । तथा हि प्रधानस्य पुरुषप्रेर्यत्वे प्रधानं स्वतन्त्रमिति स्वाभ्युपगमविरोधः । पुरुषस्य प्रवर्तकत्वेऽकर्तृत्वहानिः, स्वस्य व्यापारं विना प्रवर्तकत्वायोगात्, पङ्गोरपि वाग्व्यापारस्य सत्त्वात् । अयस्कान्तस्य त्वनित्यसन्निधिरेव व्यापारः । प्रधानपुरुषसन्निधेर्नित्यत्वेन व्यापारत्वायोगः । नित्यस्यापि व्यापारत्वे प्रधानप्रवृत्त्यविच्छेदप्रसङ्ग इत्यादयो दोषा द्रष्टव्याः । ब्रह्मणस्त्वाविद्यकं प्रवर्तकत्वमिति न कौटस्थ्यहानिः ॥

## अङ्गित्वानुपपत्तेश्च ॥ २ । २ । ८ ॥

अपि च गुणत्रयसाम्यावस्थारूपा प्रकृतिः, साम्यावस्थाप्रच्युत्या गुणानामङ्गाङ्गिभावे महदाद्युत्पत्तिरिति वदता सांख्येनेदं वक्तव्यम् । प्रकृतिः किं कूटस्था, उत विकारिणी । आद्ये परस्परानपेक्षाणां गुणानां साम्यावस्थाप्रच्युत्याऽङ्गाङ्गिभावानुपपत्तेः कार्यानुदयप्रसङ्गः । प्रच्युत्यङ्गीकारे स्वरूपहान्यापत्तिः । द्वितीये किं स्वतः प्रच्युतिः, उतान्यतः । नाद्यः सदाकार्यप्रसङ्गात् । न द्वितीयः पुरुषस्योदासीनत्वादभ्युपगमहानेश्च । अतः प्रच्युत्यभावेनाङ्गाङ्गिभावानुपपत्तेः कार्याभावप्रसङ्ग इत्यर्थः ॥

## अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ २ । २ । ९ ॥

नन्वनपेक्षस्वभावाः कूटस्थाश्च गुणा नानुमीयन्तेऽस्माभिः, किं त्वन्यथा प्रकारान्तरेणैव यथा कार्योत्पत्तिसम्भवस्तथाऽनुमीयन्ते कार्यानुमेयत्वात्प्रधानस्येत्यङ्गाङ्गिभावसम्भवात्कार्योत्पादः सम्भवतीति चेन्न । ज्ञशक्तिवियोगाद्गुणानां ज्ञानशक्तिरहितत्वादित्यर्थः । अयं भावः । अचेतनानां गुणानां साम्यावस्थाप्रच्युत्यादियोग्यत्वेऽपि प्रच्युतेर्निर्निमित्तत्वासम्भवात्किञ्चिन्निमित्तं वक्तव्यम् । तथा चान्यस्य निमित्तस्यासम्भवेन स्वतो वैषम्ये सदा वैषम्यं स्यात्स्वतोऽप्यवैषम्ये सदा साम्यप्रसङ्ग इत्यङ्गाङ्गित्वानुपपत्तिस्तदवस्थेति कार्यानुत्पादोऽपि तदवस्थ इति ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ २ । २ । १० ॥

सांख्या हि क्वचिन्महतः पञ्चतन्मात्रसर्गं वदन्ति क्वचिदहङ्कारात् । क्वचिदेकादशेन्द्रियाणि क्वचिद्बाह्येन्द्रियाणि त्वगिन्द्रियेऽन्तर्भाव्य सप्तेन्द्रियाणीति स्थापयन्ति । तथा च परस्परविप्रतिषेधादसमञ्जसं सांख्यमतमित्यर्थः । तस्मात्सांख्यमतस्य भ्रान्तिमूलत्वात्तदीययुक्तिविरोधस्समन्वयस्य नास्तीति सिद्धम् ॥

ननु प्रपञ्चस्य ब्रह्मोपादानकत्वे ब्रह्मवच्चैतन्यं स्यात्कारणगुणस्य कार्येऽवश्यंभावादित्याशङ्क्येमं नियमं तदीयप्रक्रियया व्यभिचारयति ।

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ २।२। ११ ॥

प्रपञ्चस्य प्रधाननिष्ठाशब्दत्वादिगुणानन्वयात्प्रधानानुपादानकत्ववद्ब्रह्मगुणचेतनत्वानन्वयाद्ब्रह्मोपादानकत्वं न स्यादिति दृष्टान्तसङ्गत्याऽस्यारम्भः । यद्यपि स्वपक्षदोषनिरासात्मकस्यास्याधिकरणस्य नात्र सम्बन्धः किं तु

स्मृतिपाद एव, तथाऽप्युक्तावान्तरसङ्गतिलोभादिहलिखितमिति मन्तव्यम् । अत्र चेतनाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयः । स किं "कारणगुणाः कार्ये स्वसमानजातीयगुणारम्भका"इति न्यायेन विरुध्यते न वेति सन्देहे विरुध्यत इति प्राप्ते व्यभिचारान्न विरोध इति राद्धान्तः । सूत्रे "वा" शब्द "आ"र्थोऽनुक्ताणुसमुच्चयं ब्रूते । तथा च ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घाणुवच्चेतनाद्ब्रह्मणोऽचेतनं जगद्भवतीति योजना । वैशेषिका हि ह्रस्वादणोश्च द्व्यणुकान्महद्दीर्घं च त्र्यणुकं जायते, द्व्यणुकगतह्रस्वत्वाणुत्वे तु त्र्यणुके स्वसमानजातीयह्रस्वत्वाणुत्वे नारभेते, किं तु द्व्यणुकगतत्रित्वसंख्या त्र्यणुके महत्त्वादिकमारभत इति वदन्ति । एवं परिमण्डलात्परमाणोरणु द्व्यणुकं जायते, परमाणुगतपारिमाण्डल्यं तु द्व्यणुके पारिमाण्डल्यं न जनयति, किं तु परमाणुगतद्वित्वसंख्या द्व्यणुकेऽणुत्वादिकमारभत इति प्रक्रियां दर्शयन्ति । एवं दर्शयतां वैशेषिकाणां कारणगुणाः कार्ये स्वसमानगुणारम्भका इति नियमाभावं वदतां कथं लज्जा न भवेत् व्यभिचारस्य स्फुटत्वादिति तात्पर्यम् । "एतेन शिष्टापरिग्रहा अपि व्याख्याता"इत्यस्यायं प्रपञ्च इति न पौनरुक्त्यं शङ्कनीयमिति ॥

इदानीं प्रकृतं परमतनिरासमुपक्रमते ।

## उभयथाऽपि न कर्मातस्तदभावः ॥ २ । २ । १२ ॥

प्रासङ्गिकाव्यवहितेनास्य सङ्गतिर्नापेक्षितेति व्यवहितेनोच्यते । ननु प्रधानस्य चेतनानधिष्ठितत्वात्कारणत्वाभावे तर्हि चेतनाधिष्ठिताः परमाणवः कारणं जगत इति प्रत्युदाहरणेनास्यारम्भः । अत्र परमाणुप्रक्रियया

जगदुत्पत्तिरिति वैशेषिकसिद्धान्तो विषयः । स किं मानमूलो भ्रान्तिमूलो वेति विशये, मानमूल इति प्राप्ते ब्रूमः । वैशेषिकाः खलु कर्मणा सृष्टेः पूर्वं निश्चलयोः परमाण्वोः संयोगे द्व्यणुकाद्युत्पत्तिरिति वदन्ति । तस्य कर्मणः किञ्चिन्निमित्तमभ्युपगम्यते वा न वा । आद्ये कर्मनिमित्तत्वेन प्रसिद्धं जीवप्रयत्नाभिघातादिकमङ्गीकर्तव्यम् । न हि तत्सम्भवति, सृष्ट्युत्तरकालीनत्वात्तस्य । द्वितीये कर्मानुपपत्तिः । अत उभयथाऽपि न कर्म । अतः कर्माभावात्तदभावो द्व्यणुकादिक्रमेण सृष्ट्युत्पादाभाव इत्यर्थः । यद्वा जीवादृष्टवशादाद्यं कर्म परमाणुष्विति तत्सिद्धान्तः । तथा च तददृष्टं किं जीवनिष्ठं वा परमाणुनिष्ठं वा । उभयथाऽपि न कर्म, अदृष्टस्याचेतनस्य कर्माभिमुख्यायोगात्, तथात्वे सर्वदा सृष्टिप्रसङ्गात् । न च जीवोऽदृष्टस्य प्रेरकः, तदानीं तस्य ज्ञानवत्त्वाभावात् । न च वैशेषिकाभिमत ईश्वरः प्रेरक इति वक्ष्यते । अतः सर्गाभाव इत्यर्थः । यद्वा, परमाण्वोः संयोगोत्पत्तौ सृष्टिः, विभागोत्पत्तौ च प्रलयः, तयोश्च संयोगविभागयोः कर्मैव हेतुरिति तत्सिद्धान्तः । तथा च, संयोगहेतुः कर्म नास्तीत्युक्तम् । एवं विभागहेतुकं कर्म नास्ति, निमित्तस्यादृष्टस्य नोदनादेरसम्भवात् । अदृष्टं च भोगार्थमेव न प्रलयार्थमित्युभयथाऽपि न कर्म । अतः संयोगविभागहेतुकर्माभावात्तदभावस्तयोः सृष्टिप्रलययोरभाव इत्यर्थः । तस्मादनुपपन्नः परमाणुकारणवादः ॥

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः॥२।२।१३॥**

तदभाव इत्यनुषङ्गः । तस्य परमाणुकारणवादस्यासम्भव इत्यर्थः । कुतः । परमाणुद्व्यणुकयोः समवायाभ्यु-

पगमात् । अभ्युपगमे को दोषस्तत्राह "साम्यादनवस्थिते"रिति । यथा द्व्यणुकं परमाणुभ्यामत्यन्तं भिन्नं सत् समवायमपेक्षते, एवं समवायोऽपि समवायिभ्यामत्यन्तं भिन्नः सन्नन्येन समवायेन समवायिभ्यां सम्बध्येत भिन्नत्वसाम्यादसम्बद्धस्य सम्बद्धत्वादर्शनात् । तथा च तस्यापि भिन्नत्वसाम्यात्समवायान्तरमित्यनवस्था स्यादित्यर्थः । स्वरूपस्य सम्बन्धत्वे समवायलोपप्रसङ्ग इति बोध्यम् । तथा च समवायासिद्धौ समवेतद्व्यणुकादिसृष्ट्यसिद्धिः स्यादिति भावः ॥

**नित्यमेव च भावात् ॥ २ । २ । १४ ॥**

परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेर्नित्यमेव भावात्प्रलयाभावप्रसङ्गः । निवृत्तिस्वभावत्वे निवृत्तेर्नित्यमेव भावात्सृष्ट्यभावप्रसङ्ग इत्यर्थः ॥

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ २ । २ । १५ ॥**

चतुर्विधाः परमाणवो रूपस्पर्शादिमन्तो नित्या अणवश्चेति वैशेषिकसिद्धान्तः । स नोपपद्यते । तथा हि, परमाणवोऽनित्याः स्थूलाश्च भवितुमर्हन्ति, रूपादिमत्त्वात्पटादिवत् । पटो हि रूपादिमत्त्वात्स्वकारणतन्त्वपेक्षया स्थूलोऽनित्यश्च । तद्वज्जगत्कारणस्यापि रूपादिमत्त्वेऽनित्यत्वप्रसक्तौ स्वकारणापेक्षया स्थूलत्वं स्यादिति न जगत्कारणस्य रूपादिमत्त्वमिति तात्पर्यम् । सूत्रार्थस्तु । भवन्मते जगत्कारणस्य रूपादिमत्त्वादणुत्वनित्यत्वविपर्ययः, स्थूलत्वमनित्यत्वं च प्रसज्येत, लोके रूपादिमतः पटादेस्तथा दर्शनादिति ॥

**उभयथा च दोषात् ॥ २ । २ । १६ ॥**

रूपरसगन्धस्पर्शात्मिका पृथिवी स्थूला दृश्यते, रूपरसस्पर्शात्मिका आपः सूक्ष्माः, रूपस्पर्शात्मकं तेजः सूक्ष्मतरं, स्पर्शात्मको वायुः सूक्ष्मतम इत्यनुभवागमसिद्धा प्रक्रिया । तत्र पृथिव्यादिवत्परमाणवोऽप्युपचितापचितगुणात्मकाः कल्प्यन्ते, न वा । आद्येऽणुत्वव्याघातः, उपचितापचितगुणात्मकपृथिव्यादेः स्वरूपोपचयापचयदर्शनात् । गुणानां द्रव्यादतिरिक्तत्वेऽपि तादृशगुणवत्त्वेन पृथिव्यादीनामुपचयादिदर्शनादणुत्वव्याघात एव । न हि गुणगुणिनोर्भेदः सम्भवति, भेदे गवाश्ववद्गुणगुणिभावानुपपत्तेः । द्वितीये तत्कार्यपृथिव्यादिषु रूपाद्यनुपलम्भप्रसङ्गः । इत्युभयथाऽपि दोषादनुपपन्नः परमाणुकारणवादः ॥

**अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ २ । २ । १७ ॥**

प्रधानवादो हि सत्कार्यत्वाद्यंशेन मन्वादिभिः शिष्टैः परिगृहीतः । परमाणुकारणवादस्तु केन चिदप्यंशेन कैश्चिदपि शिष्टैर्न परिगृहीत इति शिष्टापरिगृहीतत्वाच्चात्यन्तमनपेक्षा परमाणुकारणवादे कर्तव्या वेदविद्भिरित्यर्थः ॥ सूत्रे "च" शब्देन वैशेषिकाभिमतषट्पदार्थासम्भवः सूचितः । स चासम्भवः प्रतिपादितो भगवता भाष्यकृता । तस्माद्भ्रान्त्येकमूलवैशेषिकादिमतेन न समन्वयस्य विरोध इति सिद्धम् ॥

**समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ २ । २ । १८ ॥**

वैशेषिकास्तावत्परिणामभेदेन देहादेराशुतरविनाशित्वाङ्गीकारादात्मनः स्थायित्वाङ्गीकाराच्चार्धवैनाशिकाः, सर्वक्षणिकवादिनस्तु पूर्णवैनाशिका इत्यर्धवैनाशिकवैशे-

षिकमतनिराकरणानन्तरं पूर्णवैनाशिकमतं बुद्धिस्थमिदानीं निराक्रियत इत्यवान्तरसङ्गतिर्द्रष्टव्या । तत्र तावद्बुद्धमुनिनाऽऽगम उपदिष्टः। स चागमो वैभाषिक सौत्रान्तिक विज्ञानवादिसर्वशून्यवाद्याख्यचतुर्विधशिष्यप्रतिपत्तिवैचित्र्याच्चतुर्विधो भवति । तत्र वैभाषिकसौत्रान्तिकयोर्ज्ञानं तदतिरिक्तपदार्थाश्च सर्वे क्षणिकाः सत्यभूताः सन्ति। इयान्परं भेदः । वैभाषिकस्य घटादिपदार्थाः प्रत्यक्षाः, सौत्रान्तिकस्य तु ज्ञाने घटाद्याकार उत्पन्ने तेनाकारेण प्रत्यक्षेणाप्रत्यक्षघटादयो ऽवगम्यन्त इति । तत्रादौ वैभाषिकसौत्रान्तिकयोर्बाह्यास्तित्वाविशेषात्तयोर्मतमेकीकृत्य, तन्मतं प्रमाणमूलं भ्रान्तिमूलं वेति सन्देहे प्रमाणमूलमिति प्राप्तम् । तथा हि पृथिव्यप्तेजोवायवश्चत्वारि भूतानि चतुर्विधपरमाणुपुञ्जस्वरूपाणि । एवं भौतिकानि रूपादिविषयेन्द्रियाणि परमाणुपुञ्जस्वरूपाणि । न हि परमाणुसमूहव्यतिरेकेणावयवीभूतं किञ्चित्कार्यमस्तीति। परमाणुहेतुक एव पृथिव्यादिसमुदायो बाह्यः । आध्यात्मिकश्च समुदायः स्कन्धहेतुकः । तथा हि रूपविज्ञानवेदनासंज्ञासंस्काराः पञ्चेमे स्कन्धाः । तत्र रूपस्कन्धः सविषयेन्द्रियाणि । विषयाणां रूपादीनामाध्यात्मिकत्वमाध्यात्मिकेन्द्रियसम्बन्धाद्द्रष्टव्यम् । अहमित्यालयविज्ञानप्रवाहो विज्ञानस्कन्धः। सुखादिप्रत्ययो वेदनास्कन्धः। गौरश्व इत्यादिशब्दादिविशिष्टवस्तुविषयकसविकल्पकप्रत्ययः संज्ञास्कन्धः। रागद्वेषमोहधर्माधर्माः संस्कारस्कन्धः। तत्र विज्ञानस्कन्धश्चित्तमित्यात्मेति च गीयते । इतरे स्कन्धाश्चैत्ताः। एतेषां चित्तचैत्तानां स्कन्धानां समुदायः सर्वव्यवहारास्पदम् । आध्यात्मिकश्च समुदायः स्कन्धहेतुकः । इति सर्वक्षणिकत्ववादिनोर्वैभाषिकसौत्रान्ति-

कयोर्मतम् । तन्निराकरोति "समुदाय उभयहेतुकेऽपि तदप्राप्ति"रिति । उभयहेतुकेऽपि समुदाये परमाणुहेतुके बाह्यसमुदाये स्कन्धहेतुक आध्यात्मिकसमुदाये च तदप्राप्तिस्तस्य समुदायस्याप्राप्तिरित्यर्थः । अचेतनानां परमाणूनां स्कन्धानां च स्वतः समुदायायोगादन्यस्य च स्थिरस्य चेतनस्य समुदायकर्तुरनभ्युपगमादिति सूत्रवाक्यशेषः ॥

**इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ २ । २ । १९ ॥**

ननु संहन्तुश्चेतनस्याभावेऽपि सङ्घात उपपद्यते । तथा ह्यविद्यासंस्कारो विज्ञानं नामरूपं षडायतनं स्पर्शो वेदनेत्येवंजातीयकानामविद्यादीनामितरेतरप्रत्ययत्वादितरेतरकारणत्वाद्घटीयन्त्रवदनिशमावर्तमानेष्वप्यविद्यादिष्वर्थादाक्षिप्तो निमित्तमात्रतः सङ्घात उपपद्यत इति शङ्कार्थः । कार्यं प्रत्ययने जनकत्वेन गच्छतीति व्युत्पत्त्या प्रत्ययशब्दः कारणवाचकः । अविद्यादीनामयमर्थः । क्षणिकेषु स्थिरत्वनित्यत्वभ्रान्तिरविद्या । सा च विषयेषु रागाद्यात्मकसंस्कारहेतुः । स च संस्कारो गर्भस्थस्याद्यं विज्ञानं जनयति । तस्माच्चालयविज्ञानात्पृथिव्यादिचतुष्टयं शरीरस्य समुदायस्य कारणभूतं जायते । तदेव नामाश्रयत्वान्नामेत्युच्यते । तच्च नाम सितासितादिरूपं तच्छरीरं जनयति । गर्भभूतस्य देहस्य कललबुद्बुदाद्यवस्था नामरूपशब्दार्थ इति पर्यवसन्नम् । पृथिव्यादिचतुष्टयं नामरूपं च शरीरं विज्ञानधातुश्चेति षडायतनानि यस्येन्द्रियजातस्य तत् षडायतनम् । नामरूपेन्द्रियाणां मिथः सम्बन्धः स्पर्शः । ततः सुखादिका वेदना । ततः पुनरविद्यादय

इति । निराकरोति "ने"ति । कुतः । उत्पत्तिमात्रनिमित्तत्वात् । अयमर्थः । द्विविधो हि कार्योत्पादस्तवाभिमतः, हेत्वधीनः कारणसमुदायाधीनश्चेति । तत्र हेत्वधीनो यथा बीजादङ्कुरोऽङ्कुरात्पत्रं पत्रात्काण्डमित्यादौ । कारणसमुदायाधीनो यथा पृथिव्यप्तेजोवाय्वाकाशकालविशेषाणां मेलने सति तेभ्य उपकृताद्बीजादङ्कुरो जायते । एवमाध्यात्मिककार्योत्पादोऽपि पूर्ववद्द्विविधः । तत्राद्यो हेत्वधीनः कार्योत्पादोऽविद्यादीनाम् । द्वितीयस्तु पृथिव्यप्तेजोवाय्वाकाशकालालयविज्ञानानां समुदायात्कार्योत्पाद इति । कार्येऽङ्कुरादौ काठिन्यस्नेहपाकादीनां दर्शनात्पृथिव्यादीनां कारणत्वमूह्यते । उभयविधेऽपि कार्योत्पादे न चेतनापेक्षेत्यत आद्यमङ्गीकृत्य द्वितीयकार्योत्पादं हेतुसमुदायाधीनं दूषय "त्युत्पत्ती"ति । अविद्यादीनामितरेतरकारणत्वेऽप्युत्पत्तिमात्रे निमित्तत्वान्न हेतुसङ्घाताधीनः कार्योत्पादः सम्भवति, संहन्तुः स्थिरस्य चेतनस्यानङ्गीकारादित्यर्थः ॥

सर्वक्षणिकत्ववादिनां हेत्वधीनोऽपि कार्योत्पादो न सम्भवतीत्याह ।

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २ । २ । २० ॥

कार्यकाले च विद्यमानस्यैव मृदादेः कारणत्वं दृश्यते, न तु नष्टस्य । भवन्मते तूत्तरस्य कार्यक्षणस्योत्पादे पूर्वस्य कारणक्षणस्य निरोधान्नाशाङ्गीकारान्न हेत्वधीनोऽपि कार्योत्पादः सम्भवतीत्यर्थः ॥

ननु निर्हेतुक एव कार्योत्पादोऽस्तु, तथा च नोक्तदोष इत्याशङ्क्याह ।

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२।२।२१॥

असति हेतौ कार्योत्पत्त्यङ्गीकारे, पूर्वज्ञानचक्षुराले कविषयेषु चतुर्षु हेतुषु सत्सु कार्यं नीलादिज्ञानं जायत इत्यस्याः प्रतिज्ञाया उपरोधः स्यात् । अन्यथा कार्यं सहेतुकमङ्गीकृत्य कार्यपर्यन्तं हेतोः स्थित्यङ्गीकारे, हेतुफलयोर्यौगपद्यमेकस्मिन्काले स्थितिः स्यादित्यर्थः । तथा च क्षणिकत्वप्रतिज्ञाहानिरिति भावः ॥

**प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २ । २ । २२ ॥**

वैनाशिकाः खलु बुद्धिपूर्वकनाशो भावानामबुद्धिपूर्वकनाश आकाशं चेति त्रयमप्यवस्तु सन्निरुपाख्यं निर्हेतुकं तुच्छमिति वदन्ति । तत्राकाशस्य निरुपाख्यत्वमुत्तरसूत्रे निरसिष्यते । अत्र तु बुद्धिपूर्वकनाशाबुद्धिपूर्वकनाशरूपनिरोधद्वयं निराक्रियते । प्रतीपा प्रतिकूला सन्तं घटमसन्तं करोमीत्येवमाकारिका संख्या बुद्धिः प्रतिसंख्या । तत्पूर्वको निरोधो नाशः प्रतिसंख्यानिरोधः । अतत्पूर्वको नाशोऽप्रतिसंख्यानिरोधः । तयोर्निरोधयोः सन्तानिषु सन्ताने वाऽप्राप्तिरसम्भव इत्यर्थः । कुतः । अविच्छेदात् । न तावन्निरोधद्वयस्य सन्तानगोचरत्वं, सन्तानस्याविच्छेदात् । सन्तानविच्छेदो हि चरमसन्तानिविच्छेदाद्वक्तव्यः । स न युक्तः । चरमसन्तानिनः कार्यान्तरजनकत्वे सन्तानस्याविच्छेद एव । अजनकत्वे चरमसन्तानिनोऽर्थक्रियाकारित्वरूपसत्त्वाभावेनात्यन्तासत्त्वात्पूर्वसन्तानिनां सर्वेषां शून्यतापरिशेषापत्तिरर्थक्रियाया असम्भवात् । नापि सन्तानिप्रतियोगिकत्वं निरोधद्वयस्य, सन्तानिनां घटादीनां क्षणिकत्वेन बुद्धिपूर्वकनाशायोगात् । नाप्यबुद्धिपूर्वकसमूलनाशस्त्वदभ्युपगतः सम्भ-

वति, मूलस्य मृदादेः प्रत्यभिज्ञायमानत्वात् । तस्मान्निरोधद्वयस्यानुपपत्तिः ॥

**उभयथा च दोषात् ॥ २ । २ । २३ ॥**

स्थिरत्वादिभ्रान्तिरूपाविद्यायाः किं सम्यग्ज्ञानाद्विनाश उत स्वतो वा । नाद्यो, निर्हेतुकनाशाभ्युपगमहानिप्रसङ्गात् । द्वितीये सम्यग्ज्ञानोपदेशानर्थक्यम् । इत्युभयथाऽपि दोषादसङ्गतं सौगतमतमित्यर्थः ॥

आकाशस्य निरुपाख्यत्वं दूषयति ।

**आकाशे चाविशेषात् ॥ २ । २ । २४ ॥**

"आत्मन आकाशः सम्भूत" इति श्रुत्या शब्दगुणकत्वेन चाकाशेऽपि पृथिव्यादिवद्वस्तुत्वप्रतिपत्तेरविशेषान्न निरुपाख्यत्वमित्यर्थः ॥

आत्मनः क्षणिकत्वं दूषयति ।

**अनुस्मृतेश्च ॥ २ । २ । २५ ॥**

अनुभवमन्वनन्तरमुत्पद्यमाना स्मृतिरनुस्मृतिः । तद्बलादात्मनोऽनुभवितुर्न क्षणिकत्वमित्यर्थः । अन्यानुभूतेऽन्यस्य स्मरणायोगादिति भावः ॥

**नासतो दृष्टत्वात् ॥ २ । २ । २६ ॥**

क्षणिकात्कार्योत्पत्तिमिच्छताऽर्थादभावान्निरुपाख्यादेव कार्योत्पत्तिरङ्गीकृतेति प्रतिभाति, पूर्वक्षणनाशं विना कार्यक्षणोत्पत्तेरयोगात् । साक्षादभावाद्भावोत्पत्तिः स्वग्रन्थे दर्शिता च । तथा चासतोऽभावान्निस्स्वरूपात्कार्योत्पत्तिर्न युक्ता । कुतः । अदृष्टत्वात् । निरुपाख्यान्नरविषाणादेः कार्योत्पत्तेरदृष्टत्वादित्यर्थः । दृष्टत्वादिति वा पदच्छेदः । सत एव मृदादेः कार्योत्पत्तेर्दृष्टत्वादित्यर्थः ॥

**उदासीनानामपि चैवं सिद्धिः ॥ २ । २ । २७ ॥**

किं च । एवमभावाद्भावोत्पत्त्यङ्गीकारे, उदासीनानां तत्तत्कार्यसाधनेषु कृष्यादिष्वप्रवर्तमानानां स्वगृहे तूष्णीमुपविष्टानामपि पुंसां स्वस्वाभिमतस्य कार्यस्य सिद्धिः स्यादित्यर्थः । तस्माद्भ्रान्त्यैकमूलेन वैभाषिकसौत्रान्तिकयोर्बाह्यार्थवादिनोर्मतेन न समन्वयस्य विरोध इति सिद्धम् ॥

**नाभाव उपलब्धेः ॥ २ । २ । २८ ॥**

एवं क्षणिकबाह्यार्थवादनिराकरणं कृतम् । तन्निराकरणमुपजीव्य क्षणिकविज्ञानमात्रसत्यत्ववादी प्रत्यवतिष्ठत इत्यनयोऽस्तूपजीव्योपजीवकभावः सङ्गतिः । विज्ञानवादिनो बौद्धस्य योऽयं सिद्धान्तो, विज्ञानातिरिक्तस्य बाह्यपदार्थस्याभाव इति, सोऽस्याधिकरणस्य विषयः । स किं मानमूलो भ्रान्तिमूलो वेति सन्देहे मानमूल इति प्राप्तम् । तथा हि नीलादिविज्ञानस्य स्वरूपतः सर्वार्थान्प्रत्यविशिष्टत्वाद्बाह्यार्थवादिनाऽपि तस्य नीलादिज्ञानत्वसिद्धये नीलाद्याकारत्वमङ्गीकरणीयम् । तथा च तेनैवाकारेण सर्वव्यवहारोपपत्तौ किं बाह्येन नीलादिना वन्ध्यापुत्रायमानेन । तथा च स्वप्रकाशनीलादिविज्ञानस्य क्षणिकत्वात्साकारत्वाच्च स्थायिनिराकारविज्ञानाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो न सिध्यतीति प्राप्ते ब्रूमः । विज्ञानव्यतिरिक्तानामभावो न सम्भवति । कुतः । उपलब्धेः । विज्ञानातिरिक्तानामर्थानां "घटः पट" इत्याद्यनुभवसिद्धत्वादित्यर्थः । न च विज्ञानाकारेणानुभवस्यान्यथासिद्धः, बाह्यार्थं विना तत्सारूप्यात्मकाकारस्य ज्ञानेऽप्यसिद्धेः । एवं च प्रतीयमानो बाह्यार्थ एवेति न ज्ञानस्य

साकारत्वम् । नापि क्षणिकत्वं, मानाभावात् । अनुमानस्य पक्षाद्यनेकज्ञानसाध्यतया स्थायिनमनुमानान्तरं विनाऽनुदयादिति स्थायिनिराकरणब्रह्मणि समन्वयो न विरुध्यत इति ॥

ननु, जाग्रदवस्थायामनुत्पन्नाः सर्वे प्रत्यया निरालम्बनाः,प्रत्ययत्वात्, स्वप्नगन्धर्वनगरमायाविनिर्मितमायादिवत्, इत्याशङ्क्य दृष्टान्ते बाधितविषयत्वमुपाधिरित्याह ।

वैधर्म्याच्च न स्वप्नादिवत् ॥ २ । २ । २९ ॥

स्वप्नादिप्रत्ययस्य जाग्रत्प्रत्ययस्य चान्योन्यं बाधितविषयत्वाबाधितविषयत्वरूपवैधर्म्यान्न स्वप्नादिदृष्टान्तेन निरालम्बनत्वं जाग्रत्प्रत्ययस्येत्यर्थः । "च" शब्देन दृष्टान्ते साध्यवैकल्यं सूचयति, स्वप्नादावपि प्रातिभासिकविषयाणां सत्त्वादिति ॥

किञ्च बाह्यार्थानामभावे घटज्ञानं पटज्ञानमित्यादिवैचित्र्यं ज्ञाने न स्यात् । न च पूर्वपूर्वानादिविचित्रवासनावशाद्वैचित्र्यं स्यादिति वाच्यं, बाह्यार्थाभावे वासनानामभावादित्याह ।

न भावोऽनुपलब्धेः ॥ २ । २ । ३० ॥

वासनानां न भावो न सम्भव इत्यर्थः । कस्मात् । अनुपलब्धेः । त्वत्पक्षे बाह्यार्थानामनुपलब्धेरित्यर्थः । वासनानां बाह्यार्थानुभवव्याप्यत्वाद्व्यापकाभावे व्याप्याभाव इति, बाह्यार्थानुभवस्य वासनां प्रति कारणत्वात्कारणाभावे कार्याभाव इति वा तात्पर्यम् । किञ्च वासनानां संस्काराभिधानानां त्वत्पक्ष आश्रयासम्भवादनुपपत्तिः ॥

नन्वहमित्यालयप्रत्यय एवाश्रय इत्यत आह ।

क्षणिकत्वाच्च ॥ २ । २ । ३१ ॥

आलयविज्ञानस्य क्षणिकत्वाङ्गीकारान्नाश्रयत्वम्, संस्काराश्रयत्वे वा न क्षणिकत्वम्, संस्कारसमानकालीनस्य वा संस्कारकालेऽसतो वाऽऽश्रयत्वायोगादिति भावः ॥

**सर्वथाऽनुपपत्तेश्च ॥ २ । २ । ३२ ॥**

पश्यनातिष्ठनेत्याद्यपशब्दप्रयोगाद्ग्रन्थतोऽनुपपन्नमिदं वेदबाह्यानां मतम् । उक्तप्रकारेणार्थतोऽप्यनुपपन्नम् । इति सर्वथाऽनुपपत्तेर्नादरणीयं श्रेयोऽर्थिभिः सौगतमतमित्यर्थः । दर्शनमिति वक्तव्ये पश्यनेत्यपशब्दः । स्थानमिति वक्तव्ये तिष्ठनेत्यपशब्दः । दृशेस्तिष्ठतेश्च धातोः शिति प्रत्यये पश्यतिष्ठावादेशौ भवतः, न युत्प्रत्यये तस्याशित्त्वादिति बोध्यम् । ननु बाह्यार्थवादस्य केवलविज्ञानमात्रवादस्य चोक्तरीत्याऽसम्भवाच्छून्यं निस्स्वरूपमेव प्रपञ्चतत्त्वं किं न स्यादिति शङ्कायां पुन"र्नाभाव उपलब्धे"रित्यादीनि सूत्राणि शून्यमतनिरासपरत्वेन योज्यन्ते, प्रपञ्चशून्यत्वस्य सर्वप्रमाणबाधितत्वेन तन्निरासाय पृथक्प्रयत्नानपेक्षणात् । तथा हि ज्ञानार्थयोर्नाभावः प्रमाणैरुपलब्धेरित्यर्थः । "वैधर्म्याच्चे"ति सूत्रं पूर्ववद्व्याख्येयम् । प्रपञ्चस्य बाध्यत्वे बाधाधिष्ठानं सत्यं किञ्चिद्वक्तव्यं, निरधिष्ठानबाधायोगात् । तस्य चाधिष्ठानस्य त्वन्मते न भावो न सत्त्वं प्रमाणतस्तदनुपलब्धेरिति "न भावोऽनुपलब्धे"रिति सूत्रार्थः । "क्षणिकत्वाच्चे"ति सूत्रे विभक्तेः पूर्वं "मुपदेशे"त्यध्याहारः । तथा च कञ्चित्पदार्थानङ्गीकृत्य तेषां क्षणिकत्वोपदेशाच्छून्योपदेशाच्च व्याहतार्थबोधकः सुगत इत्यर्थः । अन्त्यसूत्रं कृतव्याख्यानम् । तस्माद्भ्रान्त्येकशरणबौद्धमतेन न समन्वयस्य विरोध इति सिद्धम् ॥

**नैकस्मिन्नसम्भवात् ॥ २ । २ । ३३ ॥**

एवं मुक्तकच्छानां बौद्धानां मते निरस्ते विवसनानां जैनानां मतं बुद्धिस्थं बुद्धिसन्निधिलक्षणसङ्गत्या निराक्रियते । तत्र संशयः, किं दिगम्बरमतं मानमूलं भ्रान्तिमूलं वेति । मानमूलमिति प्राप्तम् । तथा हि, स्यादस्ति, स्यान्नास्ति, स्यादस्ति नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति नास्तिचावक्तव्यश्चेत्येवं रूपं सप्तभङ्गनयमस्तित्वनास्तित्वादिविरुद्धधर्मद्वयमादाय सर्वेषु पदार्थेषु योजयन्तो विवसनाः पदार्थमात्रस्यानेकरूपत्वमाचक्षते, उपादानादिव्यवहारसिद्धये । अन्यथा वस्तुन एकरूपत्वे सर्वात्मनाऽस्तित्वं नास्तित्वं वा वक्तव्यमिति प्राप्यात्मनाऽपि सत्त्वाद्वस्तुप्राप्त्यर्थमुपादानादिव्यवहारो न स्यात् । अतः केनचिद्घटादिरूपेणास्ति, केनचित्प्राप्यादिरूपेण नास्तीत्यनेकरूपत्वमेव वस्तुनः । सप्तभङ्गनयो नाम सप्तस्वस्तित्वादिषु वस्तुन्येकत्र विरोधो भङ्गस्तत्र यो नयोयुक्तिः स इत्यर्थः । स्यादस्तीत्यादेरयमर्थः । स्यात्पदं "कथं चि"दर्थकं वस्तुनोऽस्तित्वविवक्षायामाद्यो भङ्गः । असत्त्वविवक्षायां द्वितीयो भङ्गः । क्रमेणोभयवाञ्छायां तृतीयो भङ्गः । युगपदुभयवाञ्छायामस्तित्वनास्तित्वयोर्युगपद्वाचा वक्तुमशक्यत्वादवक्तव्यं वस्तुन इति चतुर्थो भङ्गः । आद्यचतुर्थयोर्भङ्गयोः क्रमेण वाञ्छायां पञ्चमो भङ्गः । द्वितीयचतुर्थयोर्विवक्षायां षष्ठो भङ्गः । आद्यद्वितीयचतुर्थानां वाञ्छायां सप्तमो भङ्गः । एवमेकत्वानेकत्वनित्यत्वानित्यत्वादिविरुद्धधर्मद्वयमादायोक्तनयो योजनीयः । तस्माद्वस्तुमात्रस्य सत्त्वमसत्त्वं चेत्येवमादिविरुद्धानेकधर्मवत्त्वमे-

वेत्येकरूपप्रत्ययसमन्वयो न सिध्यतीति प्राप्ते ब्रूमः "नैकस्मिन्नसम्भवा"दिति । एकस्मिन्परमार्थरूपे वस्तुनि विरुद्धधर्माणामसम्भवात्, वस्तुनोऽनेकरूपत्वं नास्तीत्यर्थः । यदस्ति तदस्त्येव, न नास्ति । यन्नित्यं तन्नित्यमेव नानित्यम् । यथा प्रत्यगात्मा वस्तुभूत एवं प्रपञ्चस्यापि तन्मते वस्तुभूतत्वान्नानेकरूपत्वसम्भवः । अस्मन्मते तु प्रपञ्चो न सन्, नाप्यसन्, किं त्वनिर्वचनीय एव । तेन सर्वव्यवहारसम्भव इति भावः ॥

एतेषामार्हतानां देहपरिमाण एवात्मेति मतं दूषयति ।

**एवं चात्माकार्त्स्न्यम् ॥ २ । २ । ३४ ॥**

यथैकत्र विरुद्धधर्मासम्भवो दोषस्तेषामार्हतानां मते, एवमात्मनोऽकार्त्स्न्यं परिच्छिन्नत्वं दोषान्तरं स्याज्जीवस्य देहपरिणामत्वाङ्गीकारादित्यर्थः । तथा च परिच्छिन्नत्वादात्मनो घटादिवदनित्यत्वं स्यादिति भावः । किं चात्मनो देहपरिमाणत्वे मनुष्यात्मनः कर्मवशाद्गजशरीरे कृत्स्ने प्रवेशो न स्यात्, पुत्तिकाशरीरे वा कृत्स्नस्यात्मनः प्रवेशो न स्यात् ॥

ननु जीवस्य सावयवत्वाङ्गीकारात्पर्यायेण गजादिशरीरप्राप्तौ केचिदवयवा आगच्छन्ति, सूक्ष्मपुत्तिकाशरीरप्राप्तौ च केचिदपगच्छन्तीति न मनुष्यात्मनः स्थूलसूक्ष्मशरीरप्राप्तौ विरोध इत्याशङ्क्य निराकरोति ।

**न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ २ । २ । ३५ ॥**

पर्यायादप्यवयवगमनागमनाभ्यामपि तत्तत्स्थूलसूक्ष्मशरीरपरिमाणत्वस्यात्मन्यविरोध इति न चेत्यर्थः ।

**ऽर्दार्थत्वात् । कालसंपत्तावप्यन्याङ्गसंपत्तिमपेक्ष्य कुर्वं-स्तथा स्यात् । अथाङ्गभूतकालावच्छिन्नमेव जीवनमधि-कारहेतुः, अन्याङ्गेष्वपि तुल्यम् । अपि च परिपूर्णाङ्गो ऽधिकृतः किमङ्गविकलं प्रयुङ्क्ते? असंभवादिति चेन्न । कल्पनात्रयोपप्लुतेः[1] । तथा हि । कर्म्मपर्य्यन्तापेक्षित्वाद्धा**

निमित्ते जीवने दर्शपूर्णमासकालमुपसंहृत्य कुर्वन्नाऽधिकारमतिक्रा-मति, निमित्तानन्तर्यस्याऽशब्दार्थत्वात् । अत्रोत्तरम्—कालसंपत्तावन्याङ्गसंपत्तिमपेक्ष्य कुर्वंस्तथा स्यात् । नाऽधिकारमतिक्रामेदित्यर्थः ।

अथाङ्गमपि कालो निमित्तमवच्छिन्दन्नङ्गतामुपयाति, नाऽनवच्छिन्दन्निति निमित्ते कालोपसंहारो नाङ्गोपसंहार इत्याह—अथा-ऽङ्गभूतकालावच्छिन्नमेव जीवनमधिकारहेतुः । अत्रोत्तरम्—अन्याङ्गेष्वपि तुल्यम् । मा नाम भूवन्नङ्गानि साक्षान्निमित्तावच्छेदकानि, अङ्गोद्देशबलसमासादितनिर्णये तु सर्वाङ्गोपसंहारसामर्थ्यमुद्भूतं नि-मित्तमवच्छेत्तु पारयतीति तुल्यता ऽङ्गान्तराणां कालेनेत्यभिप्रायः ।

एवं तावदितराङ्गविरहवच्चोदितकालविरहे ऽप्यनुष्ठानप्रसङ्ग-मापाद्य सम्प्रति किञ्चिदङ्गवैगुण्येपि प्रयोगप्रत्यभिज्ञानं यदुक्तं तदपि दूषयन्नाह—अपि च परिपूर्णाङ्गोऽधिकृतः किमङ्गविकलं प्रयुङ्क्ते ? विधि-गम्यो ऽयमर्थो नात्र प्रमाणान्तरं क्रमते । विधिना च यावदङ्गग्राम-सहितः प्रयोगो ऽवबोधितस्तत्राऽङ्गतुषत्यागे ऽपि तत्प्रयोगत्वमनव-बोधितं विधिना । पुरुषस्य प्रतिभामात्रं न प्रामाणिकमिति भावः ।

अत्र शङ्कते—असम्भवादिति चेत् । शङ्कां निराकर्तुमसम्भ-वशब्दार्थं विकल्पयति—न । कल्पनात्रयपरिप्लुतेः । तिस्रः खल्विह कल्पनाः परिप्लवन्ते । परिप्लुतिरुपपत्तिः । सह वैकल्प्येन स्वाऽनु-गुणा तावत्कल्पनाम्नादितो दर्शयति—तथा हि । कर्मपर्यन्तापेक्षित्वाद्धा

[1] कामनात्रयोपपत्ते मू पु पा ।

**नियोगस्याऽधिकरानिर्वृत्तेरप्रयोगो, ऽधिकारवशाद्वा यथा-संभव,मधिकाङ्गोपदेशाऽनुरोधाद्वा। यदा तादृशस्य संभवः तत्रोभयाऽनुग्रहादानन्तर्य्यस्याऽशब्दार्थत्वाज्जातपुत्रेष्टिव-**

नियोगस्याऽधिकाराऽनिर्वृत्तेरप्रयोगः। विनियोगोपादानाऽवगतशेष भावं पदार्थाऽवगमे शब्दाभिहितं च तत्क्रममनङ्गमप्यपेक्षमाण स्वोत्पत्तौ नियोगो यावज्जीविको नाऽङ्गहानावुत्पत्तुमर्हतीति। सर्वथैव प्रयोगाऽभावो ऽसम्भवशब्दार्थ इति चोदकाऽनुगुणा कल्पना माह—अधिकारवशाद्वा यथासम्भवम्। अयमर्थ। यद्यप्ययं परिपूर्णाङ्गो ऽप्यधिकृतस्तथापि तदधिकारप्रतीतिसामर्थ्यात्तत्प्रवृत्तौ हीनाङ्गमपि समापयति। क्व चिदङ्गकरणे सामर्थ्याऽभावे सपूर्णाङ्गप्रयोग करणादिति। सो ऽयमसम्भव.। कल्पना तृतीयामाह—अधिकाङ्गोपदेशाऽनुरोधाद्वा यदा तादृशस्य सम्भवः अधिक तत्कालशक्याङ्गापेक्षया यदशक्यमङ्ग तदुच्यते। यदा साङ्गमुपसहर्तुं शक्यते तदा तस्य सम्भवः।

तचाऽनन्तराऽभिहितां तावत्कल्पनामुपपादयति—तत्रोभयाऽनुग्रहादानन्तर्यस्याऽशब्दार्थत्वाज्जातेष्टिवद्यदेति युक्तम्। अस्यार्थ। अधिकारप्रतीतेरधिकाङ्गोपदेशस्य चाऽनुग्रहाद्यदेति युक्तम्। नन्वेव निमित्ताऽनन्तरमकरणान्निमित्तत्वव्याहतिरित्याशङ्क्याह——आनन्तर्यस्याऽशब्दार्थत्वाज्जातपुत्रेष्टिवदिति। व्याकृतमेतद्युक्तम्। ननु यथासम्भवमङ्गानुष्ठान तथा काम्यनैमित्तिकयोरविशेष [illegible]। यदि पुनरङ्गोपसहारसामर्थ्यस्याऽनुपादेयतया काल [illegible] दकत्वान्नाङ्गवैगुण्ये कालाऽभाववइव क्रिया, न चाऽवैगु [illegible] कस्य चिदपि सम्भवति। ततश्च यावज्जीवसर्वाङ्गसम [illegible] व्यमित्ययमर्थो विरुद्धत्वान्न सम्भवति। ततो ऽशक्यार्थविधान ज्वरहरतक्षकचूडारत्नालङ्कारोपदेशवदप्रामाणिकत्वं शास्त्रस्येति सर्व

**पदेति युक्तम् । अङ्गशक्त्या वा कालवदधिकारावच्छेदादप्रयोगः । न चैक एव विधिस्तेषामेव प्रयोजकश्चाऽप्रयोजकश्च । अपि च किमर्थं विकलाङ्गे प्रवर्त्तते ? अधिकारनिर्वृत्तयइति ब्रूमः । किमधिकारनिर्वृत्तिर्नाङ्गापेक्षा फलनिर्वृत्तिरिव ? यद्येवमनङ्गत्वमेव । सापेक्षा चेद्यथाशक्तेवाऽप्रयोग** इत्याह—अङ्गशक्त्या च कालवदधिकारावच्छेदादप्रयोगः । ननु यावज्जीवमुपदेशसामर्थ्यात्किमिति विगुणः प्रयोगो ऽपि न कल्पते ? इत्याशङ्क्याह—न चैक एव विधिस्तेषामेव प्रयोजकश्चाऽप्रयोजकश्च । एवं हि स एवैकोऽपि विधिस्तान्येवाऽङ्गान्याक्षिपति प्रतिक्षिपति चेति व्याहतमापद्यते । तस्मादात्यन्तिक एव प्रयोगाऽसम्भवो ऽसम्भववादिना ऽभिहितः । सो ऽयमात्मीय एव बाणो भवन्तं प्रहरतीत्यागतमित्यर्थः ।

एवं तावद्यावदधिकारप्रधानं निखिलाङ्गग्रामसहितं प्रयोज्यतया ऽवगतं तावदेव प्रयोक्तव्यम् । न चाऽन्यूनप्रयोगस्तु प्रातिभ इत्युक्तम् । सम्प्रति न्यूनप्रयोगस्य निष्प्रयोजनवत्तामपि प्रतिपादयति—अपि च किमर्थं विकलाङ्गे प्रवर्त्तते । प्रेक्षावतां हि प्रवृत्तिः प्रयोजनवत्ताव्याप्ता प्रयोजनवत्ताभावे न भवति, शिंशपात्वमिव तरुत्वाऽभावइत्यर्थः ।

अत्रैकदेशी प्रयोजनमाह—अधिकाराऽनिर्वृत्तये इति ब्रूमः । एतदुक्तं भवति । यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयोजनं प्रयुज्यते ऽनेनेति व्युत्पत्त्या, कार्यं चाऽधिकृत्य लोकः प्रवर्त्तते, कार्यं चाऽधिकार,स्तदयं विकलाङ्गे ऽपि कर्मणि कार्यनिर्वृत्तये प्रवर्त्तते इति । तदेतद् दूषयति—किमधिकारनिर्वृत्तिर्नाङ्गापेक्षा, फलनिर्वृत्तिरिव । ननु मा भूदधिकारनिर्वृत्तिरङ्गापेक्षा, को दोष ? इत्याशङ्क्याह—यद्येवमनङ्गत्वमेवाङ्गैर्विनापि करणोपकारस्य कार्यसिद्धेरिति भावः । सापेक्षा

१ अङ्गा मू पु ।

**क्त्यङ्गसाध्यैवेति वैकल्ये वृथा चेष्टा स्यात्। अथ यथाशक्त्यङ्गसाध्येति। न कार्य्यनिष्ठता विशेषायालम्। अपि चाऽधिकारात्फलनिर्वृत्तिः, तत्र यथाशक्त्यङ्गोपेते ऽधिकृतस्य तादृशादेवाऽधिकारनिर्वृत्तिमुखेन तन्निमित्तमिव।**

चेद्यथाम्नाताङ्गसाध्यैवेति वैकल्ये वृथा चेष्टा स्यात्। शङ्कते—अथ यथाशक्त्यङ्गसाध्येति। निराकरोति—न कार्यनिष्ठता विशेषायाऽलम्। एतदुक्तं भवति। कार्यनिष्ठतायां सत्यां काम्ये ऽप्युपकरणीभूतभावार्थस्य विषयत्वात्सकलाङ्गग्रामजनितोपकारस्य च भावार्थस्य करणभावादेकाङ्गवैकल्ये च तदनुपपत्तेर्विषयाऽभावादधिकारप्रविलयः। नैमित्तिकेषु तु भावार्थमात्रस्य विषयभावादङ्गवैकल्ये ऽपि च विषयभावोपपत्तेरप्रलीनो ऽधिकार इति काम्यनैमित्तिकयोर्यो विशेषः स नोपपद्यते। यथाशक्त्यङ्गसाध्ये ऽधिकारे ऽधिकारश्चेदङ्गविकलादपि प्रधानाद्भवति नूनमङ्गहीनमपि करणमकरणादनुपपत्तेः। करणं चेत्कथमविषयः, विषयश्चेत्कथमनधिकारः, अनधिकारश्चेत्कथं काम्यनित्ययोर्विशेषः? इति। यद्युच्येत नैमित्तिके भावार्थमात्रस्य विषयभावादङ्गवैकल्ये ऽपि तदस्तीत्यनपेतो ऽधिकारः स्वसिद्ध्यर्थं यथाशक्त्यङ्गजनितोपकारमेव स्वकारणमाक्षिपति अङ्गबाधायामिवाऽबाधिताङ्गमात्राहितोपकारमिति। तदसत्। अधिकारप्रविलयात्। न हि विषयमात्रमयमधिकारस्य व्यवस्थापनायाऽपेक्षते, अपि त्वधिकारिविशेषणमपि। आविर्भूतसर्वाङ्गकरणसामर्थ्यश्चाधिकारी नाङ्गसामर्थ्याऽभिभवे ऽधिकारवानित्युक्तमित्युपरम्यते।

एवं पुरुषप्रवृत्तिं पर्यनुयुज्याऽधिकारोत्पत्तिं प्रति पर्यनुयोगमाह—अपि चाऽधिकारात् फलनिर्वृत्तिः काम्ये ऽपि कर्मणीति भवन्मते सिद्धम्। अस्तु वा को दोषः? इत्याशङ्क्याह—तत्र यथाशक्त्यङ्गोपेते ऽधिकृतस्य तादृशादेव यथाशक्त्यङ्गोपेतादेवाधिकारनिर्वृत्तिमुखेन तत्फलं संपद्यते। अत्रैव दृष्टान्तमाह—निमित्तमिव। यथा निमित्तं

**अथ न तादृशे ? अधिकारनिर्वृत्तिरपि न स्यात् । परिपूर्णाङ्गे ऽधिकृतस्य विकलाङ्गप्रयोगे कर्म्मान्तरप्रयोगइव अङ्गप्रधानभेदो ऽप्यत्राऽनुपकारको ऽधिकारविधिविषय-**

विकलाङ्गमपि नैमित्तिकं प्रयोजयेदधिकारनिर्वृत्तिमुखेन निमित्तभावेन संपाद्यते तथा फलमपीत्यर्थः । अथ न तादृशे ऽङ्गहीने काम्ये ऽधिकारः । एवं तर्हि काम्यवन्नैमित्तिके विकलाङ्गे ऽनधिकारनिर्वृत्तिरपि न स्यात् । यतः परिपूर्णाङ्गाऽधिकृतस्य विकलाङ्गप्रयोगे कर्मान्तरप्रयोगइव । यथैव खल्वग्निहोत्रे ऽधिकृतश्चैत्यवन्दनां कुर्वन्नाऽधिकारं संपादयति एवं साङ्गे तस्मिन्नधिकृतो ऽङ्गहीनं निर्वर्त्तयन्न कृताधिकार इत्यर्थः ।

स्यादेतत् । अग्निहोत्रे ऽधिकृतश्चैत्य वन्दमानो नाऽधिकार संपादयति । अधिकारविषयकरणस्य होमस्याऽननुष्ठानात् । जुहूत्युत्तराङ्गहीनमप्यधिकारविषयसपत्तेस्तथाभूतस्यैव होमस्याऽधिकारेण करणाभावाऽऽवेपादधिकार संपादयतीत्ययमङ्गप्रधानयोर्विशेषो यत्प्रधानाऽभावे नाऽधिकारो भवति अङ्गाभावे च सति प्रधान भवतीत्याशङ्क्याह—अङ्गप्रधानभेदो ऽप्यत्राऽनुपकारकः । कुत ? इत्याह—अधिकारविधिविषयत्वेनाऽभेदात् । यद्यपि नियोगस्य भावार्थ एव प्रतिपत्त्यनुबन्धित्वाद्विषयस्तथापि साङ्गप्रधाने प्रयोजकत्वादङ्गानां प्रधानस्य च नियोगस्य विषयत्वेनाऽभेद उक्तः । यदि पुनरेतद्भयादधिकारनियोगस्याऽङ्गेषु प्रयोजकत्व नाऽऽस्थीयेत ततो भेदे चाऽप्रधानस्य प्रयोज्यत्वेनाऽङ्गानां चाऽप्रयोज्यत्वेन विषयत्वाऽविषयत्वलक्षणे ऽङ्गीक्रियमाणे ऽनङ्गत्वप्रसङ्गः । येन येन विना ऽय कार्यस्वभावो ऽधिकारो नोत्पद्यते तत्तदात्मोपपत्तिनान्तरीयकत्वादाक्षिपति, नाक्षिपति चेदङ्गानि तर्हि तैरपि नोत्पद्येत, ततश्चाऽनङ्गत्वप्रसङ्ग इति भाव ।

**त्वेनाऽभेदात् । भेदे चाऽनङ्गत्वप्रसङ्गः । अङ्गप्रधानभावस्य चासंप्रधार्यत्वात् ।**

किं चाऽस्यैकदेशिनो मते ऽङ्गप्रधानभावस्य चासंप्रधार्यत्वाद-नुपकारक इति सम्बन्धः । इदमत्राऽऽकूतम् । कार्यरूपमपूर्वं प्रत्ययार्थः । कार्यं च कृतिं पुरुषप्रयत्नं प्रति यदुद्दिश्य प्रधानं, तच्च यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्येतस्मिन्प्रतीयते तथा समिदादिवाक्येष्वपीति कार्यान्तरविषयकारणानां समिदादीनामधिकारं प्रत्यै[1]द-मर्थ्याऽनुपपत्तेः कार्यस्य च समिदादिविषयस्य "कार्यमेव हि तन्न स्याद्यदन्यार्थ"मिति न्यायादधिकारकार्यं प्रति तादर्थ्याऽभावादङ्ग-प्रधानभावाऽनुपपत्तिः ।

स्यान्मतं, न हि कार्यमित्येव नाऽन्यार्थमपि तु यदनुष्ठेयम् । अनुष्ठेयं तदुच्यते यत्पुरुषेण ममेदं कार्यमिति निरपेक्षं कार्यमव-गम्यते । परमाऽपूर्वं च तन्न जातु तस्याऽन्यार्थप्रवृत्ते कृतिव्याप्य-ताप्रतीतिः । अन्यस्य[2] प्रधानस्याऽनवगमात् । ननु फलमीप्सितम-वगम्यते न प्रथमतः प्रतीतेन कार्येण नियोज्यं विना पर्यवस्यता विशिष्टनियोज्याऽपेक्षिणा स्वर्गकाम इति नियोज्यविशेषणतया ग्रह-णान्न फलप्रतिपादनपरं तत्पदं तदेव तु निरपेक्षं कार्यमवगतं साध्यस्वर्गविशिष्टेन नाऽनुत्पादयत्स्वर्गमुत्पद्यत इति स्वर्गोपायताम-श्नुत इति निरपेक्षमपरकार्याऽपगमे सति फलाऽवगतिर्न पुनः फला-ऽवगतौ सत्यां कार्याऽवगतिः । यतः साऽपेक्षत्वेन परमाऽपूर्वमनु-ष्ठेयं स्यात् । तदेव तु निरपेक्षं प्रयोजनं सत्परमाऽपूर्वमभिदधाति लिङ् स्वसन्निधिसमाम्नाने. स्वयं प्रयोजनीभूतैरवघातादिभिः समि-दादिभिश्च प्रयोजनिभिरन्वितमभिधत्ते इति । तदिदं ग्राहकग्रहण-मभिधीयते । तदेव साऽधिकारविधिसन्निधिसमाम्नातेषु समिदा-दिविधिषु तदुपगृहीतविषये[3]षु ततः परमाऽपूर्वलक्षणकार्यप्रत्यभिज्ञा-

१ अधिकारनिर्वीमं प्रति २ पु पा । २ अन्यथा २ पु पा ।
३ उपगृहीतविधिविषयेषु २ पु पा ।

नान्न द्रागित्येव कार्यान्तरबुद्धिरुदयमासादयति । पश्चात्तु कथमपि समिदादय: क्रियारूपतया विप्रराख. परस्परमसंभवन्त: प्रोक्षणा-दिवदपूर्वसाधनीभूतद्रव्यसंस्कारादिद्वारेणाऽपूर्वविषयाऽननुप्रवेशिन: परमाऽपूर्वेण ग्रहीष्यन्ते इति प्रसिद्धतरैदमर्थ्यानामवान्तराऽपूर्वं कार्यं समिदादीनामवकल्प्यमानं समिदादिगताऽऽख्याताऽभिधेयमपि परमाऽपूर्वपारतन्त्र्येणाऽभिधीयमानत्वात्कार्यमप्यननुष्ठेयमित्युपपन्नो ऽङ्गभाव: कार्यविषयाणामपि समिदादीनाम् ।

अत्रोच्यते । अधिकारवाक्येषु तावदमी लिङादयो निरपेक्षकार्याऽभिधानविदितशक्तयो न समिदादिवाक्येष्वन्यनिष्ठं कार्यमभिधातुमीशते । यदि परमवहन्त्यादिवत्किमाधिकाराऽपूर्वस्यैते ऽनुवादा, उताऽपूर्वान्तराऽभिध्यायिन ? इति पदान्तरमवशिष्यते न पुनर्लिङाद्यभिधेयस्य स्वप्रधानस्य कार्यस्य प्राधान्यपरित्यागो युक्त: । ननूक्तमधिकारसमाम्नाता: खल्वमी समिदादयस्तेनैवाऽधिकारविधिना ऽभिधानत एवाऽऽपादितैदमर्थ्या न स्वनिष्ठकार्यविषयतां प्रतिपत्तुमर्हन्ति, प्रकृताऽपूर्वैदमर्थ्यविरोधात् । न चाऽवहन्त्यादिवत्प्रकृताऽपूर्वविषयाऽनुप्रवेशिन:, ततश्च नाऽनुवादा: । न च स्वनिष्ठकार्याऽभिधायीनि तत्पदानीत्यभिधेयशून्यतया प्रमत्तगीतानि प्रसज्येरन्निति वरं प्राधान्यमात्रत्यागेन कार्याऽभिधायित्वमस्तीति ।

सत्यमुक्तम् । अयुक्तं तु तत् । न हि साऽधिकारो विधि: सन्निधिसमाम्नातमात्रमेव गृह्णातिमात्र ही (?) ज्योतिष्टोमविधिर्द्वादशोपसत्ताम्, अपि तु यद्ग्रहणार्हम् । न च स्वनिष्ठकार्यविषया: समिदादयो ग्रहणमर्हन्ति । ननु ग्राहकविरोधात्प्राधान्यं समिदादिविषयस्य नियोगस्य नास्ति । अथ प्राधान्यप्रतीतिविरोधाद्ग्राहक एव किमिति न परिह्रियते ? तत्र श्रुतिमात्रादेव नियोगप्राधान्यप्रतीतेर्निरपेक्षत्वाद्वाक्यान्तराऽऽलोचनया ग्राहकगृहीते. साऽपेक्षतया प्राधा-

**सत्यपि चोदनार्थाऽनिर्वृत्तेर्वृथा चेष्टाप्रसङ्ग इत्युक्तम् ।**

**कश्चायमधिकारो यस्य निर्वृत्तिः? नियोगश्चेत् न निर्वृत्तिर्विचारिता। नियोज्यता चेत् सापि नियोगादेव निर्वृत्ता । स्वामिता चेत् न तत्कृतं[1] किं चिद्भुञ्जानः स्वामी, इत्युभावप्यधिकारौ कार्य्यनिष्ठौ स्याताम् ।**

न्यप्रतीतेर्बलीयस्त्वेन रात्रिसत्रादिवत्स्वतन्त्राऽधिकारकल्पनाया सत्या नाऽङ्गभावः प्रयाजादीनां प्रधानप्रभावश्च दर्शपूर्णमासादीनामुपपद्येत इति सुष्ठुक्तमङ्गप्रधानभावस्य चासम्प्रधार्यत्वादिति ।

अभ्युपेत्याङ्गप्रधानभाव दूषणान्तरमाह—सत्यङ्गप्रधानभावे नैमित्तिकस्याऽनङ्गत्वे ऽस्य प्रयोगे चोदनार्थाऽनिर्वृतेर्वृथा चेष्टाप्रसङ्ग इत्युक्तम् । किं चाऽयमधिकारो विचार न सहते यस्य निर्वृत्तिरङ्गविकले ऽपि नैमित्तिकस्य प्रयोगे त्वयोच्यतइत्याह—कश्चाऽयमधिकारो यस्य निर्वृत्तिः? त्वयोच्यतइति शेष । एकदेशी स्वपरिभाषया ऽऽह—नियोगश्चेत् । दूषयति—तन्निर्वृत्तिर्विचारिता। उक्त हि "नियोगस्य नकार्यते"त्यत्र 'विषयः कार्यो न नियोगो नियोज्यस्य नियोक्तृत्वप्रसङ्गा'दिति । भाषान्तरेणाऽऽह—नियोज्यता चेत् । परिहरति—सापि नियोगादेव निर्वृत्ता भावार्थविषय नियोगमवबुद्ध्यमान एवायमधिगतनियोज्यभावो न तदधिगमायाऽनुष्ठानं यावद्गच्छेदिति । व्यर्थीकृतपरिभाषो लौकिकमधिकारपदस्यार्थमाह—स्वामिता चेत् । ईश्वरवचनो ह्ययमधिकृतशब्दो लोके प्रसिद्ध इति भावः । एतद्दूषयति—न तत्कृत किं चिद्भुञ्जानः स्वामी, एव हि नैमित्तिक कर्म संभवति पुरुषस्य स्वामिनः, यदि तत्कर्म तस्योपकारे वर्त्तते । द्वयी चेयमुपकारजातिर्हितप्राप्तिरहितनिवृत्तिश्च । न च हिताऽहितप्राप्तिपरिहाराऽनुयायि त्वन्मते नैमित्तिक कर्म कल्पते । यदुच्यते नैमित्तिकादन्यपूर्वपुरुषगुणो जायते, जायता नाम न पुनरयमधि-

१ तत्र कृतम मू पु ।

तस्मान्न कार्य्यनिष्ठत्वप्रयोगनिष्ठत्वाभ्यां काम्यनैमित्तिका-ऽधिकारयोर्भेदः शक्यः समाधातुमित्यन्यथा समाधेयः ।

तदुच्यते-

**जीवनादेर्न्निमित्तस्य साम्यात्कालो विशेषकः ।**
**निमित्तार्थस्तत्र जाते कर्म्मणो ऽवश्यकार्य्यता ॥**

कारः[1] स्वयमसुखरूपत्वादतद्धेतुत्वाच्च । यदि त्वेतद्भयान्नैमित्तिकस्यापि पुरुषोपकारकत्वमङ्गीक्रियेत तत उभावप्यधिकारौ[2] कार्यनिष्ठौ स्याताम् । इतिशब्दस्तस्मादर्थे । प्रकृतमुपसंहरति—तस्मान्न कार्यनिष्ठत्वप्रयोग-निष्ठत्वाभ्यां काम्यनैमित्तिकाधिकारयोर्भेदः शक्याऽध्यवसानः[3] ।

स्वमतपातनिका करोति—तस्मादन्यथा समाधेयः । तदुच्यते ।
जीवनादेर्निमित्तस्य साम्यात्कालो विशेषकः ॥
निमित्तार्थस्तत्र जाते कर्मणो ऽवश्यकार्यता ।

यदि श्रुतिमात्राऽपेक्षो ऽधिकारो भवेत् ततो ऽन्धशूद्रादीनां काम्ये नैमित्तिके चाऽविशेषेण प्रसज्येत, त्रैवर्णिकानां चाऽग्निहोत्रं सत-तमकुर्वतामधिकाराऽतिक्रान्तिः स्यात् । न त्वस्माकं श्रुत्यपेक्षो ऽधि-कारः किं त्वङ्गोपदेशाऽनुरोधेन शक्त्यपेक्षः । तथा चाऽशक्तानामन्ध-शूद्रादीनां त्रैवर्णिकानां च मध्यन्दिने सायमादिसमयमुपसंहर्तुमसम-र्थानां नाऽधिकारः । नन्वेवं काम्यवन्नैमित्तिकेष्वप्यङ्गोपदेशाऽनुरोधेन यदैत्युपपद्येत ।

तत्रोच्यते । इदं तावदत्र भवान् पृष्टो व्याचष्टां, यदेतत्काम्ये सर्वाङ्गोपसंहारसमर्थो ऽधिकारीति, तत्किं स्वर्गकामवत्साक्षाच्छब्दा-ऽवगत,मुताङ्गोपदेशाऽनुरोधात्? तत्र न तावत्स्वर्गकामपदमिव सर्वाङ्गोपसंहारसमर्थपदमधीयते[4] समाम्नातारः । अथाङ्गोपदेशाऽनु-रोधादसमर्थं प्रति तदुपदेशाऽनुपपत्तेः । आख्यातानामर्थं ब्रुवतां

---

१ उपकारः—२ पु॰ पा । २ उपकारौ—२ पु पा ।
३ अध्यवसाय २ पु पा । ४ सामर्थ्यमधीयते २ पु पा ।

शक्तिः सहकारिणीति । यथा 'स्रुवेणाऽवद्यती'त्यत्राऽश्रुतमपि द्रव्यादि यच्छक्यतइत्युपबन्धात्सम्बध्यते एवमश्रुतमपि सर्वाङ्गोपसंहारसामर्थ्यमनुपादेयं सदधिकृतविशेषणतया सम्भन्त्स्यते । युक्तं काम्ये तत्र सर्वाङ्गोपसंहारसामर्थ्यविषयाया अर्थापत्तेः परिपन्थ्यभावे नाऽप्रत्यूहमुपपत्तेः आर्थिपदस्य च समर्थेऽपि सम्भवादविरोधात् । न खलु समर्थः स्वर्गकामो न स्वर्गकाम इत्युक्तम् । इह तु निमित्तश्रुतिविरोधः । तथा हि । 'यावज्जीवं जुहुया'दिति यावदुपसंबद्धं जीवनं कर्त्तव्यतायां निमित्तम् । तदेव च मुख्यं निमित्तम् । यस्मिन् सति नैमित्तिकं भवत्येव भाक्तमितरदित्युपरिष्टादुपपादयिष्यते । तेन जीवने सति कर्त्तव्यमेव न न कर्त्तव्यमिति प्रतीतेर्निमित्ते[1] सम्बन्धाऽवश्यकर्त्तव्यताऽऽपत्ति, निमित्तवदङ्गोपदेशाऽनुरोधात् । तदुपसंहारसामर्थ्यविशेष उद्भवसमाधौ ख्यातः प्रतीयते । स चाऽनित्य इति तन्नान्तरीकत्वादवश्यकर्त्तव्यता ऽऽपतति । न चास्ति कश्चिदपि पुरुषधौरेयस्तथापि[2] विधौ दैवसपन्नो यो यावज्जीवं सायंप्रातरप्रत्यूहमविकलाङ्गमग्निहोत्रमपि प्रयोक्तुं समर्थः । अन्तरायाणां व्याधितोदप्रमादादीनामवश्यम्भावनियमात् । तत्सहभुवां च दुःखदौर्मनस्यादीनाम् । तदनयोर्निमित्तोपदेशसर्वाङ्गोपसंहारसामर्थ्ययोर्विरोधान्निमित्तस्य च श्रौतत्वेन तदनुगुणं सामर्थ्यमुपवर्णनीयम् । नन्वङ्गान्यपि श्रुतान्येव किमतस्तान्यपि नित्यवच्छ्रुतानीति बहूनां श्रुतीनामनुरोधेन वरमेका निमित्तश्रुतिः 'त्यजेदेकं कुलस्याऽर्थे' इतिवत्परित्यज्यताम् । तित्किमियं निमित्तश्रुतिस्तपस्विनी प्रमत्तगीतमेव अपि तु मुख्यं परित्यज्य गौणं निमित्तभावं यस्मिन्सत्येव नाऽसतीत्येवंभूतमवलम्बते ?

अत्रोच्यते । न तावत्साक्षादङ्गश्रुतयो निमित्तश्रुतिविरोधिन्यः । न हि तस्य तस्याङ्गस्य क्रिया निमित्ते सति न सम्भवति । ननु

---

1 अनैमित्तिक २ पु पा । 2 सुधापि २ पु पा ।

नित्यवच्छ्रुतानि न चाङ्गानीति विरोधः । सत्य नित्यवच्छ्रुतानि न त्वङ्गविधय. प्रधानविधिनिरपेक्षा अङ्गानुष्ठान प्रयोक्तुमीशते । तथा ह्यङ्गभावनाभाव्याऽऽकाङ्क्षा स्ववाक्ये भाव्यमपश्यन्ती विध्यापादितत्वेन चाऽपुरुषार्थाद्वाच्यार्थात्प्रच्याविता पुरुषार्थात्मक भाव्यमपेक्षते, प्रधानभावना च निमित्तवत्यवश्यकर्तव्यतागोचरो लब्धनित्यसमीहितसाध्यतत्साधना स्वसाधनोपकारहेतुमपेक्षते । तदियमङ्गभावना करणोपकारलक्षणं भाव्यमासाद्य प्रधानभावना च करणोपकारं प्राप्य निर्वृणुत: । ततश्च प्रधानविध्याकाङ्क्षितोपकारसाधनेष्वङ्गेषु प्रधानाऽधिकृताऽधिकारप्राप्तिलब्धानुष्ठाने ऽप्यप्रधानानुरोधेन निवृत्तिर्व्यवस्थापनीया । तद्विरोधे तु तदधिकृताऽधिकारभावेनाऽनुष्ठानाऽनुपपत्तेरङ्गविधीनां तत्त्व हीयेत । न च निमित्तसम्बन्धादवश्यकर्तव्यं प्रधानं कादाचित्केनाङ्गसाकल्येन सम्बन्धार्हं, नित्याऽनित्यसम्बन्धविरोधात् । ननु प्रधानमपि कथ निमित्तेन संभन्त्स्यते ? न ह्यग्निहोत्रमङ्गहीनमपि यावज्जीवं शक्यसपादम् । अन्तरायाणामपि संभवात् । यद्युच्येत विधिसामर्थ्यादनुष्ठात्रा निपुणेन भवितव्यम् । तदङ्गसाकल्ये ऽपि तुल्यम् । नैवम् । यस्य हि निमित्तसम्बन्धस्तदवश्यकर्तव्यं, स च प्रधानस्येति तदेव तथा । तत्र च स्वरूपेणाऽन्याऽसत्त्वादनुष्ठातुर्नैपुण्यमपि सम्भवति न त्वङ्गेषु निमित्तश्रुतिः । यतस्तेषामप्यवश्यकर्तव्यता स्यात् । प्रधानसम्बन्धात्तेषामप्यवश्यम्भाव इति चेत्, नाऽवश्यकर्तव्यतोपहितमर्यादेन प्रधानविधिना वास्तवमङ्गसाकल्यस्यावश्यम्भावमननुरुध्यमानेन यदा[1] यावन्त्यङ्गानीत्युपबन्धात् । तदेवं निमित्तश्रुतिः प्रधानवाक्यस्था प्रथममेव स्वविषयं प्रधानेन सहैकलोलीभावमुपनयन्ती भूयसीरप्यङ्गश्रुती: स्वाऽनुगुणतया व्यवस्थापयन्ती नैताभिर्जघन्यवृत्तितामापाद्यते । न चैवमितराङ्गवैकल्यवत्कालापगमे ऽपि प्रधानप्रयोगसम्भवान्न तस्य हि गुणत्वे ऽपि

१ अनुरुध्यमानत्वाच्च न यदा २ पु॰ पा ।

यस्तावद्यथोक्ताय प्रयोगायैकान्ततो ऽसमर्थः स दूर-पर्य्युदस्त एवाऽधिकारात् । न त्वसौ[1] तादृशे नियोज्य-तया प्रत्येतुं पार्य्यते । तेन शक्त्यङ्गोपदेशावपेक्ष्य समर्थस्य तावदधिकारप्रतीतिः । सा चेयमधिकारप्रतीतिर्नैमित्तिके नेति पर्य्यवसिता । अनित्यत्वात्सामर्थ्यस्य । अन्यथा ऽधिकृतस्य स-निमित्ताऽनुप्रवेशो ऽपि वक्ष्यते । न चान्धशूद्रादीनामधिकारः । यतो 'यावज्जीवमग्निहोत्रं जुहुयात्' इति भावनालब्धसाध्यतत्साध-ना[2] कथमिति स्वकरणोपकारजनकाकाङ्क्षा अङ्गोपदेशैर्निराकाङ्क्षी क्रि-यते । तत्र सर्वाङ्गोपदेशानुरोधादसमर्थस्याऽनुष्ठानाऽसम्भवात् समर्थ-स्यापि चाऽनुभूततद्भावस्य तदनुपपत्तेः सर्वाङ्गोपेतप्रधानाऽनुष्ठान-गोचरसामर्थ्योद्भूतिरधिकारी काम्यवदिति सामर्थ्यं तदुद्भूतिश्चा-ऽधिकृतविशेषणतया ऽवगम्यते । तत्र निमित्तश्रुतिविरोध इति तदविरोधायाऽवश्याऽवहेये ऽन्यतरस्याऽनुद्भवमात्र हीयता नाङ्गसाम-र्थ्य,मुभयहानिप्रसङ्गादिति नाऽन्धशूद्रादीनामधिकारो नापि शक्यप्रति-कारव्याधीनामनधिकारो नैमित्तिक इति सिद्धम् ।

तदिदमाह—यस्तावत् यथोक्ताय प्रयोगायैकान्ततो ऽसमर्थः शूद्रपङ्ग्वादिः स दूरपर्युदस्त एवाधिकारात्[3] । कुत? इत्याह—न त्वसौ तादृशे[4] नियोज्यतया प्रत्येतु पार्यते । तेन शक्त्यङ्गोपदेशावपेक्ष्य समर्थस्य तावदधिकारप्रतीतिस्तावदिति । स्फोटयति—साचेयमधि-कारप्रतिपत्तिर्नैमित्तिके नेति पर्यवसिता अनित्यत्वात्सामर्थ्यस्याऽनैमि-त्तिकस्य चाऽवश्यकार्यत्वात् अवश्यमनवश्यम्भावयोश्च विप्रतिषेधा-दिति भावः । ननु भवतु सर्वाङ्गोपसंहारसामर्थ्यमनित्यं तथापि तेनै-वाऽधिकारप्रतिपत्तिः पर्यवस्यतु, समर्थस्त्वधिकृतः कुतश्चित्प्रतिब-न्धात्किञ्चिदङ्गमुपसंहर्तुं तदानीमशक्तो ऽपि यथाकथं चित्प्रयोक्ष्यत-इत्येतन्निराकर्तुमाह—अन्यथा ऽधिकृतस्य सर्वाङ्गोपसंहाराभावे सति

१ न ह्यसौ मू पु । २ साध्यसाधना २ पु· पा ।
३ अधिकारी २ पु. पा । ४ न चासौ तादृशे २ पु ।

**र्वाङ्गोपसंहाराऽभावे नाऽनुष्ठानं यथासंभवम् अन्यथा- ऽन्यादृशे ऽधिकारात्तादृशप्रयोगस्याऽशास्त्रीयत्वान्नानुष्ठान, मनधिकारात्। अतः पुनरपि शक्त्यपेक्षा ऽधिकारप्रतिपत्ति- पर्य्यवसानाय। शक्तिर्हि प्रमाणैकदेश इत्युक्तम्। न प्रयो- गनिश्चयाय, अनन्यप्रमाणकत्वात्तस्य। सा कालतो ऽङ्गतो**

नाऽनुष्ठानं यथासम्भवमन्यथेति। यद्येतावत्यधिकारप्रत्ययः पर्यवस्ये- दित्यर्थः। कस्मादित्याह—अन्यादृशे ऽधिकारात्सर्वाङ्गोपपन्ने तत्स- मर्थस्याऽधिकारात् तादृशप्रयोगस्य न्यूनाङ्गस्य प्रयोगस्याऽशास्त्रीय- त्वान्नानुष्ठानं, न्यूनाङ्गस्याऽनधिकारात्।

एतदुक्तं भवति। अधिकारप्रतीत्या सह प्रवृत्तेः संप्रतिपत्तौ सत्यां शास्त्रीयत्वमिह त्वङ्गसाकल्यवैकल्यलक्षणे विरुद्धधर्मसंसर्गाद्वि- षयभेदे ऽपि प्रतिपत्तौ सत्यां प्रातिभत्वं प्रयोगस्येत्युपसंहरति—अतः पुनरपि शक्त्यपेक्षा ऽधिकारप्रतीतिपर्यवसानाय। शक्त्यपेक्षेति या ऽसाव- ङ्गोपदेशासामर्थ्यलब्धा ऽशक्तिश्रुतिस्तस्या यदेत्युपबन्धस्य नित्यश्रुति- विरोधादुपबन्धान्तरापेक्षोपबन्धावशक्तिरिति शक्त्यपेक्षेत्युक्तम्। शक्त्या च विषयेण विषयिणीं शक्तिश्रुतिं लक्षयति। यथा धूमादग्निः प्रतीयते इति धूमेन धूमज्ञानलक्षणा। अथ कस्मादधिकारप्रतिपत्तिपर्यवसा- नाय शक्तिश्रुतिरपेक्ष्यते। यावतोपबन्धविशेषशून्यायामधिकारप्रति- पत्तौ पर्यवसितायां पश्चाद्यथाशक्ति प्रयोगं शक्तिरेव निश्चाययिष्यती- त्यत आह—शक्तिः शक्तिश्रुतिः प्रमाणैकदेशश्चोदनैकदेश इत्युक्तमा- चार्यैः। तथा च तदन्तर्भावेनैवाऽधिकारप्रतीतिपर्यवसानमित्यर्थः। यदि तु न चोदनैकदेशः स्यात्प्रमेयमात्रं शक्तिर्न प्रयोगनिश्चयाय कल्पेतेति शेषः। इदमेव कूतम्। तत्त्वनिश्चयो हि प्रमाणस्य, कार्यं- प्रमेया च शक्तिरिति कारणविरुद्धोपलब्ध्या प्रयोगनिश्चयो निवर्त्त- तइति। अथ शक्तिज्ञानमेव प्रमाणं सत्प्रयोगं निश्चाययेत्। किं

**वाऽऽश्रीयेत। तत्राङ्गतः संश्रये शब्दाऽवगतानामङ्गान्तराणां हानाच्छब्दविरोधः। कालतस्तु कालान्तराणामशब्दार्थत्वान्न कश्चिद्विरोधः। स चाऽयमविरोधो निर्निमित्ते ऽधिकारे इदमनेनेदृशेनेत्येतावन्मात्रस्य शब्दार्थत्वात्। सन्निमित्ते तु निमित्तश्रुतिविरोधः। संप्राप्ते च तस्मिन्कार्य्यस्य**

चोदनैकदेशत्वेन शक्तिश्रुतेः? रित्याह—अनन्यप्रमाणकत्वात्तस्य प्रयोगस्य न[1] शक्तिज्ञान प्रमाणमिति।

संप्रति पूर्वपक्षी यस्मिन्सत्येव नाऽसतीति नित्यवदङ्गोपदेशाऽनुरोधान्निमित्तभाव मन्यमानो विमृशति—सा च शक्तिः कालतो वा ऽङ्गतो वा ऽऽश्रीयते कालाद्वेति। सर्वाङ्गोपसंहारसामर्थ्यमपेक्ष्य यदा शक्नुयादिति यावत्। एव विमृश्याङ्गत इति प्रतिपक्षनिराकरणपूर्वकं कालादिति पक्षमवधारयति—तत्राङ्गतः संश्रये शब्दाऽवगतानामङ्गान्तराणां हानाच्छब्दविरोधः। कालतस्तु कालान्तराणामशब्दार्थत्वान्न विरोधः। नित्यवदङ्गानामुपदेशादन्यतमत्यागे तद्विरोधः। यदेत्युपबन्धे तु कालान्तराणामनुपदिष्टत्वान्नोपदेशविरोध इति काम्ये नैमित्तिके च यदेत्येव युक्तम्।

परिहरति—स चाऽयमविरोधो निर्निमित्ते ऽधिकारे[2]। कुतः? इद भाव्यमनेन करणेनेदृशेनेतिकर्तव्यताविशेषवतेत्येतावन्मात्रस्य शब्दार्थत्वान्नावश्यकर्तव्यता प्रतीयत इत्यर्थः। सन्निमित्ते तु निमित्तश्रुतिविरोधः कस्मात्सम्प्राप्ते च तस्मिन्न कार्यस्य तन्निमित्तत्वव्याघातात्सम्प्राप्त इति प्रकृतिप्रत्ययाभ्यामनुपादेयतां निमित्तता च कथयति। चशब्दो ऽप्यर्थे विरोधद्योतनः। सति भवत्येव न असतीति निमित्तार्थो न भवदुक्त इति वक्ष्यते। न चा[illegible]विधिविरोध इति प्रपञ्चितम् इति भावः[3]।

---

१ अनन्योपायकत्वात्तस्योपायस्य न २ पु पा।
२ अधिकार २ पु पा.।
३ विरोध इति भावः २ पु पा।

**तन्निमित्तत्वव्याघातात् । इतरत्रापि स्वर्गकामश्रुतिविरोध इति चेत् । उक्तम् । न च पुरुषविशेषनिर्देशो ऽत्र विवक्षितः, साध्यत्वात् । न च सातत्येन प्रयोगः[1] । निमित्ते कालविशेषवतः कर्त्तव्यताऽवगमात् । कालविशे-**

पार्श्वस्थः सिद्धान्तिनं पर्यनुयुङ्क्ते—इतरत्रापि स्वर्गकामश्रुतिविरोध इति चेत् । समर्थमसमर्थं चाऽर्थिमात्र प्रत्यसङ्कुचितवृत्तिरर्थिश्रुतिः समर्थं प्रति नियम्यमाना पीड्यत इत्यर्थः । समाधत्ते—उक्तमिति । केवलपदार्थव्यवहाराऽभावादित्यादिना प्राक् । अर्थिपदस्य चाऽधिकारिवचनतामभ्युपेत्येदमुक्तम् । परमार्थतस्तु नेदमधिकारिप्रतिपादनपर,मपि तु भावनाकाङ्क्षितभाव्यविशेषपरम् । अर्थात्त्वधिकारिप्रतिपत्तिरित्युपरिष्टादिहैव वक्ष्यते । उक्तं च भावनाविवेके, ततो "ऽधिकारिपदाऽभावात्कुतस्तद्विरोधिते"ति इति दर्शयति—न च पुरुषनिर्देशो ऽत्र विवक्षितः, साध्यपरत्वात् ।

एवमुक्तां कारिकामुक्त्वा कारिकार्थपातनिकां करोति च किंचित्—न च सातत्येन प्रयोगः । अत्रैव शङ्कते—यदि निमित्तश्रुतिवशादङ्गहीनमपि यथाशक्ति प्रयुज्येत ततः कालस्यापि सायमादेरङ्गत्वेन विधानात्तदभावे मध्यन्दिनादौ जीवनस्य निमित्तस्य विद्यमानत्वादग्निहोत्रप्रयोगप्रसङ्गः । सायमाद्यङ्गापगमेन वा[2] तदा तदप्रयोगे[3] ऽङ्गान्तराभावेप्यप्रयोग इति काम्यवदादेवेत्येषं प्राप्तमिति । तदनेन निराक्रियते—न च सातत्येन प्रयोग इति । निमित्ते कालविशेषवतः कर्त्तव्यतावगमात् । एतदुक्तं भवति । प्रयोगाङ्गमप्ययं कालो ऽनुपादेयत्वादङ्गोपसंहारसामर्थ्यमिव नियोज्यं विशिनष्टि । तेन तदभावान्मध्यन्दिनादौ नाऽधिकारे विष्णुक्रमणादिसमर्थ्याऽभावादिव पङ्ग्वादीनामिति । नन्वङ्गतया कालः श्रूयते नाधिकृतवि-

१ प्रसङ्ग.—मू गु पा ।
२ सायमाद्यनभ्युपगमेन वा २ पु पा ।　३ तदा प्रयोगे १ पु पा ।

**षेण तस्याऽर्थाद्विशेषणात्। तस्या निमित्ताऽनुप्रवेशित्वात्। तदुक्तं "न कालो गुणो निमित्तं ह्येत" दिति। न गुण एवेत्यर्थः। न त्वङ्गान्तराण्येवम्, असाम्याद्वचनव्यक्तिभेदात्।**

शेषणतया। तथा हि। अप्रवृत्तप्रवर्तनात्मको विधिः प्रवर्त्यपुरुषविशेषसमधिगतसाङ्गप्रधानतया, तत्कथं तद्गतो ऽधिकारावगम? इत्यत आह—कालविशेषेण तस्यार्थाद्विशेषणात्। यद्यप्यङ्गत्वेन श्रूयते कालस्तथाप्यधिकृतविशेषणम्। तथा ह्यप्रवर्तप्रवर्त्तनात्मको विधिः प्रवर्त्यपुरुषसमधिगतसाङ्गप्रधानविषयो ऽनुपादेयवस्त्ववच्छिन्नं प्रवर्त्यपुरुषविशेषं कल्पयितुमुद्यतः तस्य विषयं चाऽनुपादेयत्वविधेयत्वलक्षणयोः प्राप्त्यप्राप्तिभ्यां विरोधाद्विशेषणतया स्वीकर्तुमसमर्थो। यथाविनियोगमधिकारावगमाच्च तन्नान्तरीयकसाङ्गप्रधानोपसंहारसामर्थ्यमनुरुध्यमानो ऽनुपादेयाङ्गसामर्थ्ये च निमित्त चाङ्गमपि प्रवर्त्यपुरुषविशेषणतया गृह्णाति। न च कालस्येतराङ्गाणामवस्त्वक्रियोपसंहारसामर्थ्यमपि सम्भवति कार्याङ्गत्वात्सामर्थ्यस्य कार्यस्योपसंहारलक्षणस्य तदनुपादेयाऽनुपपत्तेः। काले हि कर्म क्रियते न कर्मणा कालः। तस्मात्कालविशेषेणाङ्गेनापि सता विधिः प्रवर्त्यपुरुषविशेषाऽपेक्षायामर्थात्तद्विशेषणात्तद्गतः कर्तव्यताऽवगमः। ततश्च न सातत्येन प्रयोग इति। कुत? इत्यत आह—तस्यापि निमित्ताऽनुप्रवेशित्वान्निमित्तसम्बन्धादित्यर्थः। निमित्तसम्बन्धश्चैक नियोज्याऽवच्छेदलक्षणो यथा सामान्यगुणयोरेकव्यक्तिसमवाय. सम्बन्धो गोः शुक्ल इति सामानाधिकरण्यहेतु। आचार्यस्यापि तत्रभवत एतदभिमतमित्याह—तदुक्तं 'न कालो गुणो निमित्त ह्येत' दिति। ननु प्रयोगाङ्ग काल इति स्वतन्त्रसिद्धान्तभङ्गः प्रसक्त इत्याशङ्क्याचष्टे—न गुण एवेत्यर्थः। निमित्तत्व च निमित्तसम्बन्धाद् भाक्त न पुनस्तत्त्वमेव, तत्कल्पनायां प्रमाणाऽभावात्। ननु यद्यङ्गमपि कालो निमित्ताऽनु-

श्रीगणेशाय नमः ।

# पदार्थरत्नमाला ।

उपासनालम्पटमानसाना-
माशानुरूपार्पणलब्धभावः ।
नीलाद्रिमूर्द्धनि प्रथितप्रभावः
पायादपायादरविन्दनाभः ॥

षोडशानां पदार्थानां ज्ञानोन्मूलितविभ्रमैः ।
यत्साक्षात्क्रियते चारु तन्मे धाम प्रसीदतु ॥

अथ किं पदार्थत्वम् । पदजन्यज्ञानविषयत्वमिति चेत् किं तद्विषयत्व ज्ञानस्वरूपमेव तत् । इच्छाप्रयत्नयोः समानाधिकरणं ज्ञानमेव विषयत्वमित्याचार्याः । ज्ञानेच्छाप्रयत्नसंस्काराणां स्वरूप तत् । न तु विषयस्वरूपमपि अतीतानागतयोरभावात, गौरवात्, आकाशादेर्वृत्तिमत्त्वापत्तेश्चेति तु नवीना. । पदार्थान्तरमित्येकदेशिनः ।

तच्च द्विविधम् । तथा च टीका द्विविधो विषयभावः प्रतिपत्त्यनुबन्धितया प्रतिपाद्यमानतया च । तत्राद्यः फलस्य, उत्तरस्तु प्रमाणस्येति विवेक इति । निरुक्तं चैतदुभयस्वरूपमपि तत्रैव । यद्यपि लिङ्गज्ञान लिङ्गविषयकमेव तदनुबन्धस्य तस्य मानसप्रत्यक्षगोचरत्वात्, लिङ्गरूपमन्तरेण तदनिरूपणात् तथापि लिङ्गिविषयकप्रतिपत्तिजनकत्वाद्भवति लिङ्गिविषयकमपीति ।

द्वितीयस्तु प्रकारो व्यापारानुबन्धितया व्यवहृत आचार्यैः । तत्र च व्यापारपद ज्ञानात्मकफलपरमेव ततश्च प्रतिपत्तिनिरूपकत्व प्रतिपत्त्यनुबन्धित्व स्वजन्यप्रतिपत्तिनिरूपकत्व व्यापारानुबन्धित्व प्रमाणविषयत्वमिति निष्कर्षः ।

अथ के तदाश्रयाः ।

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानि ।

तत्र प्रमायाः करण प्रमाणम् । तद्वति तत्प्रकारको भ्रमभिन्नो वानुभवः प्रमा । तदभाववति तत्प्रकारक ज्ञान भ्रमः । अनुभवत्व तु जाति स्मृत्यन्यज्ञान वा ।

ननु तद्वतीति सप्तम्यर्थो विशेष्यत्व कि तत्, कि च प्रकारत्वम् । उच्यते भासमानवैशिष्ट्यानुयोगित्व विशेष्यत्व, वैशिष्ट्य सम्बन्ध, प्रतियोगित्ववदनुगित्व स्वरूपसबन्धविशेषः । प्रकारत्व तु भासमानवैशिष्ट्यप्रतियोगित्वम् । विशेष्यत्व प्रकारत्व च स्वरूपसबन्धविशेष इति तु तत्त्वम् ।

अथ किं कारणत्व, व्यापारवत्त्वमिति बहवः । फलायोगव्यवच्छिन्नसबन्धित्व तत्त्वम् । तच्च फलाव्यवहितपूर्ववर्त्तिव्यापारवत्त्व पर्यवसितमतो न परश्वादावव्याप्तिः । एतेनैव सामग्र्यामतिव्याप्तिरपि परास्ता, तस्या निर्व्यापारत्वात् । तथाहि प्रागभावेतरकादाचित्कयावत्कारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षण एव सामग्री । न चैकक्षणावच्छिन्नानि यावन्ति कारणानि,यागादेश्चिरातीतत्वेन स्वर्गादिसामग्र्यामतिव्याप्तेरित्याकरे व्यक्तम् । क्षणश्च न जनक कार्याधिकरणीभूतस्य तस्य कार्य्यपूर्ववर्त्तित्वात्, पूर्ववर्त्तिनश्च कार्य्यानधिकरणत्वाद्, अधिकरणीभूतानामेव कालोपाधीना हेतुत्वात्, तस्मात्सामग्रीजन्य कार्यमित्यस्य नानुकूल किञ्चिदस्तीति सिद्ध निर्व्यापारत्वम् ।

आकरे सप्तधा तमेवार्थो वर्णितो यथा व्यापारवतः फलाव्यभिचारित्व, कर्त्तृव्यापार्य्यत्व, कार्याव्यवहितप्राक्कालवृत्तिव्यापारवत्त्व, कारकान्तरेभ्यश्चरमव्यापारवत्त्व, कारकान्तरेऽचरितार्थस्यहेतुत्व, व्यापाराजनकव्यापारकत्व, क्रियायोगव्यवच्छिन्नकारकत्वम् । कारकपदोपादानादीश्वरस्य न स्वज्ञान प्रतिकरणत्वम् । एतेषु च सप्तस्वेवोपाधिषु तृतीयायाः शक्तिर्विनिगमकाभावादित्यत्रादिवचनानार्थत्वम् ।

केचित्तु करणत्वमुपाधिसामान्य कर्मत्वादिवद् । द्विविध हि सामान्यम् । जातिरुपाधिश्च समवेत जातिरसमवेतमुपाधिस्तदेव च द्वितीयादीना शक्यमिति वदन्ति ।

ननु व्यापारत्व तज्जन्यत्वे सति तज्जन्यजनकत्वम् । तत्र किं जनकत्वमिति चेद् ? अनन्यथासिद्धनियतपूर्ववर्त्तित्व, तज्जातीयत्वं, वा तत्त्वम् । घटजनकताया अवच्छेदके दण्डत्वादावनवच्छेदके च दण्डरूपादावति-

व्याप्तिवारणाय अनन्यथासिद्धेति । तदुभयं च यमादाय यस्यान्वयव्यतिरेकौ शक्यग्रहौ स तेनान्यथा इत्यनेन यद्धर्मावच्छिन्नयस्यान्वयव्यतिरेकाविति अनेन चान्यथासिद्धम् । रासभादावतिव्याप्तिवारणाय नियतेति । व्याप्यार्थे व्यापकार्थकं वा । अवश्यक्लृप्तसामग्रीत एव कार्यसम्भवे तत्सहभूतत्वमन्यथासिद्धत्वमित्यन्यथासिद्धिप्रवेशेऽपि यथा नोत्तरदलवैयर्थ्यं तन्मणिधरीकायामनुसन्धेयम् । जनकत्वं शक्त्याख्यं पदार्थान्तरमिति मीमांसकादयः । भेदे सति व्यापकत्वमेव कारणत्वमिति प्रज्ञाकरः ।

स्वरूपसम्बन्धविशेष इति केचित् ।
अखण्डोपाधिविशेष इति तु तत्त्वम् ॥

तदाश्रयश्च त्रिविधः । समवाय्यसमवायिनिमित्तभेदेन ।

यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा कपालं घटस्य । समवायिकारणप्रत्यासन्नमसमवायिकारणम् । यथा घटस्य कपालद्वयसंयोगः । तद्रूपस्य च कपालरूपम् । प्रत्यासत्तिर्द्वयी कार्यैकार्थसमवायः कारणैकार्थसमवायश्च । सा यथासंख्यमुदाहरणद्वये । समवाय्यसमवायिभिन्नकारणं निमित्तम् । यथा घटादेर्दण्डघटप्रागभावादिः ।

विनश्यदवस्थं न समवायिकारणम् । कार्यकाले विनश्यति तस्मिन् कार्यस्यावृत्तेः । असमवायिकारणमपि अविनश्यदवस्थमेव । अन्यथा कर्मणोत्तरसंयोगमुत्पाद्य विभागोऽप्युत्पाद्येत । प्रतिबन्धकाभावोऽप्यविनश्यदवस्थ एव निमित्तम् । अन्यथा प्रतिबध्यप्रतिबन्धकयोरेकदोत्पादापत्तेरिति तु मणिकृतः ।

दूषयमिदं क्वाचित्कमेव आत्ममनःसंयोगेन विनश्यदवस्थेनापि जनने बाधकाभावात् । पक्षतया विनश्यदवस्थयाप्यनुमितेः प्रागभावस्य विनश्यदवस्थस्यैव हेतुत्वाच्च ।

कारणत्वं पुनर्द्विविधम् । फलोपधानं योग्यता च । योग्यतापि द्विविधा । सहकारियोग्यता स्वरूपयोग्यता च । स्वरूपयोग्यतापि द्विविधा । अवच्छेदिका सहकारिविरहप्रयुक्तकार्याभाववत्ता चेति । आद्यानङ्गीकारे शिलाशकलात्सहकारिमतोऽपि कार्यापत्तिः ।

ननु कः समवायः । अयुतसिद्धयोः सम्बन्धः समवायः । कौ

पुनरयुतसिद्धौ अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जाति व्यक्ती विशेषनित्यद्रव्ये चेति । सर्वं च भावकार्यं कारणत्रयजन्यम् ।

ननु घटरूपे व्यभिचारः । तथा हि तत्र न घटः समवायिकारणं रूपपूर्वावृत्तित्वात् । न हि नीरूपे घटे मानमस्ति । नापि कपालं तथा । तथा सति कार्यस्य समवायिकारणमात्रसमवेतत्वेन घटस्य नीरूपतापत्ता-वचाक्षुषतापातात् । बहिरिन्द्रियजन्यप्रत्यक्षप्रयोजकाभावात् । तत्र हि उद्भूतरूपवत्त्वं तन्त्रमित्येके । महत्त्वसमानाधिकरणं तत्तथा । रूपादिप्रत्यक्षे महत्त्वसमानाधिकरणोद्भूतत्वमेवेति तु सिद्धान्तः । तदुभयसमानाधि-करणमुद्भूतस्पर्शवत्त्वं तन्त्रमित्युपाध्यायकृतः । महत्त्वे सति रूपवत्त्वं तथा । न च वह्नेरचाक्षुषतापत्तिः । वक्ष्यमाणविशेषसामग्रीविरहादिति तु वयमिति चेच्च । घटस्य चाक्षुषद्रव्यतया रूपवत्तासिद्धावनन्यथानुपपत्त्या आद्यक्षणे नीरूपो घटो जायत इति कल्प्यते भवति पूर्वभावितया स एव कारणं समवायि चेति । जन्यमात्रं प्रति आत्मकालदिगदृष्टानि प्रागभावश्च निमित्तानि ।

ननु कार्यमुत्पद्यत इत्युक्तं तत्र कासावुत्पत्तिः । आद्यक्षणसम्बन्ध इति चेत् । ननु आद्यक्षणः कः । उच्यते । स्वक्षणध्वंसानधिकरणः स्वक्षणः सः । स्वक्षणावृत्तिप्रागभावप्रतियोगी स्वक्षणो वा । स्ववृत्तिपदा-र्थप्रागभावानाधारत्वे सति प्रागभावाधारः समयः क्षणः । महाप्रलयाति-व्याप्तिवारणाय विशेष्यम् ।

एषा च प्रमा चतुर्विधा । प्रत्यक्षानुमित्युपमितिशाब्दभेदेन । कर णमपि तासां चतुर्विधम् । न तु चार्वाकस्येव प्रत्यक्षमात्रम् । न वा सौगतवैशेषिकयोरिव प्रत्यक्षानुमाने एव । न वा साङ्ख्यानामिव प्रत्य क्षानुमानशब्दा एव । न वा प्राभाकराणामिव चतुष्प्रमाणातिरिक्ता अर्थापत्तिरपि । न वा भाट्टानामिव अनुपलब्धिसहितानि षट्प्रमाणानि । फलानां भेदात् । अर्थापत्तेर्व्यतिरेक्यनुमानरूपत्वात् । अनुपलब्धेरभाव-ग्रहकारणत्वेऽपि करणत्वाभावात्, इन्द्रियस्यैव करणत्वात् ।

ननु करणानां स्वरूपं लक्षणं चोच्यताम् । उच्यते । प्रत्यक्षमिन्द्रि-यादि । अनुमानं लिङ्गपरामर्श इति वार्त्तिकम् । परामृश्यमाणं लिङ्गमित्या-चार्याः । व्याप्तिज्ञानमिति मणिकृतः । उपमानं सादृश्यानुभावः सदृश-

ज्ञानं वा । शब्दः पदज्ञानम् । व्यापारस्तु प्रत्यक्षस्य संयोगादिः । अनुमानस्य परामर्शः। उपमानस्य सादृश्यस्मृतिः । शब्दस्य पदार्थस्मृतिरिति । लक्षणं तु प्रत्यक्षकरणत्वादिकम् ।

ननु किं प्रत्यक्षत्वम् । यदाश्रयकरणतया चक्षुरादेर्यद्विषयतया च घटादेरपि प्रत्यक्षव्यवहारः । किं चानुमितित्वादिकमिति चेत् ? । अस्तु प्रत्यक्षत्वादिकं तत्तत्ज्ञानवृत्तिर्जातिः, यद्वा इन्द्रियत्वेन इन्द्रियजन्यं ज्ञानं प्रत्यक्षम् । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यवृत्त्यनुभवत्वापरजातिमत्यनुमितिः । वाक्यार्थसामानाधिकरण्यज्ञानजन्यप्रवृत्तिनिमित्तपरिच्छेदवृत्त्यनुभवत्वापरजातिमत्युपमितिः । पदज्ञानकरणकज्ञानवृत्तितादृशजातिमच्छाब्दम् ।

इन्द्रियत्वं च स्मृत्यजनकज्ञानहेतुमनःसंयोगाश्रयत्वम् । व्याप्तिः साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वम् । अवच्छेदकत्वमिहानतिरिक्तवृत्तिलघुधर्मत्वम् । अनौपाधिकः सबन्धो व्याप्तिरिति टीकाकृतः । तादात्म्यतदुत्पत्त्यन्यतरनियतोऽविनाभावः सेति बौद्धा. । यदाहुः ।

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो दर्शनान्न न दर्शनादिति ॥
नियमो निश्चय इत्युपायकृद्व्याख्यानम् ।

सिसाधयिषाविरहसहकृतसाधकमानाभावः, प्रतिबन्धकसाध्यसिध्यभावो वा पक्षता । तदाश्रयधर्मत्वं पक्षधर्मता । सादृश्यं तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । पदार्थान्तरमिति तु प्राभाकराः । सङ्केतवत्पदं, तच्च किं चिदनेकाक्षरं यथा घटादिपदम् । किं चित्त्वेकाक्षरं, यथा हरिशिवादिवाचकम उ इत्यादिकम् । पदं च बहुविधमित्याचार्याः । तद्यथा किञ्चिन्नैमित्तिकं यथा घटादिपदम् । निमित्तमिह प्रवृत्तिनिमित्तम् । तच्च वाच्यं सद्वाच्यवृत्तित्वे सति वाच्योपस्थापकं जातिरूपमिह विवक्षितम् । तत्पुरस्कृत्य प्रवृत्तं नैमित्तिकमुच्यते । किं चिन्निमित्तसङ्कोचवत् । यथा स्वर्गादि पदम्, उपस्थितस्य सुखत्वस्य प्रवृत्तिनिमित्तस्य ।

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ॥

इत्यर्थवादेन सङ्कोचनात् । किं चिदौपाधिकम् । यथा पाचका-

दिपद्द जातिभिन्नोऽनेकवृत्तिधर्म इहोपाधिः । स च पाकानुगुणज्ञाना-दियोगस्तत्पुरस्कारेण प्रवर्त्तत इत्यौपाधिकमुच्यते । किं चित्पारिभाषिकम् । निमित्तोपाधिरहितेऽतीन्द्रिये यद्वर्त्तते । यथा आकाशादिपदम् । किंचिच्छार्ङ्गग्राहिकम् । यथा चैत्रादिपदम् । सङ्केतविषयस्य व्यक्तिविशेषस्य प्रत्यक्षेणोपस्थितिः शृङ्गग्राहिका तया प्रवर्त्तत इति शार्ङ्गग्राहिकम् । यौगिक रूढ यौगिकरूढ योगरूढमित्येव चतुर्द्धा विभागस्तु ते विभजन्त्यन्ताः पदमित्यक्षचरणसूत्रानुसारेण । तानि च दण्डीघटमण्डपपङ्कजप्रभृतीनि ।

तत्र प्रत्यक्ष तावत् प्रथमतो द्विविधम् । अलौकिक लौकिक च । आद्य पुनर्द्विविधम् । अजन्य जन्य च । आद्यमीश्वरीयम् । अन्त्य सामान्य-लक्षणयोगजधर्मज्ञानलक्षणप्रत्यासत्तिजन्यतया त्रिविधम् । तत्राय घट इति प्रत्यक्ष भूतभाविवर्त्तमानयावद्घटविषयकमाद्यम् । तद्धि घटत्वेन ज्ञायमानेन प्रत्यासत्त्या जन्यते । यथा वा प्रमेयमिति प्रत्यक्ष यावत्प्रमेयविषयकम् ।

प्राञ्चस्तु न सामान्य प्रत्यासत्तिः । वर्त्तमानगतसंनिकर्षेणैवातीतानागतादिभाने गौरवेण यावद्विषयेन्द्रियसंनिकर्षस्याकारणत्वात् । न चैव पटादेरपि असंनिकृष्टत्वाविशेषे घटप्रत्यक्षविषयतापत्तिः । तत्र हि प्रकारीभूतसामान्याश्रयत्व नियामकमित्यतिप्रसङ्गभञ्जकमित्याहुः ।

योगिना यावत्पदार्थगोचर प्रत्यक्ष द्वितीयम् । तद्धि योगजधर्मेण प्रत्यासत्त्या जन्यते । तृतीय परमाणुमह जानामि इति परमाणवंशे प्रत्यक्षम् । कविकाव्यादिमूलभूतस्वर्गज्ञान च । तद्धि ज्ञानलक्षणेन संनिकर्षेण जन्यते । तच्च जन्यसविकल्पकमेव प्रत्यासत्ति.।ईश्वरज्ञाननिर्विकल्पकयोरप्रत्यासत्तित्वात् । इद च मनस एव प्रत्यासत्तिरित्येके । बहिरिन्द्रियस्यापि । किंतु तस्य न विशेष्यसंनिकर्षो यन्निमीलितनयनस्यापि वह्न्यादिचाक्षुषत्वापत्तेरिति तु सिद्धान्तः । विशेष्यसंनिकर्ष एवायम् । विशेषणसंनिकर्षस्याहेतुत्वात् । तथा च टीकाया तत्ताया न इन्द्रियसंनिकर्षापेक्षेति स्पष्टम् । न चोक्तदोषः । लौकिकसंनिकर्षवत एव बहिरिन्द्रियस्यायसंनिकर्ष इत्यभ्युपगमात् । अत एव घटाभावसंनिकृष्टस्य चक्षुषः घटांशेऽपि ज्ञानस्य प्रत्यासत्तित्वमिति तु पश्यामः ।

लौकिकमपि द्विविध निर्विकल्पक सविकल्पक च । वैशिष्ट्यानवगाहिज्ञानं निर्विकल्पकम् । तच्चास्त्येवेति प्राभाकराः । तदेव प्रत्यक्ष-

परमार्थसद्व्यक्तिस्वलक्षणसमुच्छिन्न तत् । तस्य निरस्तसमस्तार्थक्रियेणानुगतेन सामान्यादिना विशिष्टव्यक्तेः सामान्यादिमात्रस्य वा अलीकस्य विषयतया विषयाजन्यत्वात् । किं तु मानसो भ्रान्त्यात्मकः प्रत्यय इति बौद्धाः ।

वैशिष्ट्यावगाहि सविकल्पकम् । तच्च नामजातिगुणक्रियाद्रव्यात्मकविशेषणवैशिष्ट्यविषयतया पञ्चविधम् । यथा डित्थोऽयं गौरयं शुक्लोऽयं गच्छत्ययं कमण्डलुमानयमिति । निर्विकल्पकत्वसविकल्पकत्वे जातिविशेषौ । न च प्रत्यक्षानुभवत्वाभ्यां साङ्कर्यम् । तारत्वादिवत् नानात्वादिति । तथा च टीका । इह द्वयी प्रत्यक्षजातिः सविकल्पिका निर्विकल्पिका चेति सम्प्रदायः ।

जन्यप्रत्यक्षमात्रे सन्निकर्षो हेतुः । स च लौकिक एव भाष्यवार्त्तिकटीकानिबन्धेष्वलौकिकस्यानभिधानात् । प्रत्युत सन्निकर्षस्तु षोढा भिद्यत इत्येव वार्त्तिकम् । उपायावपि सामान्यलक्षणा ज्ञानलक्षणा च प्रत्यक्षलक्षणसूत्रे विशेषणतायामन्तर्भाव्य शब्दलक्षणसूत्रे योगजधर्मो मनःसंयुक्तात्मनि विशेषणमित्युक्तमिति प्राचां सिद्धान्तः ।

मणिकृन्मते तु स सन्निकर्षो द्विविधो लौकिकोऽलौकिकश्चेति । तत्राद्यः षड्विधः । संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः-समवायः, समवेतसमवायः, विशेषणता चेति । यथासङ्ख्य घटतद्रूपरूपत्वशब्दशब्दत्वेषु पञ्च । षष्ठस्तु द्विविधः । इन्द्रियविशेषणता इन्द्रियसम्बद्धविशेषणता च । आद्यः शब्दाभावे, तदतीन्द्रियत्ववादिमते तु समवाये । द्वितीयोऽपि पञ्चविधः । इन्द्रियसंयुक्तविशेषणता, इन्द्रियसंयुक्तसमवेतविशेषणता, इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता, इन्द्रियसमवेतविशेषणता, 'इन्द्रियसमवेतसमवेतविशेषणता, चेति' यथासङ्ख्य भूतलतद्गतरूपरूपत्वशब्दशब्दत्ववृत्तिघटाभावादौ ।

रत्नकोशकृतस्तु संयोगो विशेषणता चेति द्वय्येव प्रत्यासत्तिरित्याहुः । युक्तं चैतदेव समवायस्य प्रत्यासत्तित्वे योजनान्तरितस्यापि शब्दस्य संयुक्तसमवायस्य तत्त्वे वायुचक्षुःसंयोगादितोऽपि पटादिरूपप्रत्यक्षतापत्तेः । समवायस्याविशिष्टत्वात् ।

प्राभाकरास्तु गुणादौ जातिमनिच्छन्तः संयुक्तसमवेतसमवायं

समवेतसमवाय च न मन्यन्ते । तन्न युक्तम् । तथाऽपि गुणनिष्ठसाक्षात्कारग्रहणार्थं तदावश्यकत्वात् । साधित च रूपत्वादिसामान्य टीकायाम् । नीलत्वमधुरत्वशब्दत्वादिसामान्य च निबन्धे ।

भट्टास्तु 'शब्दो वर्णात्मकः सयोगेन । ध्वनिस्तु सयुक्तसमवायेनासन्निकृष्टः अतीन्द्रिय एव वा । अभावोऽतीन्द्रिय अनुपलब्ध एवेति समवायः समवेतसमवायश्च न प्रत्यासत्ति' । कि तु सयुक्तसमवेतसमवायस्तु प्रत्यासत्तिरङ्गीकार्या, रूपत्वादिनिष्टतया वस्तुत्वजातिग्रहायेत्यत श्चत्वार एव सन्निकर्षा इत्याहु. ।

अलौकिकस्त्रिविधः । स च उक्त एव । परिमाणादिग्रहे चतुष्टय सन्निकर्षोऽपि हेतुः । तेन न दूरस्थवस्तुनः परिमाणादिग्रहः । स च इन्द्रियेण अर्थस्य इन्द्रियावयवैरर्थावयवानामिन्द्रियावयवेनार्थस्यार्थावयवानामिन्द्रियावयवेनेति टीका ।

वस्तुतस्तु परिमाणादिग्रहो भवत्येव तस्य द्रव्यग्रहणयोग्यतान्तर्भूतयोग्यताकस्य फलोपधानेऽप्यतिरिक्तानपेक्षणात् । चन्द्रमण्डलादिमहत्त्वस्यानुभवे विवादाभावात् । परन्तु तद्गतमहत्त्वावान्तरजातिविशेषा एव न गृह्यन्ते इति तद्ग्रह एव तस्य हेतुत्वमिति । द्रव्यप्रत्यक्षमात्रे सयोगः। सयुक्तसमवायेन प्रत्यक्षे सयुक्तसमवायः । एवमन्यत्रापि विशिष्टप्रत्यक्षे विशेषणज्ञानमपि हेतुः । जन्यविशिष्टज्ञानमात्रस्य विशेषणज्ञानहेतुत्वात् ।

प्रभाकरनैयायिकैकदेशिनौ तु विशेषणज्ञानस्य विशिष्टज्ञानहेतुता नानुमन्येते । तथा निश्चयाभावात्मकग्राह्याभावसाक्षात्काराभावोऽपि, विशिष्टज्ञानमात्र प्रति समानप्रकारकग्राह्याभावनिश्चयवत् प्रत्यक्षे तादृशसाक्षात्कारस्य प्रतिबन्धकत्वात् । द्रव्यविशिष्टप्रत्यक्षे प्रतिसधानविशेषोऽपि हेतुः । यदाहुः ।

> विशेषण विशेष्य च सबन्ध लौकिकीं स्थितिम् ।
> गृहीत्वा सङ्कलय्यैतत्तथा प्रत्येति नान्यथा ॥
> इतिटीकाकारचरणाः ।

दण्डीपुरुष इत्यादिविशिष्टवैशिष्ट्यप्रत्यक्षे तु विशेषणतावच्छेदकप्रकारक ज्ञानमपि ।

नव्यास्तु विशिष्टवैशिष्ट्यज्ञानत्वं न जन्यतावच्छेदकं दण्डत्ववि-शिष्टज्ञान दण्डविशिष्टज्ञानसामग्र्योः समाजादेवोपपत्तेर्नीलघटत्ववदि-त्याहुः ।

भावविशेष्यकचाक्षुषे विषयालोकसंयोगः, चक्षुरालोकयोश्च स्वरूपं हेतुः । तथा विषयस्योद्भूतरूपं च । कारणतावच्छेदकस्यापि तस्य द्रव्य-चाक्षुषं प्रति विषयविधया हेतुत्वाविरोधात् । महत्त्वमनेकद्रव्यवत्त्वं चेति वार्तिकगुणपदार्थप्रवेशानुसारी पन्थाः । लाघवान्महत्त्वमेव तथेति तु तत्त्वम् । तेजोविषयके तस्मिन्ननभिभवाभावोऽपि । अतस्तैजसमभिभूतं मध्यन्दिनेोल्कादिकं न गृह्यते । अनभिभूतं च गृह्यत एव, यथा मार्त्तण्डमण्ड-लम् । त्रसरेणोः प्रत्यक्षे वातायनादिगतालोकसंयोगोऽपि हेतुः । अत एव सर्वत्र न गृह्यते । उद्भूतत्वे सति महत्त्वसमानाधिकरणत्वात् । तस्य रसो ऽपि गृह्यते परं तु न विविच्य ।

केचित्तु तस्य रसो न गृह्यत एवेत्याहुः ।

त्वाचप्रत्यक्षे उद्भूतस्पर्शोऽपि हेतुः । अत एव प्रभायाः न त्वचा ग्रहः । वायोरपि न त्वचा ग्रहः । उद्भूतरूपविरहात् । तेन उष्मादयो-ऽपि व्याख्याताः ।

मीमांसकास्तु त्वाचप्रत्यक्षे रूपस्य तन्त्रत्वमनिच्छन्तो बहिरिन्द्रिय-जद्रव्यप्रत्यक्षत्वस्य कार्य्यतावच्छेदकत्वमेव नास्ति मानाभावात् । भावे वा तदवच्छिन्नं प्रति जन्यमहत्त्वेन महत्त्वेन बहिर्द्रव्यत्वेन शक्तिविशेषवत्त्वेन वा जनकत्वमिति मन्वानाः पवनादेरपि प्रत्यक्षतामाचक्षन्ते । मानसे लौकिके द्रव्यप्रत्यक्षे तु ज्ञानादिकमपि हेतुः । अतो न सुषुप्तावात्मनः प्रत्यक्षोदयः ।

भ्रमसंशयोत्तरप्रत्यक्षे तु विशेषदर्शनमपि हेतुः । अयं स्थाणुरिति भ्रमोत्तरमयं स्थाणुः पुरुषो वेति संशयोत्तरं च पुरुषत्वव्याप्यकरचरणा-दिमानयमिति विशेषदर्शने सत्येवायं पुरुष इति प्रत्यक्षोदयात् । न विशिष्टज्ञान हेतुरनुमितिसामग्र्या बलवत्त्वात् ततोऽनुमितिरेवोद्यते । किं तु व्याप्यत्वज्ञानसामग्रीकालीनं करादिज्ञानमेवेति निबन्धानुसारिणः ।

कारणता तु भ्रमोत्तरप्रत्यक्षे भ्रमविरोधिदर्शनत्वेन दोषाभावका-लीनदर्शनत्वेन वा । अतः सत्यपि शुक्लत्वव्याप्यशङ्खवानयमिति विशेषदर्शने

पीतः शङ्ख इति भ्रमः । साक्षात्कारिभ्रमे तु साक्षात्कारिविशेषदर्शनमेव विरोधि । अत एव सूर्योदयेन प्राचीमनुमिन्वतोऽपि दिङ्मोह इति तु नवीनाः ।

संशयोत्तरप्रत्यक्षे तु संशयविरोधित्वेन निश्चयसामग्रीत्वेन वा । अत एवान्धकारवति गेहे घटसंदेहवतो विनापि व्याप्यदर्शनमालोकसंयोगतो घटप्रत्यक्षमिति । सोऽयमित्यादिप्रत्यभिज्ञाया संस्कारोऽपि कारणम् । सन्निकर्षस्तु तत्तांशे संयुक्तविशेषणता, मा भूद्दर्शनस्य पूर्ववर्त्तिता इन्द्रियागोचर इति । टीका तु तत्तांशे सन्निकर्षानभ्युपगमेऽपि न काचित्क्षतिः । न हि यावत्प्रत्येतव्येन्द्रियसन्निकर्षः जन्यत्वं प्रत्यक्षलक्षणम् । अपि त्विन्द्रियार्थसंनिकर्षजन्यत्वमित्येतत्परेत्याचार्याः । न च विशेषणता यदि तत्तैव तदा सन्निकर्षस्य असत्त्वमेव पर्यवसितमिति वाच्यम् । अतीतसमयसम्बन्धात्मिकायास्तत्तायाः सन्निकर्षो विशेषणता, सा च विशेष्यीभूतघटादिस्वरूपात्मिकेत्युपायकृता व्याख्यातत्वात् ।

स्मृतिरेव प्रत्यभिज्ञाहेतुः । संस्कारस्तु तयाऽन्यथासिद्ध इति साम्प्रदायिकाः । प्रामाण्यं स्वत एव ज्ञायते उत्पद्यते चेति मीमांसकाः परत एव उत्पद्यते ज्ञायते चेति अस्मिन् सिद्धान्तः । जन्यप्रमामात्रग्राह्यप्रमागुण इत्येके । विशेष्यसम्बद्धविशेषणज्ञानं गुण इत्यपरे । विशेषणज्ञानमात्रं गुणः । प्रत्यक्षादिप्रमाणसहितविशेषसहितस्यैव तस्य कार्योत्पादकत्वान्नातिप्रसङ्ग इति तु वयम् । स्थूलावयविप्रत्यक्षादिप्रमाया भूयोऽवयवेन्द्रियसन्निकर्षो गुणः । जन्यप्रत्यक्षप्रमामात्रे विशेषणविशेष्ययोरिन्द्रियसन्निकर्षो गुण इति तु बहवः । अदृष्टविशेषस्तयोरिति रत्नकोशकृतः । भ्रमविरोधिसन्निकर्षो गुण इति तु वयम् ।

इति प्रत्यक्षनिरूपणम् ।

अनुमानमपि त्रिविधम् । केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्र केवलान्वयिसाध्यकं केवलान्वयि । यथा शब्दादिकं पक्षयित्वा प्रमेयत्वादौ साध्ये । वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । व्यतिरेकसहचारमात्रगृहीतव्याप्तिबलेन यदनुमानं तद्व्यतिरेकि । तदुदाहरणप्रयोगस्तु साध्याभाववन्तमुद्दिश्य साधनाभावप्रदर्शनेन कार्यः । न त्वन्वयिवत् साधनवन्तमुद्दिश्य साध्यप्रदर्शनेन ।

यदाहुर्भट्टपदाः ।

व्याप्यव्यापकभावो हि भावयोर्यादृगीष्यते ।

तयोरभावयोस्तस्माद्विपरीत प्रतीयते इति ॥

तत एव भवति पृथिवी गन्धवत् यन्न गन्धवत् न सा पृथिवी यथा जलम् । अत्र या पृथिवी सा गन्धवतीत्यत्र दृष्टान्ताभावात् । पृथिवीमात्रस्य पक्षत्वेन साध्यनिश्चयस्य पृथिव्यामभावात् । अन्यत्र साध्यस्यासत्त्वात् । यत्र तूभयसहचारेण व्याप्तिग्रहादनुमान तदन्वयव्यतिरेकि । यथा पर्वतो वन्हिमान् धूमात् यो यो धूमवान् स स वन्हिमान् । यथा महानस यो न वह्निमान् नासौ धूमवान् यथा जलह्रद इति । अत्रान्वयव्यतिरेकव्याप्त्योः सहोपस्थितावेवानुमानम् । अन्यथा विभागभङ्गापत्तेरिति केचित् ।

अन्ये तु व्यतिरेकव्यभिचारशङ्कायामेव तदुपयोग. । प्रत्येकमेव सामर्थ्यकल्पनात् । विभागस्तु सपक्षसहचारविपक्षव्यभिचाराज्ञानपूर्वकत्वाभिप्रायेण । तथाचात्रापि प्रायोऽन्वयमुख एव प्रयोगः । अन्यथा अधिकनिग्रहस्थानापत्तेरित्याहुः ।

दिङ्नागस्तु । "अनुमेयेऽथ तत्तुल्ये सद्भावोऽसति नास्तिता" इत्येव रूपत्रयसपक्षमन्वयव्यतिरेक्येव लिङ्गमाह ।

अनुमितिमात्रे लिङ्गज्ञान करणमिति बहवः । ज्ञानमात्र करणमित्यस्मद्गुरवः । बाधसत्प्रतिपक्षाभावोऽपि । अबाधितत्वासत्प्रतिपक्षितत्वज्ञान तयेत्युपायकृतः । व्यभिचाराज्ञानाद्यभावो लिङ्गपरामर्शमुत्पाद्य प्रयोजक एव । व्यभिचाराज्ञानाभावो हेतुरेवेत्यपरे ।

विशेषे त्वन्वयिमात्रे परामर्शः । गृहीतव्याप्तेरपि वह्निव्याप्यधूमवानयमिति परामर्शे सत्येव अनुमित्युत्पतेः । व्याप्यतावच्छेदकप्रकारक पक्षधर्मताज्ञान तथेति तु प्राभाकराः । व्यतिरेकिणि साध्याभावव्यापकाभावप्रतियोगिमत्त्वज्ञानम् । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्राप्यर्थाद्रात्रिभोजित्वज्ञान अर्थापत्त्याख्य व्यतिरेक्यनुमानात्मक तत्रापि पीनो देवदत्तो रात्रिभोजी दिवा अभुञ्जानत्वे सति पीनत्वात् । यो रात्रौ न भुङ्क्ते नासौ दिवाऽभुञ्जानत्वे सति पीन । यथा दिवाभोजी कृशो वेति रात्रिभोजि-

त्वाभावव्यापकाभावप्रतियोगिदिवाऽभुञ्जानत्वसमानाधिकरणपीनत्ववानयमिति ज्ञानं हेतुरिति ।

व्यापकत्वं च स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । अन्वय्यनुमितिमात्रं व्यापकतावच्छेदकप्रकारकमित्यविवादम् ।

व्यतिरेक्यनुमानं तु साध्याभावाभाववत्त्वप्रकारकमेव । अत एव टीकायां नेदं निरात्मकमित्यनुमित्याकारप्रदर्शनमित्येके । तन्न साध्याभावाभाववत्त्वस्य विशेषणस्य नियतोपस्थापकाभावात् । तस्मादनियमः । कदाचित्साध्याभावाभाववत्त्वप्रकारकं कदाचित्साध्यतावच्छेदकप्रकारकम् । साध्यतावच्छेदकसाध्याभावाभाववत्त्वयोरुपस्थितौ चानुमित्सासमानप्रकारकमेव । तस्या अप्यभावे तु करम्बिताकारमेवानुमितिमात्रं व्यापकतावच्छेदकप्रकारकमेवेति त्वस्मद्गुरवः ।

अनुमितिमात्रे लिङ्गोपहितलैङ्गिकं विषय इत्याचार्याः । लिङ्गं न विषयो मानाभावादिति तु मणिकृतः । अनुमितिज्ञानमर्थस्यातथात्वव्यवच्छिन्ददेवोत्पद्यते इत्याचार्याः । तत्र धूमस्य वन्हिव्याप्यत्वं वह्न्यभाववदवृत्तित्वम् । तथा च व्याप्तौ वह्न्यभावाभावस्य भावत्वात्सामग्रीसत्त्वादनुमितावपि तथैव भानम् । यद्वा प्रत्यक्षं किंचिदवधारणात्मकमेव जायते इत्यत्र तर्कजन्यत्वमेव प्रयोजकम् । अस्ति चानुमितावपि तदिति साप्यवधारणात्मिका । अथ वा केवलान्वयिसाधारणी व्याप्तिः साध्यायोगव्यवच्छेद एव । तथा च वह्न्यभाववति धूमाभावभाने तद्वृत्तिवेद्यतया साध्यायोगव्यवच्छेदस्यापि भानमित्याशयं साम्प्रदायिका वर्णयन्ति ।

गङ्गेशोपाध्यायास्तु यत्रायोगव्यवच्छेदेन व्याप्तिस्तत्रानुमितावपि भासत इति तामधिकृत्यैवैतदुक्तमित्याहुः ।

ननु व्याप्तिज्ञानं न सम्भवति उपायाभावादिति चेन्न । व्यभिचारज्ञानविरहसहकृतस्य सहचारदर्शनस्यैव तदुपायत्वात् । व्यभिचारज्ञानविरहश्च क्वचिदनुकूलतर्कात्क्वचित्स्वत एव । अनुमित्युत्पत्तौ हेत्वाभासाविरोधिनस्ते च वक्ष्यन्ते ।

अनुमितिप्रमायां व्याप्यवति व्याप्यज्ञानं गुण इति केचित् ।

परामर्शप्रमा गुणः । न च कूटादिलिङ्गादनुमितिप्रमाया व्यभिचार इति वाच्यम् । तत्रापीश्वरीयपरामर्शप्रमायाः सत्त्वादिति सम्प्रदायः ।

नन्वनुमितेः को विषयः । न तावद्व्यापकतया प्रतीत, तद्धि पक्षविशेषणतया यदि प्रमेय, तदा किमनुमानेन, व्याप्तिग्रह एव तथाभानात् । अत एव व्यापकव्याप्ययोः सबन्धो विषय इत्यपि प्रत्युक्तम् ।

अथ तदुभय विशेष्यीभूय विषय इति तु दिङ्नागेनैव दूषितम् । यथाह

के चिद्धर्मान्तर ज्ञेय लिङ्गस्याव्यभिचारतः ।
सम्बन्ध के चिदिच्छन्ति सिद्धत्वाद्धर्मधर्मिणोः ॥
लिङ्ग धर्मे प्रसिद्ध चेत्किमन्यत्तेन मीयते ।
अथ धर्मिणि तस्यैव किमर्थ नानुमेयता ॥
सबन्धोऽपि द्वय नास्ति षष्ठी श्रूयेत तद्वति ।
अवाच्योऽर्थगृहीतत्वान्न चासौ लिङ्गसङ्गत, इति ॥

अस्यार्थः । के चिद्धर्मान्तरमग्निरूपमनुमेयमिच्छन्ति । अत्र युक्तिमाह । लिङ्गस्य धूमस्याग्निना सहाव्यभिचारो व्याप्तिर्यतः । मानान्तरमाह । सबन्धमिति । अग्निधूमयोरिति शेषः । सिद्धत्वात्सबन्धिनोः सिद्धतया साधनानर्हत्वात् । तत्राद्य दूषयति । लिङ्गमिति । धर्मेऽग्नौ लिङ्ग धूमरूप यदि प्रसिद्ध पक्षधर्मतया ज्ञान तदानेन धूमेन किमन्यदनुमेयम् । अग्नेर्ज्ञातत्वात् । अथेति । धर्मिणि पर्वते यदि ज्ञान लिङ्ग वन्हेरनुमापक तदा तस्यैव पर्वतस्यैव कि नानुमेयता पर्वत एव तद्धर्मिमत्तया ऽनुमेयोऽस्तु न तु स्वातन्त्र्येणाग्निरित्यर्थः । द्वितीय दूषयति, द्वय वक्ष्यमाण तत्राद्यमाह । षष्ठीति यदि सबन्धोऽनुमेयः स्यात्तदाग्निधूमयोः सबन्धोस्तीति षष्ठीश्रवण प्रतिज्ञावाक्ये स्यादित्यर्थः । दूषणान्तरमाह । अवाच्य इति अप्रतिज्ञेयः सबन्धः कुतो धूमवत्त्वादग्निरत्रास्तीति । अत एव अस्मदभिमतादग्निविशिष्टदेशसाध्यादर्थतोऽग्निधूमयोः सबन्धस्याप्यवगतेः । दूषणान्तरमाह । न चेति । असौ सबन्धो लिङ्गेन धूमेन सह सङ्गतः सम्बन्धः लिङ्ग धूमो न पक्षधर्म इति । अस्तु तर्हि दिङ्नागाभिमतोऽग्निविशिष्टो देश एवानुमितेर्विषयः ।

यथाह ।

लिङ्गस्याव्यभिचारस्तु धर्मेणान्यत्र दृश्यते ।
तत्र प्रसिद्धं तद्युक्तं धर्मिणं गमयिष्यतीति ॥

धर्मेणाग्निनान्यत्र महानसादौ तत्र पक्षे प्रसिद्धं लिङ्गं तद्युक्तमग्नि-युक्तं धर्मिणं पर्वते साधयिष्यतीति । तदपि तन्मते पर्वतस्यावयविनोऽभा-वात् परमाणुपुञ्जस्यातीन्द्रियतया तत्र हेतुज्ञानाभावाच्च युक्तम् । न्यायनयेऽपि अग्निमान् पर्वत इत्यस्या धियो विषयोऽग्निः पर्वतस्तदु-भयसंयोगश्च तत्र पर्वतस्त्वावच्चक्षुषैवाग्निसंयोगश्च व्याप्तिग्राहकेणैव गृहीत इति नानुमेयं किं चित् । अत्र ब्रूमः । वन्हिः पर्वतीयतयाऽनु-मितिविषयः पर्वतीयता च न प्रकारः किं तु संसर्ग एव । अथ वा प्रमा-णान्तरप्रमितमेवानुमितेर्विषयः । न चैतावतानतिरिक्तत्वं पर्वतो वन्हिमा-निति धियः पर्वतविशेष्यकवन्हिप्रकारकसंशयविरोधिन्याः प्रत्यक्षविषयो विलक्षणत्वात् । विजातीयप्रमाणकरणत्वेनैवानुमानस्य प्रमाणान्तरत्वा-दिति । अत्र विस्तरस्तु वार्त्तिकेऽनुसन्धेयः ।

इति अनुमितिनिरूपणम् ।

उपमितिस्तु साधर्म्यवैधर्म्यभेदेन द्विधा । यथा गौरिव गवय इति वाक्यं श्रुतवतो दृष्टवतश्च गवयपिण्डं भवति गवयत्वं गवयपदप्रवृत्ति-निमित्तमिति मतिः । सेयं साधर्म्यज्ञानजन्यतया प्रथमा । धिक्करभमति-दीर्घग्रीवं प्रलम्बचञ्चलोष्ठं कठोरतरकण्टकाशिनं कुत्सितावयवसन्निवेश-मपसदं पशूनामिति श्रुतवतः करभपिण्डदर्शनानन्तरं करभत्वं करभपद-प्रवृत्तिनिमित्तमिति या मतिः सा वैधर्म्यज्ञानजन्या द्वितीया । तत्राप्युप-मितिमात्रे धर्ममात्रज्ञानं कारणं साधर्म्योपमितौ साधर्म्यज्ञानं वैधर्म्योप-मितौ वैधर्म्यज्ञानं तत्प्रमाया साधर्म्यप्रमादिकं पूर्ववत् ।

इति उपमितिनिरूपणम् ।

शाब्दं द्विविधं वैदिकं लौकिकं च । आद्यं स्वर्गदेवतादिविषयम् । अन्त्यं भोज्यपेयाद्यालम्बनम् । उभयत्रापि योग्यताज्ञानं संशयनिश्चयसा-धारणं कारणम् । तथाकाङ्क्षानिश्चयः । स्वरूपसत्याकाङ्क्षा इत्याचार्याः । आसत्तिनिश्चयोऽपि । तथा तात्पर्यनिश्चयः । कारणादीनामेव तात्पर्य-निश्चयव्याप्यत्वेनानुगतानां निश्चयो हेतुरित्यन्ये ।

विच्छिन्नानुपूर्वीज्ञानमपि । पदजन्यपदार्थोपस्थितिरपि । अत एव द्वारमित्यादौ पिधेहीति पदमेवाध्याह्रियते । प्राभाकरास्त्वनियमसाच-त्वाणास्तत्राप्यर्थाध्याहारमेव मन्वते । भट्टास्तु शाब्दीह्याकाङ्क्षा शब्देनैव परिपूर्यत इति पदोपस्थापिते एकपदार्थे ऽपरपदार्थस्य पदजन्योपस्थितिरपेक्षा । यत्र पुनः सर्वे एवार्थाः प्रमाणान्तरोपस्थापिता स्तत्र तदपेक्षा नास्त्येव । यथा पश्यतः श्वेत रूप हेषाशब्द च शृण्वतः खुर-विक्षेपशब्द च श्वेतोऽश्वो धावतीति धीरित्याहुः ।

महावाक्यार्थबोधे क्व चिदवान्तरवाक्यार्थबोधोऽपि यथा राजपुरुषमानयेत्यादौ । अदण्डदण्डिनावानयेति विरुद्धनानाविशेषणविशिष्टबोधे काष्ठैः स्थाल्यामोदन पचतीत्यादौ च महावाक्यप्रत्यक्षानन्तर तावत्पदगोचरसमूहालम्बनस्मृतिरेव तथा ।

ननु महावाक्यस्य न प्रत्यक्ष सम्भवति । तस्य वर्णघटितमूर्त्तिक-तया तेषा च श्रोत्रेण निर्व्यापारेण ग्रहणासभवात् । श्रोत्रस्य शब्द एव व्यापारः शब्दध्वसप्रागभावयो प्रत्यक्ष च श्रोत्रमनसयोगो वा तदु-भयप्रत्यक्षे श्रोत्रकर्णशष्कुलीसयोग एव तथेत्युपायकारमते स एव वेति चेत् । तथाप्याशुतरविनाशिना क्रमिकाणा मेलकासभवेन वर्णसमूहात्मनः पदस्याप्रत्यक्षतया तद्घटितस्यैकार्थावच्छिन्नपदसमूहरूपस्य वाक्यस्य कथ प्रत्यक्षत्वमिति चेन्न । क्रमिकतत्तद्वर्णविषयश्रोत्रप्रत्यक्षोत्पादितसस्कारेण स्मृत्या वा प्रत्यासत्त्यान्त्यवर्णसबन्धे श्रोत्रेण तावद्वर्णात्मकपदप्रत्यक्षजनितेन सस्कारेण तज्जन्य स्मृत्या वा पदप्रत्यक्षकाले महावाक्यप्रत्यक्षोत्पादस्य सम्भवात् ।

ननु तथापि वर्णसमूह आनुपूर्वीविशेषविशिष्ट एव पदम् । आनु-पूर्वी च पौर्वापर्य तच्च वर्णाना ज्ञानाना वा श्रोत्रेण ज्ञातु शक्यम् । तथा हि घटेति पदे घकालीनप्रागभावप्रतियोगित्व टस्य टकालीन-ध्वसप्रतियोगित्व वा घस्यानुपूर्वी तत्र प्रागभावस्सामग्रीव्यङ्ग्यश्चरमका-रणात्मिका च सामग्री न श्रवणग्राह्या शब्दतज्जातीतरत्वात् । ध्वसाघटिनापि ध्वसप्रतियोगिनो घटस्य ध्वसकाले अभावेनाशक्यग्रहात् । एव ज्ञानयोः पौर्वापर्यात्मिकापि द्रष्टव्या । अत्र कश्चिन्मानसमेव पद, पद शृणोमीत्यनुव्यवसायस्तु कादाचित्क एकाक्षरपदव्यवसायविषय एवेति ।

अपरे तु मनसोपनीतानुपूर्वी श्रोत्रेऽपि भासते इत्याहुः । अत्र योग्यतान्वयस्संसर्गो वाक्यार्थ इत्यनर्थान्तरम् ।

पदस्यान्वयाविरोधित्वमाकाङ्क्षा । अत एव घट' कर्मत्वमानयनकृतिरित्यादिपदकदम्बाद्वान्वयबोधः । तथाचाहुः नामविभक्तिधात्वाख्यातक्रियाकारकपदानामन्वयबोधे तान्येव समर्थानि न तु तदर्थकानि पदान्तराणाति श्लिष्टान्येकार्थानि च पदानि आवृत्तिं विनानेकार्थानुभावकानि अन्यथा वाक्यभेदापत्तेः । अर्थभेदादेव वाक्यभेदात्सरूपैकशेषविधिवैयर्थ्यापत्तेश्चेति सम्प्रदायः ।

मणिकृतस्तु तान्यपि विनैवावृत्तिमन्वयानुभावकानीत्याहुः । एतादृशाकाङ्क्षोपपत्त्यर्थमेव गोर्नित्येत्यादौ गोपदस्य गोत्वे लक्षणा स्वतन्त्रोपस्थितिं विना गोपदस्यान्वयविरोधित्वात् । मणिकृतस्तु अभिधानापर्यवसानमाकाङ्क्षा । यस्य येन विना न स्वार्थान्वयानुभावकत्वं तस्य तदपर्यवसानमित्यर्थ इत्याहुः ।

पदानामानन्तर्यमासत्तिः । तात्पर्यं तु तत्प्रतीतीच्छयोच्चरितत्वम् । पदत्वं त्विह वृत्त्या पदप्रतिपाद्यत्वम् ।

शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलः पदपदार्थयोः सम्बन्धो वृत्तिः सा च द्विविधा । सङ्केतो लक्षणा च । अद्योऽपि द्विविधः । सादिरनादिश्च । आद्या यदृच्छापरिभाषादिशब्दाभिलप्या । अन्त्या तु शक्तिरित्याचक्षते । व्यञ्जना तु लक्षणैव ।

अस्माच्छब्दादयमर्थो बोद्धव्य इति ईश्वरेच्छा शक्तिः । शक्यसम्बन्धो लक्षणा । सा च द्विविधा । निरूढा साम्प्रतिकी च । शक्तिवदनादिप्रसिद्धा निरूढा । यथा बहुव्रीहिस्थपदस्यान्यपदार्थे । घटं करोतीत्यादौ घटादिपदस्योपादाने । द्वितीयादितत्पुरुषस्य द्वितीयाद्यर्थे । साम्प्रदायिकानामितरेतरद्वन्द्वस्य साहित्ये । सर्वेषामेव समाहारद्वन्द्वस्य समस्यमानतावत्पदार्थवृत्त्येकधर्मे । स च धर्मः क्वचिद् द्वित्वं क्वचिद्बहुत्वमिति ।

तदितरा साम्प्रतिकी । यथा गङ्गादिपदाना तीरादौ । सा पुनर्द्विविधा । जहत्स्वार्था अजहत्स्वार्था च । तत्राद्या गङ्गादिपदे । शक्यलक्ष्यसाधारणमेकधर्ममादाय शक्यार्थापरित्यागेन यत्रोपस्थितिः सा अजह

*Reply* Not so, because there can be no identity between two preclusions that have been assumed to be distinct from each other, on the ground of the difference of the objects precluded, and it has already been explained that it is *identity* that forms the basis of Inference

*Objection* "In as much as there is an identity between *momentariness* and *existence*, both of which form the integral parts of all things, there would be an identity between these *preclusions* (of *non-momentariness* and *non-existence*), that have been recognised as identical with those"

*Reply* Not so, as the identity between the two things has not been proved by any other argument It such identity were already established, then there would be no need for the contrary cognition that has been brought forward Nor can any thing be proved (or deduced) from the cognition of a concomitance between mere preclusions, for the simple reason that the *thing that is* is wholly distinct from *that which is not*, and there can be relationship between these

*Dharmottara* (a Bauddha writer the author of the *Nyāya-bindu*) has declared thus "Having, by means of the contrary cognition, established the necessary concomitance, (between *Existence* and *Momentariness*), in the case of the jar, we prove the momentariness of Sound, from its *Existence*, and thus there is a distinct use for both (the contrary cognition and the concomitance), as both have distinct objectives (one referring to the Jar and the other to Sound)"

To this we make the following *reply* As in the case of the jar, so in that of *sound* also, there could be no cessation of the operation of the contrary cognition also, and as such the employment of any other argument would be absolutely useless

Nor is it impossible for a non-momentary thing to have a useful action, as the *existence* of a thing consists in its capability of action whenever there are auxilliary attendants, and not in being active independently by itself And just as its

auxiliaries, having their capabilities ascertained by negative and positive concomitance, fall in,—its action duly appears, and hence it is quite possible for a permanent (non-momentary,) thing to have an action appearing gradually, specially as from a single thing (existing at only one moment) no appearance is possible of such an action as depends upon a number of causes Nor would it be right to assert that, if the thing were dependent upon auxiliaries, then the action would appear by reason of the peculiar capability of these auxiliaries, and hence the activity could not be said to belong to the thing itself Because an action is found to be always accompanied by the idea of the appearance of the form of a certain thing doing that action

**Page 77.**] If the action did not belong to the *thing*, then the seed of barley could bring about the sprout of paddy, as the auxiliary attendants of soil and water, are common to both(the barely and the paddy), and there would be nothing to restrict (the appearance of the paddy-plant to the paddy-seed) Nor do the auxiliaries add any capability to the thing, all that they do is merely to help it in its action The only addition to the capability of the thing consists in the proximity of the auxiliaries, and the absence of these would constitute its weakness (or incapability of action), as the action appears whenever there is a proximity of these, and not otherwise As for the theory that certain moments are productive and others are not productive (of action), this is negatived by the direct perception of continued existence

*Objection* "This perception of continued existence is a mistaken one, being due to the fact of the non-perception of the difference among the successive moments, that are very much like one another"

*Reply* You prove the mistaken character of the said perception, on the strength of the momentary character of things, and the momentary character of things you prove by the mistaken character of the said perception, and thus you fall into the vicious circle of mutual interdependence Nor is it right to

assume the production or destruction of a thing, when there is an absence of what have been recognised, by negative and positive concomitance, to be the causes of such appearance and destruction And this would lead to the absurdity of a destruction without cause, and also of the seed being the direct cause of the seed As a matter of fact the seed producing the seed is not produced directly from the seed,—for the simple reason that it is a seed,—like the seed that is still upon the stalk of the paddy plant

It has been asserted that the thing being impartite, it could not possibly be both active and inactive

But this is nothing, because a single thing in the shape of Fire is active towards *burning*, and at the same time inactive towards bathing, nor does this dual character make any difference in its form In the same manner, a single thing could be active, when the necessary auxiliaries would be present, and inactive when they would be absent

*Question* "How can the proximity of one thing make something else active ? and if such activity were possible, why should the activity brought about be of only a few things, and not of all things ?"

*Answer* You can not rightly take objection to the nature of things As for ourselves, whenever we find an activity appearing at the presence of a few things, and disappearing when these things are not present, we infer that these things constitute the auxiliaries in the appearance of that activity, and certainly there can be nothing objectionable in this process of reasoning According to you also, in as much as the plant grows out of the seed and the damp soil, it is these and not anything else, that are regarded as the aids, and for you also in this what other reason have you except the nature of things as they are ?

*Objection* "Each of these things—the seed, the soil and the water—is capable of bringing about the action of sprouting,

and they cannot be regarded as mere auxiliaries to one another"

*Reply* How then is it that the farmer after having prepared the soil, sows the seeds, and waters it?

*Objection* "He does it for the purpose of bringing about the moment of the production of the sprout, by each of these three (soil &c), as guiding the action of the other"

*Reply* If the seed alone were to appear from its cause as fully capable of bringing about the 'moment of the production of the sprout',—what would be the use of the Soil and the Water? And if the seed were absolutely incapable of bringing it about, then the proximity of these too would be of no avail, as this could not make it lose its nature (natural incapability)

*Objection* "What the soil and the water do is to stop the efficiency of the seed to produce another incapable 'moment,'—such efficiency existing in the 'moment-series' of the seed itself"

*Reply* There may be the *non production* of the *incapable* 'moment', but any production of the capable 'moment' would not be possible, on account of there being no cause for this production As a matter of fact however, there can be no stopping of the efficiency that constitutes the very nature of the thing As in that case there would be a cessation of the thing itself, and destruction comes to be brought about by a cause (and not uncaused as the *Bauddha* holds all momentary destructions to be)

Then again, it is not possible that there should be produced in the seed, an efficiency or capability of bringing about a particular kind of 'moment,' because it is momentary And if the efficiency thus produced were not something apart from the very nature of the thing,—then that would come to the producing of what has already been produced

For these reasons, there can be only two alternatives (1) If what is produced is inefficient, then there can be no action,

and (2) if it is efficient, then it must act immediately after its production, and the action cannot be attributed to the proximity of any other thing, as this other thing could not be of any use in this matter (as shown above)

**Page 78]** It might be argued that, "in as much as the effect is not found to be produced from a single cause, while it is found to be produced from a number of causes combined together,—we must attribute causal efficiency to all these combined, and as such why should you wander away from us who hold this view?"

But in that case your premiss becomes inconclusive, in as much as it is quite possible for a non-momentary thing to operate towards a useful end

*Objection* "Of all such things as are produced, or brought about by some cause, destruction is absolutely certain and from this we can infer their momentary character For instance, in all things we find that that which is sure to be does not stand in need of any cause to bring about that, *e g*, the fact of the arrow and the sword being made of iron does not stand in need of any other cause, and the destruction of all things is sure to be, and from this we can infer that the destruction of things does not stand in need of any other cause (save their very being), specially as those circumstances that are found to be due to other causes are not such as are sure to be,—such for instance as the colouring of clothes, so also if things were, for their destruction, to stand in need of causes other than those that bring them into existence,—then, in as much as there might be certain discrepancies in those other causes or some obstacle in their operation, it might so happen that some *produced* thing might not be destroyed at all Whereas things being produced by their causes as *amenable to destruction*, they become destroyed as soon as they are produced, and this establishes the momentary character of all things Then again, if a thing were not destructible by its very nature,

then its destruction could never be brought about, it would be as impossible as the cooling of fire and if it be destructible by its nature, there would be no need for any causes for its destruction Nor can destruction, which is non-different from the thing itself, be ever regarded as brought about by another cause, as a difference in causes would make a difference in the effects (and hence destruction would not be identical with the thing) If the Destruction were something different from the thing, and were brought about by a different cause, then we would have the absurd possibility of a negation being perceived, and in as much as the appearances of one thing (Destruction) could not do away with the form of another thing (the thing believed to be destroyed), we could have no such declaration as 'the jar is destroyed,' with a positive thing for its Nominative, instead of that we should have the assertion, 'Negation is produced' And then if a question of fact be put to us, as to what became of the 'jar,'—though we would really have its cessation, yet in what way could we assert it? For these reasons we conclude that things are destructible by their very nature"

To the above we make the following reply when a thing is produced, does it stay for a single moment, or does it stay for any other moment also? In the latter case, its momentary character disappears, as it would stay for more than one moment And in the former case, it would have no existence at any other moment save the one at which it is produced, and hence there would be no identity between its *existence* and *non existence*, as they would exist at different points of time

It might be urged that what is meant is not that a thing is its own destruction, but that the second moment is the destruction or non-existence of the preceding moment

**Page 79**] But there is not much in this theory either, because even though one moment differs from another moment, as an individual unit of time, yet there is no actual contradiction or opposition in their nature Just as one jar exists along

with another jar,—*i e*, in your phraseology, the jar of one "series" exists side by side with the jar of another "series"—so might it also exist along with another jar of the same "series" Specially as the means of cognition pertaining to the second moment having served its purpose with regard to the positive form of that moment, it could not have any efficiency towards the negation of the previous moment As for 'Negation,' it only consists in the *negation of a certain positive thing*, as it is always conprehended in the form, 'the *jar* is not' Hence its appearance means the cessation of that thing, its continuance or existence means the discontinuance of the thing, as the two—the jar and its negation—are mutual contradictories Such being the case, momentary character cannot belong to any *thing*, specially as its negation or absence, which always appears after sometime, and is dependent upon some other cause, is always found to come after the thing itself As for *existence* we find that when the jar has been produced, it is long before it is destroyed by the stroke of the stick Nor does it stand to reason to assert that, "the destruction of the jar is of a positive character, and what the stroke of the stick does is to produce the 'series' of broken pieces of earthenware (into which the jar is reduced)" Because the thing (jar) having bound together within its own series, the potency of producing like things of the same series,—as long as this potency is not destroyed, there can be no production of a heterogeneous series, and if you admit of the destruction of that potency by the same stroke of the stick, why should you object to the destruction of the thing itself?

Even though a negation be brought about by a cause, that fact alone would not make it an entity, as it is directly perceived by the senses to have the character of a negation of entity Its very nature is such that even though caused, it is not destroyed, like a positive entity, as that which has been destroyed is never again perceived (and it would be this perception that would constitute the destruction of that destruc-

tion) And if the nature of things, cognised by the right means of knowledge, were to be set aside, simply on the ground of its similarity with something else,—then the diversity of the universe would also have to be set aside

The argument—"how can the production of one thing make another thing lose its character?"—would not be a proper one to bring forward, as the statement, 'the jar has been destroyed,' is due to the production of its negation, through the action of its constituent parts, hence it is a negation of the jar alone, and not of all things, For this negation there is no material cause, and for this reason it has no non-material cause either As to the question—"where have you seen any effect without a substratum?"—we see such an effect in this very case, as the negation cannot inhere in the jar, which has been destroyed, nor does it inhere in the Earth, as being a property of something else it could not inhere in it

*Question* "How then is it that it is found to be perceived in a definite place?"

*Answer* That is due to the definite place being occupied by its counter-entity It is its nature that on the negation of something connected with it, it appears as this latter thing, and that on the negation of something inhering in it, it appears in the form of the latter, its qualification also is such, and it has no conjunction or inherent relationship, as these two latter belong to positive entities

Thus has been proved the existence of Negation There is no such thing cognisable by the intellect as is contrary in its nature to *Bhāva* (positive existence), and which could bring about a contradiction between Ice and Fire As a matter of fact, the only contradiction that exists between Ice and Fire consists in the absence of Fire in Ice, and *vice versa*, and there is no contradiction between their forms, as a positive entity can never have another positive entity for its contradictory

**Page 80** ] It has been urged that negation being sure to come about it could not stand in need of any other cause But we find this argument failing in the case of the rising and setting of the Sun and if these did not depend on any causes, then there would be no diversity of Time The same objections would also apply if we were to make the negation concomitant with the appearance of any one accessory detail, in the case of the cloth we find that there is a definite cause of colouring, which also appears at a definite time, and in this case the mere non-proximity or absence of that time would necessarily mean the non production of colour In the case of negation however we find that there are endless causes for bringing it about, and all are timed to appear at particular points of time, and it being impossible for every one of these causes and points of time to be absent, and one or the other of these is sure to appear, and appearing at any other time, it at once, in a moment destroys the positive Entity, and thus negation comes to be produced And even though the destruction is *caused,* yet it is permanent

Then again, all the above arguments brought forward to prove the momentary destruction of all things, are open to the fallacy of "*Kalatyayāpadishta*", as we find that what has been once seen is again cognised, in the same form, by the recognitive perception

*Objection* "This cognition cannot prove the fact of the positive entity having an existence before and after—*i e* a continuous existence, because the cognition of the object (now, and that after sometime) cannot be regarded as one and the same cognition, as there is no cause for any such continuous cognition, because the sense-organ operating upon objects that are near us, could not be said to belong to the past time, and as for the impression produced by a previous cognition, it is restricted to that particular cognition, and does not apply to any other time, and apart from these two there is nothing pertaining to both times, which could produce the cog-

nition in question Then again, for the following reason too, the cognition cannot be one and the same, because they are of totally different natures, the object perceived by the senses is known as "this," while that which is not so cognised is spoken of as "that", and the character of *sense-perceptibility* is directly opposed to that of *imperceptibility,* and as such they could never be regarded as one and the same cognition, hence we must accept the two cognitions—being as they are of the nature of *direct perception* and *remembrance*—to have wholly distinct objectives"

To the above we make the following reply—We distinctly recognise the fact of there existing a certain positive entity extending over the present as well as the past and the future, and then, to deny that that object is not the objective of the two cognitions would be a contradiction of direct cognition, as in that case the object of remembrance would not be the same as that which had been previously perceived For these reasons the whole must be regarded as a single cognition, which, on the strength of our distinct cognition, should be accepted as having both (the past and the present) for its object For a distinctly cognised effect learned people always assume adequate causes, even though these latter be not distinctly cognisable, and they never conceal or set aside the slightest or the most undesirable effect, on the ground of the non-perception of its cause, as if they were to do so, then there would be a setting aside of the whole worldly phenomenon, (the cause whereof we are never able to directly perceive) Hence, though the Sense-organ, or the Impression, each by itself, is incapable of bringing about the said combined cognition, yet when combined, the two together would bring about the single effect in the shape of *recognition* And on account of the capabilities of the two causes, this *recognition* would have both (the past and the present) for its object, and it would attain the character of 'sensuous' cognition, because of its following upon the efficiency of the sense-organ and the capability of the object

The mere fact of each of the two causes being separately incapable of bringing about a particular effect cannot be a ground for denying the capability of these also when combined, as for instance, though we find each of the three causes, the soil, water and the seed singly incapable of bringing about the sprout, yet they do bring it about when put in touch with one another It is a well-recognised fact that in a case where we have peculiar auxiliaries to the cause, the effect produced is also of a peculiar character

Consequently there would be nothing incompatible in one and the same object being both perceptible and imperceptible, according as it happens to be or not to be, in proximity to the person perceiving It is for this reason that even when there is no actual contact with the sense organs, the cognition of something in the past is always 'sensuous' cognition, as it has for its object a cognition brought by the sense-organs (on the previous occasion), and because 'sensuousness' lies only in that (being produced by the sense-organs) The sense-organ cognising that which is not before us, cognises the fact of its having occurred at some time past, and that which is to appear in the future, as in the case of this latter, the Sense-organ is without the aid of the accompanying *Impression* (which is present in the case of the cognition of the past) Nor is there any incompatibility in the same cognition applying to both points of time (the present and the past), and as such there can be no reason for attributing to such a cognition the character of '*Kalpanā*' (assumption or imagination) Because we have often seen a single thing having many qualifications, *e g* in the case of a person, Caitra, being qualified by (possessing) an *umbrella* and a *book* Nor would there be any difference between the two cases, on the ground of the relationship of the *umbrella* and the *book* appearing at one and the same time, and that of the two points of time being gradual, appearing one after the other, as the fact of one thing being cognised as having two qualifications would be common to the two cases

Thus then, we find that *Recognition* comprehends an object extending over diverse points of space and time, and as such it does away with the idea that all things are undergoing momentary productions and destructions Nor can this recognition be regarded as *mistaken* as we cannot find it being set aside by subsequent cognition to the contrary It might be urged that it is set aside by all those arguments that have been brought forward to prove the momentary destruction of things But all these arguments being inferential in their character could have a footing only when the contrary sensuous cognition would be set aside, and you seek to set aside this sensuous cognition by means of those same arguments, and certainly this affords an example of a curious mutual interdependence This is not the case with Sense cognition, which is independent of other forms of knowledge In the case of such things as the Flame and the like, the sense-cognition that we have has for its object the generality 'Flame', while the Inferential knowledge is that of an *individual* fire, and as such there being no contradiction between the two, in such cases the sensuous cognition is not an obstacle in the appearance of the Inferential cognition

Some people with extreme boldness have declared that the fact of all things undergoing momentary destruction is directly perceptible by the senses And against these people we bring forward the very fact of there being no such cognition at all That is to say, the cognition that we have is in the form of 'this is blue,' and not as 'this is *momentary*'

*Objection* "The momentariness of the blue object is concomitant with its *blueness*, and it has got no separate functioning (and existence), consequently when *blueness* would be perceived, *momentariness* would also be cognised along with it, and the reason why it is not always recognised as such is that we do not always perceive the differences between the successive moments of the thing's existence (and hence we regard the thing itself as having a continual existence)"

पाधिनानुगतं च तत्तत्कारणपदशक्यतावच्छेदकम्। ग्राहकं च तस्य क्वचिदन्वयव्यतिरेकदर्शनसहकृतं प्रत्यक्षम् क्वचिदनुमानं क्वचिदागमादिकम् ॥

एतेन कार्यत्वं व्याख्यातम् ॥

कारणत्वप्रतियोगिकत्वमेव कार्यत्वमिति चेत्। कार्यत्वप्रतियोगित्वमेव कारणत्वमिति किं न रोचयेः। तस्मात् कार्यत्वं कारणत्वं चोभयमेवातिरिक्तं भिन्नं चेति कृतं पल्लवितेनेति ॥

---

च्यम्। एकरूपेण तदनभ्युपपगमात्। अत्र तु कारणतात्वेनावच्छेद्यायाः कारणताया अवच्छेदकत्वस्य स्वरूपतो दण्डत्वेऽभ्युपगमे क्षतिविरहादतिरिक्तकारणत्वत्वस्य सर्वैरङ्गीकारादिति। तस्येति। कारणत्वस्येत्यर्थः। आगमादिकमिति। वेदादिकमित्यर्थः ॥

एतेनेति। क्लृप्तान्तर्भावेनानिर्वाहेणेत्यर्थः(१)। व्याख्यातम्। अतिरिक्तत्वेन व्याख्यातम् ॥

शङ्कते। कारणत्वेत्यादि। किं न रोचय इति। तस्मादिति। विनिगमनाविरहादित्यर्थः। भिन्नमिति। परस्परं भिन्नमित्यर्थः ॥

---

(१) क्लृप्तान्तर्भावानिर्वाहेणेत्यर्थ –पा० २ पु०।

संख्या च पदार्थान्तरं न तु गुणः गुणादिष्वपि तद्वत्त्वप्रत्ययात्[१] । न चासौ भ्रमः बाधकाभावात् । एकार्थसमवायप्रत्यासत्त्या तथाप्रत्यय इति चेत् । न विलक्षणाभ्यां समवायैकार्थसमवायाभ्यामविलक्षणायास्तद्वत्ताप्रतीतेरयोगात् । घटत्वादौ चैकार्थसमवायादेकत्वप्रत्ययवत् द्वित्वाद्येकार्थसमवायाद्द्वित्वादिप्रत्ययप्रसङ्गः रूपत्वादौ च न तत्सम्भवः ॥

---

**तद्वत्त्वप्रत्ययात्** । एकं रूपं द्वे रूपे इत्याकारकसंख्यावत्त्वप्रत्ययात् । तथा च संख्याया गुणत्वे रूपादिगुणे तथाप्रत्ययानुपपत्तेः । गुणे गुणानङ्गीकारादिति भावः । **असाविति** । रूपादौ संख्यावत्त्वप्रत्यय इत्यर्थः । **बाधकाभावादिति** । तथा च बाधकाभावे ऽपि भ्रमत्वाङ्गीकारे प्रतीतिबलात् पदार्थमात्रसिद्धिविलोपप्रसङ्गः । सर्वत्र प्रतीतेस्तथावक्तुमशक्यत्वादिति भावः । **एकार्थेति** । स्वाश्रयसमवेतत्वप्रत्यासत्त्येत्यर्थः । **अविलक्षणायास्तद्वत्त्वप्रतीतेरित्यादि** । अविलक्षणसम्बन्धविषयकत्वेनानुभवसिद्धायाः संख्यावत्त्वप्रतीतेरसम्भवादित्यर्थः । ननु तथाविधानुभवे मानाभाव इत्यत आह । **घटत्वादौ चेति** । **द्वित्वादीति** । घटत्वद्वयमितिप्रत्ययप्रसङ्गादित्यर्थः । तथा चैकार्थसमवायो न विशिष्टबु-

---

(१) तद्वत्ताप्रत्ययात–पा॰ २ पु. ।

समवायोऽपि च नैको जलादेर्गन्धादिमत्त्व-प्रसङ्गात् परं तु नानैव समवायत्वं तु पुनरनुगतमखण्डोपाधिरिति ॥

वैशिष्ट्यमपि पदार्थान्तरम् । रूपादिप्रतीतिनिमित्ततया समवायस्येवाभाववत्ताप्रतीतिनिमित्ततया तस्यापि सिद्धेः । स्वरूपसम्बन्धवि-

---

द्धिनियामक इति भावः । **तत्सम्भव इति** । तथा च स्वाश्रयसमवेतत्वसम्बन्धेनैकत्वादिप्रत्यय सम्भव इत्यर्थः । रूपादौ एकत्वादिसंख्याया अभावेन तथाऽसम्भवादिति भावः ॥

समवायस्यैकत्वे बाधकमाह । **जलादावित्यादि** । पृथिव्यां गन्धसमवायस्य जलनिष्ठस्नेहसमवायस्याभिन्नतया जलादावपि गन्धसमवायसत्त्वात् तत्र गन्धवत्ताप्रतीतिदुर्वारैवेति भावः । न च जले गन्धनिरूपितत्वविशिष्टसमवायाभावान्न गन्धवत्ताप्रतीतिरिति वाच्यम् । विशिष्टस्यातिरिक्तत्वाभावेन जलेऽपि तत्सत्त्वात् तथाविधविशिष्टनिरूपिताधिकरणताया अतिरिक्तत्वे किमपराद्धं विभिन्नसमवायैरिति ॥

**वैशिष्ट्यमपीति** । विशेषणताविशेषोऽपीत्यर्थः । **निमित्ततया** । विषयतया । **तस्यापि** । अतिरिक्तविशेषणत्वस्यापि । ननु तादृशप्रतीतेः स्वरूपसम्बन्ध एव विषय इत्याशङ्कते । **स्वरूपसम्बन्धेत्यादि** । तत्तदधि-

**शेष एव तथाप्रतीतिनिमित्तमिति चेन्न सम-वायोच्छेदप्रसङ्गात् । तत्रापि स्वरूपसम्बन्धवि-शेषस्य निमित्ततायाः सुवचत्वात् ॥**

करणादिस्वरूपसम्बन्ध इत्यर्थः । **तथाप्रतीतिनिमित्त-मिति ।** अभाववत्ताप्रतीतिविषय इत्यर्थः । **तत्रापि** रूपवत्ताप्रतीतावपि । **स्वरूपसम्बन्धविशेषस्य** तत्तद्-धिकरणस्वरूपसम्बन्धविशेषस्य । **निमित्ततायाः** । वि-षयतायाः । तथा च समवायमनङ्गीकृत्य यदि घटपटादिरू-पस्वरूपसम्बन्धस्य संयोगादिसम्बन्धत्वाभ्युपगमस्तदा घट-पटौ मिथः संयुक्तावित्यादिप्रतीतेस्तत्तदधिकरणे सांसर्गि-कविषयताभ्युपगमे गौरवम् । यदि च संयोगस्य स्वरूपस-म्बन्धः संयोग एव तदा संयोगेन संयोगो वर्तते इत्यपि प्रत्ययः स्यादिति अतिरिक्तसमवाय आवश्यकः । न चातिरिक्तसमवायस्वीकारे तुल्ययुक्त्या तद्वैशिष्ट्यस्याप्य-तिरिक्तस्य स्वीकारादुभयकल्पने गौरवात् तदपेक्षयातिरि-क्तवैशिष्ट्याख्यस्वरूपसम्बन्ध एव संयोगादिसम्बन्धत्वा-भ्युपगम उचित इति वाच्यम् । उपदर्शितयुक्त्या विनिग-मनाविरहेणैकसमवायसिद्धौ पश्चात्तद्वैशिष्ट्याख्यसम्बन्ध-विशेषकल्पनस्य फलमुखत्वेनादोषत्वात् । वैशिष्ट्याख्य-सम्बन्धस्तु वैशिष्ट्याख्यरूप एवेति नानवस्थेति यदि विभाव्यते तदा तुल्ययुक्त्याभावस्यातिरिक्तवैशिष्ट्यस-म्बन्धस्वीकारोप्यावश्यकः । अभावस्याभावसम्बन्धत्वा-भ्युपगमे ऽभावाधिकरणवृत्त्यखण्डभेदतावन्मात्रविषयक-ज्ञानादिकमादाय विनिगमनाविरहापत्तेः । न चाभावस्या-तिरिक्तसम्बन्धस्वीकारेपि तादृशविनिगमनाविरहो दुर्वार

**एतेन ज्ञानादिविषयता व्याख्याता ॥**

**नानुपमृद्य प्रादुर्भावादिति सूत्रम् अनुपमृद्य प्रादुर्भावादिति तदर्थः गुरूणां नये न कलञ्जं भक्षयेदिति कलञ्जभक्षणाभावविषयककार्यमित्यर्थः। एतेनैतादृशोप्यन्वयः स्थलविशेषे व्युत्पत्तिसिद्ध इति मन्तव्यम् ॥**

---

इति वाच्यम्। क्लृप्तेनाक्लृप्तस्य विनिगमनाविरहासम्भवादिति भावः ॥

**एतेन।** क्लृप्तान्तर्भावासम्भवेन। **व्याख्याता।** अतिरिक्तत्वेन व्याख्याता। अयं भावः। पिषयतायाः ज्ञानस्वरूपत्वे घटपटाविति समूहालम्बनस्य भ्रमत्वापत्तिः। तत्र तदुभयविषयतायाः एकज्ञानस्वरूपत्वेन घटत्वाद्यवच्छिन्नघटत्वाद्यभाववद्वृत्तिविषयताप्रतियोगित्वरूपभ्रमत्वसत्त्वात् विषयतायाः विषयस्वरूपत्वे तु घटभूतलसंयोगाविति समूहालम्बनतो घटवद्भूतलमिति विशिष्टबुद्धेरवैलक्षण्यापत्तेः। न च समूहानम्बनेऽधिकस्य संयोगत्वस्य भानत्वान्नतथेति वाच्यम्। तथा सति घटवद्भूतलसंयोगश्चेतिज्ञानात् तादृशसमूहालम्बनवैलक्षण्यानिर्वाहात्। न च विशिष्टबुद्धौ सम्बन्धसम्बन्धोप्यधिको भासते इति नानुपपत्तिरिति वाच्यम्। सम्बन्धसम्बन्धमादायापि समूहालम्बनसम्भवादिति। अधिकं विषयताविचारेऽनुसन्धेयमिति संक्षेपः ॥

**अर्थानां युक्तिसिद्धानां मदुक्तानां प्रयत्नतः ।**
**सर्वदर्शनसिद्धान्तविरोधेनैव दर्शनम् ॥**

**अर्था निरुक्ताः सिद्धान्तविरोधेनैव पण्डिताः ।**
**विना विचारं न त्याज्या विचारयत यत्नतः ॥**
**सर्वशास्त्रार्थतत्त्वज्ञान् नत्वानत्वा भवादृशान् ।**
**इदं याचे मदुक्तानि विचारयत सादरम्[1] ॥**
**रीतिरेषापकृष्टापि सेविता पूर्वपण्डितैः ।**
**यन्निजोक्तिविचाराय याचते विदुषोपरान् ॥[2]**

---

**अर्थानामित्यादि** । ननु अप्रयोजका एव त्वदर्था इत्यत आह । **युक्तिसिद्धानामिति** । **मदुक्तानां** । नान्येनोक्तानाम् । **दर्शनं** शास्त्रम् । **भावादृशान्** । पण्डितान् । एषा पूर्वश्लोकोक्ता । **पूर्वपण्डितैः** । वाचस्पतिमिश्रादिभिः । **अपरानिति** । पण्डितानित्यर्थः ॥

पदार्थखण्डनाकूतपुरुहूतपुरोहितम् ।
शिरोमणिमहं वन्दे शिरोमणिमिवाद्भुतम् ॥
श्रीमद्दीधितिकारकल्पितघटीकोलाहलव्याकुले
मार्गे सञ्चरणाय यन्निगदितं सिद्धान्तसिद्धेतरत् ।
दैवात् तेन भवेद्यदीह सहसा प्रौढापराधो मम
क्षन्तव्यः कृतिभिः श्रुतो यदि भवेद्यत्नानुरूपो बलिः ॥

---

(१) सादृत —पा १ पु ।
(२) शिरोमणिकृत रत्न पदार्थाना हि खण्डनम ।
विद्वज्जनै. सदा धार्यं मौलेर्दिव्यप्रकाशकम ॥
इत्यधिक २ पुस्तके वर्तते ।

इति महामहोपाध्यायतार्किकशिरोमणि-श्रीरघुनाथभट्टाचार्यविरचितं पदार्थतत्त्वनि-रूपणं समाप्तम्(१) ॥

इति श्रीरघुदेवन्यायालङ्कारभट्टाचार्यविरचिता
पदार्थखण्डनव्याख्या
समाप्ता ॥

(१) पदार्थतत्त्व समाप्तम्—पा ४ पु ।



स्तावलोकनजन्यहर्षोद्भवा तत्प्राश्च सुहृद्गनगमनजन्यखेदोद्भवा मुक्ता सदृशा॰ वाष्पकणिका सम युगपदेव मुक्ता । शिखरिणी वृत्तम् ॥१४॥

बालेति । विदेहतनया इय जानकी बाला अतिकिशोरवयस्का । भवन्तौ रामलक्ष्मणौ च तरलौ चचलौ । दक्षिणा दिक्च रजनीचराणा राक्षसाना चक्रेण समूहेन दुष्टा दुर्गमा । तत तस्मात् कारणात् हे वत्स वय वत्सलतया त्वतसौहार्दन इद उदाहराम कथयाम यत् नये नीतौ दक्षिण निपुण हे राम दक्षिणाशा दक्षिणा दिश मा गच्छ । अव श्यमेव गन्तव्ये वने निशाचरसकटा दक्षिणा दिश परिवर्जयेति भाव । वसन्ततिलक वृत्तम ॥ १५ ॥

सुरमुरजेति । सुराणा देवानां ये मुरजा भेर्य तेषा यो गभीरो धीरश्च नादो ध्वनि तेन द्विगुण द्विगुणीकृतो गुणस्य मौर्व्याः ध्वनिर्यस्य स तस्मिन चापे दत्तोऽर्पितो हस्तो येन स तथाभूतो राम चन्द्र पुरजननयने कृत सम्पादित कुवलयदाम सरोजमालाम । नय नकुवलयैरेव सम्पादिता मालामिति यावत । दधानो जगाम । तामेव दक्षिणामेव दिशमिति पूर्वेण सम्बन्ध । पुष्पिताग्रा वृत्तम ॥ १६ ॥

रामावतारस्य हेतुमजानन्त्या कालिन्द्या उक्ति॰ कः पुनरिति ।

(९१) किमपीति । गूढवृत्तान्तम रामावतरणहेतुभूतमिति भाव॰ । एकस्येति । एकस्य गुणस्य भाग्यवत्त्वस्य भाजन पात्रमित्यर्थ ।

नरेन्द्र इति । नरेन्द्रो राजा दशरथ कैकेय्या वचनपरिपाट्या विगलित खिन्न सन् क्षण मोहक्रोधयो य॰ प्रसरो विस्तार॰ तस्य भरयो भारयो अन्तरचरो मध्यवर्ती भूत्वा तृणानीव तुच्छवस्तुवत् प्राणान अमुञ्चत न पुन सुतं रामम अमुञ्चत् । क इव । चौरग्रस्तः कृपण इव मणिम । यथा चौराभिभूत॰ कृपणो करस्य मणिमदत्त्वैव प्राणास्त्यजति तथा अयमपि प्रियपुत्रपरित्यागात् प्रागेव जीवित जहावित्याशय॰ । शिखरिणी वृत्तम ॥ १७ ॥

मातः इति । हे मात तात पिता क्व यात इति भरतप्रश्नः । सुरपतिभवन स्वर्गमिति कैकेय्या उत्तरम । पुन कुत कस्मात कारणादिति प्रश्ने पुत्रशोकादित्युत्तरम । चतुर्णा मध्ये कोसौ पुत्रो यस्य शोकादेव यातमिति प्रश्ने त्वम अवरजतया अनुजभावेन यस्य जात इत्युत्तरम । त्वदग्रजो राम एव स इति भाव । अस्य मम अग्रजस्य कि यात मिति प्रश्ने असौ काननान्त प्राप्त इत्युत्तरम् । किमिति कथमिति प्रश्ने नृपगिरा दशरथाज्ञयेत्युत्तरम । असौ नृप तथा कि कुतो वभाषे येन रामो वन गत इति प्रश्ने मद्वाचा बद्ध परवश॰ सन इत्युत्तरम । ते तव इह अस्मिन रामनिर्वासने कि फलमिति प्रश्ने तव मत्पुत्रस्य धराधीशता राज्यलाभ इत्युत्तरम । मर्मैव कारणान्निर्वासितो राम

इति ज्ञात्वा भरतः सवैक्लव्यमाह—हा हतोऽस्मीति । स्रग्धरा वृत्तम् ॥ १८ ॥

भवसीति । एवंविधकुशोलेन समुचितोऽनुजो रामस्य त्वमिति भाव. ।

(९२) राम इति । रामे वनान्ते प्राप्ते सति भरत कथमपि येन केनोपायेन चेतना सज्ञा प्राप्य मुनिजनवचनात तदनुसारिणा ऊर्ध्व देहक्रियाभि श्राद्धादिभिः तात पितर देवेन्द्रलोक स्वर्गलोक नीत्वा भ्रातु रामचन्द्रस्य शोकेन अभितप्त खिन्न सन् स्वजनेन अयोध्या पौरजानपदेन परिवृतः नन्दिग्रामे तिष्ठन् रघुपते रामचन्द्रस्य यत्नु नरागामी वनात्प्रत्यागमनादूर्ध्व भावो भोगः राज्योपभोग तस्मात् अपवीरो निवृत्तो यथेष्टविनियोगरहितः सेवकवदयोध्या पालयामासेति भाव । स्रग्धरा वृत्तम ॥ १९ ॥

विघ्नानिति । एव रामो विघ्नान् तपस्विपरिपालनविघ्नभूतान् इव अनुसरतः पश्चादागच्छत. पौरान् अयोध्यावासिनो विनिवार्य स्वय साक्षान्नय इव नीतिरिव जगाम। एन राम सीता विभूतिरैश्वर्यमिव अनुजगाम। लक्ष्मणोपि ता सीता सुखलाभ इवान्वगच्छत । यथा विभूतिसुखलाभौ क्रमेण उत्सारितविघ्न नयमनुसरतः तथैव सीतालक्ष्मणौ राममित्युपमा । वसन्ततिलक वृत्तम् ॥ २० ॥

पन्था इति । पन्था मार्ग सिकतिलः वालुकामय अत एव समः वैषम्यरहित. । भूश्च मृदुशाद्वला कोमलतृणवती । इय सरिच्च नदी वेतस्वती वेतसलतान्तरिता अत एव अतप्तप्रान्तमार्गा । (६३) अथ वा शिशिरा शीतप्रवाहा । न दूरे समीपवर्तिन्येवेति भाव । अग्रे च कुमुद्वती अतो रमणीया अथ च कादम्बाना पक्षिविशेषाणा कूजितै. करम्बितो मिश्रितो हसस्य नादो यस्या सा एवभूता च सरसी चकास्ति शोभते। एभिर्वचनैः रामचन्द्रादीना प्रोत्साहन कृत पथिकजनै । वसन्ततिलक वृत्तम् ॥२१॥

तरुरयमिति । अयम् इत शीता छाया यस्य सः अथ च स्रवति विगलन्ति मधुन सीकराणि बिन्दवो यस्मात् स तथा भूतश्च तरुः वृक्षः । इय सरित् स्वल्प. सुखतरणयोग्यः स्वच्छश्च य प्रवाह. तेन मनोरमा रमणीया । इद च सरसीरुहा कमलानां वन स्निग्धः कोमल आमोद परिमलो यस्य तत । पुन मुहु मधुरं यथा स्यात्तथा ध्वनन्त्यो गुञ्जन्त्यो या मधुकरवध्वो भ्रमर्य ताभि मुग्धो रमणीयः आभोगो मण्डल यस्य तत्तथा भूतं च । अस्तीति सर्वत्र सबध्यते । हरिणी वृत्तम ॥ २२ ॥

अध्वेति । अध्वश्रमस्य पथिसञ्चरणजन्यखेदस्य शमनानि शान्तिकराणीत्यर्थः ।

**भीतमिति ।** चापहस्तं रामं दृष्ट्वा भीतं हरिणं विलोक्य करुणार्द्रचित्ता सती पत्युः रामचन्द्रस्य धनुः निजेन अंशुकेन वसनाञ्चलेन पिदधे आच्छादितवती । पुनः केदारसीम्नि क्षेत्रप्रान्तेषु सदयं प्ररोहखण्डनजन्यदुःखविषयककृपया सहितं यथा स्यात्तथा यवप्ररोहम् आदाय साधु सम्यक् प्रकारेण कर्णावतंसं कर्णभूषणं विदधे सम्पादितवती । कर्णावतंसमित्यत्र अवतंसपदस्य कर्णभूषणविशेषवाचकत्वेऽपि कर्णपदप्रयोगेण न पुनरुक्तिः शङ्कनीया । तस्य कर्णसान्निध्यसूचकत्वात् । यथोक्तं प्रकाशे "कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः । सन्निधानादिबोधार्थं"मिति ॥ वसन्ततिलकं वृत्तम् ॥ २३ ॥

**तटभुवीति ।** सरसीनां सरोवराणां तटभुवि तटे पुनः निम्नगानां नदीनां सैकते पुलिने प्रियस्य निजकान्तस्य परिसरं पार्श्वं क्षणमपि अपहातुं त्यक्तुं असमर्था चक्रवाकी इत्येवरूपं वृत्तं लोलं चचलं यथा स्यात्तथा पथि आलोकयन्ती पश्यन्ती जनकतनूजा जानकी हर्षं स्वकीयप्रियतमसहचारजन्यम् अथ च शुचं शोकं भावि चक्रवाकवियोगसंस्मरणजन्यं प्राप्तवती । अनेनात्मनोऽपि भावि वियोगः सूचितः । मालिनी वृत्तम् ।

**अनुकम्पनीयेति ।** अनुकम्पनीयाः दयापात्राणि वत्सलाः प्रियजना यस्याः सा । **पथिकेति ।** पथिकनीत्या यथोचितपथिकव्यवहारपालनेन शीतलानि सुखावहानि वत्सानां रामभद्रादीनां शीलानि चरितानीत्यर्थः ।

(६४) पथिकनीतिं वर्णयन्त्याह—**यावदिति ।** तपनः सूर्यो यावत्कालपर्यन्तं कर्णं तपति दक्षिणदिग्गमनावसरे पूर्वाह्णे इति भावः । तावत्कालपर्यन्तमेव प्रयाणम् अध्वगमनम् । रवेः सूर्यस्य कराले प्रचण्डे मध्याह्नकालीने अंशुजाले किरणप्रसरे प्रसरति सति विश्रामः । रवेर्विमाने रथे लम्बमाने सति अपराह्ण इति यावत् । पुनरपि यात्रोद्योगः प्रयाणम् । पुनः यावत्कमलिनी मीलति मुकुलिता भवति । सन्ध्यासमकाल इति यावत् । तावत् आवासबन्धः रात्रिनिवासस्थानस्थितिः । कार्य इति सर्वत्र संबध्यते । मन्दाक्रान्ता वृत्तम् ॥ २५ ॥

**अनवस्थितमिति ।** अनियतपरिपालनोऽव्यवस्थ इत्यर्थः ।

**अपि तपतीति ।** चण्डचण्डैरतिप्रचण्डैः मयूखैः किरणैः तपत्यपि पतङ्गे सूर्ये पथि जानकी सन्तापम् अध्वगमनजनितं खेदं नैवाप । काव्यलिङ्गमुपन्यस्यति—**अपरिचितेति ।** अपरिचितो निमेषोऽनवरतावलोकनात् यस्मिन् स आलोकोऽवलोकनं यस्मिन् कर्मणि तद् यथा स्यात्तथा प्रियस्य रामचन्द्रस्य कुवलयदलानां दामवत् श्रेणीवत्

श्यामम अङ्गमालोकयन्ती । एवभूता सती जानकी नैव सन्नाहमा पेत्यभिसन्धि । मालिनी वृत्तम् ॥ ३६ ॥

**प्रियतमेति** । प्रियतमे रामचन्द्रे य स्नेह. प्रेम तस्य शीलतया स्वभावेन ॥ जीविता उल्लासिता इत्यर्थ ॥

**अप्युच्चण्डैरिति** । उच्चण्डै प्रचण्डैः तपनस्य सूर्यस्य किरणैः तापितायामपि पृथिव्या कठिनवपुषा कठोरशरीरवतामन्येषा जनाना दुर्गमे दुस्सञ्चरेऽपि मार्गसीम्नि पथप्रदेशे । प्रियतमस्य रामचन्द्रस्य पदै अङ्कितान चिह्नितान् भूमिभागान् । प्रेमार्द्रेण चेतसा प्रगुणिता वृद्धि प्रापिता धृति धैर्य यस्या सा सीता शीतशीतान अतिशीतान मेने । पत्या सह गमने सीताया कोऽपि खेदो नासीदित्याशय. । अत्र विरोधगर्भित काव्यलिङ्गमलकार. । मन्दाक्रान्ता वृत्तम् ॥ २७ ॥

(९५ **देवीति** । यत् त्वमपि कठोरातपतप्ततया दुर्गमासि वत्साया इत्याशय । **न खल्विति** । महाभूताना पचानाम अत्र तेज पृथिव्योरिव वृत्तय –न स्नेहस्य अनुगुणा अनुकूला प्रवृत्ति यासा ता तथाभूता ॥

**कान्तेनेति** । श्रान्ताश्रान्ता मुहुर्मुहुरध्वश्रमखिन्ना जनकतनया कान्तेन रामचन्द्रेण किञ्चिदाचञ्चलेन वल्कलस्य अञ्चलेन प्रान्तभागेन वीता अपसारिता ये श्रमजलकणा तै. स्निग्धा मनोहरा आननश्री मुखलावण्य यस्या सा तथाभूता प्रणयेन प्रीत्या मधुर रमणीय यथा स्यात तथा चक्रे । अथ च श्रान्त श्रान्तो रामोऽपि पुन उक्तप्रकाराऽऽननश्री यस्य स तथाभूत अनया सीतया लोचनस्य अञ्चलेन प्रान्तेन कटाक्षेणेति यावत चक्रे । तस्या स्निग्धालोकनेनैव वीतश्रमो राम इति भाव । परिवृत्तिरलङ्कार. । मन्दाक्रान्ता वृत्तम ॥ २८ ॥

**विनिमयस्येति** । विनिमय परस्परोपकार तस्येत्यर्थः ।

**प्रत्यासन्न इति** । निलये आवासस्थाने प्रत्यासन्ने समीपवर्तिनि भवति सति तूर्ण शीघ्र यथा स्यात्तया क्षिप्रं कतिपयपदे पुरस्तादग्रे सम्प्रयाता सती हस्तात रामस्य चापमादाय यथास्थान च निवेश्य नवकिसलयै नवपल्लवै श्रान्तम् अध्वगमनखिन्न सानुज सलक्ष्मण कान्त राम वीजयन्ती सीता समुचितविधिप्रक्रियाया कुलाङ्गनोचितसदाचारस्य वैजयन्ती पताका जाता ॥ वीजयन्ती वैजयन्ती जातेति पुनरुक्तवदाभास । मन्दाक्रान्ता वृत्तम् ॥ २९ ॥

**सरसेति** । सरसमथ च पेशलं कोमलम । प्रिय प्रति कान्तायाः व्यवहार. सरसः, समुचितव्यवहारत्वात् पेशलश्च ॥

**जनकतनयेति** । जनकतनयाया. हस्ते न्यस्तैः नवपल्लवै.

तस्मात्तज्जनितो य॰ शिशिर शीतल मसृणः कोमलः समीरणो वायु॰ समेति उद्गच्छति । (६६) अमुना अनेन वायुना अनयोः रामलक्ष्मणयोः कपोलयो यत खेदोद्भूतम अध्वगमनश्रमजन्यं सलिल स्वेदः तत् प्रशम जगाम शान्त बभूव । न तु पुनः शोकोद्भूतं परिचारिकाकर्म सम्पादयन्ती सीता दृष्ट्वा य शोक॰ तज्ज पितृमरणज च नेत्रयोः सलिलम अश्रु प्रशम जगामेति सम्बन्ध । हरिणी वृत्तम् ॥ ३० ॥

कृत इति । स्थानेस्थाने सुमित्रापुत्रेण लक्ष्मणेन विहितः सम्पादितो वरिवस्याया॰ शुश्रूषाया॰ परिकरो यस्य स एवभूत सन् रघु पति रामचन्द्र अमम्य अमनेन शान्त्या शीतो गतश्रमः कृतः । 'वरिवस्या तु शुश्रूषा' इत्यमर । असौ लक्ष्मणोपि एतेन रामचन्द्रेण क्षणविरहात जातेन बाष्पेण–अश्रुणा अञ्चिता सहिता या दृक नेत्र तया कृतालोको वीक्षित सन गलितः अपसारितः सकल॰ आयासः परिचर्यापरिश्रमो यस्य स॰ तथाभूत॰ शिशिर चक्रे कृत । परिवृत्ति रलङ्कार. शिखरिणी वृत्तम ॥ ३१ ॥

रघूणामाधिपत्य प्रदर्शयन्नाह-एते हीति । स्वरसेन रघुमाहा त्म्येन अवनम्रा नम्रीकृताः ये क्ष्मापालाः नृपा. तेषा मौलिषु शिरस्थि-तमुकुटेषु ज्वलन्ति देदीप्यमानानि यानि माणिक्यानि तेभ्य॰ स्फुरन्तो येशव. किरणाः तैः मासल सयुक्त यत पदं तस्मिन् प्रेङ्खन्ति ज्वलन्ति नखज्योतींषि येषा ते तथाभूता एते रघुकुलराजान । दूरादुन्मुक्ताः अक्षिप्ताः याः चतुर्णा समुद्राणा लहर्य्य ताभिर्विनिघ्ना॰ या॰ शुक्तय ताभ्य स्खलन्त्यो या मुक्तापङ्क्तय ताभि विनिर्मितम रुक्मच-न्द्र प्रान्तप्राकारवप्र यस्य तत्तथाभूत भूमण्डलं भुञ्जते शासति । आचतु॰समुद्रान्त राज्य रघूणामिति भाव. । शार्दूलविक्रीडित वृत्तम ॥ ३२ ॥

पुरमथनेति । पुरमथनस्य शिवस्य मौलौ शिरसि मालतीमा ल्यभूता गङ्गाम । कलिन्दगिरिरिव यः करी गज तस्य कपोलमदवारि-धारा कलिन्दगिरिजाता यमुनामिति भाव॰ । करिकपोलमदधाराया अपि श्यामत्वात यमुनाया तत्त्वारोपः गिरौ च करित्वारोपः । तदिदमिति । कस्मिंश्चिद् दिवसे गृहीतेत्यादि उपक्रान्तेत्यन्तं यमुनाया वचन स्मृत भागीरथ्या ।

तपनसुतयेति । तपनसुतया कालिन्द्या यद्वा देव्या भागीरथ्या च चिरात् अतिविपुले वीचीहस्ते तरङ्गरूपकरे. किं कृतम न किमपीति काकुध्वनिः । यत् ललितो यो लवलीभङ्ग तद्वत्कोमलै अङ्गैरुपलक्षिता सीता वन प्रति चलिता सती पाणौ धृत्वा न निवारिता ताभ्यामि ति । हरिणी वृत्तम् ॥ ३३ ॥

सखीति । उभावप्यावा भवत्या समक्ष एव स्थिते तत्कथं परोक्ष-स्वजनाविव नावुपालभसे इति भाव ।

(६७) शबरेति । शबराणां वनचारिणां शरैः दलिताः पीडिताः ये विन्ध्यकाननवासिनः करिणो गजाः तेषां कुम्भतटीभ्यो विमुक्तो विच्छिन्नो यो मुक्ताफलानां प्रकरः समूहः तेन तारकितं चित्रितं यत् लतावितानं तदेव परिच्छदः आच्छादनं यस्याः सा तां तथाभूतां शर्म्मदां सुखदां नर्मदाम् । चपलेति । चपलेन चञ्चलेन कर्णाञ्चलेन परिमिलितः संघट्टितो यो मदकरिणां मत्तगजानां कपोलः तस्मात् चलिताः ये सहचराः तेषां समागमेन मुदिताः याः मधुकरवध्वः भ्रमर्य्यः ताभिः मधुरं सरसं च कुसुमकेसरं यस्मिन् तं तथाभूतं गोदावर्य्याः परिसरं तटभूमिं प्रयाताः ।

सौमित्रीति । सौमित्रिशरेण दलिता या नासिका तस्याः स्रवन् यो रुधिरः एव सीधुः मद्यं तम् आस्वादितवती । लक्ष्मणेन कर्त्तिता अस्याः नासिकेति भावः ।

करेति । करैः कलितानि करालानि कुन्तकरवालकार्मुकाणि येन तत्तेन । कुन्तः तीक्ष्णाग्रः शक्तिविशेषः । करबालः खड्गः । कार्मुकं धनुः ।

नक्तंचरेन्द्रेति । नक्तंचरेन्द्रस्य राक्षसपतेः रावणस्य भगिन्याः शूर्पणखायाः सुकुमारनासायाः कोमलनासिकायाः निर्मुक्तेन रक्तलवेन शोणितबिन्दुना लिप्तः ततश्च शिता शाणिता अतितीक्ष्णीकृता धारा यस्य स तथा भूतो मे कृपाणः कठिनराक्षसकण्ठजानां कठोरनिशाचरकण्ठच्युतानां कर्दमसृजां भूमौ पतनेन कर्दमोत्पादकानाम । असृजां रुधिरमेदसां पानाय उत्कण्ठते । अतः आज्ञापय मां निशाचरायोधनायेति भावः । वसन्ततिलकं वृत्तम ॥ ३४ ॥

(६८) जानकीति । जानक्या सनाथं पूर्णो गर्भो यस्या ताम ।
अचिरादिति । निशाचरांश्चिहत्य प्रत्यागच्छामीति शेषवाक्यम । निजबलदर्प्पवर्णनं न शोभायै वीराणामित्यर्द्धोक्ते विरामः । सम्मीलित इति । युद्धे इति शेषः ।

अथाहूत इति । तादृक् यः समरजयः तस्य यः संरम्भरभसः क्रोधोद्वेगः तेन प्रसर्प्पन् यो गम्भीरो ध्वनिः तस्य यो गरिमा गुरुता । गाम्भीर्यमिति यावत् । तेन गर्ज्जन्त्यः शब्दायमानाः दशदिशो यस्मिन् कर्मणि तद्यथा स्यात्तथा । सौमित्रिः लक्ष्मणो मुहूर्तात् अल्पकालानन्तरमेव आहूतः । पराभूतेन रामेण आहूतो लक्ष्मणः त्राणायेति सख्याः शङ्का । रामं हत्वा निशाचरैः लक्ष्मणः अहूतो योधनायेति इति तस्याः द्वितीया शङ्का । तदुभयमप्यपनुदन्नाह हंसः— विपिनेत्यादिना । विपिनचरा वनवासिनो ये नक्तंचराः राक्षसाः

त्रेषा या चमू सेना तस्याः या वधक्रीडा अनायासेन हननं तया किंचित मुकुलिता श्रान्ता दृष्ट यस्य स तेन तथाभूतेन रामस्य धनुषा सौमित्रिराहूत इति पूर्वेण सम्बन्धः । शिखरिणी वृत्तम् ॥ ३५ ॥

**प्रथमेति** । प्रथमं दर्शितः सूचितः तीव्रः आतपो विपत्तिवृत्ति रूपो यस्या सा पीयूषस्य रामजयवृतान्तरूपस्य वृष्टिः । तीव्रातपस्य पश्चात वृष्टिर्भवतीति लौकिकः प्रवादः ।

**अथाविरासीदिति** । कुरुविन्दः पद्मरागः तद्वल्लोचने यस्य स रक्तनेत्र इति भावः । पुनः विद्रुममय शृगं यस्य सः । (६६) विभक्ताः याः मुक्ताः तन्मयचित्रं च बहुवर्णमिश्रित मण्डन भूषणं यस्य सः । इत्थम्भूतो मनोपहारी मनोहररूपो हिरण्मयः स्वर्णमयो हरिणः आविरासीत् व्यक्तीबभूव । वंशस्थ वृत्तम् ॥ ३६ ॥

**अनर्थेति** । दिव्यदृष्ट्या ज्ञातं गङ्गया । **भ्रूवल्लीति** । भ्रूवल्या विजितो मनोजस्य कामदेवस्य चारुचापो येन स सीताया लोचनान्तः तं हिरण्मय मृगम अनुससार । अथ च चापश्रिया निजधनु शोभया जिताः युवतीना मनोरमा रमणीया भ्रुवो येन स । पुनः स्फुरत् विकसत् यत असित नीलमुत्पल तद्वत अभिरामः सुन्दरः कान्तो रामश्च मृगम अनुससार । सतृष्ण त विलोकयन्त्री सीता दृष्ट्वा रामः तज्जिघासया तमनुससारेत्यर्थ । स्फुरदसितोत्पलाभिराम इत्यु भयत्रापि सम्बध्यते । प्रहर्षिणी वृत्तम ॥ ३७ ॥

**त्रासातुरेणेति** । त्रासातुरेण भयार्तेन तेन मृगेण सहैव जनकात्मजाया हृदये दूर प्रयाति गच्छति सति सौमित्रिः लक्ष्मणः कृत चापपाणिः सज्जीकृतशरासन आश्रमपदात द्राक शीघ्र निर्जगाम । अथ तदनन्तरं कोऽपि भिक्षुः विवेश प्रविवेश आश्रमपदमिति शेष । वसन्ततिलकं वृत्तम ॥ ३८ ॥

**इतोबाणमिति** । इतः एकत्र मुक्तकरुणो निर्दयः सन रामो हरिणे कनकमृगे बाण क्षिपति । इतोऽन्यत्र सौमित्रिः चापेन सहितः स्वजन रामम अनुसरति । इतश्च आश्रमे सीता भिक्षो भिक्षुरूपधरस्य रावणस्य करतले भिक्षामुपनयति । अयमप्येतत व्योम्नि प्रेक्षन् उड्डीयमान सन् युगपत आलोकयम दृष्टवान् । गगनगतस्यैव एककालाऽवच्छेदेनानेकस्थलीयविषयदर्शनसम्भवः । शिखरिणी वृत्तम् ॥ ३९ ॥

**कनकेति** । कनकहरिणस्य गात्रे यो रामकृतबाणपातः तस्य अवलोकात विमुखा विमनस्का हृदयस्य वृत्ति यस्य स तथाभूतः सन अहं लोचने सचिमील्य दर्शनासहनया सम्मुद्र इव रामवृत्तान्त ज्ञातं कथयितुं तव तटान्त तूर्णं शीघ्रम् अवतीर्णः आगतवानस्मि

नेत्रनिमीलनवर्णनेनात्मन. सीतावृत्तान्ताज्ञान समर्थितम् । मालिनी वृत्तम् ॥ ४० ॥

(१००) विहरेति । पुरतरुणीना चरणेषु रणत. शब्दायमानाना मणिनूपुराणा कूजितेन उत्सुतुक चकित अन्यभयकारणानि पश्य सन् त्वम । अस्मिन् शुचि स्वच्छ पवित्र च पयो जल यस्य तत् तस्मिन रमणीये मनोहरे पुन स्मेराणि प्रफुल्लानि नीरजानि कम लानि यस्मिन् तत तस्मिन् तथाभूते सरसि सरोवरे विहर ॥ आर्या वृत्तम ॥ ४१ ॥

कातरमिति । जानक्या एकाकिनीत्वात भयग्रस्तमित्यर्थ ।

शंकितजानकीवृत्तान्ता गद्गदेति ध्येयम । नूपुरोद्भेदेनेति । विहरे त्यादिपद्ये नूपुरकूजितवर्णनेनेत्यर्थ । पतिव्रतेति । पतिव्रता या सीमन्तिन्य स्त्रियः तासु रत्न सर्वोत्तमेत्यर्थः ।

अधिचरणमिति । हे चमूरुनेत्रे मृगनयने सीते मदुरणितौ मधुरशब्दितौ अमू मणिनूपुरौ अधिचरण चरणगतौ विधेहि कुरु । ययोरनयो नूपुरयो महिम्ना प्रभावेण हरिणदृश स्त्रिय अहर्दि दिनैकमात्रमपि जल्लभ स्वकान्त सह विरह विश्लेष न लभन्त न प्राप्नुवन्ति । पुष्पित ग्रा वृत्तम ॥ ४२ ॥

निर्वृतेति । पूर्व शङ्कितसीतापहरणभीताहम् । अधुना नपु रवनान्तमधिगम्य किञ्चिन्निवर्त्य तत्क्षणा स्थिरहृदयास्मीति भाव । वसिष्ठेति । वशिष्ठस्य गृहमेधिनी धर्मपत्नीत्यर्थः । कल्लोलिनीति । कल्लोलिनीना तरङ्गिणीना नदीना कान्त पति ।

(१०१) वृत्तान्तशेष इति । वृत्तान्तस्य हनुमद्व्याकृतस्य शेष अवशिष्टभावीत्यर्थ ।

रामेति । रामेण उन्मुक्तो य एक एव बाण तेन प्रशान्त हृदय यस्य स तथाभूत काञ्चनाङ्गो हिरण्मय कुरङ्ग हरिण सद्य. तत्क्षणमेव मायाबलात् सान्द्रेण घनीभूतेन रक्तेन रुधिरेण अक्त लिप्त वक्षो यस्य स एवम्भूतो मारीचनामा निशाचरो राक्षस. अजनि प्राद भूत । सोपि सीतानिकटस्थो भिक्षु. वराङ्गेऽ मणिरचितानि चलन्ति च यानि कुण्डलानि तेषा श्रेणीना या शोभा तस्या य वैचयस्तरङ्गा तासु खेलन्त प्रतिबिम्बिता ये कपोला ते स्फुरितानि चिन्हितानि दशशिरासि यस्य स एवम्भूतः कुम्भकर्णाग्रजो रावण मुक्तकपटवेषोऽभूत् । स्रग्धरा वृत्तम ॥ ४३ ॥

रजनिचरेति । रजनिचरस्य रावणस्य कामनया स्वर्गेनम्भाते स्वर्णरूपविपक्षो विघ्न रचयितुं सम्पादयितुं अनसूयाया अत्रिपत्न्या

हस्तेन दत्त. अङ्गरागो यस्यै सा ता तथाभूताम । उद्यत प्रफुल्ल यत्कुवलयदल तद्वत् शीता भयविह्वलशीतलाङ्गी सीताम । पिञ्जर कपिश ज्योतिर्यस्य स तथाभूत अनलपिञ्ज अग्निसमूह अङ्गराग प्रभावजन्य बहल प्रभूत यथा स्यात्तथा सवृणोति स्म आवृतवान । शीतामित्यनेनानलपुञ्जेन सीताया अनभिघात. सूचित. । मालिनी वृत्तम् ॥ ४४ ॥

वरुणेति । वरुणदैवतमन्त्रस्य चिन्तनेन जपेन आहूता आकृष्टा या नूतनवलाहका नवीनमेघमण्डल तस्याञ्चलेन प्रान्तभागेन निचुलितो वेष्टित पाणिर्यस्य स तथाभूत सन रावण अस्पृशदेव स्पृष्टवानेव । सीतामिति शेष । वारिदवेष्टितत्वादनलसहस्व करस्य ।

(१०२) हा रामेति । हा राम हा रमण प्रिय हा जगदेकवीर इत्यादि माम उपेक्षसे त्यजसि किम । इत्यमनेन प्रकारेण मुहुराल पन्ती विलपन्ती विदेहतनया सीताम आदाय गृहीत्वा राक्षसपति नभसा शङ्कितरामदर्शन आकाशमार्गेणैव जगाम गतवान् । वसन्त तिलक वृत्तम ॥ ४५ ॥

मयेति । यत किल चरणगतयोरेव नूपुरयो सतोरपहृता जान कीति भाव ।

आ पापिन्निति । आ इति खेदे क्रोधे च । पापिन पापकर्म निरत रावण मे पश्यत अस्मत्रामच एव मामनादृत्य गिरिशस्य शि वस्य शिरसि शायिनी वर्त्तिनी शीतांशुलेखामिव चन्द्रज्योत्स्नामिव त्रिभुवनवन्दनीयामिति यावत रघुतिलकवधू रघुवरपत्नी सीता चोर वृत्या अपहर्तु उद्यतोसि । अत एषोऽह प्रखरैस्तीक्ष्णैर्नखमुखैर्नखाग्रै दीप्ता प्रज्वलिता चूडामणयो येषु तानि एवम्भूतानि त शिरांसि छित्त्वा सुधाकाङ्क्षिणम उरग सर्प्प गरुत्मान् गरुड इव सहरामि । अत्र सुधया सीताया गरुत्मता पक्षिणा सर्प्पेण रावणस्य साम्यम । स्रग्धरा वृत्तम । गरुडोरगवृत्तान्तो महाभारते आदिपर्वण्यनुसरणीय. ॥ ४६ ॥

नखैरिति । कुलिशात वज्रादपि कठोरै पुन निशाचरस्य राव णस्य अङ्गानि भिन्दद्भिः छिन्दद्भि तदीयै जटायुषो नखै हेमाभरण कनकालङ्कृतो रावणस्य रथो बभञ्जे खण्डश चक्रे । किन्तु अस्य राव णस्य जानकीलाभमनोरथो न बभञ्जे । परिसङ्ख्यालङ्कार. । इन्द्रव ज्रोपेन्द्रवज्रयोरुपजाति ॥ ४७ ॥

(१०३) निशितेति । निशिता तीक्ष्णा नखाश्च जटायुष निस्त्रिंशो रावणकरवालश्च तेषा निर्घातेन परस्परसंघातेन भैरवे भीषणे समरस्य सरम्भे । सम्भ्रमेण विमूढभावेन कातराया रथभङ्गा न्तरे रावणक्रकरास्थिताया‌म् जानक्या सत्याम् ।

**तस्या इति** । किमपि । किञ्चित् क्वणत शब्दायमान' एको नूपुर' अतिकरुण यथा स्यातथा क्रन्दन् रुदन्निव सीतायाः चरणात् पृथिव्या पपातेत्यागामिना सम्बन्ध. । **निराशा इति** । अधुना नूपुरभ्रंशेन नि सशय रामचन्द्रेण विप्रयुक्ता भविष्यति वत्सा जानकीति भाव । आ खल दुष्ट तिष्ठ तिष्ठ निहतोसि मया इति जल्पञ्जटायुरपि खड्गहत' रावणखड्गेन निहत. दूरात् पपात । वसन्ततिलक वृत्तम् ॥ ४७ ॥

**शोकेति** । शोकस्य सीतापहरणवृत्तश्रवणजन्यस्य स्रोतसा वेगेनेत्यर्थ ।

**प्रायइति** । दुरात्मना रावणसदृशाना सम्पदोपि उन्नतिरपि प्रायो बहुशो दुरन्ता दु खमय पर्य्यन्त' परिणामो येषा ते तथा भूता भवन्ति । महात्मना रामसदृशाना पुन विपदोपि विपत्तिरपि सुखोदर्क्का· कल्याणपरिणामा भवन्ति ॥ ४८ ॥

**(१०४) चन्दनेति** । चन्दनेन भ्रातृराज्यलाभरूपहर्षवृत्तान्तेन चण्डातपेन सीताहरणरूपशोकवृत्तेनेत्यर्थ ।

**सहेलमिति** । एन बालिम–हैम कनकमयं हरिणमिव सहेलम अनायासेन हत्वा रघुपति कपीना वानराणा साम्राज्ये प्रणत विनीत प्रिय निजसहचर सुग्रीवमभिषिञ्चन् सख्यु रावणमित्रस्य बाले ध्वमात नाशात पलभुजा मासभक्षकाणा राक्षसाना नृपति रावणमपचक्रे अप कृतवान । अनेन च निजकुलगरिष्ठ दिनकरश्च प्रीतश्चक्रे । तद्गभ द्राया ऋष्यमूकपर्वतादेवोत्पन्नत्वात तत्रत्यवृत्तान्तज्ञात तन्मुखेनैव वर्णयति कवि । शिखरिणी वृत्तम् ॥

**(१०५) परिम्लानामिति** । परिम्लाना खिन्ना मालामिव ललितसौरभ्यरहिताम । मालापक्षे म्लानत्वात्सुरभिरहिताम । सीतापक्षे ललिताया क्रीडाया यत सौलभ्य (रलयोरभेदात) सुकरता तेन रहिताम। रामविरहार्दिति भाव । एवम्भूता दिनमणे सूर्यस्य वधूटी सीता स्थानेस्थाने विचिनुत अन्वेषयतइति स्वेनैव सुग्रीवेण उक्ता आज्ञप्ता कुमुदादयो वानरयूथमुख्या हनूमत्सहिता कपिभटा वानरा वीरा दिशिदिशि नियुक्ताः । गतवन्त इति शेष ॥ शिखरिणी वृत्तम ।

**नेदीयसीति** । सरयू नेदीयसी अयोध्यापरिसरवाहिनी । तपनोद्भवा कालिन्दी यमुना, अत समान कुलपतिरस्या रामेण सह । इय गङ्गा च भागीरथी रामपूर्वजस्य भगीरथस्य दुहिता । मम समुद्रस्यापि सगरात रामपूर्वपुरुषात् उदयो वृद्धि । इत्येव रूपादन्वयात कुलसम्बन्धात् यदि रघुकुले पक्षपात तदुचितमेव । वामपि युवयोर्गोदावरीतुङ्गभद्रयोरपि चित्तवृत्ति किमपि कस्मादप्यनिर्वचनी

यात् कारणात वत्सला सदया रामविषये यत्तते मन्ये यद्रामचन्द्रच-रितमाधुरी न केवल तत्सम्बन्धिषु, अपि तु सकलजनेषु साधारणरूपेण व्याप्तेति हृदयम । वसन्ततिलक वृत्तम् ॥

आकाशमार्गेण गच्छन्त हनूमन्त दृष्ट्वाऽऽह ।

विलासैरिति । दम्भोलेरिन्द्रवज्रस्य विलासै. चरितै सर्वे गिरय दलितगरुत. निकृत्तपक्षा कृताः। केवलमेको मैनाको मम पयसि जले मग्न सन् सपक्षो निवसति । अतोऽयमग्रवर्ती स्फुरन्ती अमिता बृहती च या गव्यूति. क्रोशद्वयपरिमितिः तत्परिमितो महिमा विस्तारो यस्य स तथाभूत । गव्यूति स्त्री क्रोशयुगमित्यमर । शैलः पर्वतोऽय क । किमय हिमाद्रिर्हिमाचलो विन्ध्यो वा लघुतरगतिर्द्रुततरवेग सन् मा लघयति । नूनमय हनूमानेव लङ्कागमनोत्क इत्यागाम्यङ्कावतरण-मेतत । ससन्देहोऽलंकार । शिखरिणी वृत्तम ॥ ५३ ॥

इति विविधविरुदावलीविराजमानमानोन्नतभारतवर्षीय-साम्राज्यधुरन्धराग्रगण्यमहाराजाधिराजमिथिलेश-श्रीलक्ष्मीश्वरसिंहपादोपजीविनः श्रीग-ङ्गानाथशर्मणः कृतौ प्रसन्नराघ-वस्य व्याख्याया भाव-बोधिन्या पञ्च-माङ्कव्याख्या



अथ

# प्रसन्नराघवनाटकटीकायाम्

## भावबोधिन्याम्

### षष्ठोऽङ्कः ।

(७०६) चन्द्रमण्डलं दृष्ट्वा विरहविषण्णहृदयो राम आह-सौमित्रे इति। चण्डांशुः सूर्य उज्जृम्भते प्रज्वलति। अतो हे सौमित्रे लक्ष्मण तरुतलं सेव्यताम् छायार्थमिति भावः। तं प्रतिबोधयन्नाह लक्ष्मणः-चण्डांशोरिति। हे रघुपते निशि चण्डांशोः सूर्यस्य का कथा। न रात्रावुदयस्तस्येति भावः। अयं चन्द्र एवोन्मीलति चकास्ति। रामः पृच्छति-वत्सेति। हे वत्स लक्ष्मण यदयं चन्द्रः तदेतत् भवता कथं विदितं ज्ञातम्। नु इति वितर्के। लक्ष्मण आह-धत्त इति। यतोऽयमाकाशे दृष्टः कुरङ्गं मृगं स्वमण्डले धत्ते। कुरङ्गाभिधानं श्रुत्वा स्मरन्नाह-क्वासीति। हा कुरङ्गनयने चन्द्रानने प्रेयसि प्रियतमे जानकि क्वासि क्व गताऽसि॥ ससन्देहालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ १॥

चन्द्रमसमुपालभमान आह रजनिकरेति। हे रजनिकर चन्द्र कैरवाणां कुमुदानां बान्धवाः ते कराः किरणाः सकलभुवनानां मम स्वलोकानां चेष्टासु क्रियासु जागरूकाः जाग्रताः। अत एव च भवतां कारिया पश्यन्तः सन्तः जयन्ति उत्कृष्टतया वर्तन्ते। ततः तस्मात् मे मम प्रेयसी सा विख्यातगुणा जानकी कुत्र वर्तते इति कथं न कथयसि। त्वं मृगस्य सहायः असि। अतो दयालुः। अथ वा किंचु इति वितर्के। त्वं नक्तंचरः निशाचरः एव असि। मृगसहायत्वेन ख्यातदयालुतया जानकीवार्ता मह्यं कथयितुमर्हसि, अथ वा रात्रिञ्चरतया निशाचरस्वभावस्त्वमपि निर्दयोऽसि संवृत्त इत्याशयः। मालिनी वृत्तम्॥ २॥

अभिषंगेति। अभिषङ्गस्य पराभवस्य तरङ्गः उद्वेगः आर्यस्य रामचन्द्रस्य मानसं तरलीकरोति चञ्चलं करोति। येनाऽयमेवमसम्बद्धं प्रलपतीत्याशयः। चपलेति॥ चपलेन चञ्चूपुटेन आचान्ताः आस्वादिताः शीतकरस्य चन्द्रस्य शीकराः, अमृतबिन्दवो येन स तथाभूतः।

(१०७) तन्म इति । हे भ्रातश्चकोर विदेहतनयायाः सीतायाः वदनं मह्यं निवेद्य ज्ञापयित्वा चरितार्थां कृतार्था वृत्तिर्जीवनं यस्य स त तथाभूत माङ्कुरु । यदीयस्य सीतायाः कमनीयकपोलस्य कान्ति॰ शशिनं तत्कपोलकान्त्यपेक्षया न्यूनकान्तिं विहाय त्यक्त्वा कान्तासखेन वधूद्वितीयेन भवता पीता । व्यतिरेकोऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ३ ॥

शरदिति । शरदि शरत्काले कृशा क्षामोदरी ईषज्जला निशाकरस्य चन्द्रस्य किरणम् अनुकरोति स्वच्छत्वात् । एवंविधस्तरङ्गो यस्याः सा तथाभूता तरङ्गिणी नदी ।

कल्लोलिनीति । हे कल्लोलिनि तरङ्गिणि तरङ्गवत् चञ्चले नेत्रे यस्याः सा । नदीपक्षे तरङ्ग एव नेत्रं यस्याः सा । जानक्यपि त्वामिव अनुदिनं क्रिमपि अनिर्वचनीयं कृशिमानं क्षीणताम् एति । यथा त्वं वर्षापगमेऽनुदिनं क्षीणा भवसि तथैवाधुना साऽपीति भावः । किन्तु एतावत् अन्तरमस्ति । यद्भवती निसर्गेण स्वभावत एव शीता शिशिरा सीता तु पुनः कामपि मद्विरहजां तापमुद्रां वहति । वसन्ततिलकं वृत्तम् ॥ ४ ॥

अनिद्रेति । अनिद्रं प्रफुल्लं यन्नीलनलिनीवनं तस्मिन् विलीनोऽन्तरितः अलिन्या मधुकर्य्या नाथ मधुकर इति यावत् ।

मधुकरं पृच्छति उन्मीलन्निति । उन्मीलन् विकसन् यो नयनान्तः नेत्रप्रान्तभागः तस्य कान्तिलहर्य्या शोभातिशयेन निष्पीतयोः हृतश्रीकयोः अत एव च केवलादामोदादेव सुगन्धादेव अवधारणीये अनुमेये वपुषी ययोः ते तयोः एवम्भूतयोः यस्य जानकीमुखस्य कर्णोत्पलयोः कर्णावतंसीकृतकमलकुड्मलयोः स्थितेन कान्तासखेन भवता क्षणं किञ्चिदनिर्वचनीयं समुद्गुञ्जितम् । हे भ्रातः तत् उक्तरूपं कान्तं प्रियायाः मुखं कुत्र तिष्ठति तत्कथय । सामान्यमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

अपीममिति । इमं कान्तावियोगविधुरं चक्रवाकमित्यर्थः । तादृशचक्रवाकदर्शनेन विरहदुःखोद्दीपनं रामचन्द्रस्य भवेदिति लक्ष्मणस्याशङ्का ।

योयमिति । योयं पुरोवर्ती बहिरेव कलितो धृतः कुङ्कुमरेणुरागो येन स अन्तस्तु सम्भृता दया यस्मिन् तदेवम्भूतं हृदयं दधानः सन् (१०८) पारेतरङ्गिणि नद्याः अपरे तीरे (पाणिनिसूत्र २।१।१८) करुणं करुणस्वरेण रटन्तीं कूजन्तीं सहचरीं चक्रवाकीम् आलोकते पश्यति न तु सन्निधत्ते समीपं नैवागच्छति रात्रिसमयत्वात् । सोऽयं विहङ्गः क इति पूर्वेण सम्बन्धः । वसन्ततिलकं वृत्तम् ॥ ६ ॥

वल्लभेति । वल्लभायाः प्रेयस्याः विरहेण विदारित विशीर्णं हृदय यस्य स एवम्भूतो वराको दयापात्र चक्रवाक । समानेति । समानन्तुल्य शील कान्तावियोगजा अवस्था यस्य स ।

आत्मनश्चक्रवाकस्य भेद निरूपयन्नाह-अयमिति । चन्द्रे उदयति सति सायकाले अय चक्रवाक प्रियाया सहचर्या विप्रयोग विश्लेष श्रयति आश्रयति । पुन सूर्ये तपति सति प्रात.काले प्रियाया. सङ्ग समागममङ्गीकरोति स्वीकरोति प्राप्नोति । जनकपुत्र्या जानक्या विप्रयुक्तस्य वियुक्तस्य मम तु चन्द्रसूर्योदयाना शतमधिकमपि यात व्यतीतम । ततोऽपि समागमो न जात । अत. क्व समानताऽनेकदि नविप्रयुक्तेन मया सह रात्रिमात्रवियुक्तस्य चक्रवाकस्येत्यर्थ. । व्यतिरे कोऽलकार. । मालिनी वृत्तम ॥ ७ ॥

मुकुलितेति । सूर्यास्तमनेन मुकुलिता या कमलिनी तस्याः परिसर समीपम् अनुहरते य. स तस्मिन् ।

निजनखेति । निजनखशिखाना लेखाभि. आलीढ क्षत स्फुरच्च यत्कमल तदेव स्तन इव यस्या. सा तामेवम्भूताम । पुन विरला अघना या मधुपश्रेणी तस्या' गीत गुञ्जित यस्या सा ताम ईषद्गुञ्जि तद्विरेफामिति यावत् । पुन अकरुणो निर्दयो य शशी तस्य प्रेङ्खन्त. उल्लसन्तो ये पादा किरणा' ( पक्षे चरणा ) तेषा प्रहारेण पातेन वि मूर्छिता परिम्लाना पुनः क्लान्तक्लान्ताम अतिशयेन खिन्ना नलिनी कमलिनीम् । अय चलन् कलहसको मुहुर्मुहुरीक्षतेऽवलोकयति । श्लेषा श्रित रूपकम । हरिणी वृत्तम् ॥ ८ ॥

एवंविधानामिति । पशुपक्ष्यादीनामपि सहचरीजनेषु अनुक म्पया दयया कोमल सकरुण न पुन रामस्य कोमल चेत इति शेष ॥

(१०९) जानकीयमिति । जानकीसम्बन्धिनी भ्रान्तिरित्यर्थः ।

इन्द्रजालमिति । नेपथ्यप्रस्तूयमानेन्द्रजालसूचकम् ।

कृतकर्णेति । कृतो कर्णस्य कौतुकामोदो येन स. । कर्णे कुतू हलं हर्ष च यो जनयति । भाविलङ्कादहनरूपहनूमत्पराक्रमाभिनय सूचकमेतत ॥

मे धारयसीति । अहं तुभ्यमदर्शयम् निजकलामिदानी तत्र त्पुपहाररूपेण त्वमपि स्वकीया मह्य प्रदर्शयेति भाव ॥

असुरेति । असुरादीना मध्ये कस्य चरित्र सकलजनाना विलो कनाय एक प्रधानमथ च चित्रमनेकरसम् विजृम्भते यदह तुभ्य दर्शयिष्यामीति भाव' । पुष्पिताग्रा वृत्तम ॥ ९ ॥

प्रेक्षणीयमिति । सयत्नदर्शनीय किमपीत्यर्थ. ।

(११०) देवीति । हे देवि वैदेहि त्वदीयौ यौ मणिनूपुरौ ताभ्यां विजृम्भमाणः उत्पद्यमानो यः कोलाहलः शब्दः तेन उत्तरलं सचकितं यत् हंसकुलं तेन आकुलासु परिपूर्णासु । पुनः लक्ष्मणस्य पदाम्बुजाभ्यां लाञ्छितासु चिह्नितासु । गोदावरीपुलिनभूमिषु दृष्टिं देहि ताः अवलोकयेति भावः । वसन्ततिलकं वृत्तम् ॥ १० ॥

गोदावरीति । गोदावर्य्यास्तीरे यानि तपोवनानि तेषु सौमित्रिश्च सीता च ताभ्यां परिपूर्णे पार्श्वौ यस्य सः एवम्भूतोऽहं मुदा हर्षेण यानि दिनानि निमेषानिव अनेषं व्यतीतानि अकरवम् । सुखमयत्वात् । तान्येव मया पुनः स्मृतानि । अतः कृतार्थीकृतोऽस्मि अनेन सुखमयदिनस्मरणेनेति भावः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥ ११ ॥

तान्येवेति । पक्ष्मलदृशः सुदृशः सीतायाः तान्येव चिरपरिचितानि वचनामृतानि भूयोऽपि पुनरपि कर्णरूपे चुलुके उत्तानकरद्वयसंयोगनिष्पन्नसंनिवेशविशेषे आपिबेयम इत्याशंसायाम । यैर्वचनामृतैः विकचप्रमोदा हर्षोत्फुल्लवदना असौ जानकी गोदावर्य्याः कमलानां वीचीनां तरङ्गाणाञ्च चेष्टितानि अदर्शयत । अनन्तरोक्तैन्द्रजालिकसीतावचनसूचकमेतत् । वसन्ततिलकं वृत्तम् ॥ १२ ॥

तव सुभगेति । हे रघुमृगाङ्क रघुकुलावतंसचन्द्र सुभग तवोपरि तरङ्गमेव सितं श्वेतं चामरम् उत्क्षिपन्ती आरोपयन्ती गोदावरी नदी स्वहस्तेन धवलकमलरूपं श्वेताब्जरूपम् आतपत्रम । आतपात्त्रायते यत् ततं छत्रं धारयति । गोदावर्य्येव राजोचितछत्रचामरौ तुभ्यमर्पयतीत्यर्थः ॥ १३ ॥

स एवेति । गोदावरीकमलतरङ्गचेष्टितसम्बन्धीति भावः ॥

(१११) परिमितेति । परिमितेन मिताक्षरेण कमनीयः कोमलः श्लाघ्यो रमणीयश्च वाचां विलासः । पुनः सरसो रसवान् मधुरो माधुर्य्येण सम्पन्नो यः काकुर्ध्वनेर्विकारविशेषः तेन स्वीकृता व्याप्ता काप्यनिर्वचनीया लेखाराजिः पङ्क्तिरिति यावत् । ध्वनिरपि विपञ्च्याः वीणायाः यः पञ्चमः स्वरविशेषः तस्य अनुवादी अनुकारी । वीणा तु वल्लकी विपञ्ची सापीत्यमरः । पुनः श्रुतिरपि कलकण्ठ्याः कोकिलायाः यः कण्ठः तेन सह संवादस्य समगुणतायाः भूमिः स्थानम् । सर्वत्र श्रूयत इति शेषः । मालिनी वृत्तम् ॥ १४ ॥

अदृष्टेति । न दृष्टा चन्द्रलेखा चन्द्रबिम्बं यस्मिन् स एवम्भूतः चन्द्रालोकः चन्द्रिकादर्शनम् । अदृष्टायामपि जानक्यां तस्या मधुरवचनानि श्रूयन्त इति भावः । अनन्तरं सीताप्रवेशजन्यज्योत्स्नामाश्रित्येयमुक्तिः । अतिशयोक्तिविभावनयोरङ्गाङ्गिभावः संकरः ।

सन्निवेशेति । वस्तुविशेषाणां समागम इति भावः ।

**एकेनेति ।** शिथिलभुजलतया शोभते य स तेन एकेन हस्तेन इय अशोकशाखा आलम्बिता । अन्येन हस्तेन च दिनकरकिरणेन क्रान्ता परिम्लाना कान्ति शोभा यस्य स एवम्भूत कपोल आलम्बित । पुन एष स्रस्त प्रियविश्लेषेऽसयतत्वान्मुक्त कचभर केशपाश त्यक्त पतिवियोगे अपरिधृत काञ्चोकलापो मेखला येन स तस्मिन्नेव स्फुते नितम्बे लुलति लुठति । पुन नेत्रोत्सङ्गे नयनप्रान्तभागे पक्ष्मलेखा वाष्पस्य प्रियवियोगजनिताश्रुण ये स्तबका गुच्छा तेषा नवकणै नूतनोद्गताभि कणाभि पक्ष्मला सान्द्रा घनेति यावत । इन्द्रजालोपन्यस्तजानकोस्वरूपवर्णनमिदम् । स्रग्धरा वृत्तम ॥ १५ ॥

**आमीलन्निति ।** अस्या लोचनम नेत्रं आमीलत् मुकुलित यत् नवनोलनीरज तस्य तुला समताम । आलम्बते भजति । नवमल्लिकासहचरे नवोद्गतमल्लीपुष्पसदृशे अङ्गे शैथिल्य निद्रोचित स्वोकृतम । मुकुलितनेत्रतया अङ्गशैथिल्येन च निद्रा सूचिता भवतीति । (११२) स्वप्नानुमानमनुमोदयन्नाह–**आलापादिति ।** आलापात स्वप्नवचनात स्फुरन् अधर. प्रेङखन् ईषच्चलन, य प्रवालो विद्रुमः तस्योपमा सादृश्य कलयति भजते । आनन्दात प्रभव उत्पत्तिर्येषा ते तथाभूता वाष्पकणिका अश्रुबिन्दव मुक्ताना श्रिय शोभा बिभ्रति वहन्ति । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

**हा धिगित्यादि ।** सीताया उन्निद्राया वचनम् ।

**अन्यादृश इति ।** स्वप्नावगतादिति शेष ।

**यां वै इति ।** या सीता त्रिजगदबलारत्नभूता जगत्त्रयललनाललामभूता गर्भे दधाना सती भवतो लब्धोऽर्थो यस्मिन् स तस्य भाव स्तस्मात कारणात् सीतारूपरत्नसनाथगर्भत्वात् यथार्थनामधारिणी बभूव । तामेव उत्सङ्गे स्वकीये क्रोडे भूतले इति यावत विलुलिता मूर्छिता पतिता वोक्षमाणा सती द्राक् झटिति कथ न विदीर्णाऽसीद् भवती शोकेनेत्यर्थ । अथ वा सर्व सहते या सा सर्वसहा त्वमसि नाम्ना यौगिकेन । अतो नैतदाश्चर्य यत्किल त्वमेवविधदुहितृविपत्ताविपि न विदीर्णाऽऽसीरिति भाव. । मन्दाक्रान्ता वृत्तम ॥ १७ ॥

**निजामिति ।** द्वितीयार्धेनार्थान्तरन्यासमुपन्यस्यति **निजे इति ।** कठिनप्रकृते निसर्गजडस्वभावाया क्रूराया इति यावत् निजे स्वकीयेऽप्यपत्ये कुत. करुणा दया । न कुतोऽपीत्यर्थः ॥ १८ ॥

**एनमिति ।** अशोकवृक्षमित्यर्थ ॥ अशोकमभ्यर्थमान् आह–

**स्निग्धाशोकेति ।** हे स्निग्ध कोमलहृदय अशोकद्रुम निजसखी मेना सीता तूर्ण शीघ्र उद्बोधय उज्जीवय । किं कृत्वेत्यपेक्षायामाह–**सिक्त्वेति ।** किसलयानि पत्राण्येव ये कराः हस्तास्तेभ्यः स्रविना स्यन्दमानेन शीकरेण जलबिन्दुभिः पुनः पुन. सिक्त्वेत्यर्थः । जानकी-

गुस्थूलपृथिव्याः सूक्ष्मावस्थांश पञ्चतन्मात्रावयवकः गुणानामणुत्वेऽपि तेषु पृथिवीत्वाद्यभावेन न पृथिव्याद्यणुव्यवहारः तेषां च परमाणूनामेकैकः परिणामः पृथिवी गौर्वृक्षः पर्वत इत्येव मादिः । एव भूतान्तरेष्वपि स्नेहौष्ण्यप्रणामित्वावकाशदानसमनियतजलत्वतेजस्त्ववायुत्वाकाशत्वजातीयानि तन्मात्राण्युपादाय सामान्य सजातीयानामनेकेषां धर्मभूतएकविकारारम्भ उपपादनीयः । तत्र तत्तज्जातीयारम्भकाः परमाणवो भिन्ना एव तदनुगम एव तत्र तत्तज्जातिव्यवहारभागभाक् । एव क्रियाद्युपादानभूता अपि रजश्रांद्यशाभिन्नाभिन्ना एव तदनुगमादेव तत्तत्क्रियात्वादिव्यवहारः । त एव च तत्तद्व्यक्तयः । अत एव त्यक्तभेदाव्यक्तय एव जातिरिति वदन्ति । त एव पृथिवीजलादिव्यक्तिरूपा. । एव पृथिव्यादि विकाराणा सामान्यभूताः परमाणव एव तेषांव्यक्तिभूताअनुगतत्वाच्च घटत्वादिजातिरूपा अपि ते । अत्रेदमवधेय शब्दादीनां मूर्तिसमानजातीयानामिति भाष्योक्तेस्तन्मात्रपञ्चकेकाठिन्यस्नेहादिव्यग्या पृथिवीत्वादिजातिरूपा व्यक्तयः सति तत्र पृथिवीजातीयैः शब्दादिगन्धान्तपञ्चतन्मात्रैः पृथिव्यणव आरभ्यन्ते तेषाञ्च महापृथिव्यादिः परिणामः तस्यां पञ्चगुणोपलम्भात् ॥ एव जलजातीयैः शब्दादिरसपर्यन्तैश्चतुस्तन्मात्रैर्जलपरमाणवस्तेभ्यो महाजलादिः एव तेजोजातीयै शब्दादिरूपां तत्रितन्मात्रैस्तेजोणवस्तैर्महातेजआदिः एव वायुजातीयाभ्याशब्दस्पर्शतन्मात्राभ्यांनावाय्वणवस्तेभ्यो महावाय्वादि. एवमाकाशजातीयाच्छब्दतन्मात्रादहङ्कारसहकृतादाकाशाणवस्तेभ्योमहाकाशादिः एव च परमाणुगणोत्पत्यनन्तर तेभ्य एवाकाशादिक्रमेण पञ्चमहाभूतोत्पत्तिरिति बोध्यम् । सर्वत्र तन्मात्रैस्तत्तद्भूतोत्पादनेऽहकारस्य सहकारित्व बोध्य स्मृतिवलात् । यत्तु विज्ञानवादिनः कार्यकारणरूप सर्वं वस्त्वसत्

चित्तकल्पितमात्र स्वप्नवत् बाह्यवस्तुनो हि प्रातीतिक्येऽसत्तापरमार्थतोगुणा वा तत्परिणामो वा अतीतादिक वा न किं चिदस्ति । यथा रथादय. स्वप्ने भान्ति नैव तु संति ते ॥ तथा जाग्रदवस्थाया भूतानि च न सन्तिवै इति स्मृतेः ॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतेति श्रुतेश्च । किं च स्वप्नादौ ज्ञान विषयभूतार्थं विनोभयवादिसिद्ध अर्थस्यानुभवविषयत्व विना शशशृङ्गादि परैरपि न स्वीक्रियते । किं च ज्ञानाभावकाले उभयवादि सिद्धोर्थो नास्ति अत उभसिद्धेन ज्ञानेनैव स्वप्नादिवत्सर्वव्यवहारोपपत्तौ ज्ञानातिरिक्तार्थकल्पने गौरवमिति बाह्यं वस्त्वपन्हवते किं च यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते यथा ज्ञानस्यात्मावेद्यन्ते च भूतभौतिकानीतिविरुद्धव्याप्तोपलब्धिः निषेध्यभेदविरुद्धेनाभेदेन व्याप्त वेद्यत्व दृश्यमान स्वव्यापकमभेदमुपस्थापयत्तद्विरुद्ध भेदं प्रतिक्षिपति तथाभेद्येन नियतसहोपलम्भन्तत्ततो न भिद्यते यथैकस्माच्चन्द्रात् द्वितीयश्चन्द्रः नियतसहोपलंभश्चार्थज्ञानेनेति व्यापकविरुद्धोपलब्धिः निषेध्यभेदव्यापकानियमविरुद्धोऽनियमो नियममावर्त्तयंस्तद्व्याप्त भेद प्रति क्षिपति भेदप्रतीतिश्च कल्पितभेदविषया विकल्परूपैवेति तन्न । तेषां स्वमाहात्म्येन सनिकर्षादिनोपस्थित न तु दोषादिना स्वप्नवदत्यन्तबाधादर्शनात् वस्तुस्वरूपं गृहीत्वापि अप्रमाणविकल्पात्मकस्वमज्ञानदृष्टान्तबलेनापलपता अद्धेयवचनत्वाभावात् । तेषा ज्ञानस्य भ्रमत्वेन तद्वाक्यस्य यथार्थवाक्यार्थज्ञानाजन्यत्वेनाश्रद्धेयत्वात् सहोपलम्भनियमवेद्यत्वरूपौ हेतू अनैकान्तिकौ तथा हि । वस्तुनि स्थूलत्व बाह्यत्वं च न ते ज्ञानगते । नानादेशव्यापित्वं च स्थौल्य विच्छिन्नदेशता च बाह्यत्वं न चैकस्यैमौ विरुद्धधर्मौ न च विज्ञानभेदः युगपत् विज्ञानद्वयाभावात् ।

न च विकल्पः विशदप्रतिभासात् अलीकत्वे विज्ञानस्यापि तत्वापत्ति' वेद्यत्वेन विज्ञानाभेदात् । तस्मान्न वेद्यत्वमभेदव्याप्त एवं सहोपलम्भनियमो भेदेपि घटपटयोर्दृष्टः वनमित्यादिप्रत्ययेचेति दिक् ।

इतोपि तन्मतमसङ्गतमित्याह ।

**वस्तु साम्ये ऽपि चित्तभेदात्तयोर्विभक्तः पंथाः ॥ १५ ॥**

एकचैव विषये चित्तान्तरवियोगेन चित्तान्तरालम्बनत्वदर्शनात्तयोश्चित्तार्थयो पृथगेव पथा' स्वरूपभेदोन्नयनवर्त्म एकानेकत्वरूपमित्यर्थ क्षणिकविज्ञानमेव परेषां चित्तमिति चित्ताद्भेदेनैव विज्ञानभेदोऽर्थेषु सिद्ध इति भावः । तथा हि बहुचित्तावलम्बनीभूतमेक वस्तु साधारणत्वेन प्रत्यभिज्ञया सिद्धं तच्च नैकपुरुषीयचित्तात्मक नाप्यमेकपुरुषीयचित्तात्मकं अपि तु स्वप्रतिष्ठं चित्तातिरेकेण स्वातन्त्र्येणैव स्थितं कुतः वस्तु साम्ये चित्तभेदात् । पुरुषभेदेनैकस्मिनेव योषिद्वस्तुनि धर्मरूपनिमित्तात्सुखवती स्त्याकारवृत्तिर्भवति अधर्मरूपनिमित्ताच्च तचैव दुःखवती सा अविद्यानिमित्तेन तचैव मोहवती सा सम्यग्दर्शनेन च तचैव माध्यस्थवतीत्यतः कस्य पुरुषस्य चित्तेन कल्पित अभिन्नं स्यान्नकस्यापीति नैकचित्तात्मकत्वसम्भवः या त्वया दृश्यते सैव मयापीति प्रत्यभिज्ञानाच्च । किं चान्यचित्तपरिकल्पितेनार्थेनान्यचित्तोपरागासम्भवः परस्वप्नस्य परेणाज्ञानात् । एतेनानेकचित्तपरिकल्पितत्वमपि निरस्त बहुभिरेकस्वप्नादर्शनात् । तस्मात् ग्राह्यग्रहणरूपयोर्वस्तु ज्ञानयोर्भेदेन वैधर्म्येण भिन्नयोर्विभक्तएव पंथानानयोः संकरगन्धोपीति बोध्यम् । ननु चित्तातिरिक्तार्थवादिनामर्थस्य स्थिरत्वान्निरन्तरमेव कथ ज्ञानं न भवति कथ वा एक एवार्थः सुखादिभेदभिन्नासु वृत्तिषु हेतुः स्यात् । न ह्येकस्यात्कारणात्कार्यभेदो

घटत इति चेन्न । सांख्यमते सर्वस्य वस्तुनः सुखदुःखमोहात्मक-त्रिगुणत्वेन चित्तस्य चलस्वभावत्वेन च धर्मादिनिमित्तसापेक्षत्वेन च वस्तुसम्बन्धस्य कादाचित्कत्वेन चोक्तदोषद्वयाभावात् धर्मादिनि-मित्तानुरूपसुखाद्यात्मकप्रत्ययं प्रति सुखाद्यात्मकत्वेनैव वस्तुने-हेतुतया कारणतावच्छेदकभेदाच्च । केचित्तु ज्ञानाद्भिन्नोऽपि ज्ञानस-हभूरेवार्थः भोग्यत्वात्सुखादिवत् अत्र सुखं दृष्टान्तस्तन्मतेनैव अस्मन्मते सुखस्यापि विषये स्थिरत्वात् रागद्वेषादिकं तूभयसिद्धो दृष्टान्तः अन्यदासत्वे मानाभावाद् इति तन्न । एवमनुमानेन पूर्वा-परक्षणेषु वस्तुस्वरूपस्यैवापलापेन तस्य पुरुषान्तरसाधारणत्वाना पत्याय त्वया दृष्टं तदेवमयेति प्रत्यभिज्ञानुपपत्ते. किं च ।

**न चैकचित्ततंत्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥**

वृत्त्याख्यज्ञानातिरिक्तं तेषां चित्तं नास्तीति तदेवात्र चित्तं तत्तच्च तन्नियत एव च वस्तु एकज्ञाननियत नेति प्रतिज्ञा । तदि त्यादिहेतुः यदि एकज्ञाननियतं चेद्वस्तु स्यात् तदा तच्चित्ते विषया-न्तरसंचारिणि निरुद्धे वा तद्वस्तु अस्वरूपमेव तत्स्यात् तेनापरामृ-ष्टत्वादन्यस्याविषयत्वाच्च । एवं च केनाप्यगृहीतस्वभावत्वरूपाप्रमाणकं किं तत्स्यात् चित्तापाये कुत्रविलीयेत न कुत्रचित् । यदि चित्तकारणे विलीयेत इत्युच्यते तदा घटादिरूपार्थानां लाघवाच्चित्ताभेदापत्तौ विज्ञानवादिमत एव प्रवेशः यदि मृदादिषु उच्येत विनाशकारणत्वेन दृष्टस्य मुद्गरपातादेरभावेन तद्वस्तुनाशानुपपत्तिः एवमपि नाशाङ्गी-कारे पुनश्चित्तेन समकालमाविर्भवत्कुत उत्पद्येत । कारणत्वेन क्लृप्त स्याभावात् । न च तज्ज्ञानकारणमेव तत्कारणं । आशामोदकैरपि तृप्तिप्रसङ्गात् किं चास्यार्थस्य शरीररूपस्याप्रतीयमानाः पृष्ठाद्यंशास्ते-

प्यप्रामाणिकत्वादसंतःस्यु. एवं च पृष्ठाद्यभावादुदरंप्रतीयमानमपि न सत्यतया गृह्येत । उदरस्य पृष्ठादिव्याप्ततया पृष्ठाद्यभावेनोदराभावसिद्धेः तस्मात्स्वतन्त्रोर्थः सर्वपुरुषसाधारण स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्तते । तयोः सम्बन्धादुपलब्धिः पुरुषस्य भोगः वियोगाच्चानुपलब्धिर्मोक्ष इति दिक् ।

इदानीं चित्तात्मनोर्विवेकप्रकारमाह ।

**तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥**

चित्तस्य कालभेदेन ज्ञातमज्ञात च वस्तु अर्थज्ञाने अर्थाकारतारूपोपरागसापेक्षत्वात् एव च ज्ञाताज्ञातविषयत्वाच्चित्त परिणामि न चार्थाकारतातिरिक्तं बुद्धेर्ज्ञानं किं यच तस्यापेक्षोच्यत इति वाच्य भूतप्रकाशवत्सुषुप्त्यादिव्यावृत्तस्य सत्वगतप्रकाशस्य सत्वेन तस्यैवाकारावच्छिन्नस्य बुद्धिधर्मज्ञानत्वात् । तथा हि । अयस्कान्तमणिवद क्रिया एव विषयाः अयोवत् क्रियाशील चित्तं स्वमहिम्नाऽऽकृष्य स्वस्मिन्सम्बध्यस्वाकारेण तत्परिणामेनोपरञ्जयन्ति अतो येन विषयेणोपरक्त यच्चित्त स तस्य विषयो ज्ञातः अतो ज्ञाताज्ञातवस्तुकत्वानुपपत्त्या चित्तस्योपरागाख्यपरिणामवत्वं सिद्ध पुरुषाद्वैधर्म्य एते नार्थस्य स्वतन्त्रत्वे जडत्वान्न कदाचित्प्रकाश. स्यात् । न चेन्द्रियाद्याधेयो जडस्वभावस्यार्थस्य धर्मप्राकट्यादिः प्रकाशः तत्वेनीलत्वादिवसर्वपुरुषसाधारणत्वापत्तौ एकस्य शास्त्रार्थज्ञत्वे सर्वेषां विद्वत्वापत्ते' अतीतानागतयोर्वर्तमानधर्मवत्वासम्भवाच्चेति निरस्तम् अर्थोपरक्तचित्तप्रतिबिम्बेन चितेरर्थानुभवात् यद्यपि जडत्वाच्चित्तस्य न ज्ञान चैतन्यस्यैव ज्ञानत्वात् । तच्च पौरुषेयमेव सत्वस्य प्रकाशरूपता तु पुरुषप्रतिबिम्बग्रहणक्षमनैर्मल्यमेव तथा पि तत्प्रायः पिण्डवद्व्यवहारतो

बुद्धिसत्वप्रकाशोऽपि ज्ञानशब्देनोक्तः घटादयस्तु पुरुषस्य न साक्षाद्विषयाः किं तु चित्तमेव तद्विषयोऽतोन पुरुषस्य ज्ञाताज्ञातविषयत्वमित्याह—

**सदाज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामात् ॥१८॥**

तत्प्रभोश्चित्तसाक्षिणः पुरुषस्य विषयभूताश्चित्तवृत्तयः सदा ज्ञाताः पुरुषस्यापरिणामात् परिणामित्वे हि पुरुषस्य कदाचिदाध्य यत्याचित्तवृत्त्यज्ञानेऽहंसुखी न वा दुःखी न वा इच्छामि नवेत्यादिसंशय स्यात् अतो वृत्तेरज्ञातसत्ताभावात्पुरुषो परिणामी । किं च परिणामित्वे पुरुषीयज्ञानादिलक्षणधर्मस्य मोक्षेनाशापत्तौ व्यपदोषेण दारिद्रवन्मोक्षस्यापुरुषात्वापत्तिः तथा हि यदि चित्तवत्तत्प्रभुः परिणामेत तदा तस्य पुरुषस्य विषयभूताश्चित्तवृत्तय' शब्दादिविषयवत् ज्ञाताज्ञाताः स्युः सदा ज्ञातत्वं तु मनोवृत्तीनां स्वप्रभोः पुरुषस्यापरिणामित्वमनुमापयतीति ।

ननु सर्वसम्बद्धत्वाविशेषेऽपि चित्तमेव पुरुषस्य विषय इत्यत्र किं मानमिति चेत् शृणु । अर्थाकारतैव विषयविषयिभावो न तु संयोगमात्र अतीन्द्रियेषु संयोगसत्वेऽपि चित्तविषयत्वाभावात् । पुरुषे चार्थाकारताप्रतिबिम्बरूपेणैव स्वतोऽपरिणामित्वात् । अतःपुरुषे तिबिम्बनसामर्थ्यं वृत्तिमच्चित्तस्यैव फलवलात् यथा जलादौ प्रतिबिम्बनसामर्थ्यं रूपवत्स्थूलद्रव्यस्यैव । शब्दादीना तु चित्तारूढानामेव पुरुषेण भासन । अर्थे विषयत्वं तु पुरुषवृत्तिप्रतिबिम्बनिष्ठतत्तदाकारतानिरूपकत्वमेव । तदेव च तत्तद्वस्तुनिष्ठ विशेष्यतादिशब्दैर्व्यवह्रियते इति । अत्रेदं तत्वं अज्ञानस्य चित्तधर्मतया तत्कार्यधर्मादिक तत्कार्यं चेच्छासुखादिक सर्वे चित्तस्यैव सामानाधिकरण्यप्र-

त्यासत्तौ लाघवात् । न नु चित्तमेव विषयवत्स्वस्यापि प्रकाशकमस्तु कृत पुरुषेण । अग्निवत् । अग्निचित्तसाधारणप्रकाशत्वमखण्डोपाधिरिति बौद्धाशङ्कायामाह—

**न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥**

यथेन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वप्रकाशानि तथा मनोपि ज्ञेय यद्बुद्धिपरिणामितया नीलादिवदनुभवव्याप्यं न तत्स्वाभासं आत्मनि वृत्तिविरोधात् । न हि तदेव क्रिया च कारकं च न हि पाकः पच्यते छिदा वा छिद्यते पुरुषस्तु नानुभवकर्मेत्यतः स्वप्रकाश एव अपराधीनप्रकाशतैवास्य स्वयप्रकाशता नानुभवकर्मतेतिमिश्राः । अन्ये तु चित्त स्वगोचरवृत्त्यभावकाले न स्वप्रकाशं दृश्यत्वात् इन्द्रियशब्दादिवदिति प्रयोगः एवं च स्वगोचरवृत्त्यभावकाले चित्तभानार्थं पुरुषसिद्धिः वृत्तिभानार्थं नियमेन वृत्तिकल्पने चानवस्था । पुरुषे-स्वज्ञेयतायां उक्तत्वेन तत्र व्यभिचारवारणाय काले इत्यन्तं कर्तृकर्मविरोधो विपक्षे बाधकस्तर्कः कर्तृकर्मविरोधे च स्वस्मिन् स्वसयोगाद्यनुपपत्तिस्तर्कः । न चैव पुरुषस्य ज्ञेयत्वे कर्तृकर्मविरोधः चेत् न प्रतिबिम्बितबुद्धिवृत्तिव्याप्यत्वरूपस्यैव ज्ञेयत्वस्य पटादिवत्तत्र सत्वात् तत्र बुद्धिवृत्त्यारूढरूपो दृश्योदर्पणरूढमुखवत् केवलस्तु द्रष्टेति प्रकारभेदान्नतद्विरोधः प्रकारभेदेपि वस्तुतः स्वप्रकाशत्वमस्त्येव । एतेनात्मादृश्य एव न पुरुषगोचरस्तु व्यवहारः स्वरूपसत्तैव पुरुषेण प्रकाशगोचरव्यवहारे प्रकाशानपेक्षादर्शनाद् इति चिन्त्यम् । चित्तवृत्तावप्येवं परैरदृश्यतायाः सुवचतया चित्तातिरिक्तपुरुषसिध्यनुपपत्ते वृत्तिगोचरव्यवहारस्यापि स्वरूपसत्या वृत्त्यैव वक्तु शक्यत्वात् । तस्यापि सत्वरूपतया प्रकाशत्वात् । परोक्ताग्निदृष्टान्तोप्यसिद्धः यद्यग्निः पूर्वतमसा पिहितः पश्चादात्मानं प्रकाशयतीति क्वचिद् दृष्ट

स्यात्तदा ऽग्नेः स्वप्रकाश्यत्व पुरुषस्येव सिध्येत् तदेव तु नास्ति । यद्यपि पुरुषोपि प्रकाशरूप एव सर्वदा तमस्तु बुद्धिवृतेरेवप्रतिबन्धक तथापि बुद्धिवृत्त्याख्यकरणाभावकाले स्वमविषयीकृत्य तदाख्याकरणकाले करोतीत्यग्नितो विशेषात् अतः प्रकाशरूपतादिसाम्येपि पुरुषः स्वप्रकाश्यो नाग्निः किं च प्रकाश्यत्वव्यवहारः प्रकाश्यप्रकाशसयोगे दृष्टः न च स्वरूपमात्रे सयोगः सयोगोऽच प्रतिबिम्बसाधारणः सम्बन्धः अग्नेः स्वप्रकाशत्व तु प्रकाशान्तरनैरपेक्ष्येण । अग्निदृष्टान्तेन चेदृशमेव स्वप्रकाशत्वं शास्त्रेषूच्यते चित्ताद्विवेकाय चित्तस्य हि प्रकाशः पुरुषोपाधिक एव अपसो दग्धृत्ववत् अवेद्यत्वे सत्यपरोक्षयोग्यत्व स्वप्रकाशत्व पुरुषे इति वेदान्तभाष्यकृतः तेषां द्रष्टृत्वइत्यादि, श्रुतीनां कागतिः वेदनस्य व्यवहारप्रतिसामानाधिकरण्येन हेतुत्वस्य क्लृप्तस्य कागतिरिति वदन्ति । किं च स्वाभास चित्तमित्यस्य कस्याप्यग्राह्यमित्येवार्थः यथा स्वात्मप्रतिष्ठमाकाशमित्यस्यापरप्रतिष्ठमिति एवं च वृत्तिरूपस्वबुद्धिप्रचारस्य सवेदनात्क्रुद्धोह भीतोहममुत्रमेरागो मुत्रमेक्रोध इति प्राणिना व्यवहारो दृश्यते स स्वबुध्यग्रहणेन स्यात् अतो बुद्धेर्ग्राह्यत्वमावश्यक । ननूक्तप्रत्ययेऽहमिति पुरुषस्यापि भानात्तस्यापि स्वाभासत्व न स्यादिति चेन्न अग्राह्यत्वरूपस्वाभासत्वस्य पुरुषेप्यनङ्गीकाराद् इति दिक् ।

चित्तस्य स्वाभासतामते तन्मतमालम्ब्यैव दूषणमाह—

**एक समये चोभयानवधारणम् ॥ २० ॥**

एकस्मिन्नुत्पत्तिक्षणे एव स्वपरावधारण न युक्त पूर्वं सत एव प्रत्यक्षगोचरत्वात् स्वस्य च प्रागसत्वादित्यर्थः न च सोत्पत्त्यनन्तरं ग्रहणमस्तु क्षणिकवादिना या वस्तुन उत्पत्तिः सैव तस्य

क्रियाकार्यं सैव च तस्याकर्त्रादिकारकमित्यभ्युपगमात् । तन्मते हि सर्वं वस्तु उत्पत्तिमात्रफलकं निर्हेतुकं च स्वयमेव भवति ।

ननु स्वाभासशब्देन स्वसन्तानग्राह्यत्वमुच्यते एवं च स्वरसेन विनाशस्वाभाव्येन निरुद्धं नष्टमपि चित्तं उत्तरोत्पन्नेन चित्तान्तरेण ग्राह्यमित्याशङ्कायामाह ।

## चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृति-संकरश्च ॥ २१ ॥

वृत्तिरूपचित्तं वृत्तिरूपचित्तान्तरेण चेत् गृह्यते सा वृत्तिविषयावृत्तिकेन गृह्येत अन्ययेति चेदतिप्रसङ्गोऽनवस्थारूपः न च सर्वमेव चित्तं ग्रहीतव्यमिति नियमाभावान्नानवस्था एवमप्यनन्तवृत्तिगोचरानन्तवृत्तिकल्पनागौरवमेवातिप्रसङ्गः अस्माभिर्लाघवेन सकलवृत्तिगोचरैकज्ञानकल्पनात् । एतेन वैशेषिकाणामुत्तरोत्तरज्ञानेन पूर्वपूर्वज्ञानग्रहणकल्पना परास्ता । गौरवात् । स्मृतिसङ्करश्चेति बुद्धिबुद्धेरिति शेषः तथा हि यावन्तो बुद्धिबुद्धीनामनुभवास्तावत्यः स्मृतयः स्युः विषयानुभवज्ञानज्ञानधाराजातेति विषयस्मृतिकालेपि अनन्तानां तज्ज्ञानानां घटो मया ज्ञातो घटज्ञानं ज्ञातं तज्ज्ञानं च ज्ञातमित्येवमनन्ताकारा एकदा स्मृतिं प्राप्नोति सोयं स्मृतिसङ्करं तत्सकरे च घटो मया ज्ञात इत्येकमात्राकारस्मृत्यनुभवो न स्यात् । किं चैवं बुद्धिप्रतिसंवेदिपुरुषापलापिनां नास्तिकानां बन्धमोक्षधर्माधर्मव्यवस्थादिकं सर्वं व्याकुलमेव किं च तेषां मध्ये विज्ञानवादिनः क्षणिकविज्ञानरूपं चित्तमात्रं भोक्तृत्वेन परिकल्प्य तस्यैव मोक्षं वदन्ति । अस्तिसत्वविशेषो य एतान्सांसारिकान्पञ्चस्कन्धान्हित्वान्यान् प्रति सदधातीत्यादिना स्वग्रन्थेन तत एव स्वाभ्युपगमात्

चित्तस्थैर्यापत्या चस्यन्तीति न्यायविरुद्धास्ते पञ्चस्कन्धाश्च विज्ञान वेदनासञ्ज्ञारूपं सस्काराख्याश्चित्तस्यैव सस्करभेदा न तु चित्ताद्भिन्ना-स्तत्र विज्ञानविषयानुभवो वेदना दुःखसञ्ज्ञा रूपे नामरूपे शब्दार्थावि-तियावत् सस्कारो वासना । एष्वेवान्येषामपि सुखादीनां प्रवेश इत्यखिल वस्तु चित्तमेवेति तन्मत तथान्ये शून्यवादिनः स्कन्धान महावेदाख्यवैराग्याया पुनर्जन्मरूपानुत्पादाय प्रशान्तस्य जीवन्मुक्तस्य गुरोरन्तिके ब्रह्मचर्यं ब्रह्माभ्यासं साक्षात्कारपर्यन्त करिष्याम इत्युक्त्वा शिष्यतामापन्ना नास्तिकगुरूपदेशात्सत्वस्याहं शब्दार्थस्य सत्तामपल-पन्ति ते शून्यवादिनो भवन्तीति ते पिन्यायविरुद्धाः स्याभ्युपगम-विरोधात् भोक्तु सत्वस्यापलापेनाहं शब्दार्थस्य मोक्षस्य ब्रह्मचर्या-दीनां चासत्तास्वीकारात् उद्देश्यविस्मृतेः । सांख्ययोगादयस्तु प्रकृ-ष्टवादाः प्रकृष्टानि शास्त्राणि स्वशब्देनाहं स्वमात्मेत्यादिशब्दजातेन भोक्तृतया चित्तस्य स्वामिनं पुरुषमुपगच्छन्तीति न तेषां कश्चिद्दोषः ।

ननु चित्तस्य तदाकारपरिणामेन विषयग्रहणं दृष्ट पुरुषस्य तु परिणामाभावात्कथ चित्तज्ञातृत्वमत आह ।

**चित्तेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धि-संवेदनम् ॥ २२ ॥**

अप्रतिसञ्चाराया अपि चित्तेः स्वीयबुद्धिदर्शनं बुद्धिवृत्त्या कारायत्यैव भवति इत्यर्थः ज्ञातु. सञ्चारो न साक्षादेव ज्ञाने हेतुः कि त्वर्थाकारताहेतुसन्निकर्षद्वारा अन्यथा स्वप्नादौ मनः सञ्चाराभा-वेनार्थभानायोगः अतो विभुत्वेन सर्वत्र सन्निकृष्टस्यात्मनः सञ्चारो नापेक्ष्यते आपातग्रहण च पुरुषस्य पारमार्थिका कारप्रतिषेधाथ यथा हि विषयासन्निकर्षकाले पि स्वप्नादौ तद्भानायागत्या चित्तस्य

तदाकारः परिणाम इष्यते नैवं पुरुषस्य चित्तवृत्त्यभावेपि तद्भानं भवति येन पुरुषेपि वृत्त्याकारः परिणाम इष्येत किं तु सन्निकृष्टतय लौहित्यस्येव चित्तवृत्तेः प्रतिबिम्बनमेव लाघवादिष्यते उभयचाकाराख्यापरिणामकल्पने गौरवात्। स्फटिकदर्पणादेः स्वप्रतिबिम्बितवस्तुप्रकाशकत्वस्य सिद्धत्वाच्च। एवं च वृत्तिप्रतिबिम्बनमेव वृत्त्याकारापत्तिः तथा हि भोक्तृशक्तिश्चितिरपरिणामिनीति असङ्गारा अतश्चित्तस्येव न पुरुषस्य ज्ञानसम्भवः सा च वृत्तिरूपे परिणामिन्यर्थे प्रतिबिम्बरूपेणासङ्गारितेव सती तद्वृत्तिं चेतनवत्करोति न चाविवेकादेवेदृशी बुद्धिवृत्ति अविवेकस्यैव तन्मूलकत्वात् दोषान्तःराभावात् चेतनभानार्थं च वृत्तौ तत्प्रतिबिम्बः कल्प्यते घटमहं जानामीति बुध्याऽरूढतयैव शब्दादिवदात्मनो भानात् केवलपुरुषग्राहिका तु इतराकाररहिताप्रतिबिम्बविशिष्टा तद्वृत्तिः इदमेव प्रतिबिम्ब॰ बुद्धेश्चिच्छायापत्तिरित्युच्यते बुद्धेरर्थाकारतावदात्माकारतेत्यप्युच्यते तस्या वृत्तेः प्राप्तचैतन्यप्रतिबिम्बरूपाया अनुकारमात्रतया तत्प्रतिबिम्बधारतामात्रेण चितेस्तद्वृत्तिज्ञानरूपा वृत्तिबुद्धितृप्रविशिष्टैवेत्युच्यते मिथ्यास्तु विषयाकारबुद्धौ। चितेः प्रतिबिम्बेन तस्य प्रतिबिम्बस्य तदाकारत्वापत्तिर्यथा जलप्रतिबिम्बितं चन्द्रस्याचलादेरपिचलत्वादि एवं च विनावि चितिव्यापार उपसङ्क्रान्तचित्प्रतिविव चित्त स्वगतया क्रियया क्रियावतीमपि चितिं क्रियावतीमिवासङ्गतामपि सङ्गतामिवाभासयति। स्वयं च भोग्यभावमासादयदभोक्त्रीमपि भोक्तृभावमापादयति वृत्तौ चैतन्यप्रतिबिम्बमेव पुरुषस्य वृत्तिरित्याहुः तदुक्तं।

न पातालं न विवरं गिरीणां नैवान्धकारं कुक्षयोनोद धीनां गुहायस्या निहितब्रह्मशाश्वतं बुद्धिवृत्तिमविशिष्टांकवयोवेदवन्त इति।

अस्यार्थः यस्यां गुहायां गुह्यं शाश्वतं ब्रह्मांशांश्यभेदादात्मसामान्य निहितं संगुप्तमित्युच्यते सा गुहा न पातालादि किं तु ब्रह्मवृत्त्यविशिष्टा बुद्धिवृत्तिमेव कवयः पण्डिता पश्यन्ति अविशिष्टता च परस्परप्रतिबिम्बनेनोभयोरविविषयाकारत्वाच्चेतनत्वाच्चातो विविच्य ग्रहणायोग्यतया वस्थितिरेवात्मनः सङ्गोपनं बुद्धाविति तात्पर्यं आदित्यपुराणेपि ।

नित्यः सर्वगतोह्यात्मा बुद्धिसन्निधिमत्तया ।

यथा यथा भवेद्बुद्धिरात्मातद्वदिहेष्यत इति ।

नन्वेमपि शब्दादिसंवेदनं चितेःकथं तेषामपि चितौ प्रतिबिम्बनसामर्थ्ये सर्वदा सर्वार्थभानप्रसङ्गः किं च चितेः स्वसंवेदनचित्तवत्पुरुषेप्युक्तानवस्था समाना । किं च बुद्धिपुरुषयोर्वेद्यवेत्तृभावोप्यनुपपन्नोऽत आह ।

## द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

सर्वे ग्रहीतृग्रहणग्राह्याः पुरुषस्यार्था भोग्या यस्मिन्निति सर्वार्थं ईदृशं चित्त यतो द्रष्टृदृश्योभयाकार बाधकंविना सन्निकृष्टवस्त्वाकारता स्वाभाव्यस्य चित्तेसर्वसिद्धत्वात् एव च बुद्धिसंवेदनमेव बुद्धिस्थस्य शब्दादेः पुरुषस्य च संवेदनं । यद्धि शब्दादिपुरुषोभयाकाराबुद्धवृत्तिः पुरुषे प्रतिबिम्बिताभासते इदमेव शब्दादेः पुरुषस्य च दृश्यत्व बुद्धेर्दृश्यत्ववत् अतो न पुरुषदर्शनार्थं द्रष्ट्रन्तरापेक्षा नापि कर्तृकर्मविरोधः अन्तःकरणस्य द्वारत्वात् । तथा हि मनोमन्तव्ये नोपरक्तं तदाकार स्वयं च स्वेन च रूपेणोपरक्तं तत्पुरुषस्य विषयत्वात् विषयिणा पुरुषेण स्वीयचैतन्यलक्षणवृत्तिविशिष्टेन च सम्बद्धसन्निकर्षस्य ग्रहणहेतुत्वात् बुद्धिवृत्तौ च पुरुषस्यासङ्गस्य प्रतिबि-

म्बातिरिक्तसन्निकर्षासम्भवात् घटमहजानामीति ज्ञानानुभवात् तदे-
तच्चित्तमेव उभयोपरक्तं शब्दादिविषयरूपेण विषयिपुरुषरूपेण च-
निर्भासते साक्षिणि प्रतिबिम्बित चेतनाचेतनरूपापन्नत्वात् । यथा
स्फटिकमणिः पार्श्वद्वयस्थयोर्जवेन्द्रनीलयोः प्रतिबिम्बनात्स्वीयरूपेण
सहचिद्रूपइव एव चित्तविषयात्मनोः प्रतिबिम्बनात् ग्रहीतृग्रहण-
ग्राह्यात्मकरूपचययवदिव भवति अतःसर्वार्थं चितमेव अन्येषा सन्नि-
कर्षसत्वेप्याकारग्रहणसामर्थ्याभावात् अत्र स्फटिकदृष्टान्तोशेन ।
स्वप्नाद्यनुरोधेन बुद्धेरर्थाकारपरिणामस्यैवाङ्गीकारात् । स्फटिके तु प्रति-
बिम्बमात्रं तत्तद्वस्तुसन्निकर्षादिना तत्तद्रूपतामात्रांशे स्फटिकस्य दृष्टा-
न्तता तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमिति प्रति-
पन्नावैशेषिकादयो बाह्याश्च अपरे विज्ञानवादिनः चित्तस्य चेत्सर्व-
रूपताङ्गीकृतातर्ह्यलं पुरुषेण बाह्यार्थेन वा अनादिवासनावशात्स्वत
एव चित्तस्यानन्तपरिणामसम्भवात् । दुग्धस्य दधिरूपतावत् इति
तन्न । भ्रमादिस्थले ज्ञेयार्थचित्तमात्रताया अस्माभिरभ्युपगमेपि समा-
धिप्रज्ञायां प्रज्ञेयोर्थश्चिते प्रतिबिम्बितोयोनुभूयते स तस्य चित्तस्याल-
म्बनीभूतत्वाच्चित्तादन्योऽवश्यवाच्यः तस्य चित्ताकारमात्रत्वे प्रज्ञयैव
प्रज्ञाकारः कथ गृह्येत कर्तृकर्मविरोधात् पुरुषस्यानङ्गीकारात् । एव
ज्ञानातिरिक्तार्थसिद्धौ प्रज्ञारूपस्य प्रज्ञाग्राह्यत्वाभावादेव प्रज्ञायां प्रति-
बिम्बरूपेण जातोर्थोज्ञानाकारो येन गृह्यते स पुरुष इत्यपि सिद्ध ।
न च स्वप्नगृहीत्वैव स्वस्य रूप प्रज्ञा गृह्णातु आकाशाग्रहणेपि शब्द-
वदिति वाच्य शब्दवत्केवलाकाराग्रहणात् अय घट इति ज्ञानमभू-
दित्यादिपेरूणरूपादिवद्धर्मिपुरस्कारेणैवाकारानुभवात् न तत्स्वाभास-
मिति सूत्रेण चितस्य चित्तग्राह्यत्वं निराकृत अत्र तु चित्ताकारस्य

चत्तग्राह्यत्व निराक्रियते भाष्यकृता इति विशेष एव च ग्रहीतृग्रहण-ग्राह्यरूपं त्रितयं परस्परविजातीयतया विवेचयन्ति ते सम्यग्दर्शिन स्तैरेव लब्धः पुरुषोऽन्ये भ्रान्ताः ।

इतोऽपि चित्तातिरिक्तः पुरुष इत्याह ।

**तदसंख्येयवासनाचित्तमपि परार्थं संहत्य कारित्वात् ॥ २४ ॥**

तच्चित्तमसंख्येयाभिर्वासनाभिश्चित्रीकृतमपि परस्य सुखादि-साक्षात्काररूपभोगविवेकसाक्षात्काररूपापवर्गार्थं न स्वार्थं संहत्य-कारित्वात् गृहवत् संहत्यकारित्वमितरसाहाय्येनार्थक्रियाकारित्वं तादृशानां च पदार्थानां लोके परमार्थत्वं दृष्टं न स्वार्थत्वमपि गृहादिकमपि शयनादिकार्यमास्तरणशरीरादिसाहाय्येनैव करोतीति संहत्यकारिपुरुषस्तु नित्यचैतन्यरूपतया चैतन्यार्थेनान्यमपेक्षते अन्या चार्थक्रिया पुरुषस्य नास्तीति न संहत्यकारी चित्त करणादिसापेक्षत्वात्तथा । यतः सुखचित्तं न चित्तस्यसुखभोगार्थं तथा तत्वज्ञानचित्तरूपमपवर्गचित्तमपि न चित्तस्यापवर्गार्थं भोगापवर्गयोरपि कार्यतया सार्थकत्वनियमेनानवस्थाप्रसङ्गात् यत्कार्यं तत्सार्थकमिति सर्वसंमतश्चित्तस्यैतदुभयमपि परार्थं पुरुषस्य भोगापवर्गौ स्वरूपचैतन्यरूपतया न कार्याविति नानवस्था पुरुषार्थत्ववादिनां पञ्चभोगेनापवर्गेण वार्थवान् स पुरुष एव परो न तु यत्किञ्चित्स्वोत्तरोत्पन्नक्षणिकचित्तादिक वैनाशिकाभिमत तस्य सर्वस्य संहत्यकारित्वेन परार्थत्वात् कूटस्थनित्यः पुरुषस्तु न संहत्यकारीत्युक्तमिति दिक् ।

अथ विवेकज्ञानजमाद्य मोक्षमाह ।

**विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५ ॥**

तथात्मभावना सत्कारणोच्यते यथा प्रवृषितृणां कुरस्योद्भेदेन तद्बीजसत्तानुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्रापि पुरुषे आत्मभावजिज्ञासाद्वारा ऽपवर्गजनककर्मजन्य विशेषदर्शनबीजमस्तीत्यनुमीयते यतःतस्यैहिकसाधननिरपेक्षा स्वाभाविकी कोहमासं किं नरादिरूपआसं कथं वा संसुखी वा दुःखी वा किं स्विदिदं वर्त्तमानमपि मे रूपं देहो वा मन आदिर्वा कथं स्विदिदं केन पापेन पुण्येन वा तिष्ठति को भविष्यामि कथं भविष्यामि इत्येवं रूपा आत्मभावभावना यथोक्तकर्मकरणिकाप्रवर्त्तते ऐहिकप्राग्भवीयतादृशसत्कर्मशून्यस्य दोषात्पूर्वपक्षे देहाद्यात्मतायां रुचिः श्रद्धा निश्चयो भवति अरुचिश्चतत्वनिर्णयेमातृमानमेयात्मकाखिलप्रपञ्चस्य तप्रायःपिण्डवदेकीभावापन्नस्य यथोक्तप्रकारैरन्योन्यविवेकसाक्षात्काररूपविशेषदर्शनवतस्तु सा पूर्वोक्तात्मभावभावना भयशोकप्रवृत्तिनिवृत्याद्यनर्थहेतुर्निवर्त्तते इति तन्निवृत्तिरूप आद्योमोक्षो भवति । विशेषदर्शने चित्तस्यैवैषस्वर्गनरकमोक्षादिरूपेविचित्रः परिणामो न पुरुषस्य । अविद्यायाश्चित्तधर्मत्वेनाविद्याजन्यानामेषा तत्रैवौचित्यात् । पुरुषस्त्वसत्यामपि विद्यायामविद्याशून्यत्वाच्छुद्धः पापपुण्यरहितोऽतश्चित्तधर्मैर्जन्ममरणसुखदुःखादिभिरपरामृष्टः कालत्रयेप्यसम्बद्ध इति ज्ञानात्कुशलस्यास्यात्मभाव भावनानिवर्त्तते तन्निवृत्तेः स्वर्गनरकादिषु रागद्वेषादिनिवृत्तिः फलमिति दिक् ।

विशेषदर्शिनो लक्षणमुत्तरमोक्षकारणं सम्प्रज्ञातयोगं चाह ।

**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥**

कैवल्यप्राग्भारं कैवल्याभिमुखं तदा विशेषदर्शनावस्थायां प्रागपदस्य चित्तं विषयाभिमुखं अज्ञानमार्गे सञ्चार्यासीत्तदा स्वर्गा-

दिवैराग्यवशात् कैवल्याभिमुख विवेकनिम्न विवेकमार्गसञ्चारिभवती-त्यर्थः नोत्पन्नेन विशेषदर्शनेनैव कृतकृत्यता पूर्वसंस्कारवशादन्तरा-न्तरामोहाख्यानां भवदुःखबीजवृत्तीनामनुवृत्तेरित्याह ।

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥**

सत्वपुरुषान्यताख्यातिमात्रप्रवाहारोहणरूपविवेकप्रत्ययनिम्न-त्ववतश्चित्तस्य तच्छिद्रेषु व्युत्थानेषु देवमनुष्यादिरूपोस्मि ममेति वा जानामीति न जानामीति वा अविद्यारूपाणि प्रत्यान्तराणि चीय-माणबीजरूपेभ्यः पूर्वसंस्कारेभ्योभवन्तीत्यर्थः कथन्तर्हि सम्प्रज्ञात-प्रवाहेणाप्यविद्यानिवृत्तिः स्यादत आह ।

**हानमेषां क्लेशवदुक्तम् ॥ २८ ॥**

एषां संस्काराणा हान दाहः स्वकार्यासामर्थ्यं क्लेशानामि-वोक्तं पूर्वाचार्यैः यथा स्थूलसूक्ष्मक्लेशानां तत्वज्ञानचित्तलयाभ्या दाह-नाशौ तथा तत्संस्काराणामपीति फलितोर्थः तदुक्त यथा क्लेश-दग्धबीजभावानप्ररोहसमर्था भवन्ति तथा ज्ञानकाले ज्ञानसस्का-रेण प्रतिबन्धात्सस्कारानुत्पत्तौ पूर्वसस्काराः प्राचीनाः क्लेश संस्काराः ज्ञानाग्निदग्धबीजभावानप्रत्ययमुत्पादयन्ति । ज्ञानसंस्कारास्त्ववि रुद्धत्वाच्चित्ताधिकारसमाप्तिपर्यन्त भवन्त्येव ततश्च तेनैव सह तेषां नाशइति न सञ्चित्यन्ते इति । यद्यप्येकदा मम जन्मादिदुःख ना-स्तीति ज्ञानेऽन्तरान्तरामोहेपि तद्धानार्थं वृत्तिरयुक्ता मोहस्यापि चि-त्तधर्मतायाः पूर्वन्निश्चितत्वात् तथापि चित्तस्य मोहसत्वे पुनः चित्तस्य भवदुःखोत्पत्त्या पुरुषस्य दुःखभोगः स्यादित्याशयेन ज्ञानि-भिरेपि चित्तस्यात्यन्तमोहनिवृत्यर्थं यत्नकरणात् । भोगश्च पुरुषस्यै-वेत्युक्त ।

दनुगुणञ्चैश्वर्य्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते, देवपूजाभिधायिनो यजिधातोश्च यागाख्यङ्कर्म्म स्वाराध्यदेवताप्रधान प्रतीयते । तदेव कृत्स्नवाक्यपर्यालोचनया वाक्यादेव विध्यपेक्षित सर्वमवगतमिति नापूर्वादिक व्युत्पत्तिसमयानवगत कर्म्मविधिष्वभिधेयतया कल्प्यतया च श्रयितव्यम् । तथा सङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्म्मशास्त्रेतिहासपुराणेषु ब्रह्मादीनान्देवासुरप्रभृतीना देहेन्द्रियादयः स्वभावभेदाः स्थानानि भोगा कृत्यानि चेत्येवमादयस्सुव्यक्ताः प्रतिपाद्यन्ते । अतो विग्रहादिमत्त्वाद् देवादीनामप्यधिकारोऽस्त्येव ।

**विरोधः कर्म्मणीति चेत्, न, अनेकप्रतिपत्तेर्दर्शनात् ॥ २६ ॥**

देवादीना विग्रहादिमत्त्वाभ्युपगमे कर्म्मणि विरोधः प्रसज्यते, बहुषु यागेषु युगपदेकस्येन्द्रस्य विग्रहवत्त्वे "अग्निमग्न आवह, इन्द्र आगच्छ, हरिव आगच्छे"त्यादिनाऽऽहूतस्य तस्य सन्निधानानुपपत्तेः, दर्शयति चाग्न्यादीना तत्र तत्रागमन "कस्य वा ह देवा यज्ञमागच्छन्ति कस्य वा न बहूना यजमानाना यो वै देवताः पूर्वं परिगृह्णाति स एनाश्श्वोभूते यजत" इति । अतो विग्रहादिमत्त्वे कर्म्मणि विरोधः प्रसज्यत इति चेन्न, 'अनेकप्रतिपत्तेर्दर्शनात्,' दृश्यते हि सौभरिप्रभृतीना शक्तिमता युगपदनेकशरीरप्रतिपत्तिः ।

**शब्द इति[1] चेत्, न, अतः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥**

विरोध इति वर्त्तते । मा भूत् कर्म्मणि विरोधोऽनेकशरीरप्रतिपत्तेः । शब्दे तु वैदिके विरोध. प्रसज्यते, अनित्यार्थसयोगात् । विग्रहवत्त्वे हि सावयवत्वेनेन्द्रादेरर्थस्यानित्यत्वमनिवार्यम् । ततो देवदत्तादि[2]शब्दवदिन्द्राद्यर्थजन्मनः प्राग्विनाशादूर्द्ध्वञ्चेन्द्रादिशब्दाना वैदिकानामर्थशून्यत्वम ऽनित्यत्व वा वेदस्य स्यादिति चेत्, तन्न, 'अतः प्रभवात्'—अस्मा-

१ शब्दे तु इति-इति लि पु प्रामादिकः पाठः ।
२ देवतादीति तु लि पु पाठ ।

द्रिन्द्रादिशब्दादेव पुनःपुनरिन्द्राद्यर्थस्य प्रभवात् । एतदुक्तम्भवति—न हि देवदत्तादिशब्दवदिन्द्रादिशब्दाः वैदिका व्यक्तिविशेषमात्रे सङ्केतपूर्वकाः प्रवृत्ता', अपि तु स्वभावत एव गवादिशब्दवदाकृतिविशेषवाचित्वेन । ततश्चैकस्यामिन्द्रव्यक्तौ विनष्टायामऽत एव वैदिकादिन्द्रशब्दान्मनसि विपरिवर्त्तमानादवगततद्वाच्यभूतेन्द्रा[1]द्यर्थाकारो धाता तदाकारमेवापर मिन्द्र सृजति, यथा कुलालो घटशब्दान्मनसि विपरिवर्त्तमानात्तदाकारमेव घटमिति । कथमिदमवगम्यते ? 'प्रत्यक्षानुमानाभ्याम्',—श्रुतिस्मृतिभ्यामित्यर्थः। श्रुतिस्तावत् "वेदेन नामरूपे व्याकरोत् सतासती [2]प्रजापति" रिति, तथा "स भूरिति व्याहरत्[3] स भूमिमसृजत स भुव इति व्याहरत्[3]सोऽन्तरिक्षमसृजते"त्यादिः । वाचकशब्दपूर्वकन्तत्तदर्थसस्थान स्मरन् तत्तत्सस्थानविशिष्ट[4]न्तन्तमर्थं सृष्टवानित्यर्थः । स्मृतिरपि—

"अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतय[5]" इति,
"सर्वेषान्तु स नामानि कर्म्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक् सस्थाश्च निर्ममे" इति,

संस्थाः सस्थानानि रूपाणीति यावत्, तथा—

"नाम रूपञ्च भूताना कृत्याना च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीना चकार स" इति ।

अतो देवादीना विग्रहवत्त्वेऽपि न वैदिकशब्दानामानर्थक्यं वेदस्यादिमत्त्व च प्रसज्यते ।

## अत एव च नित्यत्वम् ॥ २८ ॥

यत एवेन्द्रवसिष्ठादिशब्दाना देवर्षिवाचिनान्तत्तदाकारवाचि-

१ विपरिवर्त्तमानागततद्वाच्यभूतेन्द्रेति लि॰ पु पाठ॰ ।
२ वेदेन स्वरूपेण व्याकरोत सता सति—इति लि पु ।
३ व्याहरतेत्यात्मनेपद तु लि पु ।
४ पूर्वक तत्तदर्थसस्थानविशिष्टमिति लि॰ पु पाठ॰ ।
५ नित्या यतः सर्वा प्रवृत्तय इति तु क्वचित्पाठो भवति ।

त्वम्, तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विका च तत्तदर्थसृष्टिः, तत एव "मन्त्रकृतो वृणीते, नम ऋषिभ्यो मन्त्रकृद्भ्यः, अय सोऽग्निरिति, विश्वामित्रस्य सूक्तम्भवती"त्यादिभिर्वसिष्ठा[1]दीना मन्त्रकृत्त्वकाण्डकृत्त्वऋषित्वादौ[2] प्रतीयमानेऽपि वेदस्य नित्यत्वमुपपद्यते । एभिरेव "मन्त्रकृतो वृणीत" इत्यादिभिर्वेदशब्दैस्तत्तत्काण्डसूक्तमन्त्रकृतामृषीणामाकृतिशक्त्यादिक परामृश्य[3]तत्तदाकारास्तत्तच्छक्तियुक्ताश्च सृष्ट्वा प्रजापतिस्तानेव तत्तन्मन्त्रादिस्मरणे[4] नियुङ्क्ते, ते च प्रजापतिनाऽऽहितशक्तयस्तत्तदनुगुणन्तपस्तप्त्वा नित्यसिद्धान् पूर्वपूर्ववसिष्ठादिदृष्टा[5]न्मन्त्रादीनऽनधीत्यैव स्वरतो वर्णतश्चास्खलितान् पश्यन्ति । अतश्च वेदाना नित्यत्वमेषाञ्च मन्त्रकृत्त्वमुपपद्यते ।

अथ स्यान्नैमित्तिकप्रलयादिष्विन्द्राद्युत्पत्तौत्सत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यता नाम, प्राकृतप्रलये तु स्रष्टुः प्रजापतेर्भूताद्यहङ्का[6]परिणामशब्दस्य च विनष्टत्वात् कथं प्रजापतेः शब्दपूर्विका सृष्टिरुपपद्यते, कथन्तरा विनष्टस्य वेदस्य नित्यत्वम् । अतो वेदनित्यत्ववादिना देवादीना विग्रहवत्त्वाभ्युपगमे लोक[7]व्यवहारस्य प्रवाहानादिता ऽऽश्रयणीयेति, अत उत्तर पठति-

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥

कृत्स्नोपसहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तात्समाननामरूपत्वादेव न कश्चिद्विरोधः । तथाहि, स भगवान् पुरुषोत्तमः प्रलयाऽवसानसमये पूर्व[8]संस्थान जगत्स्मरन् 'बहु स्या'मिति सङ्कल्प्य भोग्यभोक्तृजात स्वस्मिन्

१ इत्यादिवसिष्ठेति मु॰ पु॰ ।
२ काण्डर्षित्वादाविति लि॰ पु॰ ।
३ शक्त्यादिपरामृश्यमिति लि॰ पु॰ ।
४ करणे-इति लि पु॰ ।
५ वीर्यसिद्धान पूर्वपूर्ववसिष्ठादिसृष्टानिति मु पु पाट॰ ।
६ कारमिति लि पु ।
७ गमेऽपि लोके-इति लि पु ।
८ समयपूर्व-इति लि पु॰ ।

शक्तिमात्रावशेषं प्रलीनं विभज्य महदादिब्रह्माण्डं हिरण्य[1]गर्भपर्यन्तं यथापूर्वं सृष्ट्वा वेदांश्च पूर्वानुपूर्वी[2]विशेषसंस्थितानाऽऽविष्कृत्य हिरण्यगर्भायोपदिश्य पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि तदन्तरात्मतया ऽवतस्थे । अतो यथोक्तं सर्वमुपपन्नम् । एत[3]देव च वेदस्यापौरुषेयत्वं नित्यत्वञ्च, यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं[4] स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम् । तदस्मासु सर्वेश्वरेऽपि समानम् । इयांस्तु विशेषः, संस्कारानपेक्षमेव (तं) स्वयमेवानुसन्धत्ते पुरुषोत्तमः । कुत इदं यथोक्तमवगम्यत इति चेत्,तत्राह 'दर्शनात् स्मृतेश्च' । दर्शनं तावत्,

> "यो ब्रह्माणं विदधाति पूर्वं
> यो वै[5] वेदांश्च प्रहिणोति तस्मा" इति ।

स्मृतिरपि मानवी—

> "आसीदिदन्तमोभूत"मित्यारभ्य
> "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
> अप एव ससर्जादौ तासु वीर्यमपा[6]सृजत् ॥
> तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
> तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामह" इति ।

तथा पौराणिकी[7]—

> "तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत ।
> तस्मिन्पद्मे महाभाग वेदवेदाङ्गपारगः ॥
> ब्रह्मोत्पन्नस्स तेनोक्तः प्रजाः सृज महामते ।

---

१ ब्रह्माण्डहिरण्येति मु पु ।
२ पूर्वानुपूर्वेति लि० पु ।
३ तदिति लि पु ।
४ क्रमशेषमिति लि० पु तु न युक्तम ।
५ वै—इति नास्ति लि पु ।
६ बीजमवेति पाठान्तरम ।
७ पौराणिकाः—इति मु० पु ।

तथा,

"परो नारायणो देवस्तस्माज्जातश्चतुर्मुख" इति ।

तथा, "आदिसर्गमहं वक्ष्य"इत्यारभ्योच्यते--

सृष्ट्वा नार तोयमन्त.[1] स्थितोऽहं,

येन स्यान्मे नाम नारायणेति ।

कल्पेकल्पे तत्र शयामि[2] भूयः

सुप्तस्य मे नाभिज स्याद्यथाऽब्जम् ॥

एवं भूतस्य मे देवि नाभिपद्मे चतुर्मुखः ।

उत्पन्नस्स मया प्रोक्तः प्रजाः सृज महामत" इति ।

अतो देवादीनामप्यर्थित्वसामर्थ्ययोगाद्ब्रह्मविद्यायां समधिगम मऽधिकारोऽस्तीति सिद्धम् ॥

देवताऽधिकरणं समाप्तम् ॥ ७ ॥

---

अथ मध्वधिकरणम ८ ।

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३० ॥

ब्रह्मविद्यायान्देवादीनामप्यधिकारोऽस्तीत्युक्तम् । इदमिदानीं चिन्त्यते--येषूपासनेषु देवता एवोपास्या,स्तेषु तासामधिकारोऽस्ति नेति । किं प्राप्तम् । नास्त्यधिकारस्तेषु मध्वादिष्विति जैमिनिर्म्मन्यते । कुतः । 'असम्भवात्' । न ह्यादित्यवस्वादिभिरुपास्या आदित्यवस्वादयो ऽन्ये सम्भवन्ति, न चादित्यवस्वादीनां सतां वस्वादित्व[3] प्राप्य सम्भवति, प्राप्तत्वात् । मधुविद्यायामृग्वेदादिप्रतिपाद्यकर्म्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य[4] रसस्याश्रयतया लब्धमधुव्यपदेशस्याऽऽदित्यस्याऽशाना वस्वा-दित्यादिभि[5]र्भुज्यमानानामुपास्यत्वं वस्वादित्वञ्च प्राप्य[6] श्रूयते "असौ

---

१ मत इति लि॰ पु॰ ।
२ सज्जामि इति लि पु
३ वस्वादित्यमिति लि पु अत्रान्यत्र च भवति ।
४ द्वारेणाप्राप्तस्येति मु॰ पु । ५ वस्वादिभिरिति लि॰ पु ।
६ वस्वादित्व च प्राप्य चेति लि पु ।

वा आदित्यो देवमध्वि"त्युपक्रम्य "तद्यत्प्रथममऽमृतन्तद्वसव उपजीवन्ती"त्युक्त्वा "स य एतदमृत वेद वसूनामेवैको भूत्वा ऽग्निनैव मुखेनैतदेवामृत दृष्ट्वा तृप्यती"त्यादिना ।

## ज्योतिषि भावाच्च ॥ ३१ ॥

"त देवा ज्योतिषा ज्योतिरायुर्होपासते अमृत"मिति ज्योतिषि परस्मिन्[1] ब्रह्मण्युपासन देवाना श्रूयते । देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्वकथन देवादीनामितरोपासननिवृत्ति द्योतयति । अत एषु[2] वस्वादीनामनधिकार इति प्राप्तेऽभिधीयते--

## भावन्तु बादरायणो ऽस्ति हि ॥ ३२ ॥

आदित्यवस्वादीनामपि तेष्वधिकारभाव भगवान्बादरायणो मन्यते । अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्यत्वप्राप्तिपूर्वकब्रह्मप्रेप्सासम्भवः, इदानी वसूना सतामपि कल्पान्तरेऽपि वस्वादित्वप्राप्तिश्चापेक्षिता भवति । अत्र हि कार्य्यकारणोभयावस्थब्रह्मोपासन विधीयते "असौ वा आदित्यो देवमध्वि"त्यारभ्य "अथ तत ऊर्द्धमुदेते"त्यतः प्रागादित्यवस्वादिकार्य्यविशेषावस्य ब्रह्मोपास्य[3]मुपदिश्यते, अथात[4] ऊर्द्ध उदेते[5]त्यादिनाऽऽदित्यान्तरात्मतयाऽवस्थित कारणावस्थमेव ब्रह्मोपास्यमुप[6]दिश्यते । तदेव कार्यकारणोभयावस्थ ब्रह्मोपासीनः कल्पान्तरे वस्वादित्व प्राप्य तदन्ते कारण पर ब्रह्मैवाप्नोति । "न ह वा अस्मा उदेति न निम्रोचति[7] सकृद्दिवा हैवास्य भवति

---

१ यस्मिन्निति लि॰ पु॰ ।

२ एव इति लि॰ पु

३ ०वस्थब्रह्मोपासनमिति मु पु पाठ ।

४ अथ तत इति लि॰ पु॰ अत्रापि पाठः

५ उदेतीति मु पु॰

६ इत्युपेति मु पु.

७ अस्मादुदेतिननिम्लोचतीति लि पु॰ ।

य एतामेव ब्रह्मोपनिषद वेदे''ति इत्याम्नाया मधुविद्याया ब्रह्मोपनिषत्त्वश्रवणाद् ब्रह्मप्राप्तिपर्य्यन्तवस्वादित्वफल[1]श्रवणाच्च वस्वादिभोग्यभूताऽऽदित्याशस्य विधीयमानमुपासनन्तदवस्थस्यैव ब्रह्मण इत्यवगम्यते। अत एवंविधमुपासनमादित्यवस्वादीनामपि सम्भवति। एवं च ब्रह्मण एवोपास्यत्वात् 'त देवा ज्योतिषा ज्योति'रित्यप्यु[2]पपद्यते। तदाह वृत्तिकार—''अस्ति हि[3] मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निचाय्यत्वा''दिति॥

मध्वधिकरणं समाप्तम्॥ ८॥

---

अथाऽपशूद्राधिकरणम् ९।

शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि॥ ३३॥

ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति न वेति विचार्य्यते। किं युक्तम्। अस्तीति। कुतः[4]। अर्थित्वसामर्थ्यप्रयुक्तत्वादधिकारस्य, शूद्रस्यापि तत्सम्भवात्। यद्यप्यग्निविद्यासाध्येषु कर्म्मस्वऽनग्निविद्यत्वाच्छूद्रस्याऽनधिकारः, तथाऽपि मनोवृत्तिमात्रत्वाद् ब्रह्मोपासनस्य तत्राधिकारोऽस्त्येव। शास्त्रीयक्रियापेक्षत्वेऽप्युपासनस्य तत्तद्वर्णाश्रमोचितक्रियाया एव अपेक्षितत्वाच्छूद्रस्याऽपि स्ववर्णोचितपूर्ववर्णशुश्रूषैव क्रिया भविष्यति। ''तस्माच्छूद्रो यज्ञे ऽनवक्लृप्त[5]'' इत्यप्यग्निर्विद्यासाध्ययज्ञादिकर्म्मानधिकार एव न्यायसिद्धो ऽनूद्यते। नन्वनधीतवेदस्या ऽश्रुतवेदान्तस्य ब्रह्मस्वरूपत[6]दुपासनप्रकारानभिज्ञस्य कथं ब्रह्मोपासनं सम्भवति। उच्यते, अनधीतवेदस्याश्रुतवेदान्तवाक्यस्याऽपीतिहासपुराणश्रवणेनाऽपि ब्रह्मस्वरूपतदुपासनज्ञानं सम्भवति। अस्ति च शूद्रस्याऽपीतिहासपुराणश्रवणानुज्ञा ''श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रत'' इत्यादौ। दृश्यन्ते चेतिहासपुराणेषु विदुरादयो ब्रह्मनिष्ठाः। तथोपनिषत्स्वपि संवर्गवि-

---

१ वस्वादित्व फलस्येति लि॰ पु॰। २ अपिर्नास्ति मु पु॰।
३ अस्मिन्हीति लि पु॰ पाठः। ४ कुत इति मु पु॰ नास्ति।
५ नैव क्लृप्त इति लि पु पाठ। ६ तदिति मु पु नास्ति।

द्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः प्रतीयते । शुश्रूषुं हि जानश्रुतिमाचार्यो रैक्वः शूद्रेत्यामन्त्र्य तस्मै ब्रह्मविद्यामुपदिशति "आजहारेमाः शूद्र अनेनैव मुखेनालापयिष्यथा" इत्यादिना । अतः शूद्रस्याऽप्यधिकारः सम्भवतीति प्राप्त उच्यते—

न शूद्रस्याधिकारः सम्भवति । कुतः । सामर्थ्याभावात् । न हि ब्रह्मस्वरूपतदुपासनप्रकारमऽजानतस्तदङ्गभूतवेदानुवचनयज्ञादिष्वनधिकृतस्योपासनोपसंहारसामर्थ्यं सम्भवति । असमर्थस्य चार्थित्वसद्भावेऽप्यधिकारो न सम्भवति । असामर्थ्यं च वेदाध्ययनाभावात् । यथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसम्पाद्यज्ञानलाभेन कर्मविधयोऽऽज्ञाततदुपायादीनऽपरा[1]न् स्वीकुर्वन्ति, तथा ब्रह्मोपासनविधयोऽपि अतोऽध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव ब्रह्मोपासनोपायत्वाच्छूद्रस्य ब्रह्मोपासनसामर्थ्यासम्भवः । इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती एवोपायभावमनुभवतो, न स्वातन्त्र्येण । शूद्रस्येतिहासपुराणश्रवणानुज्ञानं पापक्षयादिफलार्थं नोपासनार्थम् । विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोषाज् ज्ञानवन्तः[2] प्रारब्धकर्मवशाच्च दृशजन्मयोगिन[3] इति तेषां ब्रह्मनिष्ठत्वम् ।

यत्तु संवर्गविद्यायां शुश्रूषोः शूद्रेति सम्बोधनं शूद्रस्याधिकारं सूचयतीति, तन्नेत्याह—

'शुगऽस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि,'

शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसोक्ताऽनादरवाक्यश्रवणात्तदैव ब्रह्मविदो रैक्वस्य सकाशं प्रत्याद्रवणाच्छुगऽस्य सञ्जातेति हि सूच्यते, अतः स शूद्रेत्यामन्त्र्यते, न चतुर्थवर्णत्वेन । शोचतीति

---

१ अज्ञानतदुपायाधीनपरानिति लि पु पाठ, अज्ञातेत्यस्य स्थाने अज्ञानेति तु मु पु ऽपि भवति ।

२ भातवन्त इति लि॰ पु॰ ।

३ जन्मयोनय इति लि पु॰ ।

हि शूद्रः । "शुचेर्दश्च" इति 'र'प्रत्यये[1] धातोश्च दीर्घे चकारस्य दकारे शूद्र इति भवति । अतः शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेण सूच्यते, न जातियोगः । 'जानश्रुतिः किल पौत्रायणो बहुद्रव्यप्रदो बहून्नप्रदश्च बभूव, तस्य धार्म्मिकाग्रेसरस्य धर्म्मेण प्रीतयोः कयोश्चिन्महात्मनोरस्य ब्रह्मजिज्ञासामुत्पिपादयिषतो[2]र्हंसरूपेण निशायामस्याऽविदूरे गच्छतोरन्यतर इतरमुवाच "भो भो भल्लाक्षभल्लाक्ष जानश्रुतेः पौत्रायणस्य समन्दिवा ज्योतिराऽऽततन्तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षी"दिति । एव जानश्रुतिप्रशंसारूप वाक्यमुपश्रुत्यापरो हंसः प्रत्युवाच "कम्वर एन[3]मेतत्सन्त सयुग्वानमिव रैक्कमात्थे[4]"ति । क सन्तमेन जानश्रुति सयुग्वान[5] रैक्क ब्रह्मज्ञमिव गुणश्रेष्ठमेतदात्थ,[6]न ब्रह्मज्ञो रैक्क एव लोके गुणवत्तरो, महता[7] धर्मेण सयुक्तस्याप्यस्य जानश्रुतेरब्रह्मज्ञस्य को गुणो यद्गुणार्जनित[8] तेजो रैक्कतेज इव मा दहेदित्यर्थ. । एवमुक्तेन परेण 'को, ऽसौ रैक्क" इति पृष्टो लोके यत् किंचित्साध्वनुष्ठितङ्कर्म्म यच्च सर्वचेतनगत[9] विज्ञानन्तदुभय यदीयज्ञानकर्म्मान्तर्भूत[10] स रैक्क इत्याह । तदेतद्धसवाक्य ब्रह्मज्ञानविधुरतयाऽऽत्मनिन्दाङ्गर्भन्तद्वत्तया च रैक्कप्रशंसारूप जानश्रुतिरूप श्रुत्य तत्क्षणादेव क्षत्तारं रैक्कान्वेषणाय प्रेष्य तस्मिन् विदित्वाऽऽगते स्वयमपि रैक्कमुपसद्य गवा षट्शत निष्कमश्वतरीरथञ्च[11] रैक्कायोपहृत्य रैक्क प्रार्थयामास "अनु म एताम्भगवो देवता शाधि यान्देवतामुपास्स"

---

१ कप्रत्यय इति लि- पु पाठ. प्रामादिक ।

२ जिज्ञासामुत्पिपादयिषतोरिति मु॰ पु , जिज्ञासासु व्युत्पादयिषतोरिति लि पु पाठः ।

३ एवमिति लि पु ।

४ आगच्छेति लि पु ।

५ सयुक्त्यान-इति लि पु , सयुक्त्वानमिति पुनः पुनर्मु पु च भवति ।

६ श्रेष्ठमेतदात्थ-इति लि पु ।

७ गुणवत्तरमहतेति लि॰ प ।

८ जात तेजो रैक्कतेजसमादहेदिति लि॰ पु ।

९ सर्वचेतनगतमिति मु पु पाठ ।

१० यद्यप्यज्ञानान्तर्गतमिति लि पु पाठः ।

११ षडश्वतरिरथ चेति लि पु पाठः ।

इति । त्वदुपास्या परा देवतामामनु[1]शाधीत्यर्थः । स च रैक्वः स्वयोगमहिमविदितलोकत्रयो जानश्रुतेर्ब्रह्मज्ञानविधुरतानिमित्ताऽनादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतान्तदनन्तरमेव ब्रह्मजिज्ञासयोद्योगं च विदित्वा ऽस्य ब्रह्मविद्यायोग्यतामभिज्ञाय चिरकालसेवां विना ऽर्थप्रदानेन शुश्रूषमाणस्यास्य यावच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवतीति मत्वा तमनुगृह्णन्नऽस्य शोकाविष्टतामुपदेशयोग्यताख्यापिकां[2] शूद्रशब्देनामन्त्रणेन ज्ञापयन्निदमाह "अह हारेत्वा[3] शूद्र तवैव सह गोभिरस्त्व"ति । सह गोभिरयं रथस्तवैवास्तु, नैतावता मह्यं दत्तेन ब्रह्मजिज्ञासया शोकाविष्टस्य तव ब्रह्मविद्या प्रतिष्ठिता भवतीत्यर्थः । स च जानश्रुतिर्भूयोऽपि स्वशक्त्यनुगुणमेव गवादिकं धनं कन्यां च प्रदायोपससाद । स रैक्वः पुनरपि तस्य योग्यतामेव ख्यापयन् शूद्रशब्देनामन्त्र्याह--"आजहारेमाः शूद्रा ऽनेनैव[4] मुखेनालापयिष्यथा" इति । इमानि धनानि शक्त्यनुगुणान्याजहर्थ, अनेनैव द्वारेण चिरसेवया विनापि मां त्वमभिलषित[5]ब्रह्मोपदेशरूपवाक्यमालापयिष्यसीत्युक्त्वा तस्मा उपदिदेश । अतः शूद्रशब्देन विद्योपदेशयोग्यताख्यापनार्थं शोक एवास्य सूचितो, न चतुर्थवर्णत्वम् ।

## क्षत्रियत्वावगतेश्च[6] ॥ ३५ ॥

'बहुदायी'ति दानपतित्वेन, 'बहुपाक्य'इत्यादिना 'सर्वत एव मे ऽन्न[7] मऽत्स्यन्ती'त्यन्तेन बहुतरपक्वान्नप्रदायित्वप्रतीतेः,"स ह[8] संजिहान एव क्षत्तारमुवाचे"ति क्षत्तृप्रेषणा,द्बहुग्रामप्रदानावगतजनपदाधिपत्याच्चा ऽस्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वम् ।

---

१ ममाऽन्विति लि॰ पु । २ आख्यायिका-इति लि पु ।
३ अपाहर त्वमिति मु पु पाठ, अपाहारेक्वा-इति लि पु॰ ।
४ एवकारो नास्ति॰ लि पु॰ ।
५ त्वदभिलषितमिति लि पु, त्वभिलषितेति मु पु॰ पाठ॰ ।
६ क्षत्रियत्वगतेश्चेति लि पु ।
७ एवमेतदन्नमिति मु॰ पु पाठः लि॰ पु॰ च ।
८ सहेति नास्ति लि पु॰ ।

तदेवमुपक्रमगताख्यायिकाया क्षत्रियत्वप्रतीतिरुक्ता, अधुनो[1]पसंहारगताख्यायिकायामपि क्षत्रियत्वमस्य प्रतीयत इत्याह—

**उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३६ ॥**

अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव संवर्गविद्यायामुत्तरत्र कीर्त्यमानेनाभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेणास्य क्षत्रियत्वङ्गम्यते । कथम्? । "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं[2] परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इत्यादिना "ब्रह्मचारिन्निदमुपास्महे"इत्यन्तेन कापेयाभिप्रतारिणोर्भिक्षमाणस्य ब्रह्मचारिणश्च संवर्गविद्यासम्बन्धित्वं प्रतीयते । तेषु चाभिप्रतारी क्षत्रिय इतरौ ब्राह्मणौ । अतोऽस्यां विद्यायां ब्राह्मणस्य तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते, न शूद्रस्य । अतोऽस्यां विद्यायामन्वितादेकस्माद्ब्राह्मणादन्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तं, न चतुर्थवर्णत्वम् । नन्वस्मिन् प्रकरणेऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च न श्रुतम्, तत्कथमस्याभिप्रतारिणश्चैत्ररथत्वङ्कथं वा क्षत्रियत्वम्? तत्राह "लिङ्गादि"ति । "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिमित्यभिप्रतारिणः कापेयसाहचर्याल्लिङ्गादस्याभिप्रतारिणः कापेयसम्बन्धः प्रतीयते । अन्यत्र च "एतेन वै चैत्ररथङ्कापेया अयाजय"न्निति कापेयसम्बन्धिनश्चैत्ररथत्वं श्रूयते, "तथा, चैत्ररथस्य क्षत्रियत्वं"त्तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायते"[3]ति । अतोऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च गम्यते ।

तदेवं न्यायविरोधिनि शूद्रस्याधिकारे लिङ्गं नोपलभ्यत इत्युक्तम्, इदानीं न्यायसिद्धः शूद्रस्याऽनधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याह—

**संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३७ ॥**

ब्रह्मविद्योपदेशप्रदेशेषूपनयनसंस्कारः परामृश्यते "उप त्वा नेष्ये, तं होपनिन्ये" इत्यादिषु । शूद्रस्य चोपनयनादिसंस्काराभावोऽभिलप्यते-

---

१ अधुनेति नास्ति लि पु० ।

२ काङ्क्षसेनिमिति लि पु ।

३ चैत्ररथानामैक० क्षत्रपतिर्जायते—इति लि पु पाठ० ।

"न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हती"ति, "चतुर्थो वर्ण एकजाति र्न च संस्कारमर्हती"त्यादिषु ।

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३८ ॥

"नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याऽऽहरे"ति शुश्रूषो र्जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव ब्रह्मविद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥

## श्रवणाऽध्ययनाऽर्थप्रतिषेधात् ॥ ३९ ॥

शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानानि प्रतिषिध्यन्ते "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्य,न्तस्माच्छूद्रो बहुपशुरऽयज्ञीय" इति । 'बहुपशु,' पशुसदृश इत्यर्थः । अनुपशृण्वतोऽध्ययनतदर्थज्ञानतदर्थानुष्ठानानि न सम्भवन्ति । अतस्तान्यपि प्रतिषिद्धान्येव ।

## स्मृतेश्च ॥ ४० ॥

स्मर्यते च श्रवणादिनिषेध । "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् उदाहरणे जिह्वाच्छेदो धारणे शरीरभेद" इति, "न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशे"दिति च । अतः शूद्रस्यानधिकार इति सिद्धम् ॥

ये तु निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः, अन्यत् सर्वं मिथ्याभूतम्, बन्धश्चापारमार्थिकः, स च वाक्यजन्यवस्तुयाथात्म्यज्ञानमात्रनिवर्त्यः, तन्निवृत्तिरेव मोक्ष इति वदन्ति, तैर्ब्रह्मज्ञाने शूद्रादेरनधिकारो वक्तुं न शक्यते, अनुपनीतस्यानधीतवेदस्याऽश्रुतवेदान्तवाक्यस्याऽपि यस्मात्कस्माच्चि[1]दपि निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः अन्यत्सर्वन्तस्मिन्मिथ्याभूतम्परिकल्पितमिति वाक्याद्वस्तुयाथात्म्यज्ञानोत्पत्ते,स्तावतैव बन्ध-

१ चिदिति नास्ति लि पु ।

निवृत्तेश्च । न च तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या, न वाक्यान्तरेणेति नियन्तुं शक्यम्, ज्ञानस्यापुरुषतन्त्रत्वात् सत्यां सामग्र्यामनिच्छतोऽपि ज्ञानोत्पत्तेः । न च वेदवाक्यादेव वस्तुयाथात्म्यज्ञाने सति बन्धनिवृत्तिर्भवतीति वक्तुं शक्यम्, येन केनापि वस्तुयाथात्म्यज्ञाने सति भ्रान्तिनिवृत्तेः । पौरुषेयादपि निर्विशेषचिन्मात्रं ब्रह्म परमार्थो[1] ऽन्यत्सर्वं मिथ्याभूतमिति वाक्याज्ज्ञानोत्पत्तेः, तावतैव भ्रमनिवृत्तेश्च । यथा पौरुषेयादप्याप्तवाक्याच्छुक्तिकारजतादिभ्रान्तिर्ब्राह्मणस्येव शूद्रादेरपि[2] निवर्त्तते, तद्वदेव शूद्रस्यापि वेदवित्सम्प्रदायाऽऽगत[3]वाक्याद्वस्तुयाथात्म्यज्ञानेन जगद्भ्रमनिवृत्तिरपि भविष्यति । "न चास्योपदिशेद्धर्म"मित्यादिना वेदविदः शूद्रादिभ्यो न वदन्तीति च न[4] शक्यं वक्तुम्, तत्त्वमस्यादिवाक्यावगतब्रह्मात्मभावाना वेदशिरसि वर्त्तमानतया दग्धाखिलाधिकारत्वेन निषेधशास्त्र[5]किङ्करत्वाभावात् । अतिक्रान्तनिषेधैर्वा कैश्चिदुक्ताद्वाक्याच्छूद्रादेर्ज्ञानमुत्पद्यत एव । न च वाच्यम्—शुक्त्यादौ रजतादिभ्रमनिवृत्तिवत् पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न निवर्त्तत इति, तत्त्वमस्यादिवाक्यश्रवणसमनन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः । निदिध्यासनेन द्वैतवासनाया निरस्तायामेव तत्त्वमस्यादिवाक्यं निवर्त्तकज्ञानमुत्पादयतीति चेत्, पौरुषेयवाक्यमपि शूद्रादेस्तथैवेति न कश्चिद्विशेषः । निदिध्यासनं हि नाम ब्रह्मात्मभावाभिधायिवाक्यं यदर्थप्रतिपादनयोग्यं तदर्थभावना, सैव[6] विपरीतवासना निवर्त्तयतीति दृष्टार्थत्वं निदिध्यासनविधेर्ब्रुवे । वेदानुवचनादीन्यपि[7] विविदिषोत्पत्तावेवोपयुज्यन्त इति शूद्रस्यापि विविदिषायां जातायां पौरुषेयवाक्यान्निदि-

१ परमार्थ इति नास्ति लि पु ।
२ ब्राह्मणस्य शूद्रादेरपीति पु द्वयेऽपि पाठः ।
३ अवगतेति मु पु ।
४ नेति नास्ति लि पु । 
५ निषेधशास्त्रस्याकिञ्चित्कराभावादिति मु पु पाठः ।
६ भावनयैवेति लि पु ।
७ अपिकारो नास्ति लि पु ।

ध्यासनादिभिर्विपरीतवासनायां निरस्तायां ज्ञानमुत्पत्स्यते, तेनैवापारमार्थिको बन्धो निवर्त्तिष्यते। अथ वा, तर्कानुगृहीतात् प्रत्यक्षादनुमानाच्च निर्विशेषस्वप्रकाशचिन्मात्रप्रत्यग्वस्तुन्यऽज्ञानसाक्षित्व तत्कृतविविधविचित्रज्ञातृज्ञेयविकल्परूपं कृत्स्न जगच्चाध्यस्तमिति निश्चित्य एवभूतपरिशुद्धप्रत्यग्वस्तुन्यऽनवरतभावनया विपरीतवासना निरस्य तदेव प्रत्यग्वस्तु साक्षात्कृत्य शूद्रादयोऽपि विमोक्ष्यन्त इति मिथ्याभूतविचित्रैश्वर्य्यविचित्रसृष्ट्याद्यऽलौकिकानन्तविशेषावलम्बिना वेदान्तवाक्येन न किंचित्प्रयोजनमिह दृश्यत इति शूद्रादीनामेव ब्रह्मविद्यायामधिकारः सुशोभनः। अनेनैव न्यायेन ब्राह्मणादीनामपि ब्रह्मवेदनसिद्धेरुपनिषच्च[1] तपस्विनी दत्तजलाञ्जलिः[2] स्यात्। न च वाच्यम्—नैसर्गिकलोकव्यवहारे भ्राम्यतोऽस्य केनचिदयं लोक[3]व्यवहारो भ्रमः परमार्थस्त्वेवमिति समर्थिते[4] सत्येव प्रत्यक्षानुमानवृत्तबुभुत्सा जायत इति तत्समर्पिका श्रुतिरप्यास्थेये[5]ति, यतो भवभयभीताना साङ्ख्यादय एव [प्रत्यक्षानुमानाभ्या वस्तुनिरूपणा कुर्वन्तः प्रत्यक्षानुमानवृत्तबुभुत्सा जनयन्ति। बुभुत्सायां जातायां] [6]प्रत्यक्षानुमानाभ्यामेव विविक्तस्वभावाभ्या नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव सत्, अन्यत्सर्वं तस्मिन्न ऽध्यस्तमिति सुविवेचम्। एवभूते स्वप्रकाशे वस्तुनि श्रुतिसमधिगम्यविशेषान्तरं च नाभ्युपगम्यते, अध्यस्ताऽतद्रूपनिवर्त्तनी हि श्रुतिरपि त्वन्मते। न च सत आत्मन आनन्दरूपताज्ञानायोपनिषदास्थेया, चिद्रूपताया एव सकलेतराऽतद्रूपव्यावृत्ततया तद्रूपत्वात्[7]। यस्य तु मोक्षसाधनतया वेदान्तवाक्यैर्विहित ज्ञानमुपासनरूपम्, तच्च परब्रह्मभूतपरमपुरुषप्रीणनम्, तच्च

१ सिद्धे सर्वोपनिषच्चेति लि पु पाठः।
२ दत्ततिलाञ्जलिरिति लि पु।
३ लौकिकेति लि पु,।
४ समर्पिते इति पा लि पु।
५ स्यास्थेयेति लि पु।
६ [ ] एतच्चिह्नान्तर्गतपाठो लि पु त्रुटितः।
७ सकलेतरतद्रूपव्यावृत्ताया आनन्दरूपत्वादिति लि. पु पाठः।

शास्त्रैकसमधिगम्यम्, उपासनाशास्त्रं चोपनयनादिसंस्कारसंस्कृताधीतस्वाध्यायजनितं ज्ञानं विवेकविमोकादिसाधनानुगृहीतमेव स्वोपायतया स्वीकरोति, एवंरूपोपासनप्रीतः पुरुषोत्तम उपासकं स्वाभाविकात्मयाथात्म्यज्ञानदानेन कर्म्मजनिताज्ञानं नाशयन् बन्धान्मोचयतीति पक्षः, तस्य यथोक्तया नीत्या[1] शूद्रादेरनधिकार उपपद्यते ॥

अपशूद्राधिकरणं समाप्तम् ९ ॥

---

तदेव प्रसक्तानुप्रसक्ताऽधिकारकथाम्परिसमाप्य प्रकृतस्याङ्गुष्ठप्रमितस्य भूतभव्येशितृत्वावगतपरब्रह्मभावोत्तम्भन हेत्वन्तरमाह—

तदेव प्रमिताधिकरणम् । **कम्पनात् ॥ ४१ ॥**

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति"
"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मे"त्यनयोर्वाक्ययोर्मध्ये
'यदिदं किञ्च जगत्सर्वम् प्राण एजति निस्सृतम् ।
महद्भयं वज्रमुद्यतं[2] य एतद्विदुरमृतास्ते भवन्ति ॥
भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति—

कृत्स्नस्य जगतोऽग्निसूर्यादीनां चास्मिऽन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्द्दिष्टे[3] स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्सञ्जातमहाभयनिमित्तमेजनं कम्पनं श्रूयते । तच्छासनातिवृत्तौ किं भविष्यतीति महतोभयाद्वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पत इत्यर्थः, भयादस्याग्निस्तपतीत्यनेनैकार्थ्यात् । महद्भयं वज्रमुद्यतमिति पञ्चम्यर्थे प्रथमा। अयञ्च परस्य ब्रह्मणः स्वभावः, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः"
"भीषाऽस्माद्वातः पवते भीषोदेति सूर्य्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति—

---

१ यथोक्तरीत्येति मु॰ पु २ मुद्यन्तमिति लि पु ।
३ निर्दिष्टमिति लि. पु ॰

परस्य ब्रह्मणः पुरुषोत्तमस्यैवविधैश्वर्या[1]वगतेः ।

इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः—

## ज्योतिर्दर्शनात् ॥ ४२ ॥

तयोर्द्वयो[2]रेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्मासाधारणं सर्वतेजसा छादकं सर्वतेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यते ।

"न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाती"ति ।

अयमेव श्लोक आथर्व्वणे परब्रह्माधिकृत्य श्रूयते । परञ्ज्योतिष्ट्वञ्च सर्वत्र परस्य ब्रह्मणः श्रूयते, यथा "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" "तं देवा ज्योतिषां ज्योतिरायुर्होपासते ऽमृतम्[3]" "अथ यदतः परो दिवो ज्योतिर्दीप्यत" इत्यादिषु । अतो ऽङ्गुष्ठप्रमितः परं ब्रह्म ॥

प्रमिताधिकरणं समाप्तम् ६ ॥

---

अथार्थान्तरत्वादिव्यपदेशाधिकरणम् १० ।

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४३ ॥

छान्दोग्ये श्रूयते--"आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मे"ति । तत्र संशयः- किमयमाकाशशब्दनिर्दिष्टो मुक्तात्मोत परमात्मेति । किं युक्तम् ?[4] मुक्तात्मेति । कुतः ? "अश्व

---

१ स्यैवैश्वर्या०-इति लि पु ।

२ द्वयोरिति नास्ति लि० पु ।

३ इतिशब्दोऽधिको मु पु० ।

४ किं युक्तमिति नास्ति लि पु ।

त्स्वार्था । यथा छत्रिणो गच्छन्तीत्यादौ । अत्र प्रकृत्यर्थतावच्छेदकस्यापि प्रकारत्वम् । अन्यथा घृत पिबन्त्वित्यादौ कर्मणोऽनन्वयापत्तेः ।

वेदान्तविदस्तु जहदजहत्स्वार्थामपि लक्षणा मन्यन्ते । विशिष्टवाचकपदस्य विशेषणमात्रपरत्वे लक्षणा, गौर्नित्येत्यादौ । रथोगच्छतीत्यादौ तिङो व्यापारो लक्ष्यः । तथा घटो भवतीत्यादावपि भूधातुरुत्पत्तिवाचीति वार्त्तिकम् । घटशब्दो घटार्थेष्ववयवेषूपचरितस्तेषा सिद्धतया कर्तृत्वमुपपाद्यमिति तु टीका । तथा च कपाल घटोत्पत्त्यनुकूलव्यापारवदित्यर्थः । सुब्विभक्तौ न लक्षणा । व्यत्ययानुशासनवैयर्थ्यापत्तेः । अनुशासनबलादेव छन्दसि सा न दोषाय ।

केचित्तु आपो दारा इत्यादौ बहुवचनस्यैकत्वे लक्षणा । व्यत्ययानुशासन तु लक्षणाया निरूढत्वप्रतिपादनायेत्याहुः । वस्तुतस्तु रूपादिगतमेव बहुत्व तत्र तत्र परम्परया भासते । अथ वा अनन्वितमेव तत्र बहुत्वम् । कश्चित्तु बहुवचनमेकत्वेऽपि शक्तम् । प्रकृतिविशेषसमभिव्याहार एव तदभिधत्त इति प्रयोगाच्छक्तिवैचित्र्यमित्याह ।

शब्दस्पर्शरूपरसगन्धपद न गुणिलक्षकम् । रसादिभ्यश्चेति पुनर्मत्वर्थीयविधानात् । गौणी तु लक्षणाविशेषो यत्र सादृश्यमेव सबन्धः । यथा गौर्वाहिक इति । सापि वृत्त्यन्तरमिति न्यायसाम्प्रदायिका मीमासकाश्च ।

मुख्यावृत्तिः शक्तिरेव । तदभाव एव लक्षणोपासनात् । यथा गङ्गाया घोष इत्यत्र गङ्गाया घोषवासासम्भव इति मुख्यार्थान्वयबाधानन्तर तीरे लक्षणेति ।

लक्षणा बीज तु मुख्यार्थान्वयानुपपत्तिरिति मणिकृतः । तात्पर्यानुपपत्तिरिति सम्प्रदायः । लाक्षणिक पद नानुभावकम् । लक्ष्यान्वितस्वार्थबोधस्तु समभिव्याहृतपदान्तरादशक्तस्याननुभावकत्वादिति सम्प्रदायः । नव्यास्तु लाक्षणिक पदमप्यनुभावकमिति मन्यन्ते ।

शाब्दबोधे ऽसाधुत्वनिश्चयाभावोपि हेतुः । न चैवमपभ्रंशादन्वयबोधो न स्यादिति वाच्यम् । इष्टापत्तेः । व्युत्पन्नानां तत्स्मारितसाधु-

शब्दादन्वयबोधः । पामराणां तु शक्त्यारोपादेवेत्यतो नानुभवविरोधः । नन्वसाधुत्वं साधुत्वाभावः, किं तत्साधुत्वम् । उच्यते व्याकरणव्युत्पाद्यत्वं साधुत्वम् । यः शब्दो व्याकरणेन यत्र व्युत्पादितः स तत्र साधुः । अत एव गावीशब्दो न गवि साधुः । ग्रामे गामादयोऽपि न साधुः । तथा-प्रयोगाभावेन निषेधकस्मृत्यनुमानात् । व्याकरणत्वं तु शब्ददोषगुणवित्कर्तृकप्रकृतिप्रत्ययविभागकल्पनापुरःसरशब्दान्वाख्यायकवाक्यत्वम् ।

प्रकृतिर्द्विधा धातुप्रातिपदिकभेदेन । भूवादयो धातवः । शप्तिप्प्रकृतित्वं धातुत्वम् । सुप्प्रकृतित्वं प्रातिपदिकत्वम् । तदाश्रयस्तु द्विविधः । सखण्डोऽखण्डश्चेति । आद्यो दण्डीत्यादिः । अन्त्यो गवित्यादिः । अस्य च जात्याकृतिव्यक्तयः शक्याः । मीमांसकमते तु जातिरेव शक्या । व्यक्तिस्त्वाक्षेपलभ्या । वैयाकरणानां तु मीमांसकमतपरिवृत्तिमात्रम् । परेषां तु महासामान्यमेव शक्यमिति ।

इमावेव भेदौ यौगिकरूढाविति क्रमेण व्यवहरन्ति । योगः सम्बन्धस्तत्प्रवृत्तिनिमित्तो यौगिकः । न हि इह समुदायशक्त्यात्मिका रूढिरस्ति । प्रकृत्या दण्डस्य प्रत्ययेन च सम्बन्धस्य सम्बन्धिनोरुपस्थितावेव विशिष्टप्रतीत्युपपत्तौ तत्कल्पकाभावात् ।

प्रातिपदिकस्य पञ्चविधत्वमपि व्यवहरन्ति । तथा च टीका यदृच्छाशब्देन नाम्ना विशिष्टोऽर्थ उच्यते । यथा डित्थ इति । जातिशब्देन जात्या विशिष्टो, यथा गौरिति । गुणशब्देन गुणेन, यथा मुक्त इति । क्रियाशब्देन क्रियया, यथा पाचक इति । द्रव्यशब्देन द्रव्येन यथा दण्डीति ।

प्रत्ययोऽपि सुप्तिङादिभेदेन बहुविधः । तत्र द्वितीयादीनां कर्मत्वादिकं शक्यं सुब्विकाराणां च पुंस्त्वादिकं शक्यम् । परसमवेतक्रियाफलशालित्वं कर्मत्वम् । करणत्वं तूक्तमेव । प्रकृत्याश्रयत्वं कर्तृत्वम् । प्रतिग्रहव्यापृतं कारकं सम्प्रदानम् । विश्लेषावधिरपादानम् । अधिकरणता स्वरूपसम्बन्धविशेषः ।

तिङां जनकयत्नत्वेन यत्नः शक्य इत्याचार्याः । यत्नत्वेन यत्नः, शक्य इति तु नव्याः । अन्योत्पत्त्यनुकूलव्यापारो भावनापरनामा शक्य इति भाट्टाः । कृतिराक्षेपतो धात्वर्थलभ्या, व्यापारस्तु धात्वर्थः । तिङर्थस्तु वर्त्तमानत्वादिरिति प्राभाकराः ।

लिङ्लोट्कृत्यपञ्चमलकाराणां विधायकानां विधिः शक्यः । स चाभिप्रायमात्रमित्येके । आप्ताभिप्राय इत्याचार्याः । प्रवर्त्तनाभिधापरपर्यायः स इति भाट्टाः । कार्यमपूर्वापरपर्याय कार्यत्वविशिष्ट सः कार्यत्व च कृतिसाध्यत्वे सत्युद्देश्यत्वमिति प्राभाकराः । इष्टसाधनत्व स इति टीकाकृतः । कृतिसाध्यत्वे सति बलवदनिष्टाननुबन्धित्व स इति चिन्तामणिकृतः । कृतिसाध्यत्व न शक्यं कि त्वाख्यातमात्रशक्यायाः कृतेः साध्यत्वं संसर्गमर्यादया भासते तत्प्रकारकबोधस्तु पश्चात्प्रमाणान्तरेणेत्यन्ये । आख्यातार्थकृतेः प्रकृत्यर्थविशेष्यत्वनियमात् । कृतिसाध्यत्वं शक्यमेव । यदि तु विनापि शक्त्या प्रमाणान्तरलभ्य तदा न शक्यमेवेति तु परमार्थः । इष्टसाधनत्व च इष्टानुकूलान्वयव्यतिरेकत्वमेवेह हेतुपञ्चम्याः प्रयोजकत्ववदेषामभिधेयम् । अतो न नित्यविध्यन्वयविरोधः ।

शाब्दप्रमाया तात्पर्यप्रमागुणो योग्यताप्रमा वा तात्पर्यं च लिङ्गानि ।

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।

इत्येव क्व चित् । क्व चित्तु उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये इति कथितानि । निरूपितान्येव चत्वारि प्रमाणानि ।

ननु सम्भावोऽपि मानान्तरम् । कथमन्यथा सम्भवति मेघे जलमिति धीः । स च प्रचुरतरसाहचर्यसंवेदनाबाधिता बुद्धिरिति चेन्न ।

सम्भावनेयमनुमानं वा । अत एवानिर्दिष्टप्रवर्तकमिति इहोचुरिति प्रवादपारम्पर्यमैतिह्यमित्यपि पौराणिकमतमपास्तम् । तस्यापि शब्द एवान्तर्भावात् ।

ननु सङ्केतग्रहश्चेष्टातोऽप्यनुभवात्सापि मानान्तरम् । न च शब्देन चेष्टायां सङ्केतग्रहात्तच्छब्दस्मृत्युपयोगिन्येव चेष्टा लिपिवदिति वाच्यम् । तथा सत्येडमूकस्य ततो व्यवहाराभावापत्तेः । तस्य चेष्टाया व्युत्पादकाभावात् । तथा हि । न तावच्छब्दस्तथा । अश्रुतत्वात् । नाप्यनुमान लिङ्गाभावादिति चेन्न । यद्येतद्विषया मम प्रवृत्तिरस्येष्टाभाववती तदा मामुद्दिश्यायमेतादृशीं चेष्टा करोति इत्यनुमानादेव प्रवृत्त्युपपत्तेरश्वादीनामिव ।

प्राञ्चस्तु वृद्धव्यवहारेण पदानामिव चेष्टायामपि शक्तिर्गृहीता न शक्या निराकर्तुमिति सापि समयबलेन प्रमाणम् । पर तु शब्द एवान्तर्भवति समयबलेन अनुभवसाधन शब्द इति हि शब्दलक्षणमित्याहुः । अत्र निबन्धकृतः । कर्मत्वाद्युपस्थापकविभक्तिविरहाचान्वयबोधकत्वं सम्भवतीति । तच्चिन्त्यम् । अपभ्रंशे विभक्तिसङ्केतारोपेणेव चेष्टायामपि सङ्केतारोपसम्भवात् । तस्मात्सूष्ठूक्त चत्वारि प्रमाणानि तथा च परामर्शे सूत्रम् । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥

इति प्रमाणनिरूपणम् ॥

अथ प्रमेयम् ।

तच्च द्वादशविधम् । आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदेन । तत्रात्मत्ववानात्मा । प्रतिविग्रह नाना नित्यो विभुश्च । आत्मत्व जातिभेदः । यदि तु ससार्यात्मजातिः सुखादिसमवायितावच्छेदकतया प्रमाणसिद्धा नात्मत्वमिति मत तदा ज्ञानवत्त्वादिकमेव विभाजकम् । स च द्विविधः । ईश्वरो जीवश्च । तत्र नित्यज्ञानेच्छाप्रयत्नवानीश्वरः । सुखदुःखाद्याश्रयो जीवः । स च स्वस्यैव प्रत्यक्षः । तन्त्रोपनिषदाः सुखरूपमाहुः । बाह्यास्तु क्षणिकविज्ञानस-

न्तानात्मकम् । वयं तु तदुभयाश्रयं सुखिनमहमात्मानं जानामीति प्रतीतिप्रमाणकमाचक्ष्महे ।

भोगायतनं शरीरम् । भोगस्तु सुखदुःखसाक्षात्कारः । आत्मविशेषगुणकारणमनःसंयोगवदन्त्यावयविवृत्तिजातिमत्त्वं शरीरत्वमिति प्रकाशकृतः । विशेषगुणाश्च रूपादयः । यदाहुः ।

रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ।
बुध्यादि भावनान्तश्च शब्दो वैशेषिका गुणा इति ॥

द्रव्यानारम्भकजन्यद्रव्यत्वमन्त्यावयवित्वम् । इदं च प्रथमतो द्विविधम् । योनिजमयोनिजं च । योनिजं शुक्रशोणितसन्निपातजम् । तत्तु पार्थिवमेव । तच्च द्विविधं । जरायुजमण्डजं च । आद्यं मानुषादीनाम् । अन्त्यं पक्षिसरीसृपादीनाम् । शुक्रशोणितानपेक्षमयोनिजम् । पार्थिवादिभेदेन तच्चतुर्विधमित्यविवादम् । पार्थिवं देवर्षिनारदादीनाम्। जलीयं वरुणलोके, तैजसमादित्यलोके, वायवीयं वायुलोके, इत्यभ्युपगमात् ।

उद्भिज्जं तु तरुगुल्मादिकं न न्यायनये शरीरम् । नापि चेष्टाश्रयः शरीरं वृक्षादिषु भावादभावाच्च । पाषाणमण्डूकादिष्विति टीकास्वरसात् । उपायकारसंमतं चैतत् ।

केचित्तु वृक्षादिष्विति अतद्गुणसंविज्ञानो बहुव्रीहिरयं मृतोऽमृतो वृक्ष इत्येवं मरणजीवनादिप्रतीतिमुक्त्वा वैशेषिकादिवच्छरीरत्वमेव वर्णयन्ति । भाट्टास्तु तथा व्योमशरीरोऽपि परमात्मश्रुतौ श्रुत इति व्योमादीनामपि शरीरत्वमाहुः ।

इन्द्रियं षड्विधम् । घ्राणरसनचक्षुस्त्वङ्मनः श्रोत्रभेदेन । पार्थिवमिन्द्रियं घ्राणं गन्धग्राहकम् । आप्यं रसनं रसग्राहकम् । तैजसं चक्षुः रूपग्राहकम् । तदेकस्मिन् शरीरे एकमेव । न तु प्रतिगोलकं नाना । गोलकमेव चक्षुरप्राप्यकारी चेति दिङ्नागः । यदाह ।

सान्तरग्राहकं न स्यात्प्राप्तौ ज्ञानेऽधिकस्य च ।
अधिष्ठानाद्बहिर्नाक्षं किं चित्सादिप्रयोगतः ॥

सत्यप्यन्तर्बहिर्भावे न शक्तिविषयेक्षणे ।
यदि च स्यात्तदा पश्येदप्युन्मील्य निमीलनादिति ॥

तच्चैतद्वार्तिकेऽतिविस्तरेण दूषितम् । व्यवस्थापितं च नयनस्य प्राप्यकारित्वमिति । न च नयनस्य प्राप्यकारित्वे शाखाचन्द्रमसोस्तुल्यकालग्रहणं न स्यादिति वाच्यम् । इष्टापत्तेः । क्रमिकत्वस्यैव वार्त्तिके उक्तत्वात् । शक्यं च तिर्यग्भूतेन चक्षुषा यावच्छेदे तद्वयोः संयोग इत्युक्त्वा यौगपद्यं चापि समर्थयितुम् । युक्ततेजसः संसर्गद्रव्यतया बाह्यालोकचक्षुर्भ्यां तावद्दूरवर्त्तिनयनारम्भेण यौगपद्योपपादनं तदयुक्तम् । अन्धतमसे खद्योतविद्युतोर्निर्दिष्टदविष्ठयोर्युगपदुपलम्भस्यैवमप्यसमर्थनात् । मध्ये तेजोन्तराभावात् । न हि ताभ्यामेवारम्भः परस्पराश्रयात् । आरम्भे सति व्यवहितस्य प्राप्तिः सत्यां च प्राप्तावारम्भ इति । वायवीयं त्वक् स्पर्शग्राहकम् । अन्तरिन्द्रियं मनः सुखादिग्राहकं बहिःपरतन्त्रम् । अन्यथान्धबधिराद्यभावप्रसङ्गात् । शब्दग्राहकं श्रोत्रम् । श्रोत्रवर्जं यावन्ति बहिरिन्द्रियाणि प्रत्यक्षहेतुग्राह्यजातीयगुणवन्ति । न च श्रोत्रमपि बहिरिन्द्रियतया तथास्तु । तथा वातीन्द्रियशब्दान्तरवदेव श्रोत्रं ग्राहकमिति वाच्यम् । कर्मत्वस्योपाधित्वात् । अत एव बहिरिन्द्रियाणां मनोवैधर्म्ये न सगुणस्य श्रोत्रेऽसत्त्वादिति वार्त्तिकम् ।

साङ्ख्यास्तु त्वगेव बुद्धीन्द्रियम् । सैव च विचित्रशक्तिमत्तया रूपादिसाक्षात्कारिणी । कर्मेन्द्रियाणि च वाक्पाणिपादपायूपस्थान्यप्याहुः ।

चक्षुस्त्वङ्मनांस्येव द्रव्यविशेष्यकसाक्षात्कारकारणानि । अर्थाः नयताः शब्दस्पर्शरूपरसगन्धास्तदर्था इति सूत्रं तु विभक्तिविभागपरं सामान्यविशेषविभागद्वयसापेक्षमिति ।

तत्राभ्युपगमसिद्धाः सप्त । द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः । द्रव्यत्वं जातिः । गुणवत्त्वं गुणयोग्यता वा । सा च गुणात्यन्ताभावाभावः । गुणत्वमपि जातिः । कर्मभिन्नासमवायिकारणत्वं वा । संयोगविभागानपेक्षकारणत्वं कर्मत्वम् । जातिविशेषो वा । नित्यत्वे

सत्यनेकसमवेतत्व सामान्यत्वम् । नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । सम-
वायस्तूक्त एव ।

द्रव्यादिषट्कात्यन्ताभाव एवाभावत्वम् । न तु भावत्वात्यन्ता-
भावः । भावत्व हि यद्यभावत्वावच्छिन्नसामान्याभावः सम्प्रदायानुम-
तस्तदाऽन्योन्याश्रयापत्तेः । अथ साक्षात्परम्परासबद्धाः सन्तस्तदा तद-
त्यन्ताभावः । केवलाभावाधिकरणतयात्यन्ताननुगततत्तदभावव्यक्त्या-
त्मको न पदार्थविभाजकोपाधिः । अभावत्वमखण्डोपाधिरित्यप्याहुः ।

नास्त्यभावः पदार्थान्तरम् । किं तु केवलमधिकरणम् । तस्य
कालसंबन्धो वा ज्ञान वेति प्राभाकराः । अधिकरणादभिन्नो भिन्नश्चा-
भाव इति भाट्टाः ।

द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि । सुवर्णमपि
द्रव्यान्तरमित्येकदेशिनः । अन्धकारः शब्दश्च वर्णात्मको द्रव्यान्तरमिति
भाट्टाः ।

गुणा रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वा-
परत्वस्नेहबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारशब्दाश्चतुर्विंशतिरेव ।
एतेषु किं चिन्नियतद्रव्यवृत्तयः । तदुक्तम् ।

वायोर्नवैकादश तेजसो गुणा जलक्षितिः प्राणभृता चतुर्दश ।
दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैवचेति ॥

कर्माण्युत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च, भ्रमणरेचन-
स्यन्दनोर्द्ध्वज्वलनतिर्यग्गमनोन्नमनादयो गमनविशेषा एव ।

सामान्य द्विविध परमपर च । पर सत्ता । अपरं द्रव्यत्वादि ।
विशेषास्त्वपरिमिताः ।

समवायस्त्वेकः प्रत्यक्षः । वैशेषिकाणां सोऽतीन्द्रियः । प्राभाक-
राणा जन्याजन्यभेदेन द्विविधः । पुनश्च प्रत्यक्षाप्रत्यक्षतया । तत्राती-
न्द्रियसम्बन्धिकोऽतीन्द्रियः । अन्यस्तु प्रत्यक्ष इति । भट्टास्तु समवाय

विशेषाश्च मन्यन्ते । स्वीकुर्वन्ति च वैशिष्ट्यं सम्बन्धान्तरं शक्तिं च पदार्थान्तरम् । अस्माकं तु शक्तिः कातरैव ।

अभावस्तु प्रथमतो द्विविधः संसर्गान्योऽन्याभावश्च । प्रतियोग्यवृत्तित्वे सति सदातनाभावभिन्नाभावत्वं संसर्गाभावत्वम् । परस्परप्रतियोगिकाभावत्वमन्योन्याभावत्वम् । आद्यस्त्रिविधः । प्रागभावो ध्वंसोऽत्यन्ताभावश्चेति । प्रतियोगिजनकोऽभावः प्रागभावः । ध्वंसप्रतियोग्यभावो वा । जन्योऽभावो ध्वंसः । सदातनः संसर्गाभावोऽप्रतियोगिवृत्तिरभावोऽत्यन्ताभावः । नीलघटात्यन्ताभावे पीतघटात्यन्ताभावोऽतिरिक्त एव । तत्रैव नीलघटात्यन्ताभावसत्त्वधिकरणात्मक एव । स चात्माश्रयः प्रामाणिकत्वान्न दोषावहः । तदाहुः ।

कथं स्ववृत्तिरिष्टा चेत् यथान्यत्रेति मन्यताम् ।
प्रमाणं शरणं वृत्तौ न भिन्नाभिन्नते यत इति ॥

अन्योन्याभावे संसर्गाभावादीनां भेदोऽप्यधिकरणमेव । अत्यन्ताभावस्य प्रतियोगिनस्तत्प्रागभावध्वंसाऽभावरूपाः । एवं प्रागभावस्यापि प्रतियोग्यत्यन्ताभावादयः । तथा ध्वंसस्यापि । अन्योन्याभावस्य तु प्रतियोगितावच्छेदका एवाभावाः । तद्द्वय एव तद्बुद्धेः प्रतिबन्धकत्वात् ।

नन्वेवं विरोधाभावेनाकाशात्यन्ताभावस्याकाशमभावो न स्यादिति चेत् । सत्यमेवैतत् । साम्प्रदायिकास्तु आकाशस्याभाव इति प्रतियोगिता भासते सा चाभावाभावत्वमतो धर्मिग्राहकमानादेवाकाशस्य स्वात्यन्ताभावमाचक्षतेत्याहुः ।

लीलावतीकारस्तु अभावाभावत्वधियः प्रमात्वानुरोधेनाभावोऽतिरिक्त एव । न चानवस्था घटात्यन्ताभावप्रतियोगिकस्यात्यन्ताभावस्य घटात्यन्ताभावानतिरिक्त इत्याहुः ।

अत्यन्ताभावोऽन्योन्याभावश्च पुनः सामान्याभावविशेषाभावभेदेन द्विविधः । सामान्यावच्छिन्नप्रतियोगिताको ऽभावः सामान्याभावः ।

यथा वायौ रूपात्यन्ताभाव. रूपिभेदश्च । तदितरो विशेषाभावः । यथा तत्तद्घटाभावः । प्रागभावप्रध्वंसयोरपि सामान्याभावत्वं केचिदिच्छन्ति ।

संसर्गाभावः पुनर्द्विविधः । व्याप्यवृत्तिरव्याप्यवृत्तिश्च । यथा घटात्यन्ताभावः संयोगात्यन्ताभावश्च । अन्योन्याभावस्तु व्याप्यवृत्तिरेव ।

केचित्तु अग्रे वृक्षः कपिसंयोगी मूले नेति प्रतीतेस्तस्याऽव्याप्यवृत्तितामाहुः । प्रतियोगित्वमभावाभावत्वं स्वरूपसंबन्धविशेषो वा ।

पृथिवीत्वसामान्यवती पृथिवी । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वभावनेतरसंस्कारवती । सा च त्रिविधा । शरीरेन्द्रियविषयभेदेन । विषयस्त्रिविधः । मृत्पाषाणस्थावरभेदात् । प्राकारेष्टकादयो मृद्विकारा एव । मणिवज्रादयः पाषाणविशेषा एव । वृक्षतृणगुल्मौषधिप्रभृतयः स्थावरविशेषा एव ।

अप्त्वसामान्यवत्या आपः । गन्धस्यानाभिषिक्तस्नेहसहितपूर्वोक्तगुणवत्यः । आपोऽपि पूर्ववद्भिन्नाः । विषयस्त्विह हिमकरकादिः । करकाकाठिन्यं पार्थिवोपष्टम्भात् ।

तैजसत्वसामान्यवत्तेजः । रसगन्धस्नेहगुरुत्वेतरसकलपूर्वोक्तगुणयोगि । तच्च पूर्ववत्त्रिविधम् । पुनश्चतुर्विधम्, उद्भूतरूपस्पर्शम्, अनुद्भूतरूपस्पर्शम्, उद्भूतरूपमनुद्भूतस्पर्शम्, अनुद्भूतरूपमुद्भूतस्पर्शम् । यथा वन्हि चक्षुःप्रभानिदाघोष्मादि ।

नन्वनुद्भूतरूपस्पर्शयोर्मानाभावः । न च तैजसत्वादिना रूपस्पर्शयोरनुमितिरेवोद्भूतयोर्बाधादनुद्भूतौ साधयतीति वाच्यम् । तैजसत्वादेरप्रयोजकत्वात् । उद्भूततदुभयप्रागभाववतीव तदुभयात्यन्ताभाववत्यपि वृत्तौ विरोधाभावादिति चेन्न । शुक्लभास्वरादिसमवायितायाः तैजसत्वेनैवावच्छेदादिति दिक् ।

सुवर्णं त्वभिभूतरूपस्पर्शमेव । अन्यथा त्वक्चक्षुर्ग्राह्यतापत्तेः । तदुभयजप्रत्यक्षे तु उद्भूतरूपस्पर्शयोस्तन्त्रत्वात् । न च हेम्नोऽभिभूत-

रूपत्वेऽरुणवह्नेरिव परप्रकाशकत्वापत्तिरिति वाच्यम् । तत्रापि वन्हिसहचारिण्याः प्रभाया एव परप्रकाशकत्वात् । अन्यथा पटं प्राप्तस्यैव वह्नेस्तत्प्रकाशकत्वे संयोगेन पटदाहापत्तेः । न चैव दीपादिवैफल्यम् । तस्यास्त नान्तरीयत्वात् । अनुद्भूतस्पर्शमेव तदिति केचित् ।

विषयसञ्ज्ञमपि चतुर्विधम् । भौम दिव्यमुदर्यमाकरज चेति । भौम तार्णपार्णारण्यादि शुष्केन्धनप्रभवम् । दिव्यमबिन्धन सौरविद्युद्वाडवादि । उदर्यमशितपीतस्य रसादिभावेन परिणामनिमित्तं जलपार्थिवोभयनिमित्तकम् । आकरज सुवर्णादि तेजोमात्रोत्पत्तौ पवनो निमित्तमित्याचार्याः ।

वायुत्वजातिमान् वायुः । रूपरसगन्धस्नेहगुरुत्वद्रवत्ववर्जमुक्तगुणाश्रय । शरीरेन्द्रियविषयप्राणभेदेन चतुर्विधः । विषयो गृह्यमाणस्पर्शाश्रयः । शरीरान्तःसञ्चारी पवनः प्राणः । स चैकोऽपि प्राणादिपञ्चविधक्रियाकारितया प्राणापानव्यानोदानसमानेति पञ्चसञ्ज्ञा लभते । एते च पृथिव्यादयः चत्वारो नित्या अनित्याश्च । आद्याः परमाणुलक्षणाः । अन्त्याः द्व्यणुकाद्याः । ध्वंसाप्रतियोगित्वे सति सत्त्वमेव नित्यत्वम् । ध्वंसप्रतियोगित्वमनित्यत्वम् ।

शब्दसमवायिकारणमाकाशम् । तच्चैक नित्यं परममहत्त्व । तस्य गुणाः सङ्ख्यादयः पञ्च शब्दश्च । तदेव शब्दसाक्षात्कारजनकादृष्टविशिष्टकर्णशष्कुल्यवच्छिन्न श्रोत्रमिति न्यायाचार्याः । यदाहुः । बधिरश्च श्रोत्रवाश्चेति व्याहतमिति । कर्णशष्कुल्युपहित नभःश्रोत्रमिति च टीकाकाराः । एव चेन्द्रियधर्मता बधिरादीनामुपपद्यते ।

भाट्टास्तु दिशः श्रोत्रमिति श्रुतेर्दिगेव श्रोत्रमित्याहुः ।

आकाश नीरूपमपि प्रत्यक्षम् । यथा कालस्तत्प्रकृतिकमेव श्रोत्रमिन्द्रियत्वेनैव भौतिकत्वादिति तु काशिका ।

आलोकमण्डल एवाय प्रत्यक्षश्चेति मण्डनमिश्राः ।

मूर्तद्रव्याभाव एवाकाश इति बाह्याः ॥

कालः परत्वापरत्वविशेषहेतुः । सङ्ख्यादिपञ्चगुणवान्नित्यो विभुश्च । स चैकोऽप्युपाधिभेदेन भूतभाविवर्त्तमानादिव्यपदेशं लभते । स्वध्वंसाधिकरणकालत्वं भूतत्वम् । स्वप्रागभावाधिकरणकालत्वं भावित्वम् । स्वापच्छिन्नः कालो वर्त्तमानः ।

पूर्वापरादिप्रत्ययनिमित्तं दिक् । सङ्ख्यादिपञ्चगुणवती विभुर्नित्या च । सा चैकापि तपनपरिस्पन्दात्मकोपाधिभेदेन माहेन्द्रीत्यादिदशसञ्ज्ञा लभते । आत्मोक्त एव ।

सुखादिसाक्षात्कारकारणमिन्द्रियं मनः । यत्संयुक्तमेव चेन्द्रियं साक्षात्कारमुपधत्ते । यदाहुः । आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेन्द्रियाणां प्राप्यकारित्वनियमात् । न च तथापि क्लृप्तैः पार्थिवादिपरमाणुभिर्मनोऽन्यथासिद्धमिति वाच्यम् । सुखादिसाक्षात्कारकारणतावच्छेदक जातिस्तत्र व्यक्तौ साङ्कर्यापत्तेः । घटादेरपि पृथिवीत्ववन्मनस्त्वापत्तेश्च । तस्य गुणाः सङ्ख्यादयः पञ्च परत्वापरत्वसंस्कारश्चेति । तच्च प्रतिशरीरं नाना । परमाणु च । औपनिषदास्तु मध्यमपरिमाणं सङ्कोचविकासवच्च तदाचक्षते । पृथिव्याद्यन्यतरदेव मनः । अतिरिक्तमेव वा किं त्वपरिमितमेव तदिति तु भाट्टाः । निरूपितानि द्रव्याणि ।

इति द्रव्यनिरूपणम् ।

चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लपीतनीललोहितचित्रभेदेन बहुविधं सर्वं चैतत्पृथिव्यां संभाव्यते । जले शुक्लभास्वरमेव । तेजसि च तदेव भास्वरमिति विशेषः ।

रसनग्राह्यो गुणो रसः । स च षड्विधो मधुरादिः । सर्वश्चैषः पृथिव्यां संभाव्यते । जले त्वव्यक्तमधुर एव रसः ।

घ्राणग्राह्यो गुणो गन्धः ।

स च द्विविधः सुरभिरसुरभिश्च त्वङ्मात्रग्राह्यगुणः स्पर्शः । स चतुर्विधः । उष्णशीतानुष्णाशितश्चित्रश्चेति । तत्राद्यः तेजसि द्वितीयो जले । तृतीयो द्विविधः । पाकजोऽपाकजश्चेति । तत्राद्यः पृथिव्याम् । द्वितीयः पवने । चतुर्थः परस्परविजातीयस्पर्शवदारभ्यते ।

ननु नास्ति चित्रस्पर्शः तस्मिन्नसति अवयविनि स्पर्शजनकता कथमिति चेत् । विजातीयस्पर्शद्वयारब्धविजातीयस्पर्शद्वयादवच्छेदभेदेन वर्त्तमानादेव । अपि च विजातीययोरारम्भकत्वे चित्रो रसश्चित्रो गन्धश्च स्यादविशेषात् । अपि च चित्रस्पर्शं प्रति न परस्परविजातीयस्पर्शत्वेन कारणता । चित्रस्पर्शादपि तदुपपत्तेः । नापि साक्षात्परम्परासाधारण-विजातीयस्पर्शारब्धस्पर्शत्वेन । द्व्यणुके तदनुत्पादापत्तेः । तत्कारणपरमाणुगतस्पर्शयोर्विरुद्धस्पर्शानारब्धत्वात् । एतेन चित्ररूपमपि व्याख्यातम् । किं च चित्ररूपस्वीकारे श्वेतेनाश्वेतेन च चक्षुर्गोलकेनारब्धस्य पशोश्चित्ररूपवत्त्वनियमाद्वायव्य श्वेतमालभेतेति विधिः प्रमत्तगीतः स्यात् । अत्र ब्रूमः । नैकस्मिन् धर्मिणि स्पर्शद्वय सम्भवति । समानजातीयस्पर्शवदारब्धेऽपि स्पर्शद्वयापत्तेः । तत्र प्रागभावैक्यादेकस्पर्श इति चेत्प्रकृतेऽपि दीयता दृष्टिः । अत्र विजातीयस्पर्शकल्पनामपेक्ष्य प्रागभावभेदकल्पनमेव लघीय इति चेत्, ? तस्याः फलमुखत्वात् । अपि च प्रागभावभेदः क्व क्लृप्तः । अत्रैव कल्प्यत इति चेत् न । समवायिकारणस्यासमवायिकारणयोः स्पर्शयोरेव वा एकमात्रस्पर्शजनकत्वकल्पनयापि तदुपपत्तौ विनिगमकाभावादिति । समवायिकारणे कार्यात्यन्ताभाव एव कार्यार्जक इति पक्षे रूपत्वावच्छिन्नात्यन्ताभावस्यैकत्वाच्चित्रोत्पादो दुर्वार इति दिक् ।

एवं च सति चित्रौ गन्धरसावपि स्यातामिति चेत्? का नो हानिः । कि वा अवयविनि तयोरभावादेव । न ह्यत्रास्पर्शनत्वप्रसङ्ग इव तत्र रसगन्धयोरभावे कि चिद्विरुणद्धि । कारणता तु स्पर्शस्य निरुक्तरूपेणैव द्व्यणुके चित्रस्पर्शो नेष्ट एवेति बौद्धाधिकारे प्रतिपादितम् । एतेन चित्ररूप व्याख्यातम् । श्वेतमालभेतेति पशौ निवेशमलभमान आनर्थक्यात्तदङ्गेष्विति न्यायेन पश्वङ्गगत एव श्वेतो विधीयत इति ।

एते रूपादयः स्पर्शान्ताः उद्भूताः । अनुद्भूताश्च चक्षुघ्राणादिषु यथा कथं विज्ञेयाः । के चित्तु ज्ञानेष्वनुद्भूतत्वम् । अत एव न सर्वं ज्ञानमनुव्यवसीयत इत्याहु. ।

उद्भूतत्वं जातिविशेषः । न च रूपत्वादिना परापरभावानुपपत्तिः । गत्वादिव्याप्यतारत्वादिवद् रूपत्वादिव्याप्यानां तेषां नानात्वात् । शुक्लत्वादिना कारणरूपाग्निसंयोग प्रायोज्याभ्यां च जातिभ्यां पुनः साङ्कार्यमिति चेत् । तर्हि रूपवृत्त्युद्भूतत्वमपि नानैवास्तु इति सम्प्रदायः । उद्भूतत्वेनैवानुद्भूतमपि व्याख्यातम् ।

मणिकृतस्तु, उद्भूतत्वानुद्भूतत्वे न जाती किं तु रूपत्वादिव्याप्यजातिमत्त्वमेवोद्भूतत्वम् । तदभावोऽनुद्भूतत्वं प्रत्यक्षे रूपे शुक्लतरतमत्वादिजातिसत्त्वादूष्मादिरूपे शुक्लत्वादिमात्र तद्व्याप्यजातौ मानाभावादिति प्राहुः ।

रूपादयः स्पर्शान्ताः पाकजापाकजभेदेन पुनर्द्विविधाः । तत्राद्याः पृथिव्यामेव । अपाकजेष्वनियमः । तत्रापि पृथिव्यामपाकजाः कारणगुणपूर्वका एवेति । पीलुपाकवादिनो वैशेषिकाः । वय त्वेकस्मिन्नेव घटे आमे श्यामस्य पक्वे रक्तस्य दर्शनात्तत्रानियममाचक्ष्महे ।

मीमांसकास्तु एकैका एव हि नीलारुणादिव्यक्तय इति मन्वाना रूपादीनां पाकजत्वमपाकजत्वं चोभयमपि नेच्छन्ति ।

पाकस्तु रसवद्वृत्तितेजःसंयोगो रूपवद्वृत्तितेजःसंयोगो वा तज्जन्य उष्णस्पर्शो वा । अत एव कृष्णलेऽपि पाकः । रूपादिपरावृत्तिः पाक इति तु टीका ।

संख्यात्वसामान्यवती संख्या । एकत्वादिपरार्द्धपर्यन्ता । सा चाव्यासज्ज्यवृत्तिव्यासज्ज्यवृत्तिभेदेन द्विधा । तत्रैकत्वमव्यासज्ज्यवृत्ति । द्वित्वादिकं तु व्यासज्ज्यवृत्त्यैव । यावदाश्रयनिरूप्यत्वं व्यासज्ज्यवृत्तित्वम् । स्वरूपसंबन्धविशेषो वा । एकत्वं द्विविधं नित्यमनित्यं च । नित्ये परमाणौ नित्यम् । कार्ये घटादौ समवेत समवायिकारणगतैकत्वासमवायिकारणजन्यमनित्यम् । द्वित्वादिकं त्वनित्यमेव । तत्र द्वित्वं स्वाश्रयगतैकत्वद्वयासमवायिकारणकं तदुभयगोचरापेक्षाबुद्धिनिमित्तकं क्वचिदपेक्षाबुद्धिनिमित्तकं क्वचिदपेक्षाबुद्धिनाशात्क्वचिच्चाश्रयनाशाच्च नश्यति । तथा हि एक-

त्वद्वयज्ञानमथ द्वित्वोत्पत्तिरथ द्वित्वनिर्विकल्पकम् । अथापेक्षाबुद्धिनाशः। अथ द्वित्वनाश इत्येकः प्रकारः । यदापेक्षाबुद्धेः स्वाश्रयसमवायित्रिभागस्य चैकदोत्पत्तिस्ततो विभागतः संयोगस्य नाशोऽपेक्षाबुध्या च द्वित्वोत्पत्तिरथ द्रव्यनाशद्वित्वबुद्धी ततो ऽपेक्षाबुद्धिद्वित्वयोर्नाश इत्यपरः । एतेन त्रित्वादावुत्पत्तिनाशावपि व्याख्यातौ । विशेषस्त्वेकत्वत्रयविषयिकापेक्षाबुद्धिस्त्रित्वम् । एतच्चतुष्टयविषया चतुष्ट्वम् । इत्येवमधिकाधिकविषया पञ्चाधिकमारभत इति । इह तु शक्यते, न तु द्वित्वक्षणस्थायितया द्वित्व निर्विकल्पककाल एव ज्ञाननाशो युक्तः । न च तथा सति द्वित्वसामान्यप्रकारकद्वित्वविशेष्यक प्रत्यक्ष न स्यादतस्त्रिक्षणस्थायितापि क्व चित्स्वीक्रियते इति वाच्यम् । तादृशप्रत्यक्षे मानाभावात् । द्वित्वविशिष्टप्रत्यक्षस्य निर्विकल्पकादभ्युपपत्तेः । अत्र ब्रूमः । उपादानापरोक्षजन्याया कृतेर्विषयसम्बन्धोपपत्तये ज्ञानस्य त्रिक्षणस्थायितायाः अपि क्लृप्तत्वेन तादृशप्रत्यक्षापलापे उपेक्षणीयतापत्तेरिति ।

प्राभाकरास्तु द्वित्वादिकमपि नित्ये नित्यमनित्ये कारणगुणपूर्वकमाश्रयनाशनाश्यमपेक्षाबुद्धिव्यङ्ग्यमाचक्षते । तन्न सम्यक् । समानदेशाना समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यताया असम्भवेन द्वित्वप्रत्यक्षकाल एव त्रित्वादेरपि प्रत्यक्षापत्तेः । द्वित्वादेर्नित्यत्वे तु जातिता दुर्वारा ।

न च सख्या गुणत्वेनेच्छतामत्रेष्टापादनं सम्भवति । यदि त्वेकत्व द्वित्वादिकं च जातिरेवेति कश्चिद्ब्रूयात्त प्रति किमुत्तरमिति चेत् । तेषा परस्पर परापरा वानुपपत्तिस्तुल्यव्यक्तिकतापत्तिश्चेत्येवेति दिक् ।

परिमाणत्वसामान्यवत् परिमाणम् । तच्चतुर्विधम् । अणु महद्ध्रस्व दीर्घं चेति । अणुत्व जातिविशेषस्तद्वदणु । तच्च द्विविधम् । नित्यमनित्य चेति । आद्य परमाणौ तदेव च पारिमाण्डल्यमित्याचक्षते। तच्च नारम्भकम् । द्वितीय द्व्यणुके । महत्त्वमपि जातिविशेषस्तद्योगि महत् । तदपि नित्यमनित्य चेति द्विविधम् । आद्यं गगनादौ । तदेव च परममहत्त्व विभुत्वमिति च व्यवहरन्ति ।

भट्टास्तु परमाणुद्व्यणुकयोरभावान्नास्त्यणुत्वम् । गगनादौ च प्रमाणाभावान्नास्त्येव परममहत्त्वमिति वदन्ति । ह्रस्वत्वदीर्घत्वे अपि परिमाणत्वावान्तरजातिविशेषौ तद्वती ह्रस्वदीर्घे । तत्राद्य जन्याणुत्वसमानाधिकरणतया द्व्यणुक एव । अन्त्य तु जन्यमहत्त्वसमानाधिकरणतया त्रसरेण्वादावेव । तत्त्वाकाशादाविति यथाश्रुतपदार्थप्रवेशानुसारिणः ।

आचार्यास्तु ह्रस्वत्वदीर्घत्वे अपि नित्यानित्यभेदेन द्विविधे तत्राद्ये परमह्रस्वत्वपरमदीर्घत्वे परमाणुषु गगनादौ च यथासख्येन । अन्त्ये तूदाहृते एवेत्याहुः । मतद्वयेऽपि समिदादिष्विक्षुदण्डादिकमपेक्ष्य ह्रस्वव्यवहारोऽणुव्यवहार इव भाक्त इत्यवधेयम् ।

लीलावतीकारस्तु ह्रस्वत्वदीर्घत्वे न परिमाणान्तरे किं त्वणुत्वमहत्त्वयोरेवावान्तरविशेषावेवेत्याह ।

तत्रानित्यमणुत्व ह्रस्वत्व च परमाणुगतद्वित्वासमवायिकारणकतया सख्यायोन्येव । महत्त्वदीर्घत्वे तु क्व चित्सख्यातः क्व चित्परिमाणतः क्व चित्प्रचयत इत्येव त्रिविधे । तत्र त्रसरेणौ महत्त्वदीर्घत्वे च द्व्यणुकगतत्रित्वसख्यायाः समकालमुत्पद्येते । तयोश्च समवाय्यसमवायिभेदेऽपि भेदः प्रागभावभेदाददृष्टभेदाद्वेत्याचार्याः ।

स्वल्पपरिमाणकारणत्रयारब्ध घटमपेक्ष्य महापरिमाणेन कारणत्रयेण कारणद्वयेन वारब्धे घटे महत्त्वदीर्घत्वे परिमाणयोनिनि द्वितूलके तु ते प्रचयहेतुक इति ।

चतुर्विधमपि जन्यं चैतत् परिमाणमाश्रयद्वितीयक्षणोत्पत्त्या आश्रयनाशादेव नश्यति । देवदत्तादिशरीर तु बाल्ययौवनवार्द्धकेषु भिन्नभिन्नमेवेत्यतः परिमाणस्य नोक्तनियमभङ्गः । परे तु तत्राश्रय एक एव प्रत्यभिज्ञानादिति मन्यमानाः परिमाणान्तरोत्पादमित्याहुः ।

इदमस्मात्पृथगिति व्यवहारहेतुर्गुणः पृथक्त्वम् । इदं द्विविधम् । एकाश्रितमनेकाश्रित च । एकपृथक्त्व प्रथम द्विपृथक्त्वादिक तु द्वितीयम् । तत्रैकपृथक्त्व नित्यवृत्ति नित्यं जन्यवृत्त्यनित्यं कारणगुणादुत्पद्यते । द्विपृथक्त्वादयस्त्वनित्या एव । एकपृथक्त्वद्वयाद्यसमवायिकारणका एव

पृथक्त्वद्वयादिगोचरापेक्षाबुद्धिनिमित्तकाः । एकपृथक्त्वमाश्रयनाशादेव नश्यति । द्विपृथक्त्वादिकं तु क्व चिदपेक्षाबुद्धिनाशात् क्व चिदाश्रयनाशात् क्व चिदुभाभ्यामिति विशेषः ।

अन्याप्राप्तिः संयोगः । अव्याप्यवृत्तिर्व्याप्याश्रयश्चायम् । लीलावतीकृतस्तु व्याप्यवृत्तिः । भाट्टास्तु एकमात्रवृत्तिर्मन्यन्ते ।

स चायं त्रिविधः । अन्यतरकर्मज उभयकर्मजः संयोगजश्चेति । तत्र स्थाणुश्येनसंयोगः प्रथमः । मल्लयोः संयोगो द्वितीयः । तृतीयस्तु कारणाकारणसंयोगहेतुकः कार्याकार्यसंयोगहेतुकः । स क्व चिदेकस्मात्क्व चिदुभयाभ्यां क्व चिद्बहुभ्यश्च भवति । तत्राद्यो हस्ततरुसंयोगजः कायतरुसंयोगः । द्वितीयो द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्तुपटस्याकाशेन संयोगः । तृतीयो बहुभ्यस्तन्तुतुरीसंयोगेभ्य एकः पटतुरीसंयोगः। क्व चिदेकस्मात्संयोगात्संयोगद्वयमुत्पद्यते । यथा पार्थिवपरमाणुना जलपरमाणोः संयोगाज्जलद्व्यणुकेपार्थिवपरमाणुसंयोग इव पार्थिवद्व्यणुकेऽपि जलपरमाणुसंयोगः । द्व्यणुकद्वयसंयोगस्तु ताभ्यामेवोत्पन्नाभ्यामिति । क्व चित्कारणानिरूपितसंयोगादपि संयोगः । यथा यानोत्तरदेशसंयोगात्पुरुषोत्तरदेशसंयोगः । न च तत्र पुरुषकर्मणैव संयोगः पुरुषे कर्मणः प्रत्यक्षबाधात् । न च संयुक्तसंयोगमात्रम् । तदपसिद्धान्तात् । एतेन केशतरुसंयोगजः कायतरुसंयोगोऽपि व्याख्यातः ।

तथा यानपूर्वदेशविभागात् पुरुषपूर्वदेशविभागोऽपि । प्रशिथिलत्वनिबिडत्वे संयोगत्वावान्तरजाती ।

तथा सुकुमारत्वकर्कशत्वे पृथिवीमात्रवृत्तिसंयोगवृत्ती जातिभेदौ ।

वैशेषिकास्तु स्पर्शवृत्तितामाहुः । विभुनोस्तु नास्ति परस्परसंयोगः । अन्यतरकर्मादेरभावात् । मीमांसकास्तु के च न पुनरन्यतरकर्मादीनां परस्परव्यभिचारिणामकारणतया आनन्तर्यमेव संयोगकारणमिच्छन्तस्तयोरपि संयोगो जायत इत्याहुः ।

अपरे तु तयोरस्त्येव संयोगः । किं तु नित्य एवेति विशेषमाचक्षते ।